THE
KASHI SANSKRIT SERIES
235

# CATURVARGACINTAMĀṆI

OF

## ŚRĪ HEMĀDRI

**Volume IV**

PRĀYAŚCITTAKHAṆḌA

*EDITED BY*

PAṆḌITA PRAMATHANĀTHA TARKABHŪṢAṆA



CHAUKHAMBHA SANSKRIT SANSTHAN
*Publishers and Distributors of Oriental Cultural Literature*
P. O. Chaukhambha, P. Box No. 1139
Jadau Bhawan, K. 37/116, Gopal Mandir Lane
VARANASI-221001 (INDIA)

॥ श्रीः ॥

काशी संस्कृत ग्रन्थमाला

२३५

# चतुर्वर्गचिन्तामणिः

श्रीहेमाद्रिविरचितः

तत्र

## प्रायश्चित्तखण्डनामा

चतुर्थखण्डः

श्रीप्रमथनाथतर्कभूषणेन

संशोधितः

चौखम्भा संस्कृत संस्थान

भारतीय सांस्कृतिक साहित्य के प्रकाशक तथा वितरक

पो० आ० चौखम्भा, पो० बा० नं० ११३९

जड़ाव भवन, के. ३७/११६, गोपाल मन्दिर लेन

वाराणसी (भारत)

# चतुर्व्वर्गचिन्तामणिः ।

प्रायश्चित्तखण्डात्मकः ।

हेमाद्रिविरचितः ।

श्रील-श्री-

वङ्गदेशीयासियाटिक्सोसाइटीत्याख्यसमाजानामनुमत्या व्ययेन च

कलिकातास्थ-राजकीय-संस्कृत-विद्यालय-धर्म्मंमीमांसा-

शास्त्राध्यापक-

श्रीप्रमथनाथतर्कभूषणेन

संशोधितः ।

कलिकाताराजधान्याम्

संस्कृतयन्त्रे

श्रीउपेन्द्रनाथचक्रवर्त्तिना मुद्रितः ।

ख्रीष्टाब्दः १८११ ।

1-4

# मुखबन्धः।



स्मृतिनिबन्धकारेषु किल हेमाद्रिः प्रायेण सर्व्वोपरि वर्त्तते। स खलु चैत्रपालदेवतनयस्य देवगिरिप्रदेशाधिपतेः महाराजचक्रवर्त्तिनो महादेवस्य प्रधानामात्यपदमलञ्चकार, अयञ्च महादेवः द्व्यशीत्यधिकैकादशशततमे शकाब्दे देवगिरिराजसिंहासनमधिरुरोह इति प्रत्नतत्त्वविदां व्याहारः।

तेन खलु हेमाद्रिणा विरचितस्य सुबृहतश्चतुर्व्वर्गचिन्तामणिनाम्नः स्मृतिनिबन्धस्य प्रामाण्यं सर्व्वैरेवाऽर्व्वाग्भवै रघुनन्दनभट्टाचार्य्यप्रभृतिभिः स्मृतिनिबन्धकारैरविसंवादमङ्गीकृतम्। ग्रन्थगौरवेण व्यवस्थापनीयावश्यकविषयातिबाहुल्येन असन्दिग्धप्रामाण्यानां श्रुतिस्मृतिपुराणेतिहासादिभ्यः समुद्धृतानां वचनानां प्राचुर्य्येण च अयं चतुर्व्वर्गचिन्तामणिः सर्व्वथैवाऽन्वर्थनामा इति सर्व्वेषां स्मृतिनिबन्धरसिकानां सूपपन्नं निर्व्वचनम्।

विविधप्राच्य-प्रतीच्यावश्यकविद्यासमुदयप्रचारोन्नतिसम्पादनसमुदितदिगन्तकलीमकनायमानयशोजालस्य परमसम्मानभाजः सुप्रतिष्ठितस्य 'आसियाटिक् सोसाइटी' इति विश्वविश्रुतनाम्ना प्रसिद्धस्य विद्वत्समाजस्य आदेशं समधिगम्य तस्यैव चतुर्व्वर्गचिन्तामणेः प्रायश्चित्तखण्डाख्यं भागमेकमिमं ग्रन्थं मुद्रयितुमङ्गी-

ततो मया महताऽऽदरेण महान् खलु प्रयासः। दश वर्षाणि यावत् सम्पादयतोऽस्य ग्रन्थस्य मया मुद्रणव्यापारः। स चाऽयं साम्प्रतं समाप्तिमुपगतः।

अस्य ग्रन्थस्य मुद्रणसम्पादनाय त्रीणि तावत् हस्तलिखितानि पुस्तकानि मया अधिगतानि यथामति पर्य्यालोचितानि च। तत्रैकं आसियाटिक्सोसाइटीकर्त्तृपक्षैः काशीतः क्रीतं, द्वितीयं काशीत एव बालमुकुन्दमालविमश्रोदयस्य करुणया मया अधिगतं, तृतीयं वाराणसीतएव लक्ष्मीकमादर्शपुस्तकमुपजीव्य आसियाटिक्सोसाइटीकर्त्तृपक्षैः लिखितम्। तेषु एतेषु त्रिषु पुस्तकेषु मालविमश्रोदयकृपया समधिगतं पुस्तकं विहाय पुस्तकद्वयम् अशुद्धिबहुलम् अन्तराऽन्तरा च नितरामसंलग्नपाठञ्च।

आसियाटिक्सोसाइटीनाम्ना प्रसिद्धविद्वत्समाजप्रकाशितेभ्यः चतुर्व्वर्गचिन्तामणेर्भागान्तरग्रन्थेभ्यः सर्व्वथा विलक्षणत्वेन तावत् प्रतिभाति अयं प्रायश्चित्तखण्डात्मको ग्रन्थभागः।

तदेतद्वैलक्षण्यमीदृक् सुस्पष्टम् यदेतत्पर्य्यालोचनेन चतुर्व्वर्गचिन्तामणिकर्त्तृतया सुप्रसिद्धस्य निखिलधर्म्मशास्त्रार्थपारावारपारीणस्य श्रीमतो हेमाद्रेः कृतिरेवाऽयं प्रायश्चित्तखण्डात्मको भागो न वेति महान् खलु संशयो मे मनसि उत्तरोत्तरमुपचयमभ्युपगच्छन्नेव वरीवर्त्तते।

तथाहि सर्व्वेष्वेव प्रामाणिकस्मृतिनिबन्धेषु येषु पापविशेषेषु यानि प्रायश्चित्तानि वैर्वचनैर्व्यवस्थापितानि साम्प्रतं समुप-

लभ्यन्ते, अस्मिन् खलु प्रायश्चित्तखण्डे तेष्वेव पापेषु प्रायेण तद्विरुद्धानि प्रायश्चित्तानि तद्विलक्षणैरेव वचनैर्व्यवस्थापितानि दृश्यन्ते।

अन्यच्च ब्रह्महत्यासुरापानगुर्व्वङ्गनागमनतत्संसर्गाख्येषु महापातकेषु प्रायश्चित्तप्रतिपादकत्वेन यानि संहितापुराणवचनानि सर्व्वैरेव इतरनिबन्धकारैरेकमत्येन उद्धृतानि, प्रायेण तानि सर्व्वाण्येव वचनानि अस्मिन् ग्रन्थे नितरामुपेक्षितानि इति च महदुद्वेलक्षण्यम्।

चतुर्व्वर्गचिन्तामणेः एतद्ग्रन्थव्यतिरिक्ताचारसंस्कारदानादिप्रतिपादकग्रन्थभागेषु तु नैतादृक् तत्तदर्थप्रतिपादकेतरस्मृतिनिबन्धेभ्यो वैलक्षण्यं प्रायेण दृश्यते ; तथाहि चतुर्व्वर्गचिन्तामणेराचारादिप्रतिपादकतत्तत्खण्डात्मकभागविशेषु यैर्वचनैर्यं तावदाचारादयः यथा च प्रतिपादिता, इतरनिबन्धेषु अपि सत्यपि क्वचित् क्वचिदीषद्वैलक्षण्ये प्रायेण तैर्वचनैस्त एवाऽऽचारादयः तथैव च प्रतिपादिता इति निपुणतरमुपलक्षितम्।

अपरञ्च एतस्मिन् प्रायश्चित्तखण्डे मन्वादिमहर्षिप्रणीतासु धर्म्मसंहितासु स्थितानि इति कृत्वा यानि वचनानि समुद्धृतानि, महदाश्चर्य्यमेतद् यत्-साम्प्रतं मुद्रितेषु हस्तलिखितेषु वा मन्वादिमहर्षिप्रणीतसंहिताग्रन्थेषु तानि वचनानि प्रायेण नोपलभ्यन्ते, सहृदयानां प्रत्ययोत्पादनाय कानिचित् तथाविधानि वचनानि उदाह्रियन्ते यथा—

अस्य ग्रन्थस्य १२ पृष्ठे ब्रह्महत्याप्रकरणे—

"हिमतेनापगुर्दयात् सहस्रेण हतद्विजः ।

हिमतेन तदा दत्त्वा तुषा ब्रजं नृपः" ॥ इति

नितरामस्पष्टार्थकं वचनमिदं मानवीयमिति ज्ञात्वा समुद्धृतं, साम्प्रतं मुद्रितेषु हस्तलिखितेषु वा मनुसंहितापुस्तकेषु यथाविधि अनुसन्दधता मया नाऽयं श्लोकः समुपलब्ध इति महदेतदस्य ग्रन्थस्य प्रामाण्यसंशयकारणम् ।

तथा अस्य ग्रन्थस्य ५८६ पृष्ठे—

शृणु धर्म्मज वक्ष्यामि सर्व्वकामदुघां सज्ञत् ।

योद्विजः प्रतिगृह्णाति स सद्यः पतितोभवेत् ॥

तस्यैव निष्कृतिर्भूप पुनर्ब्रह्मोपदेशतः ।

अष्टलक्षजपाद्राजन् व्ययं वाऽष्टमभागतः ॥

अभिषेकेण वा ब्रह्मार्य्यमन्त्रैर्वा, सर्व्वदक्षिणैः ।

एतैः शुद्धिमवाप्नोति उभयोर्लोकयोर्हितम् ॥ इति

एते त्रयः श्लोका बहवश्चान्य एवं जातीयका महाभारतीया इति ज्ञात्वा अत्र समुद्धृताः—समुपलभ्यन्ते, परन्तु साम्प्रतिकेषु मुद्रितमहाभारतपुस्तकेषु महता प्रयासेन अनुसन्दधता मया नैषामेकोऽपि श्लोकः समुपलब्धः ।

एवमेव कूर्म्मपुराणमत्स्यपुराणलिङ्गपुराणपद्मपुराणादिनाम्ना यानि वचनानि ग्रन्थेऽस्मिन् समुद्धृतानि, तानि च प्रायेण तेषु पुराणपुस्तकेषु मुद्रितेषु हस्तलिखितेषु वा नोपलभ्यन्ते । एवमादीनि अस्य ग्रन्थस्य अप्रामाण्यसन्देहप्रयोजकानि रूपाणि

इतरस्मृतिनिबन्धेभ्यः चतुर्व्वर्गचिन्तामणेर्भागान्तरेभ्यश्च महान्ति वैलक्षण्यानि च बहुशः समधिगम्य अयं ग्रन्थः चतुर्व्वर्ग-चिन्तामणिकारेण प्रथितयशसा हेमाद्रिणा रचित एव वा नवा इति महान् खलु मे मनसि संशयः, स खल्वयं समीचीनो वा नवा इति तीक्ष्णधियः प्रमाणपारावारपारीणाः सहृदयाः शिष्टा एव विचारयन्तु इति सविनयं सबहुमानञ्च तेषु विनिवेदयति ।

तर्कभूषणोपाधिक-

श्रीप्रमथनाथशर्म्मा

कलिकाताराजकीयसंस्कृतविद्यालयधर्म्मशास्त्राध्यापकः ।



## सूचिपत्रम्।

### अ।

## आ ।

इ ।



उ ।

क ।

ख ।

घ ।

च ।



छ ।



ज ।

त ।

## द ।

न।

प ।

फ।



व।

## भ।



## म।

य ।



र ।

ल ।



व

श ।

## ष ।



## स ।

ह ।

---

अ।



आ।



उ।



क।

ग।

## च ।

ज ।



द ।

### न ।



### प ।



### व, ब ।

य ।

व ।



श ।

## स ।

## ह ।



---

# हेमाद्रिः ।

---

## प्रायश्चित्ताध्यायः ।

कमलादयितं कृष्णं कमलासनवन्दितम् ।
कमलाक्षमहं वन्दे कमलाकरशायिनम् ॥

अथेदानीं हेमाद्रिकारेण लोकोपकारार्थं सर्व्वपुराणस्मृतिसंहितावेदज्योतिषवैद्यागमश्रौतस्मार्त्तसूत्रेषु ग्रन्थान् आलोच्य, ब्राह्मणक्षत्रियविट्शूद्रादीनां ब्रह्महत्यादीनि तत्समानि[1] पापानि, यानि चान्यानि[2] वाङ्मनःकायसम्भवानि हिंसादीनि सम्भवन्ति, तेषां पापानामपनोदनं[3] प्रायश्चित्ताध्यायो लिख्यते ।

---

"वाणीवाद्याः सुमनसः सर्व्वाभीष्टोपलब्धये ।
यं नत्वा सततन्त्वाः स्तुतं नमामि गजाननम् ॥
वन्देऽहं वन्दनीयानां वन्द्यां वाचामधीश्वरीम् ।
कामिताशेषकल्याणकलनाकल्पवल्लिकाम् ॥"

अस्मत्संशोधितेषु त्रिष्वपि पुस्तकेषु "कमलादयित"मित्यादिश्लोकात् प्राक्परिदृष्टमिदं श्लोकद्वयं "वर्णेश" इटे डाः राजेन्द्रलालदत्ते च पुस्तके नोपलभ्यम् ।

(१) ब्रह्महत्यासमानि इत्येव श्रौतवैदिकपुस्तकयोः पाठः ।

(२) यानि चान्यानीत्ययमंशः श्रौतवैदिकपुस्तकयोर्नोपलभ्यते ।

(३) अपनोदप्रायश्चित्तमिति श्रौतपुस्तके ।

तत्रापि विप्रादीनां चतुर्णां[1] पापभीरूणां प्रतिग्रहदोषैर्हिंसादि-निमित्तैः क्रयविक्रयादिभिर्ग्रामयाजनशुश्रूषाऽकरणादिभिरनेकदोषाः सन्ति[2] तन्निरासार्थं प्रायश्चित्तपराङ्मुखानां दोषबाहुल्यात् तत्तद्दोषापनोदनं प्रायश्चित्तं[3] मुनिभिर्दृष्टम् । तदेव प्रायश्चित्तं मया निरूप्यते ।

वर्णाश्रमभेदेन[4] तदकरणे पापगूहने दोषान् विकल्प्य[5] प्राय-श्चित्तं प्रदर्शितम्

तदेवाह—

ब्रह्महा क्षयरोगी स्यात् सुरापी श्यावदन्तकः ।
सुवर्णचोरः कुनखी दुश्चर्मा गुरुतल्पगः ॥

इत्यादिनिमित्तैस्तत्तद्दोषोपशान्त्यर्थं[6] कुत्रचिन्नराणां प्रायश्चित्तम्, कुत्रचित्पुनःसंस्काररूपं, कुत्रचिन्महानदीस्नानरूपं कुत्रचिज्जपरूपं, कुत्रचित् स्वप्रतिग्रहद्रव्यचतुर्थांशव्ययरूपं, कुत्रचित् होमरूपं, कुत्रचिच्चान्द्रायणादिकृच्छ्राचरणरूपम् ।

कानिचिन्महापातकजन्यानि कानिचिदुपपातकजन्यानि

---

(१) चतुर्वर्णानामिति श्रौतपुस्तके ।

(२) सम्भवन्ति इति श्रौतपुस्तके ।

(३) पूर्वोक्तेषु ग्रन्थेषु इत्यधिकं काशीपुस्तके ।

(४) वर्णादिक्रमभेदेन इति वेङ्कितकाशीपुस्तकयोः पाठः ।

(५) दोषाधिक्यतया प्रायश्चित्तं इति काशीपुस्तकेऽधिकः पाठः ।

(६) तद्दोषशान्त्यर्थं इति श्रौतपुस्तके ।

कानिचित्तुलाप्रतिग्रहजन्यानि पापानि, एतेषां प्रायश्चित्ताकरणे वर्णचतुष्टयस्य नरकप्राप्तिः। तस्मादेतत्प्रायश्चित्तम्।

यद्यत्पापस्य यद्यत्प्रायश्चित्तं[1] प्रतिपदोक्तं तदेव कर्त्तव्यं न तु स्नानादि। यस्य यन्नामधेयं पित्रादिभिः कृतं तेनाहुतिरेव प्रायश्चित्तं प्रकटयति।

एतस्मिन् प्रायश्चित्ते सुवर्णधान्यजलकुम्भादिकं सर्व्वं[2] तत्तत्प्रकरणे[3] द्रष्टव्यम् सर्व्वमन्याध्याये निरूपितम्।

ब्रह्महत्यासुरापानसुवर्ण[4]स्तेयगुरुतल्पगमनानि[5] तत्संयोगश्चेति पञ्च महापातकानि।

सङ्कलीकरणमलिनीकरणाऽपात्रीकरणजातिभ्रंशप्रकाराणि, उपपातकप्रकीर्णकानि दुरन्नभोजनदुःसङ्गदुरालापस्नानभोजनादीनि एतानि नवविधानि प्रायश्चित्तवन्ति[6] तुलापुरुषमहादानप्रतिग्रहेषु इतरदानप्रतिग्रहेषु च पापानि बहूनि सन्ति, तेषां ब्रह्महत्यादिपापानां इतरेषां च, सर्व्वपुराणस्मृतिभ्यः ज्योतिष-

(१) प्रतिपच्छदोषोक्तं इति क्रीतपुस्तके।

(२) सर्व्वमिति क्रीतपुस्तके नास्ति।

(३) तत्प्रकरणे इति क्रीतपुस्तके।

(४) स्वर्ण इति क्रीतपुस्तके।

(५) गमनादि इति क्रीतपुस्तके काशीपुस्तके च।

(६) प्रायश्चित्तानि भवन्ति इति क्रीतकाशीपुस्तकयोः।

वैष्णवग्रन्थागमेभ्यः स्मृतिभ्यः[1] संगृह्य तत्तत्प्रा[2]यश्चित्तं ब्रुवन् आदौ ब्रह्महत्याप्रायश्चित्तमाह ।

लिङ्गपुराणे—

"प्रायश्चित्तविधिं वक्ष्ये शृणुध्वं सुसमाहिताः ।
प्रायश्चित्तविशुद्धात्मा सर्व्वकर्म्मफलं लभेत् ॥
प्रायश्चित्तविहीनस्तु यत्किञ्चित् कुरुते नरः ।
तत्सर्व्वं निष्फलं याति न लभेत्[3] क्रियाफलम् ॥
कामक्रोधविहीनैश्च धर्म्मशास्त्रविशारदैः ।
विद्वद्भिस्तु धर्म्मः प्रष्टव्यः स्वकर्म्मफललिप्सुभिः ॥
प्रायश्चित्तानि चीर्णानि नारायणपराङ्मुखैः ।
न निष्पुनन्ति विप्रेन्द्राः सुराभाण्डमिवापगाः ॥
ब्रह्महा च सुरापी च स्तेयी च गुरुतल्पगः ।
महापातकिनस्त्वेते तत्संयोगी च पञ्चमः ॥
यस्तु संवत्सरस्त्वेतैः शयनासनभोजनैः ।
वसेन्न सहितं विद्यात् पतितः सर्व्वकर्म्मसु ॥
अज्ञानाद्ब्राह्मणं हत्वा चीरवासा जटी भवेत् ।
स्वेनैव हतविप्रस्य कपालमपि[4] धारयेत् ॥

(१) स्मृतिभ्य इति क्रोतकाशीपुस्तकयोः न दृश्यते ।
(२) तत्र प्रायश्चित्तमिति क्रोतपुस्तके ।
(३) न लभेत् तत्क्रियाफलं इति लेखितपुस्तके ।
(४) अभिधापयेत् इति काशीपुस्तके ।

तदभावे मुनिश्रेष्ठाः कपालं चान्यमेव वा ।
तद्द्रव्यं ध्वजदण्डे तु धृत्वा वनचरो भवेत् ॥
वन्याहारी भवेन्नित्यमेकाहारी मिताशनः ।
सम्यक् सन्ध्यामुपासीत त्रिकालं स्नानमाचरेत् ॥
अध्यापनाध्ययनादीन् वर्ज्जयेत्[1] संस्मरन् हरिम् ।
ब्रह्मचारी भवेन्नित्यं गन्धमाल्यादि वर्ज्जयेत् ॥
तीर्थान्युपवसेच्चैव पुण्यदेवाश्रमाणि च ।
यदि वन्यैर्न जीवेत ग्रामे भिक्षां समाचरेत् ॥
शरावपात्रधारी[2] स्यात् द्वारिस्थो विष्णुतत्परः ।
वदेच्च ब्रह्महास्मीति सर्व्वागाराणि पर्य्यटेत् ॥
चातुर्व्वर्ण्येषु वा भैक्ष्यं त्रिवर्णेष्वथवा भवेत् ।
स्पृष्टास्पृष्टाऽविवेकेन एककालन्तु भोजयेत् ॥
द्वादशाब्दं व्रतं कुर्य्यादेवं हरिपरायणः ।
ब्रह्महा शुद्धिमाप्नोति कर्म्मार्हश्च स जायते ॥
व्रतमध्ये मृगैर्वापि रोगैर्वापि निषूदितः ।
गोनिमित्तं द्विजार्थं वा प्राणांश्चापि[3] परित्यजेत् ॥
ततः शुद्धिमवाप्नोति ब्रह्महा रघुनन्दन ॥”

---

(१) वर्ज्जयन् इति केचित्पुस्तके ।
(२) शरीरमात्रधारी स्यादिति क्वचित्पुस्तके ।
(३) प्राणश्चापि इति काशीपुस्तके ।

स्कन्दपुराणे—

"महायुद्धे महाक्षोभे[1] महादेवालयादिषु ।
ग्रामदाहे चोरसङ्के पाषाणलगुडादिभिः ॥
अशक्त्वा ब्राह्मणं हत्वा जटाचीरधरो भवेत्[2] ।
(—[3]तेनैव हतविप्रस्य कपालं धारयेत् सदा ॥
तदभावे मुनिश्रेष्ठाः कपालस्यान्यमादरात् ।
तद्वद्वा ध्वजदण्डे तु धृत्वा वनचरो भवेत् ॥
वन्याहारो भवेन्नित्यं एकाहारो मिताशनः ।
सन्ध्यादिनित्यकर्म्माणि त्रिकालं स्नानमाचरेत् ॥
अध्यापनस्वाध्ययनं वर्ज्जयन् संस्मरेद्धरिम् ।
ब्रह्मचर्य्यं व्रतं नित्यं परिहन्थ्यादिवर्ज्जितः ॥
तीर्थान्युपवसेन्नित्यं पुण्यक्षेत्राश्रमाणि च ।
यदि वन्यैर्न जीवेत ग्रामे भिक्षाटनं चरेत् ॥
लोहितेन शरावेण मृत्खण्डेन गृहाङ्गणे ।
वदेच्च ब्रह्महास्मीति सर्व्वागाराणि पर्य्यटेत् ॥
चातुर्व्वर्ण्येषु वा भैक्ष्यं त्रिवर्णेष्वथवा चरेत् ।
मृष्टामृष्टाऽविवेकेन तदन्नं मा च कुत्सयन् ॥

(१) जनक्षोभे इति काशीपुस्तके ।

(२) अस्मात् श्लोकात्परं 'पूर्व्वोक्ताः श्लोकाः स्कान्देऽपि लभ्याः" इति पाठोऽधिकः काशीपुस्तके दृश्यते ।

(३) (—)अनयो रेखयोरन्तर्गताः श्लोकाः काशीपुस्तके नोपलभ्यन्ते ।

द्वादशाब्दं व्रतं कुर्य्यात् एवं हरिपरायणः ।
व्रतमध्ये मृगैर्वापि रोगैर्वापि हतो यदि ॥
गोनिमित्तं द्विजार्थं वा नार्य्यर्थं यदि वा म्रियेत् ।
ब्रह्महा शुद्धिमाप्नोति द्वादशाब्दव्रतेन वै ॥)

ब्रह्माण्डपुराणे—

पाषाणैर्लगुडैरस्त्रै[1]र्विषैर्वा हन्ति पूर्व्वजम् ।
अज्ञानाज्ज्ञानतो वापि परप्रेषणया नृप ॥
स्वयं समीप आतिष्ठेद् हन्यादन्यैः शस्त्रपाणिभिः ।
तस्यैव हतविप्रस्य वस्त्रं दण्डाय उद्वहन् ॥
पानार्थं तत्कपालञ्च तदभावेऽन्यमेव वा ।
धृत्वा वस्त्रं तथा शाणं लज्जासंरक्षणाय वै ॥
जान्वोरूर्द्ध्वमधोनाभेर्वस्त्रमित्यमतन्द्रितः ।
आजिमार्गे कुटीं कृत्वा गाश्चापि परिरक्षयेत् ॥
[2]ग्रामप्रवेशो द्विर्व्वारं वाससां रक्षणाय वै ।
ततः कृतपकालेषु भिक्षार्थं ग्राममाश्रयेत् ॥
अखण्डेन शरावेण रक्तवर्णेन सर्व्वतः ।
सम्यक् सन्ध्यामुपासीत त्रिकालं स्नानमाचरेत् ॥
भिक्षार्थं च विशेद् ग्रामं अपथे[3]ऽश्रमकुत्सयन् ।
अन्यं दृष्ट्वा तदा गच्छेद् व्रती दोषमुदीरयन् ॥

---

(१) पाषाणलगुडास्त्रैर्वा इति श्रीतर्केभूषितपुस्तकयोः पाठः ।
(२) रक्तवस्त्रेण सर्व्वतः इति काशीश्रीतपुस्तकयोः ।
(३) अपथाश्रमकुत्सयन् इति श्रीतकाशीपुस्तकयोः ।

चातुर्व्वर्ण्येषु वा भैक्ष्यं त्रिवर्णेष्वथवा चरेत् ।
स्पृष्टाऽस्पृष्टाऽविवेकेन एककालं तु भोजयेत् ॥
भोजयित्वा कुटीरे तु स्वपेत्तत्रैव संस्मरन् ।
नारायणं महापापहारिणं लोकधारिणम् ॥
वनमध्ये[1] मृगैर्वापि रोगैर्वापि निपातितः ।
गोनिमित्तं द्विजार्थं वा गार्य्यर्थं यदि वा म्रियेत्[2] ॥
ब्रह्महा शुद्धिमाप्नोति द्वादशाब्दव्रतेन वै[3] ॥

अपिच ।

महायुद्धमुपागम्य विसृज्य च शिरोरुहान् ।
उभयोर्व्यूहयो[4] र्मध्ये ब्रुवन् कर्म्म स्वकं मुदा ॥
प्रविशेत्तदा[5] हन्युरेनं वाणैर्नृपात्मज ।
हतः शुद्धिमवाप्नोति ब्रह्महा पापधीस्तदा ॥
अपि स्वेन हतं विप्रं समालोक्य निमित्तजैः ।
भृत्यादिभिः स पापात्मा पश्चात्तापपरायणः ॥
महतीमटवीं गत्वा स्नात्वा तत्र नदीजले ।
गोशकृच्छुष्कमानीय राशिं कुर्य्यात्तदुत्तमम् ॥
वह्निं प्रज्वाल्य सहसा हुतात्मास्तत्र संविशेत् ॥

---

(१) व्रतमध्ये इति केचित्पुस्तके पाठः ।

(२) प्राणान् वापि परित्यजेत् इति काशीपुस्तके पाठः ।

(३) द्वादशाब्दं व्रतं कुर्य्यादेवं हरिपरायणः ।
ब्रह्महा शुद्धिमाप्नोति कर्म्मार्हश्चोपजायते ॥ इत्यधिकं काशीपुस्तके ।

(४) उभयोः शूरयोरिति केचित्पुस्तके ।

(५) प्रविशेच्च तदा इति केचित्पुस्तके ।

करीषमध्ये उपविशेत्[1] इत्यर्थः—

न चैवं क्षतिमापन्नः किञ्चित् किञ्चित्तदाग्निना।
ब्रह्महा शुद्धिमाप्नोति द्वादशाब्दार्दितो नृप॥

अपिच।

ब्रह्महा पूर्ववत्कृत्वा गहनं जनवर्जितम्।
तत्रैव पूर्ववत् स्नात्वा वृक्षमूलमुपाविशन्॥
नापितस्य क्षुरं धृत्वा समुत्क्राम्य हुताशनम्।
शरीरं चाचमश्छित्वा तस्मिन् वह्नौ समर्पयेत्॥
यदाक्षतिमवाप्नोति ततः पूतोऽतिविप्रहा।

अपिच—

महाक्रतुमुपागम्य याजकेभ्योऽथवाग्निं[2] वहन्।
ब्रह्महा सिक्तदेहः सन् शुद्धिमाप्नोति तत्क्षणात्॥
यद्वा दद्याद्द्विजेन्द्राणां गवामयुतमुत्तमम्।
एतेष्वन्यतमं कृत्वा ब्रह्महा शुद्धिमाप्नुयात्॥

एतदज्ञानविषयम्।

"अयं तु ब्राह्मणो न हन्तव्य" इति ज्ञात्वा स्वयं भृत्यादिभिर्वा वैरनिमित्ततया ब्राह्मणं हन्यात् तन्निरासार्थं चतुर्विंशतिवर्षाणि पूर्ववद् व्रतं कृत्वा शुद्धिमाप्नोति।

---

(१) उपवेशनेदिति श्रीतत्त्वबोधपुस्तकयोः पाठः।
(२) अर्थं वहन् इति केचित्पुस्तके पाठः।

तदाह गौतमः —

यो विप्रो ब्राह्मणं हत्वा ज्ञात्वा भृत्यादिभिर्यदा।
चतुर्व्विंशतिवर्षाणि व्रतकृच्छुद्धिमाप्नुयात्॥"

अन्यानि पूर्व्वोक्तानि कृत्वा आचरणीयानि। गवां इयुतं दत्त्वा शुद्धिमाप्नोति इत्यर्थः।

तदाहापस्तम्बः—

"तस्य निर्वेशः। अरण्ये कुटिं कृत्वा वाग्यतः शवशिरध्वजोऽर्धशाणीपक्षमधोनाभ्युपरि जान्वाच्छाद्य। तस्य पन्था अन्तरावर्त्मनी। दृष्ट्वा चान्यमुत्क्रामेत्। खण्डेन लोहितकेन शरावेण ग्रामे प्रतितिष्ठेत। कोऽभिशस्ताय भिक्षां इति सप्तागाराणि चरेत्। सावृत्तिः। अलब्धो'पवासः। गाश्च रक्षेत्। तासां निष्क्रमणप्रवेशने द्वितीयोग्रामेऽर्थः[१]। द्वादशवर्षाणि चरित्वा सिद्धः, सद्भिः सम्प्रयोगः। आजिपथे वा कुटिं कृत्वा ब्राह्मणगव्योपजिगीषमाणो वसेत् त्रिः प्रतिराद्धोपजित्य वा मुक्तः। आश्वमेधिकं वावभृथमवेत्य मुच्यते इति। (आः सूः प्र १ खं २५ सू १०—२२)

मार्कण्डेयः—

अज्ञानाद्ब्राह्मणं हत्वा पश्चाद्द्विज इति स्मरन्।
पश्चात्तापसमायुक्तो राजानमनुसंविशेत्॥

---

(१) उपवासो इति केषितपुस्तके पाठः।

(२) अर्द्ध द्वादश इति क्वीतपुस्तके पाठः।

पापं तस्मै निवेद्याऽथ तूष्णीं तिष्ठेत्तदग्रतः।
राजाऽपि नयमापन्नः प्राड्विवाकमते स्थितः॥
अयोरूपं नरं कृत्वा तापयित्वाथ वह्निना।
पुनः प्रज्वाल्य तैलेन तमाहूय तदब्रवीत्॥
स्थितेषु सर्व्ववर्णेषु पश्यत्स्वपि नरेश्वर[1]!।
[2]उपगूहयेस्त्वं विप्रं ज्वलन्तं तैलवह्निभिः॥
मरिष्यसि यथानेन ततः शुद्धिमवाप्स्यसि।
इति राज्ञो वचः श्रुत्वा सुश्लिष्टं तामुपगूहयेत्॥
मृतः शुद्धिमवाप्नोति नान्यथा शुद्धिरिष्यते।

राजकृत्यमाह लिङ्गपुराणे—

पत्तने[3] वा स्वराष्ट्रे वा यो विप्रो ब्रह्महा भवेत्।
निमित्तैरथवा स्वेन ग्रीवोत्कर्षणबन्धतः॥
आहूय तं द्विजं गत्वा श्रुत्वा [4]विप्रेऽशुभां गिरम्।
ब्रह्महत्यां विनिश्चित्य वापयित्वा[5] शिरोरुहान्॥
ब्रह्मसूत्रं त्रिधा च्छित्वा पिष्टितायसवाहनम्।
आवाहयित्वा तद्भाले [6]शूलं तप्तमयं लिखेत्॥

(१) नरेश्वरः इति काशीपुस्तके पाठः।
(२) उपगूहेत इति क्रीतपुस्तके पाठः।
(३) पत्तने इति क्रीतवेश्वितपुस्तकयोः पाठः।
(४) विप्रोऽशुभां गिरमिति काशीपुस्तकपाठः।
(५) मुण्डित्वा तच्छिरोरुहान् इति क्रीत वेश्वितपुस्तकयोः पाठः।
(६) शूलं तप्तमयं इति क्रीतवेश्वितपुस्तकयोः पाठः।

गुरुतल्पे भगः कार्य्यः सुरापाने सुराध्वजः ।
स्तेये तु श्वपदं कार्य्यं ब्रह्महत्य[1]शिरःपुमान् ॥
एवं कृत्वा तु शास्त्रेण निर्व्वास्यो विषयाद्बहिः ।
अन्यथा दोषमाप्नोति राजा यदि निराकृतः ॥
तत्पुत्रास्तस्य हनने सहायास्ते यथाऽभवन् ।
तानप्येतत् पुनः कृत्वा [2]वासयेद्विषयाद्बहिः ॥
तत्क्षेत्रं बहुलं धान्यं क्षेत्रारामादिकञ्च यत् ।
तत्सर्व्वं देवताप्रीत्यै राजा कुर्य्याद् यथार्हतः ॥
विप्रार्थे बहुधा राजा पत्नीपुत्रादिकान् बहु ।
दोषवन्तस्तथा तेऽपि कर्त्तव्या राजवल्लभैः ॥
गोदेहद्रव्यञ्च धान्यञ्च राजा गो वधमाचरेत् ।
कृते ग्रामः परित्याज्यस्त्रेतायां कुलमेव च ॥
द्वापरे तद्गृहं सर्व्वं कलौ कर्त्ता तु लिप्यते ॥”

कलौ द्वादशाब्दाकरणे अन्येषु केषुचित् प्रायश्चित्ताकरणे राजद्वारि सभां मेलयित्वा तैरनुज्ञातो धर्म्मशास्त्रोक्तविधिना द्वयुतसङ्ख्यया गाः विप्रेभ्यो दद्यात् ततः शुद्धिमवाप्नोति ।

एतदज्ञानविषयं ज्ञानविषये[3] द्वैगुण्यम् । केचिदेवं मास्त्विति वदन्ति मरणान्तमेव प्रायश्चित्तं नेतरत् ।

(१) ब्रह्महत्यतरः पुमान् इति केचित्पुस्तकेपाठः ।

(२) निर्व्वास्या विषयाद्बहिरिति [illegible] केचित्पुस्तकयोः पाठः ।

(३) ज्ञानविषये तु द्वैगुण्यमिति केचित्पुस्तके पाठः ।

तदाह गौतमः—

"प्राणात्प्राणाद्विजो यस्तु वधेद्विप्रं हि दैवतः ।

तस्यैव मरणान्तं हि प्रायश्चित्तं मयान्यथा ॥" इति ।

तदभावे द्वादशाब्दव्रतं कृत्वा शुद्धिमाप्नोतीति ।

"यो ब्राह्मणाय अपगुरेत् तं शतेन यातयात् यो निहनेत् तं सहस्रेण यातयाद् यो लोहितं कारयेद् यावतः प्रस्कन्द्य पांशून् संगृह्णात् तावतः संवत्सरान् पितृलोकं न प्रजानीयात् । तस्मात् ब्राह्मणाय नापगुरेत् न हन्यात् न लोहितं कुर्य्यात् । एतावता हैनः सम्भवति इति राजा दण्डयेत्" । अतएव "ब्राह्मणो न हन्तव्यः" । इति ।

तदाह मनुः—

"ब्राह्मणहनने उपायतः सम्यग्विचार्य्य राजा दण्डयेत् ।

हियतेनापगूर्य्यात् सहस्रेण हतद्विजः ।

हियतेन तदा दण्ड्या ब्रह्महत्यां नृप ? इति

(हतब्रह्महन्तारं प्रति निष्कप्रमाणं श्लोयप्रकरणेऽभिहितम्) ?

---

(—) अनयो रेखयोरन्तर्गतः पाठः काशीपुस्तके नोपलभ्यते ।

## अथ ब्रह्महन्तारं प्रति विप्रकृत्यमाह ।

ब्रह्माण्डे—

निश्चित्य ब्रह्महन्तारं भाषासन्दर्शनादिभिः ।
मेलयित्वा द्विजान् सर्व्वान् राजा यद्यच्चकृतं पुरा ॥
तत्सर्व्वं सहसा कुर्य्युर्निर्व्वासो विषयाद्बहिः ।
तत्पत्नीं तनयांश्चैव न दोष इति वर्त्तयेत्[1] ॥
तेषामपीह शङ्का स्यात् तेन सार्द्धं तदा वदन् ।
नो चेत् तद्वृत्तिधान्यार्थी तेभ्यो दत्त्वाथ शिक्षयेत् ॥

युष्माभिः[2] ते[3] सह न गन्तव्याः न सम्भाष्याः न स्मरणीयाः इति शिक्षणीयाः । इत्युक्त्वा स्वर्ण संशोध्यम् तथान्यथा विप्रा अपि राजदण्डेन दण्ड्याः ।

दण्डप्रकारमाह कूर्म्मे—

अयोरूपं द्विजं कृत्वा मूर्द्धहीनं प्रतापयेत् ।
सन्तप्तं पुरुषं दृष्ट्वा तैलसिक्तं प्रजज्वलुः ॥
तेन ब्राह्मणमाहूय उपकूर्व्व माचिरम् ।
स्वत्वा दोषविमुक्तोऽसि मान्यथा व्रतमाचरेत् ॥

---

(१) वर्ज्जयेत् इति कायो क्रीतपुस्तकयोः पाठः ।
(२) यूयं इति क्रीतलेखितपुस्तकयोः पाठः ।
(३) तेन सह इति क्रीतलेखितपुस्तकयोः पाठः ।

द्वादशाब्दविधानेन शुद्धो भवितुमर्हसि ।
अशक्तो व्रतमाचर्तुं एवं कुर्य्याद्विशुध्यसि ॥ इति
राजाभावे तदनुमत्या प्राज्ञैः प्रकाश्यमिति ।

इति ब्रह्महत्याप्रायश्चित्तम् ।

---

## अथ गुरुहत्याप्रायश्चित्तम् ।

आह लिङ्गपुराणम्—

जनिताचोपनेता च यस्तु विद्यां प्रयच्छति ।
श्वशुरश्चाग्रजो भ्राता पञ्चैते गुरवः[1] स्मृताः ॥

गुरुर्नाम जनकः, शेषाः पूज्याः मनसापि न हन्तव्याः । हन्याच्चेत् तद्धनने विशेषमाह—

स्कन्दपुराणे—

अज्ञानाज्जनकं हन्याद्विशिष्टैर्बहुभिर्द्विजः ।
तस्योक्तं मरणान्तं हि प्रायश्चित्तं मनीषिभिः ॥
चतुर्विंशतिवर्षाणि व्रतं कृत्वा विशुध्यति ।
अयुतं वा गवां दानं कृत्वा शुद्धिमवाप्नुयात् ॥
अथवा पूर्ववत्कृत्वा गुरुहा शुद्धिमाप्नुयात् ॥

---

(१) पितरः इति काशीपुस्तके पाठः ।

ज्येष्ठभ्रात्रादिहनने एवं वेदितव्यम्। (शास्त्रोपदेशकृत्?) गुरवः बहवः।

नारदीये—

मन्त्रोपदेष्टा वेदानां तथा धर्म्मविबोधकः।
सन्मार्गदायी बुद्धीनां आचार्य्यो व्रतबन्धने।
पुराणसंहितावक्ता नित्यं शास्त्रोपदेशकृत्।
निषेकादिश्मशानान्तं ज्ञात्वा चार्य्ये नियोजितः।
वेदान्तोपनिषद्वाक्य[1]स्योपदेष्टा सुमर्म्मज्ञ॥
त एते गुरवः प्रोक्तास्तेषु द्रोहं न कारयेत्।
तेषामन्यतमं हत्वा चरेद्ब्रह्महणो व्रतम्॥
दीक्षितं क्षत्रियं हत्वा चरेद्ब्रह्महणो व्रतम्।
अग्निप्रवेशनञ्चापि भृगुप्रपतनं तथा[2]॥
दीक्षितं ब्राह्मणं हत्वा द्विगुणं व्रतमाचरेत्।
स्नातकं ऋत्विजं हत्वा मातामहमथा[3]पि वा॥
( मातुलं भावुकं श्यालं जामातरमथापि वा )
आचार्य्यादिवधे चैव व्रतमुक्तं चतुर्गुणम्॥

---

(—) अयं पाठः काशीलेखितपुस्तकयोर्न दृष्टः।
(१) वाक्यस्योपदेष्टा इति क्रीतलेखितपुस्तकयोः पाठः।
(२) मरुप्रपतनं इति लेखितपुस्तके पाठः।
(३) मातामहं तथापि वा इति क्रीतपुस्तके पाठः।
(—) अयं पाठः क्रीतपुस्तके नोपलभ्यते।

अग्न्याधेयम्, अग्निहोत्रं, दर्शपूर्णमासौ, चातुर्मास्यानि, निरूढ़-पशुबन्धः सौत्रामणिः । इति सप्त हविर्यज्ञाः ।

अष्टकापार्व्वणश्राद्धश्रावण्याग्रायण्यः इति सप्त पाकयज्ञाः । अग्निष्टोमो, ऽत्यग्निष्टोम, उक्थ्यः, षोड़शी, वाजपेयः, अतिरात्रः आप्तोर्यामः । इति सप्त सोमसंस्थाः ।

सप्तहविर्यज्ञाः, सप्तपाकयज्ञाः, सप्तसोमसंस्थाश्च, निषेकादि षोड़शकर्म्माणि, पञ्चमहायज्ञा, प्राणाग्निहोत्रम्, श्रावणहोम श्चेति चतुश्चत्वारिंशत्संस्काराः । तैः पूतः स्नातकः ऋत्विक् । सोऽध्वरे दीक्षागुरुः सएव ऋत्विक् ।

ज्ञात्वा तु विप्रमात्रं चेच्चरेत् संवत्सरव्रतम् ॥
अथवा गोसहस्रं वा दत्वा शुद्धिमवाप्नुयात् ।
अस्योपनयनं भूयः पुनः संस्कारमादरात् ॥
एष विप्रस्य कथितः प्रायश्चित्तविधिर्द्विजैः ।
द्विगुणं क्षत्रियस्योक्तं त्रिगुणं तद्विशः समम् ॥
ब्राह्मणं हन्ति यः शूद्रः तं सम्यक्त्वं विदुर्बुधाः ।
राज्ञैव शिक्षा कर्त्तव्या इति शास्त्रेषु निश्चयः ॥
ब्राह्मणीनां वधे त्वर्द्धं पादःस्यात्कन्यकावधे ।
हन्तात्वनुपनीतानां तथा पादं व्रतं चरेत् ॥
प्रायश्चित्तविधानञ्च सर्व्वत्र मुनिसत्तमाः ।
वृद्धातुरस्त्रीबालानामर्द्धमुक्तं मनीषिभिः ॥

## क्षत्रियाणां विप्रहनने प्रायश्चित्तमाह ।

कूर्म्मपुराणे—

अज्ञानाद्ब्राह्मणो विप्रं निमित्तैः पूर्व्वसम्भवैः ।
पश्चात्तापसमायुक्तो द्विगुणं व्रतमाचरेत् ॥
दीक्षितं ब्राह्मणं हत्वा स्नातकं ऋत्विजं तथा ।
आचार्य्यादिवधे चैव चातुर्गुण्यं व्रतं चरेत् ॥
हत्वा तु विप्रमात्रं चेत् चरेत् संवत्सरद्वयम् ।
ब्राह्मणानां कुमारीणां[1] द्वादशाब्दं व्रतं चरेत्[2] ॥
हत्वा त्वनुपनीतानां तदर्द्धं व्रत माचरेत् ।
दीक्षितस्य स्त्रियं हत्वा ब्राह्मणीं चाष्टवत्सराम् ॥
ब्रह्महत्याव्रतं क्षत्वा शुद्धिमाप्नोति निश्चितम् ।
आत्रेयीं च स्त्रियं वापि स्वयं हत्वा विषाग्निभिः ॥
आत्मतुल्यसुवर्णं वा दत्वा शुद्धिमवाप्नुयात् ॥

आत्रेयीलक्षणम्—

विवाहादि दिनादूर्द्धं या नारी गतपुष्पिणी ।
आत्रेयी सैव विख्याता महापापप्रणाशिनी ॥
उत निश्चलया बुद्ध्या या नारी पतिसेवना ।
कर्म्मणा मनसा वाचा तामात्रेयीं विदुर्बुधाः ॥

---

(१) तु नारीणां इति केचित्पुस्तके पाठः ।

(२) 'क्षत्रियः कन्यकां हत्वा षडब्दं व्रतमाचरेत्' इत्यधिकः पाठः क्वचित्पुस्तके ।

अथवा ह्ययुतं दद्याद् द्रव्यं [1]हत्वा विमुक्तये।
पूर्वंगर्भवधे राजा दद्याद् दानं गवां शतम्॥

विप्रस्येति शेषः।

षण्मासे पञ्चमासे वा तदर्द्धं दान माचरेत्।

---

## वैश्यस्य विप्रहत्याप्रायश्चित्तमाह।

ब्रह्माण्डपुराणे—

अज्ञानादूरजो हत्वा ब्राह्मणं दीक्षितञ्च वा।
गुरुमाचारकर्मस्थं श्रोत्रियं वर्णिनं तथा॥
आचार्य्यादिवधे चैव चरवद् व्रत माचरेत्।
हत्वा तु विप्रमात्रं चेच्चरेत्संवत्सरत्रयम्।
ब्राह्मणानान्तु नारीणां द्वादशाब्दव्रतञ्चरेत्॥
हत्वा त्वनुपनीतानां तदर्द्धं व्रतमाचरेत्।
वैश्यश्च[2]कन्यकां हत्वा षडब्दं क्षत्रियव्रतम्॥

---

(१) वा तद्विगुणकं इति क्रीतपुस्तके पाठः।
(२) वैश्यश्चेत् इति लेखितपुस्तके पाठः।

क्षत्रियस्य[1] स्त्रियं हत्वा ब्राह्मणीं वाष्टवत्सराम् ।
ब्रह्महत्याव्रतं कृत्वा वैश्यः शुद्धिमवाप्नुयात् ॥
आत्रेयीञ्च स्त्रियंवापि स्वयंहत्वा विषाग्निभिः ।
गवाश्वदद्यादृषयुतम् विप्रेभ्यो भक्तितः क्रमात् ॥
गर्भस्थां रोहिणीं नारीं विधवां वा तपस्विनीम् ।
हत्वो[2]रुजस्ततः शुध्येद्ब्रह्महत्याव्रतादिह ॥

हयुतगोदानं वैश्यस्य व्रताचरणाभावात् ।

षण्मासे पञ्चमासे वा तदर्द्धं दानमाचरेत् ॥

इति वैश्यस्य विप्रहत्याप्रायश्चित्तम् ।

---

## अथ शूद्रस्य विप्रहत्याप्रायश्चित्तमाह ।

लिङ्गपुराणे—

पादजो मुखजं हत्वा श्रोत्रियं यमिनं तथा ।
जातकं ऋत्विजं वापि कर्मिष्ठं वेदपारगम्[3] ॥

---

(१) दीर्घायतत्र इति लेखितपुस्तके पाठः ।

(२) हत्वाहुजः इति मीतपुस्तके पाठः ।

(३) विष्णुतत्परमिति लेखितपुस्तके पाठः ।

अज्ञानादायुधाद्यैश्च परप्रेषणया युधि।
पश्चाद्विप्र इति ज्ञात्वा पश्चात्तापसमन्वितः॥
हस्ते मुसलमादाय राजानं गतकल्मषम्।
हन्ताच दीक्षितस्यैव तेन दण्ड्यो यथार्हतः॥
तेन हन्याद् यथा जीवेत् तदाशुद्धिमवाप्नुयात्।
अन्यथा दोषमाप्नोति राजा भवति किल्बिषी॥

स्कन्दपुराणे—

शूद्रो विप्रं यदा हन्यात् साधनैर्बहुभिः स्वयम्।
तस्यौसल्यं वधं प्राहु र्विप्रा धर्म्मपरायणाः॥
केचिदिच्छन्ति कारीषं वधं तस्यैव पापिनः।
मृत्वा[1] शुद्धिमवाप्नोति नान्यथा शुद्धिरिष्यते॥

देवीपुराणे—

ब्राह्मणं दीक्षितं सोमयाजिनं श्रोत्रियं तथा।
गुरुमाचार्य्यव्रतिनौ पादजो ज्ञानतो हनेत्॥
अस्य मौसल्यजं दण्डं वधं कारीषमेव वा।
दद्यादन्यतमं पुत्र ज्ञात्वा शुद्धिमवाप्नुयात्॥

ब्रह्माण्डपुराणे—

अज्ञानात् पादजो विप्रं श्रोत्रियं सोमयाजिनम्।
व्रतिनं दीक्षितं दीर्घदर्शिनं कर्म्मकौशलम्॥

---

(१) कृत्वा इति केचित्पुस्तके पाठः।

हत्वा राजान मासाद्य कर्म्मावचीत बुद्धिमान् ।
राजा मुसलमादाय ब्रह्मस्थाने[1] शिरःस्थले ॥
मृतो यथा[2] प्रहारेण तथा[3] हन्याददोषभाक् ।
उत कारोषमानीय राष्ट्रीज्ञात्य [4]जनस्थले ।
तद्दृ[5]तं तत्र निःक्षिप्य दाहयेत् सभवैर्मुदा ॥
ताभ्यां यदा मृतः शूद्रस्तदा शुद्धिमवाप्नुयात् ।
ब्राह्मणीं स्थविरां हत्वा विधवां वा सुवासिनीम् ॥
युवतीं पादजो हन्यादात्रेयीं प्रह्लादामपि ।
पूर्व्ववद् दण्डयेद्राजा द्वयोरेकेन नान्यथा ॥
बालं कन्यां यदा हन्यात् तदा तेनैव कारयेत् ।
शिशुं ( हन्याद् यदा शूद्रो गर्भमात्रं यदा हनेत् ॥
हस्तद्वयं तदा च्छित्वा[6] निर्व्वास्यो विषयाद्बहिः ।
शूद्रो विप्रं तथा नारीं शिशुं कन्या ) मथापिवा ॥
वृद्धां सुवासिनीं वापि मात्रेयीं युवतीमपि ।
गुरुं वा दीक्षितं सोमयाजिनं व्रतिनं तथा ॥
एतेषां हननं श्रुत्वा राजा दोषपराङ्मुखः ।

---

(१) ब्रह्मस्थानं इति क्षीतवेक्षितपुस्तकयोः पाठः ।
(२) यदा प्रहारेण इति क्षीतवेक्षितपुस्तकयोः पाठः ।
(३) तेन हन्यादिति क्षीतवेक्षितपुस्तकयोः पाठः ।
(४) जनस्थले इति क्षीतपुस्तके पाठः ।
(५) तद्भूतं इति वेक्षितपुस्तके पाठः ।
(६) छत्वा इति काशीपुस्तके पाठः ।
( ) अनयोरेतयोरन्तर्गतः पाठः क्षीतपुस्तके नोपलभ्यते ।

मूत्रेण शिरसि स्नाप्य वापयित्वा शिरोरुहान् ॥
कर्णौ नासां [1]तथा च्छित्वा निर्व्वास्यो विषयाद्बहिः ॥
कन्याबालवधे गर्भपातने विप्रयोषिताम् ।
पूर्व्ववद्दण्डयेद्राजा त्वन्यथा[2] नरकं व्रजेत् ॥

इति हेमाद्रिविरचिते धर्मशास्त्रे प्रायश्चित्ताध्याये
शूद्राणां विप्रहत्यादिप्रायश्चित्तम् ॥

---

## अथ विप्राणां क्षत्रियहत्याप्रायश्चित्तम् ।

ब्रह्माण्डपुराणे—

ब्राह्मणः क्षत्रियं हत्वा युद्धे वान्यत्र भूतले ।
स्वयं निमित्तैर्बहुभिः क्षत्रहन्ता भवेत्तथा ॥
वीरहत्यापनुत्यर्थं धेनुदानसहस्रकम् ।
दत्त्वा शुद्धिमवाप्नोति न दानैर्जपहोमजैः ॥

---

(१) तदाच्छित्वा इति श्रीतर्केभिततुस्तकयोः पाठः ।
(२) नान्यथा इति श्रीतर्केभिततुस्तकयोः पाठः ।

लिङ्गपुराणे—

पूर्व्वजो बाहुजं देवाद्विषवह्न्यादिपातनैः ।
हत्वा ज्ञानात्तदा ज्ञात्वाचरेद्धेनुसहस्रकम् ॥

गारुड़पुराणे—

संग्रामे ग्रामदाहे वा राजक्षोभे महाभये ।
पट्टभद्रं च राजानमितरं शूद्रमाचजम् ॥
पश्चात्तापसमायुक्तो द्विसहस्रं गवां चरेत् ।
राजमात्रे सहस्रं स्यात् योऽसौ नारायणः स्वयम् ॥

"नराणाञ्चनराधिप" इति गीतास्मरणात् नारायणांशतया तथाहनने दोषबाहुल्याद्विगुणमुक्तम् । क्षत्रियमात्रे तु सहस्र-धेनुदानम् ।

स्कन्दपुराणे—

पट्टभद्रं द्विजोहत्वा राजमाचमकामतः ।
ततो राजा इति ज्ञात्वा पश्चात्तापपरायणः ।
द्विसहस्रं गवां दद्यात् विप्रेभ्यो दक्षिणादिभिः ॥
इतरे तु सहस्रं स्यादित्याह भगवान् यमः ।

पद्मपुराणे उत्तरखण्डे—

महायुद्धे जनक्षोभे ग्रामदाहे जलाप्लुते ।
दण्डपाषाणरज्ज्वाद्यै र्निमित्तैः क्षत्रियं हनेत् ।
पट्टभद्रं प्रमादाद्वा द्विसहस्रं प्रदापयेत् ॥

सहस्रमितरे दद्यात्तन्माहात्म्यात् प्रमुच्यते।
तत्पत्नीं तत्सुतं पुत्रीं हत्वा [1]ज्ञानाग्निमित्तजैः॥
तदर्द्धं तस्य दारेषु तत्पादमुभयोः क्रमात्।
गर्भमात्रे स्त्रियो तस्य दद्याद्गत्रा गवां द्विजः॥
पुनः संस्कारमात्रेण शुद्धो भवति पूर्व्वजः।
विप्रस्य वीरहत्येति गर्हात् प्रायश्चित्तबाहुल्यं पुनःसंस्कारश्च।

इति हेमाद्रिविरचिते धर्म्मशास्त्रे विप्राणां
क्षत्रियहत्याप्रायश्चित्तम्।

---

## अथ विप्राणां वैश्यहत्याप्रायश्चित्तमाह।

लिङ्गपुराणे—

ब्राह्मणः साम्पराये वा ग्रामदाहे जनाकुले।
नद्युत्तरणकाले तु यज्ञाद्यनादूरजं [2]हनेत्॥
दण्डपाशविमैरन्यै र्निमित्तैर्बहुभि र्नृप।
पश्चात्तापसमायुक्तो धेनूनां शतमादरात्॥

---

(१) ज्ञात्वा निमित्तजैरिति श्रीतपुस्तके पाठः।
(२) अज्ञानादहुजं इति श्रीतपुस्तके पाठः।

ब्रह्माण्डे—

अनोत्तारि[1] अनघोमे संग्रामे देशविप्लवे ।

ग्रामदाहे च गुरुजो निमित्तैः पूर्वसम्भवैः ॥

यज्ञानाद्धन्ति तस्यैवं प्रायश्चित्तं मनीषिभिः ।

कथितं दोषनाशार्थं धेनुदानचतुष्टयम् ॥

तस्योपनयनं भूयः पञ्चगव्यं पिबेत्ततः ॥ इति ॥

कूर्मपुराणे—

गुरुजोऽज्ञानतो देवानिमित्तैर्बहुभिः पृथक् ।

वैश्यं हन्ति तदा लोके यथा धेनुशतं नृप ॥

दत्त्वा पश्चात् पुनः कर्म पञ्चगव्यमनन्तरम् ।

एतदज्ञानविषयम् । ज्ञात्वा द्विगुणम् ।

ब्रह्मवैवर्त्ते—

वैश्यं समर्थमितरं तत्पत्नीं वा सुतं सुताम् ।

निमित्तैर्बहुभिः पायैर्ब्राह्मणो यदि हन्ति वा[2] ।

नश्यापतन्ति पुण्यानि काम्यानि च नरेश्वर ।

तद्दोषपरिहारार्थं शतधेनुं समाचरेत् ॥

तस्योपनयनं भूयः पञ्चगव्यमतः परम् ।

तत्पत्नीहनने त्वर्धं तदर्धमुभयोः पृथक् ॥

स्त्रियौ तद्गर्भपतने तयोरर्धं मुनीश्वर । इति ।

इति हेमाद्रौ विप्रस्य वैश्यहत्याप्रायश्चित्तम् ।

---

(१) अनोत्तरे इति श्रीमत्पुस्तके पाठः ।

(२) हन्यते इति श्रीतवैचिकपुस्तकपाठः ।

## अथ शूद्रवधप्रायश्चित्तमाह ।

पद्मपुराणे—

ब्राह्मणो ज्ञानतो राजन् विषरज्जुभिरादरात् ।
पादजं हन्ति लोभेन[1] संपराये जनक्षये ॥
तत्पापपरिहारार्थमुभयोर्लोकयोः पृथक् ॥
दद्याद् विप्राय धेनूनां दशात्पापविशुद्धये ।
तस्योपशमनं भूयः पञ्चगव्यमनन्तरम् ॥

राजविजये—

मुखजो ज्ञानतो भूयो विषपाशादिरज्जुभिः ।
पादजं हन्ति पापात्मा जनसङ्घे नदीतटे ॥
सद्यः क्षरन्ति पुण्यानि पुण्यनाशाद्धीजनिः ।
तद्दोषपरिहारार्थं दश दद्याद्गवां मुदा ॥
सतां च [2]साधुवृत्तानां विष्णुध्यानपरायणः ।
इत्यादोषात् प्रमुच्येत पुनःकर्म समाचरेत् ॥
ब्रह्मकूर्चविधानेन पञ्चगव्यं पिबेत्ततः[3] । इति

---

(१) कोपेन इति मोतवृत्ते पाठः ।

(२) सवर्णां साधुवृत्तानां इति केचित्पुस्तके पाठः ।

(३) पिबेद्व्रती इति मोतवृत्ते पाठः ।

ब्रह्माण्डपुराणे—

(आगतोऽनागतो राजन् विषरज्जुभिः सर्व्वदा ।)
अन्यथा आग[1]तो राजन् जनसङ्के प्रजाक्षये ॥
परप्रेरणया वाक्यैर्निमित्तैर्हन्ति पादजम् ।
सद्यः पतति पापेन यमलोके महत्तरे ॥
दद्याद्दश गवां विप्रः पुनःसंस्कारमर्हति ।

ब्रह्मयामले—

शूद्रं हन्ति द्विजोयस्तु निमित्तैः परभाषया ।
जनोत्तरे जनक्षोभे संग्रामे चारसङ्कुले ॥
पुत्रं सद्यः चरत्याशु यमलोकोऽसुखप्रदः ।
तत्पापशोधनार्थाय दश दद्याद्गवांमुदा ॥
उपनयनं पुनः कार्य्यं गायत्रीदानमेव च ।
पञ्चगव्यं पिबेत्पश्चात् शुद्धो भवति निश्चितः ॥

तद्दारहननेऽपिच ।

स्त्रियोश्च गर्भपतने तदर्द्धं[2]चयजाश्रमम् ।
प्रायश्चित्तमिदं ब्रह्मन् कथितं मुनिसत्तमैः ॥
प्रायश्चित्तविहीनो यो महद्दोषेऽपि सत्यपि ।
तस्यैव नित्यकर्म्माणि न फलन्ति न संशयः ॥

---

(—) अनयो रेखयोरन्तर्गतः पाठोलेखितपुस्तके नास्ति ।
(१) आगतः इति लेखितपुस्तके पाठः ।
(२) तत्तदर्द्धं इति लेखितपुस्तके पाठः ।

प्रायश्चित्तेन पूतात्मा लोकयोरुभयोः सुखी ।
अन्यथा दुःखमाप्नोति पापी स्यात्सप्तजन्मनि ॥

इति हेमाद्रौ विप्रस्य शूद्रवधप्रायश्चित्तम् ।

---

## अथ क्षत्रियस्य[1] वैश्यवधप्रायश्चित्तमाह ।

लिङ्गपुराणे—

वाहुजस्तूरुजं हत्वा अज्ञानाज्ज्ञानतोऽपि वा ।
रोषाद्वा मत्सराद्वापि यद्वा पिशुनवार्त्तया ॥
भृत्यैर्वा स्वयमेवाथैस्तस्य दोषो महान् भवेत् ।
नरकस्तस्य स त्याज्यो भवेज्जन्मनि जन्मनि[2] ॥
तद्दोषपरिहारार्थं दद्याद्धेनूर्द्विजातये ।
ततः शुद्धिमवाप्नोति महत्या हत्यया नृप ॥

कूर्मपुराणे—

राजा यो मदलोभेन यद्वापिशुनवार्त्तया ।
अन्यैर्भृत्यैरुपायैर्वा राजेन्द्र ? सहकामतः ॥

---

(१) क्षत्रियस्येति श्रीतर्कवाचस्पतिपुस्तकयोर्नास्ति ।
(२) "नरकस्तस्य घोरः स्याद्बहुशो जन्मजन्मनि" ।
इति श्रीतर्कवाचस्पतिपुस्तकयोः पाठः ।

नरके नियतं वासस्तस्य जन्मशयेन्नृप! ।
तत्पापोपशमायालं गवां दश समाचरेत् ॥
शुद्धो भवति पापात्मा उभयोर्लोकयोर्हितम् ।

मत्स्यपुराणे—

बाहुजो वणिजं हत्वा धनार्थी लोकवार्त्तया ।
शस्त्रजालकपादादिबन्धनादिभिरादरात् ॥
यमलोकमुपागम्य कालसूत्रमवाप्यते ।
ततो देहविशुद्ध्यर्थं दशधेनूः समाचरेत् ॥
राजा राजमदेनाशु कुरुते पापमादरात् ।
पापान्नरकं[1]माप्नोति नरकाग्निसुतापिता ॥
राज्ञां बहूनि पापानि सम्भवन्ति दिने दिने ।
अतो राजा न सम्भाष्यः कराचत्याहृतः सदा ॥
तस्मात्पतन्ति राजानो धनार्थं कामचारतः ।
राजा सुधर्मनिरतो देवब्राह्मणपूजकः ॥
सदा विद्वज्जनासेवी अरिषड्वर्गजित्सदा ।
सर्व्वधर्मरतोराजा तरति भवपूरणं ॥

इति हेमाद्रौ क्षत्रियस्य वैश्यवधप्रायश्चित्तम् ।

---

(१) च पापान्नरकं यातीति मौलपुस्तके पाठः ।

## अथ वैश्यस्य क्षत्रियवधप्रायश्चित्तमाह ।

कूर्म्मपुराणे—

अवजो विवदामानार्थैरुपायैर्भूपतिं हनेत् ।
अज्ञानादुत वा ज्ञानात् परवाक्यानुसारतः ॥
देशक्षोभे जनक्षोभे रोषात्केरव्यया अपि ।
महादोषमवाप्नोति वीरहत्या दुरत्यया ॥
मृत्वा नरकमाप्नोति राजा तं दण्डयेत्तदा ।
वर्णाधिकतया राजन् धेनुदानं शतं विदुः ॥

स्कान्दपुराणे—

अवजो बाहुजं हत्वा दधनो'ऽज्ञवदोऽपिवा ।
परिधाने रुपायैर्वा भृत्यैर्वा स्वयमेव वा ॥
विचार्य्य राजा बहुधा दण्डयेत्तं वणिक्पतिम् ।
ब्रह्मसूत्रं त्रुटित्वाथ वापयित्वा शिखामपि ॥
सर्व्वमर्थमुपाहृत्य निर्व्वास्यो विषयाद्बहिः ।
सोऽपि भूमिं परित्यज्य पश्चात्तापविशुद्धिमान् ।
शतं गवां द्विजे दद्यात् शुद्धिमाप्नोति निश्चयः ॥

शिवपुराणे—

वैश्योऽज्ञानाद्राजसुतं पट्टभद्रमथापिवा ।
हत्वा पापमवाप्नोति नरकं वापिगच्छति ॥

---

(१) अधनाद्दूमदोऽपिवा इति कौतुकाये पाठः।

ततो देहविशुद्ध्यर्थं भूपरिक्रमणं चरेत्[1] ।
ततः शुद्धेन मनसा वापयित्वा शिरोरुहान् ॥
ब्राह्मणेभ्यस्ततोदद्यात् गोशतं दोषमुक्तये ।

पद्मपुराणे—

पट्टभद्रस्य राजानं तत्पत्नीं तत्सुतस्य वा ।
बालं तद्गर्भमार्गं वा हत्वा वैश्यः सकृदपि ॥
पश्चाद्राजा इति ज्ञात्वा भूपरिक्रमणं चरेत् ।
पश्चाद्देहविशुद्ध्यर्थं विप्रेभ्यो गोशतं चरेत् ॥
द्विगुणं पट्टभद्रे च तद्दारेषु तदर्धतः ।
प्रायश्चित्तमिदं प्रोक्तं वैश्ये[2] क्षत्रियहत्यया ॥
एवं शुद्धिमवाप्नोति वीरहत्याविमुक्तये

इति हेमाद्रिविरचिते धर्मशास्त्रे वैश्यस्य[3]
क्षत्रियहननप्रायश्चित्तम् ।

---

(१) भवेद् इति श्रीतवेचितपुस्तकयोः पाठः ।
(२) वैश्यः क्षत्रियहत्यया इति श्रीतवेचितपुस्तकयोः पाठः ।
(३) वैश्यस्येति श्रीतपुस्तके नोपलभ्यते ।

## अथ शूद्रस्य वैश्यहत्याप्रायश्चित्तमाह।

कूर्मपुराणे—

वणिजं पादजो हन्यात् अज्ञानाज् ज्ञानतोऽपि वा।
धनार्थमुतरोषार्थं परप्रेषणया नृप॥
चौरैः सह मिलित्वा वा उत मार्गनिरोधतः।
राजा तं दण्डयेत् पश्चात् कौशल्येन यथार्हतः॥
[1]स्ववर्णाधिकवर्णत्वात् मौसलं दण्डमेव वा।

लिङ्गपुराणे—

शूद्रो धनार्थमन्यार्थं वणिजं हन्ति यत्नतः॥
राजा सम्यग्विचार्य्याथ तं मौसल्येन शिक्षयेत्।
उत [2]हृत्वा तु सर्व्वस्वं निर्वास्यो विषयाद्बहिः॥
एतेन शुद्धिमाप्नोति स राजापि न दोषभाक्।

मौसलदण्डाभावे सर्व्वस्वं हृत्वा देशान्निर्वास्यः। एतेन शुद्धोभवति।

महानारदीये—

शूद्रो न्यायपरीतात्मा विषमोऽपि महापदि।
ग्रामे वा पट्टने वापि यदि हन्याद्वणिक्पतिम्॥
राजा सम्यग्विचार्य्याथ तं मौसल्येन दण्डयेत्।
स्ववर्णाधिकवर्णत्वा मौसल्यमिति निश्चितम्॥

---

(१) स्ववर्णाधिक इति केचित्पुस्तकेपाठः।
(२) कृत्वा इति केचित्पुस्तकपाठः।

अथवाऽऽहृत्य सर्व्वस्वं निर्व्वास्यो राष्ट्रतः क्षणात् ।
पश्चात्पापविशुद्ध्यर्थं शूद्रोदद्याद् गवां दश ॥
इतीत्र शुद्धिमाप्नोति शूद्रोसुतोऽथ हत्यया ।
तत्पत्न्यां तत्सुते गर्भे पादमर्द्धं तदर्द्धतः ॥
प्रायश्चित्तमिदं प्रोक्तं ऋषिभि र्ब्रह्मवादिभिः ।

तत्पत्न्यो पञ्च गावोदेयाः । तत्सुते तदर्द्धम् । तद्गर्भपातने पादप्रायश्चित्तमिति सर्व्वत्र योजनीयम् । यत्र गावोऽनिर्द्दिष्टा स्तत्र तेन[1] वृषभा देयाः ।

इति हेमाद्रौ शूद्रस्य वैश्यहत्याप्रायश्चित्तम् ।

---

## अथ वैश्यस्य शूद्रहत्याप्रायश्चित्तमाह ।

कूर्म्मपुराणे—

वैश्यः शूद्रं यदा हत्वा तत्पत्नीं पुत्रमेववा ।
अज्ञानाद् यदि वा ज्ञानात् सङ्करं वा नराधिप ॥
राजा तं शतनिष्केण दण्डयेदविचारतः ।
वैश्यो देहविशुद्ध्यर्थं दश धेनूः समाचरेत् ॥

मत्स्यपुराणे—

मत्सराद्द्रव्यलोभाद्वा अवजः पादजं हनेत् ।
राजा तं दण्डयेद्धीमान् शतनिष्कमयन्त्रितः ॥

---

(१) तत्र इति वैश्वितद्रुतको पाठः ।

पश्चाद्धेनुशतं दद्यात् परलोकदिदृक्षया[1] ।
एतेन शुद्धिमाप्नोति शौचवर्णविहिंसनात् ॥
अज्ञानाज् ज्ञानतस्तात परप्रेरणहिंसया ।
निमित्तैर्वा स्वयं वापि वैश्यः शूद्रं हनेद् यदि ॥
राजा तं सम्यगालोच्य निश्चित्य बहुधा तथा ।
तस्यैव धनसम्पत्तिं विचार्य्य पुरवासिनः ॥
धनी चेद्यदि सामर्थ्यं शतनिष्केण दण्डयेत् ।
दरिद्रश्चेत्तदा राजन् निर्व्वास्यो विषयाद्बहिः ॥
पुनः स्वदेह[2]शुद्ध्यर्थं धेनुदानशतं विदुः ।
तत्पत्नीहनने त्वर्द्धं तत्पुत्रे पादमाचरेत् ॥
अवरं तस्य तत्पुत्रान् अज्ञो निहनेद् यदि ।
दश गाव स्वदद्याच्च तत्पादश्च यथाक्रमम् ॥
गर्भमात्रे तु गामेकां दत्त्वा शुद्धिमवाप्नुयात् ।

एतदज्ञानविषयम् । ज्ञात्वा प्रायश्चित्तं द्विगुणम् । राजदण्डस्तु यथोक्तः[3] ।

इति हेमाद्रिविरचिते धर्म्मशास्त्रे प्रायश्चित्ताध्याये
वैश्यस्य शूद्रहत्याप्रायश्चित्तम् ।

---

(१) दिदृक्षया इति कैश्चित्पुस्तके पाठः ।
(२) पुनश्च देहशुद्ध्यर्थ मिति क्रीतपुस्तके पाठः ।
(३) यथोक्ते इति क्रीतपुस्तके पाठः ।

## अथ चाण्डालादिवधप्रायश्चित्तमाह ।

पूर्व्वजो यदि चाण्डालं तीर्थे जनसमाकुले ।
रज्जुपाषाणलगुडैः कोपेन महता हतः ।
निहनेत् परशुना वा पराणं वा जनेश्वर ॥
नित्यकर्म्माणि सर्व्वाणि तस्य विप्रस्य पापिनः ।
नश्यन्ति[1] पितृकार्य्याणि उपकारो यथा खले ।
प्राड्विवाकमते स्थित्वा राजा[2] तं प्रसमीक्ष्य च ।
दण्डयेच्छतरूप्येण वाग्भिः पश्चाच्च दण्डयेत् ।
विप्रो देहविशुद्ध्यर्थं षडब्दं व्रतमाचरेत् ।
तस्योपनयनं भूयः सावित्रीदानमेव च ।
ब्रह्मोपदेशः कर्त्तव्यः पञ्चगव्यस्य भक्षणम् ।
एवं शुद्धिमवाप्नोति चाण्डालहनना[3]द् द्विजः ॥ इति ।

स्कन्दपुराणे—

ब्राह्मणो जनसंक्षोभे धनावृष्टि[4]भयादिषु ।
अज्ञानाद् यदि वा ज्ञानात् चाण्डालं यदि हन्ति वै ॥
रज्जुपाषाणदण्डैर्वा पाशैर्लौहमयै स्तथा ।
तस्य पुण्यानि नश्यन्ति पितृकार्य्याणि यानि च ॥

---

(१) न शान्तिपितृकार्य्याणि इति केचितपुस्तके पाठः ।
(२) राजानं इति केचितपुस्तकपाठः ।
(३) हनने द्विजः इति कोतपुस्तके पाठः ।
(४) धनावृष्ट्या भयादिषु इति कोतपुस्तके पाठः ।

राजा सम्यग् विचार्य्याथ प्राड्विवाक मते स्थितः ।
दण्डयेत् शतरूप्येण तस्य सम्भाषणं त्यजेत् ॥
ततो विप्रः प्रशमनं[1] षडब्दं कृच्छ्रमाचरेत् ।
तस्योपनयनं भूयः सावित्रीदानमेव च ।
एवं शुद्धिमवाप्नोति चाण्डालहननादिषु ।

लिङ्गपुराणे—

चाण्डालं हन्ति यो विप्रो रज्जुपाशास्त्रमुष्टिभिः ।
अज्ञान[2]हननाद्यातु रोषाद्वा कामकारतः ॥
परिषदाज्ञामवाप्याशु षडब्दं कृच्छ्रमाचरेत् ।
तत्पत्नीहननेत्वर्द्धं अवजस्य तदर्द्धतः ।
पादजस्य तदा शुद्धिर्यदा राजा प्रशिक्षयेत् ॥

---

## ब्रह्मचाण्डालग्रामचाण्डालतुरुष्कवधे प्रायश्चित्तमाह ।

कूर्म्मपुराणे—

परार्थं काशिकायातो[3]ऽव्रताग्निः कीकसागतः ।
तएते ब्रह्मचाण्डाला वाङ्मात्रेणापि नालपेत् ॥

---

(१) प्रशमनाः इति क्रोतचेचितपुस्तके पाठः ।
(२) अज्ञानहननधात्वा इति चेचितपुस्तके पाठः ।
(३) काशिकायां यो हुताग्निः इति चेचितपुस्तके पाठः ।

एतेषां हनने तत्प्रायश्चित्ताकरणे चाण्डालहननप्रायश्चित्तवत् सर्व्वं कुर्य्यात्। अलं मीमांसया। तुरुष्कस्य हनने तत्स्त्रीणां पुत्राणां च[1] गर्भमोचने च[2] चाण्डालहननप्रायश्चित्तवत् सर्व्वं कुर्य्यात्। मार्कण्डेयः—

पित्रोरब्दं परित्यागी सायाचाण्डालजन्मवान्।
निष्पुत्रस्य पितृव्यस्य अविभक्तस्य यो द्विजः॥
स तुरुष्को भवेद्भूमौ दीनस्त्यागवानिह।
निष्पुत्रस्याविभक्तस्य भ्रातुःश्राद्धं परित्यजेत्॥
स भूमौ रजको भूयात् सर्व्ववर्णबहिष्कृतः॥

एते ग्रामचाण्डालाः षोड़शविधाः तानेतानाह। गरुड़पुराणे—

रजकश्चर्म्मकारश्च नटो बुरुड़ एव च।
कैवर्त्तमेदभिल्लाश्च स्वर्णकारश्च सौचिकः॥
कारुको लौहकारश्च शिलाभेदी तु नापितः।
तक्षकस्तिलयन्त्री च सूनयन्त्री तथा ध्वजी॥
एते षोड़शधा प्रोक्ताश्चाण्डाला ग्रामवासिनः।
एतेषां दर्शनं स्पर्शः सम्भाषणमतः परम्॥
स्नानभोजनवेलायां अपहोमार्च्चने तथा।
एतेषां दर्शनं भाषां श्रोतुं नेच्छन्ति सूरयः॥

---

(१) स्त्रीतवेश्चितपुस्तकयोर्नास्ति।
(२) स्त्रीतवेश्चितपुस्तकयोर्नास्ति।

दर्शने सूर्य्यमालोक्य भोजने भोजनं त्यजेत्।
सम्भाषणे च पाणिभ्यां श्रोत्रे सम्यगुपस्पृशेत्॥
उत ब्राह्मणसम्भाषां ज्ञात्वा दोषात्प्रमुच्यते।
एतेषां हनने विप्रादीनां पृथक् पृथक् प्रायश्चित्तमाह।
अज्ञानाद्ब्राह्मणो हत्वा रजकं लगुडादिभिः॥
रूपकाणि शतं दद्याद् राजा तं पापकारिणम्।
पश्चाद्देहविशुद्ध्यर्थं पराकं कृच्छ्रमाचरेत्॥
चर्म्मकारे नटे चैव राजा दण्डेन दण्डयेत्।
ततो देहविशुद्ध्यर्थं तप्तकृच्छ्रद्वयं चरेत्।
राज्ञाऽसौ पूर्व्ववद्दण्ड्यो नटएवं हतोद्विजः॥
तदैव देहशुद्ध्यर्थं तप्तकृच्छ्रद्वयं चरेत्।
बुरुड़ं सुवर्णजोहन्यात् प्रमादाद्दैवचोदितः।
राजा तं पूर्व्ववद्दण्डयात् ततो देहविशुद्धये॥
कुर्य्यात्पराकं सहसा नान्यथा शुद्धिरीरिता।
कैवर्त्तहनने राजा पूर्व्ववद्दण्डयेद्द्विजम्॥
पराकं पूर्व्ववत् कुर्य्यादात्मनः शुद्धिहेतवे।
मेदं हत्वा द्विजः कुर्य्यात् शुद्ध्यर्थं चान्द्रभक्षणम्॥
पूर्व्ववद् दण्डयेद्राजा विप्रं तं न [1]विचारयेत्।
द्विजो बुरुडेऽस्यसंस्कारि भिल्लमज्ञानतो हनेत्॥

---

(1) विप्रं तमविचारयाम् इति काशीपुस्तके पाठः।

तत्रैव पूर्व्ववद् राजा दण्डयेच्चैवविप्लवम् ।
ततः पापविशुद्ध्यर्थं द्विजः कुर्य्यात्पराककम् ॥
हत्वा द्विजः स्वर्णकारं प्रमादादुतवा बलात् ।
तत्रापि पूर्व्ववद् दण्डयाद्राजा निर्म्मलमानसः ॥
द्विजो देहविशुद्ध्यर्थं महासान्तपनं चरेत् ।
सौचिकं ब्राह्मणोहत्वा बलादज्ञानतोऽपि वा ।
कुर्य्याद्देहविशुद्ध्यर्थं यतिचान्द्रायणं ततः[1] ॥

अत्रापि पूर्व्ववद् दण्डयेद् राजा ।

तक्षकं तिलहन्तारं द्विजोहत्वा प्रमादतः ।
शिशुचान्द्रायणं कुर्य्याद् राजदण्डपुरःसरम् ॥
सूनं वा चक्रिणं वापि विप्रोयदि निपातयेत्[2] ।
दण्डयेत् पूर्व्ववद् राजा प्राजापत्यद्वयं चरेत् ॥
तत्पादं शूद्रये कुर्य्यात् तत्पुत्रस्य वधे कृते ।
तदर्द्धं तत्स्त्रियौ प्रोक्तं तदर्द्धं गर्भपातने ॥
एतदर्द्धं द्वयोः प्रोक्तं एतेषां हनने नृप ।
प्रायश्चित्तं तथा विप्रे मुनिभिः क्षत्रवैश्ययोः ॥
तत्पत्नीनां तदर्द्धं स्यात्तदर्द्धं शिशुगर्भयोः ।
शूद्रोहन्यादिमान् यत्र राजा धर्म्मेण दण्डयेत् ॥

(१) चरेत् इति कीतवेष्टितपुस्तकपाठः ।
(२) निपातयाम् इति कीतवेष्टितपुस्तकपाठः ।

हनने हननं कुर्य्यात् स्तेये स्वर्णाधिकेषु च ।
मुषित्वा हस्तयो र्भूषां हस्तं छिन्द्यात् प्रयत्नतः ॥
नासिकाभरणे नासां कर्णौ कर्णविभूषणे— ।
कुर्य्यादुक्तविधानेन सर्व्वपापोपशान्तये ॥

उक्तं तत्कृत्यम् ।

पापं हिंसां न कुर्व्वीत कर्म्मणा मनसा गिरा ।
वर्त्तयेद् यदि मूढ़ात्मा महान्तं नरकं व्रजेत् ॥
प्रायश्चित्तविशुद्धात्मा पापमुक्तोभवेत्तदा ।
पापं विगूह्य मनसा पुण्यमानन्त्यमिच्छति ॥
तत्पुण्यान्न विशुध्येत मलमुष्टिर्यथा जलैः ।
ततो हिंसां न कुर्व्वीत कर्म्मणा मनसा गिरा ॥
यदि हिंस्याज्जनं वा यः पुमान् मासं तु पापभाक् ? ।

इति हेमाद्रौ चाण्डालसमवध प्रायश्चित्तम् ॥

---

## अथ निमित्तब्रह्मवधप्रायश्चित्तमाह ।

स्कन्दपुराणे—

नारी वा पुरुषो वापि विधवा वा तपस्विनी ।
धनार्थमथ 'पारार्थं' पक्षार्थं क्षेममेव वा ॥
येन वापि निमित्तेन येन केनापि हेतुना ।
यमुद्दिश्य त्यजेत् प्राणान् तमाहुर्ब्रह्मघातकम् ॥
निन्दया विधवा साध्वी तदर्थं चेत् त्यजेदसून् ।
बन्धूनां पुरतः पापी तमाहुर्ब्रह्मघातकम् ॥
अयं मुषित्वा हि धनं सर्व्वेषां हि समृद्धिमान् ।
इति यो वदते पापं पुरतः पापवान् पुमान् ॥
सत्यं तदथ मिथ्या वा तदर्थं यस्त्यजेदसून् ।
तमुद्दिश्य वधे विप्रे स्ते दण्ड्या राजवल्लभैः ॥
इत्येवमादिभिर्दोषैर्ब्रह्महत्यानिमित्तजैः ।
यदि यो हन्यते विप्रः प्रायश्चित्ती स पूर्व्वजः ॥
राजातं दण्डयेत्पश्चात्पापिनं पापिनां वरम् ।
तत्सामर्थ्यं परामृश्य सहस्रं शतमेव वा ॥
एतत्पापविशुद्ध्यर्थं षडब्दं कृच्छ्रमाचरेत् ।

---

(१) धनार्थमपरार्थं वा इति श्रीतपुस्तकपाठः ।

शिवपुराणे—

धनार्थं क्षेत्रदारार्थं पश्वर्थं वा जनेश्वर ॥
यस्तूद्दिश्य त्यजेत्प्राणान् तमाहुर्ब्रह्मघातकम् ।
तद्दोषपरिहारार्थं षडब्दं कृच्छ्रमाचरेत् ॥
ब्राह्मणस्तु परित्याज्यः प्रायश्चित्तपराङ्मुखः ।
राजापि तं तथा कुर्य्यात् भक्तपानादिभाषणैः ॥

इति हेमाद्रौ निमित्तब्रह्महत्याप्रायश्चित्तम् ।

---

## अथ सुरापानप्रायश्चित्तमाह ।

महानारदीये—

गौड़ी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा ।
चतुर्व्वर्णैरपेया स्यात् तथा स्त्रीभिश्च पण्डिता[1] ॥

---

(१) चातुर्व्वर्णैरपेया स्यात् स्त्रीभिः सार्द्धं पिबेद्यदि ।
ब्रह्महत्याव्रतं सम्यक् तच्चिह्नपरिवर्ज्जितम् ।
पश्चाज् ज्ञात्वा सुरापीति पश्चात्तापसमन्वितः ।
राजद्वारमुपागम्य राज्ञे स्वयं निवेदयेत् ।
सभासमीपे राजानं जनवृन्दसमाकुलम् ।
इत्यधिकः पाठः शीतपुस्तके यतःपरमुपलभ्यते ।

क्षीरं घृतं वा गोमूत्रं एतेष्व[1]न्यतमं द्विजाः ।
[पञ्चाग्निसन्निभां ज्ञात्वा स्वयमेव मनीषिभिः ॥]
[2]स्नात्वार्द्रवासा नियतो नारायणमनुस्मरन् ।
पञ्चाग्निसन्निभां ज्ञात्वा पिबेच्च कुडुपं तथा ॥
तत्तु[3] लोहेन पात्रेण आयसेनाथवा पिबेत् ।
ताम्रेण वाथ पात्रेण तत्पीत्वा मरणं व्रजेत् ॥
सुरापो शुद्धिमाप्नोति नान्यथा[4] शुद्धिरिष्यते ।
[अज्ञानाज्जलबुद्ध्या तु सुरापानं द्विजश्चरेत् ॥
ब्रह्महत्याव्रतं सम्यक् तच्चिह्नपरिवर्ज्जितम् ।

सुरा द्वादशविधास्ताएवाह ।
तालं हिन्तालजं चैव द्राक्षाखर्ज्जूरसम्भवम् ॥
मधुरं गैलमारिष्टं मैरेयं नारिकेलजम् ।
गौडी माध्वीच पैष्टीच मद्यं द्वादशधा स्मृतम् ॥
एतेष्वन्यतमं वापि न पिबेच्च कदाचन ।
एतेष्वन्यतमं यस्तु पिबेदज्ञानतो द्विजः ॥

---

(१) सुरां वा राजसत्तमो इति क्षीतपुस्तक पाठः ।

[ ] अनयोरेखयोरन्तर्गतः पाठः केषितपुस्तके नोपलभ्यते ।

(२) अस्मात्पूर्व्वं "स्वच्छाम्भोपचेत् वचन् समिदाधान पूर्व्वक" मित्यर्द्धमधिक मुपलभ्यते क्षीतपुस्तके ।

(३) एतां लोहेन इति क्षीतपुस्तकपाठः ।

(४) पयासेनैवदापयेदिति क्षीतपुस्तकपाठः ।

[ ] अनयो रेखयोरन्तर्गतः पाठः क्षीतकाशीपुस्तकयोर्नोपलभ्यते ।

तस्योपनयनं भूयस्तत्र कृच्छ्रत्रयं चरेत् ।
यदि रोगनिवृत्त्यर्थमपेयार्थं सुरां पिबेत् ॥
तस्योपनयनं भूयस्तथा चान्द्रद्वयं चरेत् ।
सुरापसृष्टमन्नञ्च सुराभाण्डोदकं तथा ।
सुरापानसमं प्राहुस्तथा चान्द्रस्य भक्षणम् ॥

लिङ्गपुराणे—

गौड़ी माध्वीच पैष्टीच विज्ञेयास्त्रिविधा सुरा ।
चतुर्भिर्वर्णैरपेयास्यात् स्त्रीभिः सार्द्धं पिबेद्यदि ॥
ब्रह्महत्याव्रतं सम्यक् तच्चिह्नपरिवर्ज्जितम् ।
पश्चाज् ज्ञात्वा सुरापीति पश्चात्तापसमन्वितः ॥
राजद्वारमुपागम्य राज्ञे सम्यङ् निवेदयेत् ।
सभासमीपे राजानं जनसङ्घसमाकुले ॥
क्षीरं घृतं वा गोमूत्रं सुरां वा राजसन्निधौ ।
पक्वाग्निसंनिभां ज्ञात्वा स्वयमेव न चापरैः ॥
स्नात्वार्द्रवासा नियतो नारायणमनुस्मरन् ।
ताम्रेण लोहेन पात्रेण चायसेनापि वा पिबेत् ॥
ताम्रेण वाथ पात्रेण तत्पीत्वा मरणं व्रजेत् ।
सुरापी शुद्धिमाप्नोति नान्यथा शुद्धिरिष्यते ॥ ]

एतासां तिसृणामेव प्राशने मरणान्तं प्रायश्चित्तमेव, नान्यत् ।
तथाच ब्रह्माण्डे—

गौड़ी माध्वीच पैष्टीच विज्ञेया त्रिविधा सुरा ।
एतां वर्णाश्च चत्वारो न पिबेयुः कदाचन ॥

एकां वा यो द्विजः पीत्वा मज्ञानाद् [1]गतिमाप्नुयात् ।
पश्चात्सुरेति [2]बुद्ध्वा चेत् प्रायश्चित्तं समाचरेत् ॥
राजद्वारमुपागम्य राज्ञे सर्व्वं निवेदयेत् ।
राजापि सम्यगालोच्य मेलयित्वा सभां ततः ॥
सभापि धर्म्मशास्त्रेषु दृष्ट्वा निष्कृति [3]माचरेत् ।
क्षीरं घृतं वा गोमूत्रं सुरां वा राज सन्निधौ ॥
स्वगृह्याग्नौ पचेत् सम्यक् समिदाधानपूर्व्वकम् ।
स्नात्वार्द्रवासा नियतो नारायणमनुस्मरन् ॥
एतां लोहेन पात्रेण आयसेनापि वा पिबेत् ।
ताम्रेण वाथ पात्रेण तत् पीत्वा मरणं व्रजेत् ॥
सुरापी शुद्धिमाप्नोति पश्चात्तेनैव दापयेत् ।
परलोकक्रियां सम्यग् धर्म्मशास्त्रेण मार्गतः ॥
तत्रो[4]पेक्षा न कर्त्तव्या पतितोऽयं न संशयः ।
यथा पीत्वा[5]सुरां पीत्वा मत्वा शुद्धेन संशयः ॥
सभा वा भूपतिर्व्वापि तत्र पापेन दोषभाक् ।
सुरापं दण्डयेद्राजा मरणं यदि नेच्छति ॥

---

(१) ज्ञानाद्दुर्गतिमवाप्नुयात् इति क्रीतपुस्तके पाठः ।
(२) बुद्ध्वा चेत् इति लेखितपुस्तके पाठः ।
(३) आदरादिति क्रीतलेखितपुस्तकयोः पाठः ।
(४) तत्रापेक्षा इति क्रीतपुस्तके पाठः ।
(५) यथा पीत्वा सुरां स्नात्वा मिति लेखितपुस्तकपाठः ।

ब्रह्मसूत्रं शिखां सम्यक् त्रुटित्वा वापयेच्छिरः ।
सुराभाण्डं ललाटे तु स्थापयित्वा नयेत् सुधीः ॥
आनीय मृन्मयं भाण्डं सुरापूरितमादरात् ।
बद्धा कण्ठे खरं यानमारोप्य नगरान्ततः ॥
(1)निःश्वासं ध्वनयन् भृत्यै (2)रटित्वा नगराद्बहिः ।
प्रोत्सार्य्य सहसा राजा न (3)दुष्टस्तेन कर्म्मणा ॥
(4)पापी वा द्वादशाब्दं तु कपालध्वजवर्ज्जितम् ।
ब्रह्महत्या व्रतं कृत्वा शुद्धिमाप्नोति नान्यथा ॥

एतत् प्रायश्चित्तं त्रिविधसुरापानविषयम् । अन्यसुरापाने प्रायश्चित्तमाह ।

ब्रह्माण्डपुराणे—

माधुरं गौडमारिष्टमैरेयं नारिकेलजम् ।
तालं हिन्तालजं चैव द्राक्षाखर्ज्जूरसम्भवम् ॥
वृक्षोद्भवमिदं मद्यं नवधा परिकीर्त्तितम् ।
एतेष्वन्यतमं वापि पिबेन्नैव न कदाचन ॥
एतेष्वन्यतमं यस्तु पिबेदज्ञानतो द्विजः ।

(१) निःश्वासं इति वैश्वितपुस्तके पाठः ।
(२) कथित्वा इति क्रीतपुस्तके पाठः ।
(३) न दोष तेन कर्म्मणा इति क्रीतवैश्वितपुस्तकपाठः ।
(४) न पापी द्वादशाब्दन्तु इति वैश्वितपुस्तके पाठः ।

तस्योपनयनं भूयस्तप्तकृच्छ्रत्रयं[1] चरेत् ।
सुरापस्पृष्टमन्नं च सुराभाण्डोदकं तथा ॥
सुरापानसमं प्राहु स्तत्र[2] चान्द्रस्य भक्षणम् ।
तस्योपनयनं भूयः पञ्चगव्यस्य सेवनम् ॥
यदि रोगनिवृत्त्यर्थमौषधार्थं सुरां पिबेत् ।
तस्योपनयनं भूय स्तथा चान्द्रत्रयं विदुः ॥
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ।

तदाह आपस्तम्बः—

"सुरापोऽग्निस्पर्शां सुरां पिबेत् । मृतः शुद्धो भवति ।"

तथाच श्रुतिः—

"न सुरां पिबेत् । न कलञ्जं भक्षयेत् । न तस्यैव प्रायश्चित्तम् । मरणान्तमेवेति" ।

यदि द्विजोरहसि सुरां पीत्वा पत्नीपुत्रादिषु सञ्चरन् वर्त्तयेत् वमनादिना च पश्चात्[3] प्रकटितः । तदा तत्पत्नीपुत्रादीनां दिनादि[4]पञ्चमाससमसंख्यया पृथक् प्रायश्चित्तमाह—

स्कन्दपुराणे—

द्विजो यदि सुरां पीत्वा रहः पुत्रादिषु स्थितः ।
पश्चाद्दैवात् सुरापीति ज्ञात्वा पुत्रादयः कथम् ॥

---

(१) तप्तकृच्छ्रं समाचरेत् इति क्रीतपुस्तके पाठः ।

(२) तथा इति क्रीतलेखितपुस्तकयोः पाठः ।

(३) वमनात्पापविख्यातः पश्चात्तत्प्रकटीकृतः इति क्रीतपुस्तके पाठः ।

(४) दिनादीत्यंशः क्रीतपुस्तके नोपलभ्यते ।

दिनत्रये यदा सङ्गस्तदोपोष्य दिनं सुधीः।
पञ्चगव्यं पिबेत्पश्चात् शुद्धोभवति सङ्गतः॥
दशरात्रं भवेत्सङ्गः पापिनाऽनेन सङ्गतात्।
ज्ञात्वा पश्चात्तदा स्नात्वा अयुतं जपमाचरेत्॥
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति।
पक्षमात्रं भवेत्सङ्गः पापिनाऽनेन यस्य हि॥
प्राजापत्यं ततः कृत्वा पञ्चगव्यं पिबेत्ततः।
मासमात्रं भवेत्सङ्गो दैवाद्यदि विगर्हितः॥
तदा चान्द्रायणं कुर्य्यात् पञ्चगव्यं ततः परम्।
ऋतुमात्रं भवेद्यस्य सङ्गस्तेनैव पापिना।
पूर्व्ववद्वपनं कृत्वा स्नात्वा [1]शुचिरलङ्कृतः।
गोसहस्रं द्विजानां[2] च दत्त्वा शुद्धिमवाप्नुयात्॥
पञ्चगव्यं पिबेत् पश्चात् शुद्धोभूयात् ततः परम्।
संवत्सरं भवेत्सङ्गः पत्नीपुत्रेषु वासिनः[3]॥
तत्पत्नीसुतजाः सर्व्वे तत्समाः स्युर्न संशयः।
परित्याज्याः सदा विप्रैर्वेदधर्म्मपरायणैः॥

तेषां पत्नीपुत्रादीनां साक्षात्सुरापानप्रायश्चित्तवच्चरणात्तं माभूत्, किन्तु संवत्सरादूर्द्ध्वं वयं सुरापीति[4] ज्ञाते देहशुद्धिं कामयमानाः

(१) शुचिरलङ्कृत इति मीतपुस्तके पाठः।
(२) द्विजादीनामिति क्वचित्पुस्तके पाठः।
(३) च वासतः इति मीतपुस्तके पाठः।
(४) वयं सुरापायीति ज्ञात्वा इति क्वचित्पुस्तके पाठः।

परिषदं मेलयित्वा तदनुज्ञया परिषदुपस्थानपूर्व्वकं गोशतं विप्रेभ्यो दत्वा पञ्चगव्यप्राशनं कुर्य्युः[1] पुनः शास्त्रविधिना ब्रह्मोपदेशे गायत्री-प्रदानम् ।　श्रोत्रियादभ्यसेयुः ।

तदाह कात्यायनः ।

तत्पत्नी तनयोवापि ज्ञानीवेदवत्सरा[2]त्परम् ।
सुरापीति सभां तत्र मेलयित्वा प्रणम्य च ॥
गोशतं विप्रमुख्येभ्यो दत्वा शुद्धिमवाप्नुयात् ।
पुनः कर्म्म ततः पश्चाद् गायत्रीदानमेव च ॥
पञ्चगव्यं पिबेत् पश्चात् शुद्धोभवति तत्क्षणात् ।
एतेन शुद्धिमाप्नोति तत्पत्नी पुत्रएव च ॥
अनादरेण शास्त्रेण आलस्याद्वा द्विजोयदि ।
यावत्कालं पुनः कर्म्म न कुर्य्यादात्मशुद्धये ॥
यागादिकं वा दानं वा जपोवा पैतृकादिकम् ।
तत्सर्व्वं निष्फलं भूयात् पुष्पं वन्ध्यतरोरिव ॥
अज्ञात्वा चेत् पुनः कर्म्म व्रतं कुर्य्यात्[3] सुतादिषु ।
मृतोनरकमाप्नोति न संस्कार्य्यस्तदा[4] द्विजः ॥

(१) ग्रीतकेचितपुस्तकयोः कुर्य्युरित्यंशो नोपलभ्यते ।
(२) वत्सरद्वयमिति ग्रीतपुस्तके पाठः ।
(३) व्रती स्वपुत्रदारादिषु इति केचित्पुस्तके पाठः ।
(४) तदात्मजे रिति ग्रीतपुस्तकेपाठः ।

यतः शौचं प्रकुर्व्वीत यदा दोषसमुद्भवः ।
तदैव परिहर्त्तव्यमित्याह भगवान् यमः ॥

इति हेमाद्रिविरचिते धर्म्मशास्त्रे प्रायश्चित्ताध्याये सुरापायि-
पत्नीपुत्रादीनां संसर्गप्रायश्चित्तम् ।

---

## अथ स्तेयप्रायश्चित्तमाह ।

लिङ्गपुराणे—

समक्षं वा परोक्षं वा बलाच्चौर्य्येण वा पुनः ।
योऽन्यस्य हरते वित्तं तमाहुः स्तेयिनं बुधाः ॥
पारक्यं यत्सुवर्णं तन्महापापसमुद्भवम् ।
तद्धृत्वा ब्राह्मणो यस्तु महापातकिनां वरः ॥
सुवर्णं रजतं ताम्रं पारक्यं यो हरेद्द्विजः ।
स याति नरकं घोरं पुनरावृत्तिवर्ज्जितम् ॥

सुवर्णप्रमाणमाह रजतताम्रकांस्यवस्त्रादीनाञ्च ।

स्कन्दपुराणे—

सुवर्णस्य प्रमाणञ्च मन्वाद्यैः परिकल्पितम् ॥
वक्ष्ये शृणुध्वं विप्रेन्द्राः प्रायश्चित्तैश्च साधनम् ।
गवाक्षगतमार्त्तण्डरश्मिमध्ये प्रदृश्यते ॥
त्रसरेणुप्रमाणन्तु रजस्त्वुच्यते बुधैः ।
त्रसरेण्वष्टकं लिक्षं तत्त्रयं राजसर्षपम् ॥
सर्षपाणामष्टकञ्च तत्त्रयं १ यवमुच्यते ।
यवत्रयं कृष्णलं स्यात् माषः स्यात् तस्य पञ्चकम्[1] ॥

---

(१) केचित्पुस्तकेषु अतः परं—

तद्द्वयं कर्षं प्रोक्तं तत्सुवर्णं तदुच्यते ।
तदर्द्धं माष इत्युक्तं मुनिभिर्मनुनादिभिः ॥

( तद्दयं रूपकं प्रोक्तं मुनिभिर्ब्रह्मवादिभिः ) ।
माषषोड़शमानन्तु सुवर्णमिति कथ्यते ॥
पलं सुवर्णाश्चत्वारस्तश्चत्वारि ध्रुवोभवेत् ।
चत्वारिंशद्ध्रुवाणान्तु भारस्तूच्यते बुधैः ॥
सुवर्णेन यथाक्रीतं रजतं धर्म्ममार्गतः ।
यावान् रजतराशिश्च तद्राजतमुदाहृतम् ॥
हृत्वा ब्रह्मस्वमज्ञात्वा द्वादशाब्दन्तु पूर्व्ववत् ।
कपालध्वजहीनन्तु ब्रह्महत्याव्रतञ्चरेत् ॥
गुरूणां चैव कर्त्तॄणां धर्म्मिष्ठानां तथैव च ।
श्रोत्रियाणां द्विजानान्तु हृत्वा हेम कथं भवेत् ॥
दग्ध्वाऽक्षदेशो देहे च सम्पूर्णं तर्पयेद्घृतम् ।
कारीषा[1]च्छादितो दग्धःस्तेयदोषात् प्रमुच्यते ॥

( ब्रह्माण्डपुराणे )

अज्ञानाद्ब्राह्मणं हृत्वा ब्रह्मस्वमथवापि च ।
कपालध्वजहीनन्तु ब्रह्महत्याव्रतं चरेत् ॥
दग्ध्वा[2]ऽक्षदेशं देहे च संपूर्णं लेपयेद् घृतम् ।
कारीषभारतोदग्धः स्तेयपापात् प्रमुच्यते ॥

---

(—) अनयोरेतयोरन्तर्गतः पाठः केषाञ्चित्पुस्तके नोपलभ्यते ।
(१) कारीषभारतो दग्ध इति कोलपुस्तके पाठः ।
(—) अयं पाठः कोलपुस्तके नोपलभ्यते ।
(२) मत्स्यकदेश इति केषाञ्चित्पुस्तकपाठः ।

यद्यंसे मुसलं धृत्वा विकीर्य्याऽऽत्मापराधवान् ।
गत्वा राजानमाचक्षेत् तं हन्यान्मुक्तो भवेत् ॥
मृतः शुद्धिमवाप्नोति नान्यथा शुद्धिरिष्यते ।

तदाह आपस्तम्बः

"स्तेनः प्रकीर्णकेशः अंसे मुसलमाधाय राजानं गत्वा कर्म्माचक्षीत । तेन एनं हन्यात् वधे मोक्षः ।" (आ॰सू॰ १–९–२५–४)

अल्पसुवर्णापहारप्रायश्चित्तमाह—

गुरूणां यज्ञकर्त्तॄणां धर्म्मिष्ठानां तथैव च ।
श्रोत्रियाणां द्विजानान्तु हृत्वा हेम कथं भवेत् ॥
ब्रह्मस्वं यस्तु हृत्वा च पश्चात्तापमवाप्य च ।
पुनर्धृत्वा[1] तु विप्रेभ्यः प्रायश्चित्तविधिः कथम् ॥
तत्र सान्तपनं कृत्वा द्वादशाहोपवासतः ।
शुद्धिमाप्नोति विप्रेन्द्रा अन्यथा पतितो भवेत् ॥
त्रसरेणुसमं हेम हृत्वा कुर्य्यात् समाहितम् ।
प्राणायामद्वयं सम्यक् तेन शुध्यति तत्सरात् ॥
प्राणायामद्वयं कृत्वा हृत्वा सर्षप[2]मात्रकम् ।
प्राणायामाश्च चत्वारो राजसर्षपमानतः ॥
गौरसर्षप[3]मानन्तु हृत्वा स्वर्णं विचक्षणैः ।
स्नात्वा च विधिवत् कार्य्यं गायत्र्यष्टसहस्रकम् ॥

---

(१) पुनर्हृत्वा तु विप्रेभ्य इति क्वचित्पुस्तकपाठः ॥
(२) सर्षपमात्रकमिति केचित्पुस्तकपाठः ।
(३) गौरसर्षपमात्रन्तु इति केचित्पुस्तकपाठः ॥

यवमात्रसुवर्णस्य स्तेयकृच्चैव जपेद्द्विजः।
आसायं प्रातरारभ्य गायत्रीं वेदमातरम्॥
हेम्नः कृष्णलमात्रस्य कृत्वा सान्तपनं चरेत्।
माषत्रयेण हेम्नस्तु प्रायश्चित्तन्तु कथ्यते॥
गोमूत्रपक्वयवभुग् देवार्चनपरायणः।
मासत्रयेण शुद्धः स्यान्नारायणपरायणः॥
माषमात्रसुवर्णस्य स्तेयं कृत्वा प्रमादतः।
जपेद्वै लक्षगायत्रीमन्यथा दोषमश्नुते॥
निष्कमात्रसुवर्णस्य हरणे विप्रसत्तमाः।
ब्रह्महत्याव्रतं कृत्वा षडब्दं शुद्धिमाप्नुयात्॥
किञ्चिन्न्यूनं सुवर्णस्य स्तेयं मुनिवरोत्तमाः॥
गोमूत्रपक्वयवभुग् षड्ब्देनैकेन शुध्यति।
सम्पूर्णस्य सुवर्णस्य स्तेयं कृत्वा मुनीश्वराः॥
ब्रह्महत्याव्रतं कुर्य्याद्द्वादशाब्दं समाहितः।
रत्नासनमनुष्यस्त्रीभूमिधेन्वादिकेषु च॥
सुवर्णसदृशेष्वेषु प्रायश्चित्तार्द्धमुच्यते।

मार्कण्डेय पुराणे—

विप्रस्वहरणे क्षत्रियादीनां प्रायश्चित्तं विधिमिष्टि॥

(१) कुर्य्यादिति क्रीतपुस्तके पाठः।

(२) षड्वेकेनैव शुध्यति इति केचित्पुस्तके, वर्षेणैकेन शुध्यति इति क्रीत पुस्तके पाठः समुपलभ्यते।

(३) प्रायश्चित्तार्द्धमुच्यते इति क्रीतकेचित्पुस्तकयोः पाठः।

( स्तेयं कृत्वा सुरां पीत्वा राजा यो धर्म्मवत्सलः )
विप्रस्वहरणे राजा स्वर्णमाषमथाधिकम् ।
हृत्वा नरकमाप्नोति ब्रह्महेति वदन् द्विजाः ॥
पश्चात्तापसमायुक्तो ब्रह्महत्याव्रतं चरेत् ।
तेभ्यश्च दत्त्वा तद्धेम पश्चाच्चान्द्रायणद्वयम् ॥
कृत्वा शुद्धिमवाप्नोति नान्यथा जनवल्लभ ।

कूर्म्मपुराणे—

अज्ञानाद्बाहुजो हृत्वा विप्राणां स्वर्णमुत्तमम् ॥
गुरूणां यज्ञकर्तॄणां धर्म्मिष्ठानां तथैव च ।
श्रोत्रियाणां द्विजानान्तु विधवानां विशेषतः[1] ॥
पूर्व्ववद् [2]घृतलिप्ताङ्गः कुर्व्वन् सर्व्वावलोकनम् ।
कारीषाच्छादितो दग्धः स्तेयपापात्प्रमुच्यते ॥

लिङ्गपुराणे—

ब्रह्मस्वं क्षत्रियो हृत्वा अश्वमेधेन शुध्यति ।
आत्मतुल्यं सुवर्णं वा दद्याद्वा गोसमं तथा[3] ॥
ब्रह्मस्वं क्षत्रियो हृत्वा पश्चात्तापमवाप्य च ।
पुनर्दत्त्वा तु विप्रेभ्यः प्रायश्चित्तविधिः कथम् ॥

---

(—) अयं पाठः श्रौतपुस्तके नोपलभ्यः ।
(१) वैष्णवानां विशेषतः इति श्रौतपुस्तके पाठः ।
(२) पूर्व्वाहुतवहव्याप्तं इति श्रौतपुस्तके पाठः ।
(३) चरेत् इति कैश्चित्पुस्तके पाठः ।

तच सान्तपनं कृत्वा द्वादशाहोपवासतः।

शुद्धिमाप्नोति विप्रेन्द्रा अन्यथा पतितोभवेत्।

पुनरपि राज्ञां स्तेयप्रकारमाह—

शिवरहस्ये—

अन्यायाद्विप्रग्रामेषु अनाथेभ्योधनं च यत्।

अदण्ड्येभ्योयथा वित्तं तत् स्तेयं भूभुजामिह॥

तदपि स्तेयमित्युक्तं पूर्व्ववच्छुद्धिमाप्नुयात्।

सुरामपि तथा राजा पीत्वा ज्ञानात् क्वचिद्द्विजाः॥

अग्निदग्धां सुरांपीत्वा राजा मृत्वा ततः शुचिः।

तथापि विप्रमुख्यानां द्व्ययुतं धेनुमाचरेत्॥

स्तेयं कृत्वा सुरांपीत्वा मृत्वा राजा विशुध्यति।

द्विजेभ्योद्व्ययुतं धेनुमिति यत्तदसाम्प्रतम्॥

वर्णचतुष्टयानां नारीणां मद्यपानसम्भवे, न मरणान्तम्। त्यागएव परम्। न पोषणो[1]पायः। क्षत्रिय[2]शूद्रस्त्रीणां केचिद्वधमिच्छन्ति। सुवर्णस्तेयेऽपि एवमेव वेदितव्यम्।

तदाह कात्यायनः—

विप्रादीनां तु नारीणां स्तेयं वा पापमेव वा।

सम्भवेद् यदि दैवेन नेच्छन्ति मरणं बुधाः॥

(१) न पोषणेऽपाय इति क्रीतपुस्तके पाठः।

(२) क्षत्रियशूद्राणामिति क्रीतपुस्तके पाठः॥

न त्याज्यास्तु स्त्रियः काश्चिन्नोपोष्या वेसुभिः किल ।
क्षत्रियादेर्वधः प्रोक्तो विप्राणां गर्हितं स्मृतम् ॥

लिङ्गपुराणे—

सुरापानं वणिक् कृत्वा सुवर्णं वा द्विजन्मनाम् ।
क्षत्रव(१)च्छुद्धिमाप्नोति शूद्रो मौसल्यमर्हति ॥

स्कान्दपुराणे—

सुरां पीत्वा सुवर्णं वा हृत्वा यदि वणिक्पतिः ।
राजवच्छुद्धिमाप्नोति द्व्ययुतं वा गवां चरेत् ॥

नागरखण्डे—

ऊरुजस्तु सुरां पीत्वा हृत्वा स्वर्णं द्विजन्मनाम् ।
क्षत्रवद्देहशुद्धिः स्याद् अन्यथा द्व्ययुतं गवाम् ॥
तच्छूद्रस्तु सुरां पीत्वा हृत्वा हेम द्विजन्मनाम् ।
राजदण्डः स्वधर्मेण मुसलेन हतः शुचिः ॥

स्कान्दपुराणे—

पादजस्तु यदा हृत्वा सुवर्णं पूर्व्वजन्मनाम् ।
सुरां पीत्वा सज्ञज्ञात्वा (२)मौसल्यं वधमर्हति ॥

---

(१) क्षत्रियवच्छुद्धिमाप्नोति इति श्रीतकेचितपुस्तकयोः पाठः ।
(२) मौसल्यवध इष्यते इति श्रीतकेचितपुस्तकयोः पाठः ।

विष्णु*धर्म्मोत्तरे—

मध्यजो हेमहारी[1] यः सुरापायी द्विजन्मनाम्।
तत्स्त्रीणां त्यागएव स्यात् सोऽपि मौसल्य मर्हति॥

राजविजये—

पादजो यदि मोहाद्वा सुरां पीत्वा[2] द्विजन्मनाम्।
हृत्वा हेम कथं तस्य राज्ञा[3] मौसल्यमिष्यते॥
तत्स्त्रीणां त्यागएव स्यात् ध्वजो वा मुनिचोदितः।

इति हेमाद्रौ क्षत्रियादीनां विप्रस्वहरणे
प्रायश्चित्तम्।

---

* विष्णुपुराणे इति कोतपुस्तके पाठः।
(१) हेमहृत्वा च इति कोतकेचितपुस्तकपाठः।
(२) सुरां पीत्वा इति कोतपुस्तके पाठः।
(३) राजा मौसल्यमिष्यते इति कोतपुस्तकपाठः।

## अथ रजतादिस्तेयप्रायश्चित्तमाह ।

लिङ्गपुराणे—

सुवर्णेन प्रमाणेन ज्ञात्वा यद्राजतं भवेत् ।
तावद्धृत्वा द्विजो यस्तु स्तेयी इत्युच्यते बुधैः ॥

स्कन्दपुराणे—

राजतं येन तं[1] हृत्तं पूर्व्वमानेन धर्म्मतः ।
तद्धृत्वा मुखजः सम्यग् अज्ञानाद्रा[2]जनन्दन ॥
स्तेयी इत्युच्यते सद्भिः प्रायश्चित्ती भवेद् द्विजः ।

चतुर्व्विंशतिमते

हरेद्रजतमज्ञानात्[3] पूर्व्वजो यदि दैवतः ।
स कृत्वा पूर्व्ववद्राजन् शुद्धिमाप्नोति निश्चितम् ।

महानारदीये

सुवर्णमानानन्यस्मिन् रजतस्तेयकर्म्मणि ।
कुर्य्यात् सान्तपनं सम्यग् अन्यथा पतितो भवेत् ॥
दशनिष्कान्तपर्य्यन्तमूर्द्ध्वं निष्कचतुष्टयात् ।
हरेच्चेद्रजतं[4] विद्वान् कुर्य्याच्चान्द्रायणं द्विजाः ॥
दशादिशतनिष्कान्तरजतस्तेयकर्म्मणि ।
चान्द्रायणद्वयं प्रोक्तं तत्पापपरिशोधकम् ॥

---

(१) येन यत् क्रीतमिति लेखितपुस्तके पाठः ।

(२) राजतं हरेदिति क्रीतपुस्तके पाठः ॥

(३) अज्ञानाद्राजतं हृत्वा इति क्रीतलेखितपुस्तकयोः पाठः ।

(४) हृत्वा चेद्रजतं इति क्रीतलेखितपुस्तकयोः पाठः ॥

शतादूर्द्धं सहस्रान्तं प्रोक्तं चान्द्रायणत्रयम् ।
सहस्रादधिके स्तेये ब्रह्महत्याव्रतं चरेत् ॥

स्कन्दपुराणे—

सुवर्णादधिकस्तेये रजतस्य विशांपते ।
कुर्य्यात् सान्तपनं सम्यक् अन्यथा दोषभाग् भवेत् ॥
दशनिष्कान्तपर्य्यन्तमूर्द्धं निष्कचतुष्टयात् ।

स्कन्दपुराणे—

सुवर्णादधिकस्तेये रजतस्य विशांपते ।
कुर्य्यात् सान्तपनं सम्यक् अन्यथा दोषभाग् भवेत् ॥
दशनिष्कान्तपर्य्यन्तमूर्द्धं निष्कचतुष्टयात् ।
हृत्वा चेद्रजतं विद्वान् कुर्य्याच्चान्द्रायणं द्विजः[1] ॥
शतादूर्द्धं सहस्रान्तं प्रोक्तं चान्द्रायणत्रयम् ।
सहस्रादधिकस्तेये ब्रह्महत्याव्रतं चरेत् ॥

क्षत्रियविशां रजतस्तेये विप्रप्रायश्चित्ताद्द्विगुणं वेदितव्यम् । शूद्रस्य मौसल्यमेव । तत्तत्स्त्रीणां रजतादिस्तेयसम्भवे [2]त्यागः पूर्ववन्न मरणादि ।

इति हेमाद्रौ रजतस्तेयप्रायश्चित्तम् ।

---

(१) गुणमिति केचित्पुस्तके पाठः ।
(२) त्याज्या इति मीत केचित्पुस्तकयोः पाठः ।

## अथ ताम्रस्तेयप्रायश्चित्तमाह ।

स्कान्दपुराणे—

( हृत्वा विप्रः [1]पलशतं ताम्रं पारक्यमादरात् ।
स्तेयी इत्युच्यते सद्भिर्न सम्भाष्यः कदाचन ॥
पलप्रमाणं पूर्व्वमुक्तं )
मुखजो लोभत स्ताम्रं पारक्यं वै शतं पलम् ।
स्तेयी महद्भिर्गदितस्तस्य नास्तीह निष्कृतिः ॥

गरुड़पुराणे—

अनाथानाञ्च नारीणां विधवानां द्विजन्मनाम् ।
गुरूणां कर्म्मनिष्ठानां साधूनां ताम्रमादरात्
स्तेयेन वा बलात्कारात् विप्रोहृत्वा शतं पलम् ।
न तस्य निष्कृतिर्नाग्निर्मरणान्तवधादिह ॥
पलद्वये पञ्चगव्यं पीत्वा शुद्धिमवाप्नुयात् ।
प्राजापत्यं पञ्चपले तप्तं दशपले स्मृतम्[3] ॥
त्रिंशत्पलेतु चान्द्रं स्यात् पञ्चाशत्तत्त्वयं स्मृतम् ।
ताम्रे षष्टिपले प्रोक्तं मासं जलाघमर्षणम् ॥
कण्ठदघ्नजले स्थित्वा शुद्धिमाप्नोति पूर्व्वजः ।
ताम्रे शतपले राजन् स्तेयं कृत्वा तु पूर्व्वजः ॥

---

(१) विष्णुपुराणे इति केचित्पुस्तके पाठः ।
(—) अयं पाठः क्रीतपुस्तके नोपलभ्यते ।
(२) पञ्चशतमिति केचित्पुस्तके पाठः ।
(३) प्राजापत्यं पञ्चगव्यं तप्तं दशपले-स्मृतम । इति क्रीतपुस्तके पाठः ।

त्रिः परिक्रमणं[1] कुर्य्याद् [2]भुवत्वाब्दं ततः परम्।
हृत्वा शतपलं ताम्रं स्वर्णस्तेयसमं विदुः॥

शतपलताम्रस्तेयात् द्विजः सुवर्णस्तेयवत् प्रायश्चित्तं कुर्य्यात्। नात्र मरणान्तं प्रायश्चित्तम्। सुवर्णस्तेयसममित्युक्तम् अतो न मरणान्तप्रायश्चित्तम्। अयुतधेनुदानादिकमेव [3]मणियादिस्तेय प्रायश्चित्तम्। एवं न सुवर्णस्तेयादिवत्।

इति हेमाद्रिविरचिते धर्म्मशास्त्रे प्रायश्चित्ताध्याये ताम्रस्तेयप्रायश्चित्तम्।

---

(१) कृत्वा इति क्रीतपुस्तके पाठः।
(२) भुक्त्वा इति क्रीतपुस्तके पाठः।
(३) मणिवादिस्तेयप्रायश्चित्तमिति क्रीतपुस्तके पाठः।

## अथ कांस्यस्तेयप्रायश्चित्तमाह।

(कूर्मपुराणे—

'कांस्यं यत्पापसम्भूतं पारक्यं यदि लोभतः।
स्तेयं कृत्वा द्विजोयस्तु स पापफलमश्नुते॥)

लिङ्गपुराणे—

कांस्यस्तेयी महापापी रौरवं नरकं व्रजेत्।
पश्चाद्भवति पापात्मा कारुको जायते भुवि॥

महाभारते—

कांस्यं हृत्वाद्विजो लोभात् पारक्यं द्विजहेतुकम्।
महान्तं नरकं गत्वा हीनवर्णः प्रजायते॥

चतुर्विंशतिमते—

कांस्यपित्तलमुख्येषु आयसान्तेषु पञ्चसु।
सहस्रनिष्कमाने तु पारक्यं परिकीर्त्तितम्॥
प्रायश्चित्तन्तु लोहानां स्तेये रजतवत्स्मृतम्॥

कांस्यपित्तलस्तेये वर्णत्रयस्य रजतस्तेयवत् प्रायश्चित्तम् पलसंख्यया

---

(—) अयं पाठः क्रीतकाशीपुस्तकयो र्न दृश्यते।

(१) काशीपुस्तक क्रीतपुस्तकयोः 'स्कन्दपुराणे।

सुवर्णो लोभवन्तासः पारक्यं वै पलं ततः।
स्तेयं कृत्वा द्विजोयस्तु सपापफलमश्नुते"

इत्यधिकपाठः समुपलभ्यते।

वेदितव्यम्। न निष्कादिप्रमाणम्। शूद्रस्य 'राजत'लघुगुरुक्रमेण अङ्गुलिच्छेदादिकं कारयितव्यं न मौसल्यम्। द्रव्यस्याल्पत्वात्। तत्क्षीणामिवमेव सम्भवे प्रायश्चित्तं करणीयम्।

इति हेमाद्रौ प्रायश्चित्ताध्याये कांस्यस्तेयादि-
प्रायश्चित्तम्।

---

(१) शूद्रस्येति श्रीतर्कवाचस्पतिपुस्तकयोर्नोपलभ्यते।

(२) लघुक्रमेण इति श्रीतर्कवाचस्पतिपुस्तकपाठः।

## अथ धान्यस्तेयप्रायश्चित्तमाह ।

मरीचिः—

ब्राह्मणो द्रव्यलोभेन पारक्यं धान्यमाहरेत् ।
द्रोणं वा प्रस्थमात्रं वा हृत्वा नरकमश्नुते ॥

लिङ्गपुराणे—

मुषित्वा योद्विजोमोहाद्धान्यं द्रोणप्रमाणकम्
पारक्यं धन्यमतुलं हृत्वा तु नरकं व्रजेत् ॥
तदन्ते भुवमासाद्य सदने मूषको भवेत् ।

धान्यप्रमाणमाह—

कूर्म्मपुराणे—

पुराणं षष्टिभिर्वीजैस्तद्द्वयं कोशउच्यते ॥
कोशद्वयन्तु लिङ्गं स्यात् प्रसस्तद्द्वयमुच्यते ।
अञ्जलिस्तद्द्वयं राजन् तद्द्वयं[1] कुडुपं स्मृतम् ॥
[2]कुडुपद्वयं तु प्रस्थं स्यात् द्रोणस्तेषां चतुष्टयम् ।
द्रोणानां विंशतिः खारी धान्यमानमितीरितम् ॥
द्रोणद्वयं तु भारःस्यात् ज्ञेयस्तत्पलसङ्ख्यया ।
कोशस्तेये[3] दश प्रोक्तं सावित्रीपठनं मुदा ॥

---

(१) तद्द्वयं पुरपं स्मृतम् इति क्रीतपुस्तके पाठः ।

(२) मानद्वयं व यद्भूतं तद्द्वयं कुडुपं स्मृत मित्यधिकमर्द्धमितः पूर्व्वं क्रीत-लेखितपुस्तकयोः समुपलभ्यम् ।

(३) आपस्तोयेदश प्रोक्तमिति लेखितपुस्तकपाठः ।

चञ्चली शतगायत्रीजपः पापप्रणाशनः ।
सहस्रं पुरुषे प्रोक्तं मानी दशयुतमुच्यते ॥
लक्षं तु कुड़वे प्रोक्तं प्रस्थे लक्षत्रयं चरेत् ।
द्रोणे तु दशलक्षं स्यात् खारीधान्ये यथा शृणु ।
सुवर्णस्तेयिनः पापे प्रायश्चित्तं द्विजैर्मुदा[1] ॥
तत्तदाचरणीयं स्याद् अन्यथा पतितो भवेत् ।
गोधूमतिलमाषाणां स्तेयेन[2] द्विगुणं स्मृतम् ॥
श्यामाकमुद्गव्रीहीणां प्रमाणानां तथैव च ॥
[3]पावतालकुलित्थानां [4]यवपूर्व्वं समाचरेत् ।
ब्राह्मणोयदि लोभेन शोषयेत् खारिकाद्वयम् ॥
घृताक्तदेहः सहसा कारीषेण महाग्निना ।
दग्धः शुद्धिमवाप्नोति नान्यथा गतिरिष्यते ॥

राजवैश्ययोरेवं प्रायश्चित्तं धन्यस्तेये विवेचनीयम् । शूद्राणां मौसलप्रायश्चित्तम् । राजवैश्ययोर्विवाहादिषु संस्कारबलवत्तया विप्रप्रायश्चित्तवदुक्तम् ।

इति हैमाद्रौ धर्म्मशास्त्रे धान्यस्तेयप्रायश्चित्तम्।

---

(१) द्विजैस्तदा इति क्रीतपुस्तके पाठः ।
(२) स्तेयिनोद्विगुणं व्रतमिति क्रीतपुस्तकपाठः ।
(३) यावनालकुलित्थानामिति लेखितपुस्तकपाठः ।
(४) यावपूर्व्वमथाचरेत् इति लेखितपुस्तकपाठः ।

## अथ वस्त्रस्तेयप्रायश्चित्तमाह।

स्कान्दपुराणे—

वस्त्रं मुष्णाति यो विप्रः पारक्यं शास्त्रगर्हितम्।
अज्ञानाज्ज्ञानतो वापि तस्य दोषो महान् [१]भवेत्॥

कूर्मपुराणे—

विप्रो यदि हि पारक्यं वस्त्रमज्ञानतः खलः।
तदा दोषमवाप्नोति तं त्यजेदन्त्यजं यथा॥

शिवपुराणे—

यो विप्रो दुर्जनासक्तो परवस्त्रं मुषेद्यदि।
तस्यैवं पुण्यनाशः स्यादिति शास्त्रेषु निश्चितम्॥
तदन्ते नरकं याति जायते वस्त्रहीनवान्।

कूर्मपुराणे—

विप्रो मुष्णाति यद्वस्त्रं पारक्यं धर्मगर्हितम्।
यमलोकमुपागम्य तत्र स्थित्वाऽन्यजन्मनि॥
पुनर्भुवमुपागम्य बहुपुत्रो विवस्त्रवान्।

प्रायश्चित्तमाह देवस्वामी—

स्थूलतन्तुजातं वस्त्रं सूक्ष्मतन्तुविनिर्मितम्॥
चित्रवस्त्रं तथा नीलं रक्तं कौसुम्भ[२]रञ्जितम्।
पट्टवस्त्रं तु कौशेयं अर्णामयमतः परम्॥

---

(१) महानभूत् इति कौतर्वेष्टितपुस्तकपाठः।

(२) रञ्जनर्जित वेष्टितपुस्तके पाठः।

क्षौमवस्त्रमिति प्रोक्तं तत्तद्वस्त्रानुसारिणि ।
स्थूलतन्तुकृते वस्त्रे स्तेयं कृत्वा तु पूर्व्वजः ॥*
पश्चात्तापसमायुक्तः प्राजापत्यं समाचरेत्[1] ।
[सूक्ष्मतन्तुकृते वस्त्रे तु मुषित्वा तप्तकृच्छ्रकं चरेत् ॥]
नीलीमये सूक्ष्मवस्त्रे चरेच्चान्द्रायणत्रयम् ।
बहुमूल्ये रत्नवस्त्रे कौशेये च मुनीश्वराः ॥
सद्यः पतति पापात्मा हुताशोऽग्निं विशेत्ततः ।
सुवर्णस्तेयिनं प्राहुः तं मौसल्यं विदुर्बुधाः ॥
नान्यथा गतिरस्तीह तस्य भूयिष्ठपापिनः ।
पुनर्दत्त्वा तु तद्वस्त्रं पश्चात्तापसमन्वितः ॥
प्राजापत्यत्रयं कृत्वा शुचिमाप्नोति पूर्व्वजः ।
उक्तं यथा क्षत्रियाणां तथा सर्व्वं समाचरेत् ॥
तथा विप्रादिदाराणां वस्त्रतोये यथाक्रमम् ।

विप्राणां यत् प्रायश्चित्तं उक्तं तदर्द्धं तद्दारक्षत्रियादीनाम् । तद्दाराणामेवं प्रायश्चित्तार्द्धक्रमेण योजनीयम् ।

इति हेमाद्रौ धर्म्मशास्त्रे प्रायश्चित्ताध्याये
वस्त्रस्तेयप्रायश्चित्तम् ।

---

* अतःपरम् "शुद्धेन मनसा राजन् तप्तकृच्छ्रद्वयं चरेत्" इत्यधिकः पाठः क्षौतपुस्तके दृश्यते ।

(१) पश्चाताप इत्याद्यर्द्धं क्षौतपुस्तके नोपलभ्यते ।

[—] अयं पाठः क्षौतकाशीपुस्तकयोर्नोपलभ्यते ।

## अथ गुरुतल्पगमनप्रायश्चित्तमाह।

स्कन्दपुराणे—

गुरुतल्पगतानां तु प्रायश्चित्तमिहोच्यते।
जननी च सपत्नी च राज्ञः[1] पत्नी गुरोस्तथा॥
मातुलानी स्वभगिनी स्वसा ज्येष्ठस्य नायिका।
श्वश्रूः कनिष्ठभार्य्या च भागेयी च पतिव्रता॥
एकादश समास्त्वेताः स्वमात्रा राजवल्लभा।
पूज्याश्च वन्दनीयाश्च पोष्या वस्त्रादिभूषणैः॥
द्विजोऽपि न द्रोहकृत् स्यात्कर्मणा मनसा गिरा।
जननी सर्व्वभूतानां पूज्या वन्द्याश्च तास्तथा॥
अज्ञानान्मातरं गत्वा तत्सपत्नीमथापि वा।
स्वयमेव स्वमुष्कं तु च्छिन्द्यात् पापमुदीरयन्[2]॥
हस्ते गृहीत्वा तन्मुष्कं निर्गच्छेन्निर्ऋतिं दिशम्।
गच्छन्नेवाग्रतः स्वस्य कदाचिन्न विचारयेत्[3]॥
अपश्यन् पृष्ठतो गच्छेत् प्राणान्तं प्राप्य[4] शुध्यति।
भृगुप्रपतनं[5] वापि कुर्य्यात् पापमुदीरयन्।

---

(१) राजपत्नी इति ज्ञानतेर्विखितपुस्तकयोः पाठः।
(२) पापमुदीरयेत् इति ज्ञोतवेर्विखितपुस्तकयोः पाठः।
(३) विचारयन् इति ज्ञोत वेर्विखितपुस्तकपाठः।
(४) यस्य शुध्यति इति वेर्विखितपुस्तके पाठः।
(५) मरुत्प्रपतनं इति वेर्विखितपुस्तकपाठः।

भविष्योत्तरे—

राज्य[1] क्षोभे महातीर्थे संग्रामे देशविप्लवे ॥
पत्नीष्वन्यासु नारीषु स्थितासु मोह[2]पीड़ितः ।
मातरं वा सपत्नीं वा स्वदारभ्रान्तिमाविशन् ॥
पश्चाज्ज्ञात्वा तु मातेति पश्चात्तापमुपाविशन् ।
स्वयमेवासिना मुष्कं छित्वा पापमुदाहरन् ॥
अपश्यन् पृष्ठतो गच्छेत् प्राणान्तं प्राप्य शुध्यति ।
रेतःसेकात् पूर्व्वमेव निवृत्तो यदि मातरि[3] ॥
ब्रह्महत्याव्रतं कुर्य्याद् रेतः[4]सेक्ताऽग्निदाहनम् ।
ज्वलितां सूर्म्मिमालिङ्ग्य मृतः शुद्धिमवाप्नुयात् ॥

ब्रह्माण्डपुराणे—

महातीर्थेषु संग्रामे जनक्षोभे महाभये ।
[तव राजन् सतीसङ्गे महामसि समुद्गते ॥]
कामातुरः स्वपत्नीति मातरं वापि पत्नजाम् ।
गत्वा सकृत्स्वदारेषु पूर्व्वचिह्नविवर्ज्जिताम् ॥
मातरं सहसा बुद्ध्वा पश्चात्तापपरायणः ।
असिना तीक्ष्णधारेण छिन्नं स वृषणं सकृत् ॥

---

(१) पुरक्षोभ इति क्रीतपुस्तकपाठः ।
(२) स्मरपीड़ित इति लेखितपुस्तकपाठः ।
(३) मातरं इति क्रीतलेखितपुस्तकपाठः ।
(४) रेतःसिक्तोऽग्निदाहनम् इति क्रीतलेखितपुस्तकपाठः ।
[--] अयं पाठः क्रीतपुस्तके नोपलभ्यते ।

छित्वाञ्जलौ समाधाय न पश्चादवलोकयन् ।
स्मरन् नारायणं सम्यक् पुरःस्वमविचारयन् ।
निर्ऋतिं दिशमागच्छेत् स्नात्वा शुद्धिमवाप्नुयात् ॥
रेतःसेकात् पूर्व्वमेव स्वमातेति प्रबोधयत् ।
ब्रह्महत्याव्रतं कुर्य्यात् कपालध्वजवर्ज्जितम् ॥
कारीषवह्निना दग्धः शुद्धिमाप्नोति मातृगः ।
मरणादित्यर्थः ।

## अथ राजदण्डमाह ।

लिङ्गपुराणे—

विचार्य्य मातृगं विप्रं स्वयमेव न चारतः ।

न चारेभ्य इत्यर्थः ।

भगाकारमयः कृत्वा तापयित्वा हुताशने ।
लेखयेद्बल[1]वद्भृत्यै ललाटे मातृगामिनः ॥
आरोहेद्रासभं यानं निःस्वाणं भ्रमयन् जनैः ।
तद्दत्तं पूर्व्ववत्कृत्वा धर्म्मव्रतमिहाचरेत् ॥
[तत्पत्नीष्वथवा दद्यात् तासु दोषो न संस्पृशेत्] ।
घटित्वा नगरीं सर्व्वां जनोऽयं गुरुतल्पगः ॥
इत्युच्चैर्भाषयन् भृत्यैः पुरद्वारमुपागमन् ।
तत्रैव नापितेनाशु असिना तीक्ष्णधारया ॥
छेदयित्वाथ तन्मुष्कं निधायाथ तदञ्जलौ ।
कृत्वा स पापो मुष्कं तत् गृहीत्वा निर्ऋतिं दिशम् ॥
गच्छन् प्राणान् [2]परित्यज्य ततः शुद्धिमवाप्नुयात् ।
अथवा सूर्म्मिमातप्य वह्नौ राजा प्रयत्नतः ।
तैलेन सूर्म्मिमातप्य भृत्यैरालिङ्ग्येन्मुदा ॥
मृत्वा शुद्धिमवाप्नोति स राजा दोषवान्नहि ।
भैरवप्रपतनं वापि नान्यथा शुद्धिरिष्यते ॥

---

(१) लेखयेद् भ्रामयन् इति क्रीतलेखितपुस्तकपाठः ।

[—] अयं पाठः काशीपुस्तके नोपलभ्यते ।

(२) परित्यज्य इति क्रीतलेखितपुस्तकयोः पाठः ।

रेतः सेकात्पूर्व्वं मातेति ज्ञात्वा ब्रह्महत्याव्रतं कपालध्वजवर्ज्जितं कृत्वा शुद्धिमवाप्नोति । नान्यैः सेतुदर्शनादिभिः । क्षत्रियादीनां मातृगमनेऽप्येवमेव प्रायश्चित्तं योजनीयम् । शूद्रस्य मौसल्यमेव प्रायश्चित्तं पापनाशकं स्यात् । तस्याः स्त्रियास्तदर्द्धादि । सारमाहृत्याल्पकुटीरं कृत्वा मातरमवस्थाप्य मयूराण्डप्रमाणैः कवलैः प्रत्यहं पोषयेत् । न मातृभ्रान्तिः । मृता चेत् पतितप्रायश्चित्तार्द्धेन शरीरशुद्धिं कृत्वा परलोकक्रियां कुर्य्यात् ।

तदाहापस्तम्बः—

गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः ।
उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥

इतिवत् मातृत्यागो न विगर्हितः । तस्याः शुश्रूषा तु नित्या पतिताया अपि । सपत्नीप्रभृतिस्त्रीगमनेष्वेवं प्रायश्चित्तं वेदितव्यम् ।

कूर्म्मपुराणे—

सवर्णोत्तमवर्णस्त्रीगमनेन विचारतः ।
ब्रह्महत्याव्रतं कुर्य्यात् द्वादशाब्दं समाहितः ॥
असत्याभासतो गच्छेत् सवर्णाञ्चोत्तमाञ्च वा ।
कारीषवह्निना दग्धः शुद्धिं याति द्विजोत्तमः ॥
रेतःसेकात् पूर्व्वमेव निवृत्तो यदि मातरि ।
ब्रह्महत्याव्रतं कुर्य्यात् पञ्चैकाब्दिदाहकम् ॥
सवर्णोत्तमवर्णस्त्री निवृत्तो वीर्य्यसेचनात् ।
ब्रह्महत्याव्रतं तत्र षडब्दं विधिपूर्व्वकम् ॥

क्षत्रियां पितृभार्य्यान्तु गत्वा विप्रः सत्तमुने।
ब्रह्महत्याव्रतं कुर्य्यात् नवाब्दं विष्णुतत्परः॥
वैश्यायां पितृभार्य्यायां षड़ब्दं व्रतमाचरेत्।
मातृष्वसारञ्च पितृष्वसारम्
आचार्य्यपत्नीं श्वशुरस्य पत्नीम्।
आचार्य्यपुत्रीनथ मातुलानीम्
पुत्रीं स गच्छेद्यदि कामतो यः॥
दिनद्वये ब्रह्महत्याव्रतं कुर्य्याद्यथाविधि॥
एकस्मिन्नेव दिवसे बहुवारे निवार्षिकम्।
एकवारं कृते त्वब्दं व्रतं कृत्वा विशुध्यति॥
दिनत्रये गच्छति चेत् वह्नौ शुध्यति नान्यथा[1]।
चाण्डालीं पुक्कसीं चैव स्नुषां च भगिनीं तथा।
मित्रप्रियां शिष्यपत्नीं यस्तु वै कामतो व्रजेत्।
ब्रह्महत्याव्रतं कुर्य्यात् षड़ब्दं ध्वजवर्ज्जितम्॥

एतासां मातृव्यतिरिक्तानां पापयुक्तावतीनां त्याग एव परम्। अन्यथा संसर्गतो दोषगुणा भवन्तीति।

तदाह कात्यायनः—

पतितां पुत्रगमनां मातरं पोषयेत् सुतः।
कुटीरं वलयाकारं सूक्ष्मं कुर्य्यात् प्रयत्नतः॥
तत्र तां सन्निवेश्याथ चतुर्भिः कवलैर्नृप।

(१) दिनत्रये गच्छति वह्नौ दग्धः शुध्यति नान्यथा। इति केचित्पुस्तकपाठः।

मयूराण्डप्रमाणैस्तैः प्रत्यहं बन्धुमार्गतः ।
यावता म्रियते माता तावद्दत्वा प्रयत्नतः ॥
पतितस्य यदुक्तं तत् प्रायश्चित्तार्द्धमाचरेत् ।
परलोकक्रियाः सम्यक् कृत्वा शुद्धिमवाप्नुयात् ॥
अकृत्वा दोषमाप्नोति पुत्रस्तत्पापशुद्धये ।
एतासामार्य्यनारीणां त्यागएव विधीयते ॥

राजवैश्ययोरिदमेव प्रायश्चित्तं विधीयते ।

वर्णत्रयस्य विप्राणां भार्य्या माता विज्ञीयते ।
तद्दारेषु यदा गच्छेद्‌ वर्णत्रयमकामतः ।
तत्रापि पितृवद्‌ बुद्ध्या प्रायश्चित्तं समाचरेत् ॥
शूद्रस्य मौसलं प्राहुरिति शास्त्रेषु निश्चितम् ।
कामः सर्व्वधनाहारी कामः पुण्यविनाशकृत् ॥
कामः पापकरो नित्यं कामोऽनर्थप्रदायकः ।
कामः शत्रुर्मनुष्याणां तस्मात् कामं परित्यजेत् ॥
संसारेऽस्मिन् महाघोरे मोहनिद्रासमाकुले ।
ये हरिं शरणं यान्ति कृतार्थास्ते न संशयः ॥
पुत्र-दार-गृह-क्षेत्र-धन-धान्य-विमोहिनीम् ।
लब्ध्वेमां मानुषीं वृत्तिं रे रे गर्व्वं तु मा कृथाः ॥
सन्त्यज्य कामं क्रोधं च लोभं मोहं मदं तथा ।
परापवादं निन्दां च यजध्वं भक्तितो हरिम् ॥
माता हरिः पिता दैवम् ज्येष्ठभ्राता जनार्द्दनः ।
गुरुर्विष्णुः प्रसन्नात्मा राजा प्रत्यक्षदैवतम् ॥

तद्दारास्तु तथाग्नेयास्तस्मात्तोहं न कारयेत् ।

आपस्तम्बः—

"गुरुतल्पगामी सवृषणं शिश्नं परिवास्याञ्जलौ आधाय दक्षिणां दिशमनावृत्तिं व्रजेत् । ज्वलितां वा सूर्मिं परिष्वज्य समाप्नुयात्"* इति दोषस्मरणात् तद्दारेषु द्रोहबुद्धिर्न कार्य्या ।

इति हेमाद्रिविरचिते धर्म्मशास्त्रे प्रायश्चित्ताध्याये गुरुतल्पगमनप्रायश्चित्तम् ।

---

* आपस्तम्बधर्म्मसूत्रे १-९-२५ । १-२ ।

## अथ तत्संयोगिप्रायश्चित्तमाह ।

कूर्म्मपुराणे—

महापातकसंसर्गे महासान्तपनं स्मृतम् ।
सङ्गं ज्ञात्वार्द्ध[1]मासे तु उपवासान् दशाचरेत् ॥
[2]पराकं माससंसर्गे चान्द्रं मासत्रये व्रतम् ।
ज्ञात्वा षण्मासससंसर्गे कुर्य्याच्चान्द्रायणत्रयम् ॥
किञ्चिन्न्यूनाब्द सङ्गे तु षण्मासं व्रतमाचरेत् ।
अब्दस्य त्रिगुणं प्रोक्तं ज्ञानाज्ञाने यथाक्रमम् ॥
यस्तु संवत्सरं त्वेतैः शयनासनभोजनैः ।
वसेच्च[3] सहितं विन्द्यात् पतितं सर्व्वकर्म्मसु ॥
महापातकिनस्त्याज्याः सर्व्वदा विप्रसत्तमैः ।
महापातकिनो लोके दर्शनात् पापदायिनः ॥
स्पर्शान्नरकदानित्यं स्मरणाल्लोकहारिणः ।
[4]सत्सङ्गतिः सदा नृणां कामधेनूपमास्मृता ॥
अतः सत्सङ्गतिः कार्य्या नृभिः पुण्याभिलाषिभिः ।
पुण्यमेव सदा कार्य्यं पुण्यमेव सदा स्मरेत् ॥

---

(१) ज्ञात्वा तु मासे तु इति क्रीतपुस्तकपाठः ।
(२) पराकान् इति क्रीतलेखितपुस्तकयोः पाठः ।
(३) वसेच्चेत् इति लेखितपुस्तके पाठः ।
(४) सन्तोगतिः इति क्रीतपुस्तके पाठः ।

पुण्यमेव [1]सदा पश्येत् तस्मात् पुण्याधिकं न च ।
अतोमहद्भिः संसर्गः कर्त्तव्यो धर्म्म[2]वित्सुधीः ॥
दुःसङ्गं वर्ज्जयेन्नित्यं सुराभाण्डादिकं यथा ॥

इति हेमाद्रिविरचिते धर्म्मशास्त्रे प्रायश्चित्ताध्याये
महापातकिसंसर्गप्रायश्चित्तम् ।

---

(१) पुण्यमेवच संपश्येदिति क्रीतपुस्तके पाठः ।
(२) धर्म्मविद्बुधिः इति क्रीतपुस्तकपाठः ।

[अथेदानीं उपपातकप्रायश्चित्तं ब्रुवन् गोवध-
प्रायश्चित्तमाह ।]

मार्कण्डेय पुराणे—

सर्व्वेषामेव वर्णानां ब्राह्मणः परमोगुरुः ।
तथा च पशुजन्तूनां गौर्मातेति प्रगीयते ॥
विप्रहत्या च गोहत्या सममेतद्द्वयं नृणाम् ।
पुरा चतुर्मुखोब्रह्मा सृष्टादौ सृष्टवांश्च गाः ॥
यस्मात् वेदांश्च विप्रांश्च चरुणि स्रुक्स्रुवादिकान् ।
सृष्टवान् यज्ञरक्षार्थं महीपालानतःपरम् ॥
गावो विप्राश्च यज्ञाश्च पुनन्तीह[1] महीमिमाम् ।
गोहिंसां यो नरः कुर्य्यान्निष्कारणतया त्विह[2] ।
न तस्य निष्कृति[3]रस्ति प्रायश्चित्तशतैरपि ॥

गोसवएव कारणं हनने [4]मधुपर्कश्च । तयोरभावाद् गोहिंसनं गर्हितमेव कलियुगे ।

अन्याधेयं गवालम्भं सन्न्यासं पलपैतृकम् ।
देवरेण सुतोत्पत्तिं कलौ पञ्च विवर्ज्जयेत् ॥

यज्ञार्थमेव गोहिंसनं नान्यदा[5] ।

---

[—] अयं पाठः क्रीतकाश्योपुस्तकयोर्नोपलभ्यते ।
(१) पुनन्ति हि इति क्रीतकेषितपुस्तकपाठः ।
(२) चणः इति क्रीतपुस्तके वचः इति केषितपुस्तके पाठः ।
(३) निष्कृतिर्नास्ति इति केषितपुस्तके पाठः ।
(४) मधुपर्के च इति क्रीतकेषितपुस्तकपाठः ।
(५) नान्यत्र इति क्रीतपुस्तकपाठः ।

गोहिंसां मुखजः कृत्वा महापापमवाप्नुयात् ।
तथैव विप्रहिंसाञ्च महतां गर्हितं द्वयम् ॥

हिंसा दशविधा ।

तदाह गौतमः--

क्रूररज्ज्वा कण्टबन्धो दारुबन्धस्तथा गले ।
निराधारे स्थले बन्ध स्तथा ग्रास[1]निपीड़नम् ॥
ताड़नं रज्जुदण्डाद्यैस्तथा सञ्चाररोधनम् ।
शृङ्गच्छेदस्तथा वाहोऽतिवारं दोहनं तथा ॥
वत्से मृते च क्षीराणामादानं चर्म्मवत्सतः ।
इतीह दशधा हिंसा गवां प्रोक्ता मनीषिभिः ॥
एताभि र्गां यदा हिंस्यात्तदा गोवध उच्यते ।
गोमूत्रं गोमयं क्षीरं दधि सर्पिरितीरितम् ॥
महापातकिनां चैव तथैव क्षुद्रपापिनाम् ।
पापं चतुर्व्विधं प्रोक्तं शुष्कं चार्द्रं महत्तरम् ॥
उपपातकमित्येतत् चतुर्द्धा परिकीर्त्तितम् ।
उक्तस्यैतस्य पापस्य पञ्चगव्यं विशोधनम् ॥
गौर्य्यस्य च गृहे नास्ति होमार्थं पापनाशिनी ।
तद्गृहं रुद्रभूमिः स्यादगृहस्थः स च पापकृत् ॥
अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।
सर्व्वभूतदयालुत्वं षड्विधं गृहमेधिनाम् ॥

---

(१) तथा ग्रासनिपीड़ने इति क्वचित्पुस्तकपाठः ।

गौर्यत्रैव सदा तिष्ठेत् तत् क्षेत्रं काशिकासमम्।
न सन्ति तत्र पापानि तथा बालग्रहाग्रहाः॥
नमस्कारैः सेवितव्या सत्यापि मनसापि गौः।
तथा सम्पाद्य बहुभिर्धनैर्वा पापमुक्तये॥
एतां धेनुं यदा विप्रो हिंस्याद्वेत्रगुडादिभिः।
महापापमवाप्नोति योवा कोवा भुवस्तले॥
तदन्ते भुवमासाद्य चाण्डालत्वमवाप्नुयात्॥

चण्डिकाखण्डे—

गोहन्ता यस्तु वै लोके रज्जुपाशाश्ववेष्टनैः।
अरण्ये वा गृहे वापि रोषाद्वा कामकारतः॥
यमालयमुपागम्य नरकञ्चानुभूय च।
तदन्ते भुवमासाद्य जायते त्वग्गरोगवान्॥

लिङ्गपुराणे—

यो द्विजोमदलोभेन मत्सरादीर्ष्यया नृप।
गां हत्वा यस्य कस्यापि विपिने वा जलाशये॥
रज्जुकण्ठाश्मभिर्घोरैः कण्ठभेदनपीड़या।
भवेत्तस्य महान् दोषः प्रायश्चित्तीभवेद्ध्रुवम्॥
हत्वा तु मुखजो ज्ञानान्मदेन महता द्वतः।
नरकान्न निवर्त्तेत प्रायश्चित्तं विना प्रभो॥
पश्चात्तापसमायुक्तः पराकं क्लच्छ्रमाचरेत्।
अज्ञानतः पराकः स्यात् ज्ञात्वा चान्द्रायणं स्मृतम्॥
कामतो गोबधे चैव शुद्धिर्दृष्टा मनीषिभिः।

नागरखण्डे—

अकामतः कामतो वा विप्रो हन्याच्च गां शुभाम्।
तस्यैव शुद्धिरुदिता पराकश्चान्द्रभक्षणम्॥
उपोष्य रजनीमेकां पञ्चगव्येन शुद्धिमान्।
अन्यथा दोषमाप्नोति धर्म्मरोगी भवेद्भुवि॥

विष्णुधर्म्मोत्तरे—

सांपराकं? च धेनुं यो मुखजो मत्सरोद्धतः।
हन्ति दण्डादिभिः पापी तस्य देहविशुद्धये॥
अज्ञानात्तु पराकः स्यात् ज्ञानाच्चान्द्रस्य भक्षणम्।
हत्वा[1] तु रोगिणीं हत्वां पराकं कृच्छ्रमाचरेत्॥
युवतीं गां द्विजो हत्वा[2] कुर्य्याच्चान्द्रायणं सकृत्।
उपोष्य रजनीमेकां पञ्चगव्यं पिबेत्ततः॥

इति हेमाद्रिविरचिते धर्म्मशास्त्रे प्रायश्चित्ताध्याये
गोवधप्रायश्चित्तम्।

---

(१) यो हत्वा इति क्रीतलेखितपुस्तकपाठः।
(२) हन्यादिति क्रीतलेखितपुस्तकपाठः।

## अथ निमित्तगोवधप्रायश्चित्तमाह ।

कूर्म्मपुराणम्—

अनाधारे स्थले बन्धो निराहारो गवामिह ।
एभिर्निमित्तैरन्यैश्च पतनाद्भित्तिहर्म्ययोः ॥
यदा[1] म्रियेत वा धेनुर्हत्या तत्स्वामिनो भवेत्
अतः स्वामी परामृश्य कुर्य्यात्तद्रक्षणं सदा[2] ॥
तत्पोषणे महत्पुण्यमनन्तं परिकीर्त्तितम् ।
तदुपेक्षा महत्पापं पतनं जन्मजन्मसु ॥
अग्निहोत्रस्य या धेनु र्या[3] धेनुः मन्भुभाषणे ।

अभिषेकार्थमित्यर्थः ।

या धेनुर्गुर्व्विणी राजन् या धेनुः कपिलात्मिका ।
एतै[4]र्निमित्तैः सा धेनुर्हता यदियमाज्ञया ॥
तत्स्वामी मुनिभिः प्रोक्तो गोहन्तेति न संशयः ।
अग्निहोत्रादिधेनूनामेकां वापि निमित्तजैः ॥
हत्वा तत्पापमोक्षार्थं पराको मुनिचोदितः ।
इतरासां गवां राजन् निमित्तैरेभिरग्रतः ॥
हननं प्राप्यते दैवात् स्वामिना चान्द्रभक्षणम् ।
अशक्तो रोगहत्याभ्यां हन्तिश्चेतैः प्रमादतः ॥

---

(१) यथा इति लेखितपुस्तके पाठः ।
(२) सदा इति लेखितपुस्तके पाठः ।
(३) तथा यज्ञं प्रपूजयेत् इति क्रीतपुस्तकपाठः ।
(४) तैर्निमित्तैः सा हि धेनुः इति क्रीतपुस्तकपाठः ।

तत्स्वामिने तप्तकृच्छ्रं मुनिभिःपरिकीर्त्तितम् ।
अग्निदाहे प्रधानस्यच्छेदे रोगनिवृत्तये ॥
यदि दैवान्मृतिः प्राप्ता प्राजापत्यं विशुद्धिदम् ।
दारुणा गुरुणा कण्ठे लग्ने पतति[1] याच गौः ॥
मृता[2] तद्दोषशान्त्यर्थं पराकः कृच्छ्रमीरितम् ।
तत्सुतामध्यदेशे तु बन्धने ताड़नेऽपि वा ॥
क्रियादेशे वनैकान्ते मृता या धेनुरग्रतः ।
प्राजापत्यद्वयं प्रोक्तं मुनिभिस्तत्त्वदर्शिभिः ॥
औषधं रोगमोक्षाय कर्त्ता कुर्य्याद्गवामिह ।
तेनौषधेन या धेनुर्मृतिमाप सुदुस्तराम् ॥
तत्र चान्द्रायणं प्रोक्तं प्रायश्चित्तं विशुद्धये ।
तच्च क्षीरघृते धेनुरक्षणाय गवामिह ॥
कुर्य्यात् तद्विपरीतं चेन्मृता चेद्धेनुरग्रतः ।
तत्रैव हत्या महती तप्तकृच्छ्रद्वयं चरेत् ॥
पतने भित्तिवृक्षाणां प्रक्षिप्तानां नृपोत्तम ।
तत्र ग्रस्ता च या धेनुर्मृता तत्पतने तथा ॥
तदा तद्दोषशुद्ध्यर्थं प्रोक्तं चान्द्रायणं द्विजैः ।
काष्ठस्यरज्जुबन्धेन यदा गौर्निधनं गता ॥
पराकः पापशुद्ध्यर्थं वह्निदाहेऽप्यमोचने ।
पराकस्तत्र योक्तव्यो निम्नोन्नतभुवःस्थले ॥

---

(१) नवति या च गौः इति लेखितपुस्तकपाठः ।

(२) मृता इति लेखितपुस्तकपाठः ।

तत्रापि पराकइत्यर्थः ।

एतासां गवामेतैर्निमित्तैः हननप्राप्तौ तद्दोषोपशमार्थं तत्तत्प्रतिपदोक्तं प्रायश्चित्तम् । लोकसादृश्यात् तत्तत्कर्मानुरोधेन नेच्छन्ति चेत् तदा दोषमाह—

गौतमधर्मे—

एभिर्निमित्तैः स्वकृतैर्यदा यत्रैव धेनवः ।
पञ्चत्वं यदि गच्छन्ति स्वामिनः पश्यतः सतः ॥
हत्या प्राप्ता[1] सुमहती लोकद्वयविगर्हिता ।
यस्य[2] दोषस्य यत्प्रोक्तं तत्तत्कुर्य्याद्विशुद्धये ॥
अन्यथा लोकसादृश्यात् प्रायश्चित्तपराङ्मुखः ।
यदि [3]वर्त्तेत लोकेऽत्र पुत्रदारप्रजाक्षयः ॥
अन्ते नरकमासाद्य मातङ्गत्वमवाप्यते ।
तदन्ते भुवमासाद्य भिक्षो भवति गर्हितः ॥
तस्माद्देहविशुद्ध्यर्थं कुर्य्यान्निष्कृतिमुत्तमाम् ।
विप्रहत्या च महती तथा धेनुविहिंसनम् ॥
उभयोर्यदि हत्या तु कर्त्तुर्नोविहिता गतिः ।
अप्रमत्ततया राजन् धेनवो [4]मातृवत्सदा ॥
पोषणीयाः पालनीया वर्णैस्त्रिभिरिहादरात् ।

---

(१) हत्या च प्राप्ता महती इति क्रीतपुस्तकपाठः ।

(२) यदा दोषस्य इति लेखितपुस्तकपाठः ।

(३) वर्त्तेद्दुर्बद्धि लोकेऽत्र इति क्रीतपुस्तकपाठः ।

(४) मातृवत्सका इति क्रीतकाशीपुस्तकयोः पाठः ।

क्षत्रियवैश्ययोरप्येवं प्रायश्चित्तं निमित्तगोहनने वेदितव्यम् । शूद्राणामेतत्साक्षाद्धनने व्रतरूपकेण दण्डः । विप्रस्त्रीणामेतासां हनने विप्रस्यार्द्धं प्रायश्चित्तम् । क्षत्रियवैश्यस्त्रीणामपि स्वजातिपुरुषाणां प्रायश्चित्तार्द्धं कल्पनीयम् । शूद्रस्त्रीणां शूद्रवदाज्ञा राज्ञा कर्त्तव्या न स्त्रीतिविचारणीयम् ।

तदाह लिङ्गपुराणे—

बाहुजोरुजपादाब्जजातानां हनने गवाम् ।
निमित्तेनाथ साक्षाद्वा प्रोक्ता विप्रस्य निष्कृतिः ॥
निमित्तहनने वाथ विप्राणां यदुदीरितम् ।
तत्कर्त्तव्यं नृपैर्वैश्यैस्तत्स्त्रीणामिदमीरितम् ॥
विप्रस्त्रीणां तथाप्रोक्तं शूद्राणां प्राण'पीड़नम् ।
तत्स्त्रीणाञ्च तथा कार्य्यं निमित्तेन व्रतं विदुः ॥

इति हेमाद्रिविरचिते धर्म्मशास्त्रे प्रायश्चित्ताध्याये
निमित्तगोवधप्रायश्चित्तम् ।

---

(१) प्राणिपीड़नं इति लेखितपुस्तकपाठः ।

## अथ गोवत्सहननप्रायश्चित्तमाह ।

मार्कण्डेयपुराणम्—

वत्सस्त्रिविधः प्रोक्तो बालः पौगण्डको युवा ।
एतेषां हनने विप्रो निमित्तं हत वा स्वयम् ॥
चाण्डालत्वमवाप्नोति त्रिषु जन्मसु पञ्चसु ।
अतो वत्साः पोषितव्या विप्रैर्लोकेप्सुभिः सदा ॥

यावत्[1] तृणभक्षणेन स्वोदरपूरणं न जानाति स बालः । मातरं त्यक्त्वा स्वेच्छया सञ्चरति स पौगण्डकोवत्सः । गर्भधारणसुखं ज्ञात्वा अनडुद्भिः सह सञ्चरति स युवा । वत्सजननात्तत्परं गौः । एतेषां हनने पृथक् पृथक् [2]दोषं प्रायश्चित्तञ्चाह ।

कौर्म्मे—

स बालोदरपूर्त्त्यर्थं यावत्कालं तृणादनः ।
अधस्त्वां मातरं त्यक्त्वा सञ्चरन् स्वेच्छया नृप ॥
पौगण्डकः स विज्ञेयः सञ्चरन् मत्तमत्तवत् ।
गोवृषैः सह यः क्रीड़न् स युवा त्रिविधः स्मृतः ॥
सा गौ र्या वत्ससूर्ज्ञेया महापातकनाशिनी ।
एतेषां त्रिविधानाञ्च मध्येको यो निहन्यते ॥

येन हन्यते इत्यर्थः । छन्दोवत् पुराणानीति ज्ञात्वा अर्थ[3]सौष्ठवं न विचारणीयम् ।

---

(१) स्वयन्तृणभक्षणं इति क्रीतपुस्तके पाठः ।

(२) दोषप्रायश्चित्तमाह इति क्रीतपुस्तके पाठः ।

(३) अर्थसौष्ठवाद्विचारणीयमिति क्रीतपुस्तके पाठः ।

तदाह नारदीये--

"राजा योऽश्नाति तमाहुराश्रयूपो यज्ञोऽनन्तदक्षिण" इति

लिङ्गपुराणे--

वत्सानां त्रिविधानाञ्च एकं हन्याद्द्विजो यदि।
तत्तत्पापफलं भुक्त्वा चाण्डालत्वमवाप्यते॥
बालं हन्याद्द्विजोयस्तु क्षीरादानादिनिमित्तजैः[1]।
प्राजापत्यद्वयं साक्षात् निमित्तैरेकमुच्यते॥
कृत्वा शुद्धिमवाप्नोति अन्यथा पशुघातकः।

स्कन्दपुराणे--

यो बालवत्सं कामेन निमित्तैर्वा स्वयं हनेत्।
तत्र देहविशुद्ध्यर्थं प्राजापत्यद्वयं चरेत्॥
निमित्तैर्वा यदा हन्यात् क्षीरादानादिभिः क्रमात्।
निमित्तपापमित्युक्तं प्राजापत्यं समाचरेत्॥
विप्रस्त्रीणां तदर्द्धं स्यात् बालवत्सविहिंसने।
क्षत्रियाणां द्विगुणितं वैश्यानां त्रिगुणं भवेत्॥
तत्तत्स्त्रीणां तदर्द्धं स्यात् पादन्तं दण्डयेच्छतम्।
पौगण्डकं तु योवत्सं निमित्तैर्वा स्वयं हनेत्॥
तत्रैवेदं विशुद्ध्यर्थं तप्तकृच्छ्रं चरेत् पुरा।

(१) क्षीरदानर्निमित्तजैः इति श्रोतपुस्तके पाठः।

( विष्णुधर्म्मोत्तरे

येन विप्रेण पौनर्भवीवरीयदि निवध्यते ।

तस्य देहविशुद्ध्यर्थं तप्तकृच्छ्रत्रयं चरेत् ॥ )

शिवधर्म्मोत्तरे—

पौनर्भवं सदोषत्वात् गोकुले स्वगृहेऽथवा ।

निमित्तैः पूर्व्वजो विप्रो कुर्यादेवं[1] प्रचोदितम् ॥

तद्दोषपरिहारार्थं चरेत्तप्तं यथाविधि ।

पञ्चगव्यं ततः पश्चात् पिवेदात्मनात्मनः ॥

क्षत्रियाणां द्विगुणितं वैश्यानां त्रिगुणं स्मृतम् ।

विप्राङ्गनानां क्षत्रियादिस्त्रीणां तत्तत्प्रायश्चित्तार्द्धं कल्पनीयम् । पादन्तु व्रतेन दण्डयेत् ।

गारुड़पुराणे—

सुवाने गोत्रपं कुर्यात् पूर्व्वजः स्वयमादरात् ।

निमित्तैर्वाथ राजेन्द्र परप्रेरणया[2] तथा ॥

मज्जन्ते नरके गत्वा जायते हृषसूनवान् ।

वृषस्य शृङ्गद्वयस्तवको तद्वत्सूनावस्य वक्षस्य वन्तुः, तत्स्थाने पञ्चहृदयवान् भवेदित्यर्थः ।

---

(—) अयं पाठः श्रीतबाबीपुस्तकयोर्न दृश्यते ।

(१) कुर्य्याद्देवप्रचोदितः इति श्रीतपुस्तके पाठः ।

(२) प्रेरणयाऽथवा इति वैचितपुस्तकपाठः ।

भविष्योत्तरे—

युवानं गोवृषं हत्वा पूर्व्वजो बाहुजो वणिक्।
महान्तं नरकं भुक्त्वा जायते श्लीपवान् भुवि॥

स्कान्दपुराणे—

अरण्ये जलमध्ये वा स्वगृहे वा द्विजोत्तमः।
युवानं गोवृषं हन्यान्निमित्तेहत वा स्वयम्॥
तत्तत्पापफलं भुक्त्वा जायते भुवि रोमवान्।
तस्य दोषस्य शान्त्यर्थं कुर्य्याच्चान्द्रम्[१] मच्यवम्॥
गोदानञ्च ततः कुर्य्यात्पञ्चगव्यमनन्तरम्।
कृत्वा शुद्धिमवाप्नोति नीरोगो जायते भुवि॥
विप्रस्यैषां तदर्द्धं स्यात्प्रायश्चित्तमुदीरितम् *।

क्षत्रियवैश्यानां तदङ्गनानाञ्च द्वैगुण्यं त्रैगुण्यं तदर्द्धं च क्रमेण योजनीयम्।

इति हेमाद्रिविरचिते धर्म्मशास्त्रे प्रायश्चित्ताध्याये गोवत्सहननप्रायश्चित्तम्।

---

(१) चान्द्रायणव्रतमिति क्रीतपुस्तके पाठः।

* "तत अर्द्धं गद्दनं गोवधप्रायश्चित्तवत् तपर्यविक्रीतविवेकतया योजनीयं" इत्यधिकः पाठः वसुपवस्थते क्रीतपुस्तके।

## वृषोत्सृष्टवृषहननप्रायश्चित्तम् ।

कूर्म्मपुराणे—

एकादशेऽह्नि सम्प्राप्ते पित्रोर्मरणसम्भवे ।
पिशाचत्वविमुक्त्यर्थं उत्सृष्टो योऽत्र वृषः परैः ॥
हन्यते यदि राजेन्द्र चिह्नितः शिवमुद्रया ।
शिवद्रोहीति विख्यातः सर्व्वधर्म्मबहिष्कृतः ॥
गत्वा नरकमासाद्य चाण्डालत्वमवाप्नुयात् ।
तस्यैव निष्कृतिर्नास्ति कारीषदहनादृते ॥

स्कन्दपुराणे—

पित्रोरर्थे तु काम्यार्थे अन्यैरुत्सृष्टमुत्तमम् ।
शिवलिङ्गाङ्कितं सम्यक् शिवरूपं जनाधिप ॥
वृषं हन्याद् यदा विप्रः केदारक्षेत्र[1]भक्षणात् ।
परप्रेरणया वापि अरण्ये ग्राम एव वा ॥
रज्जुबन्धादिभिः सम्यक् सहायैरुपदिष्टवान् ।
तदुपायप्रदो मर्त्त्यः सदोपेक्षापरायणः ॥
हन्ता तत्र महापापी चत्वारः पापभागिनः ।
राजा तं दण्डयेत् सम्यग् विचार्य्य बहुवार्त्तया ॥
तेषां भालेषु[2] कर्त्तव्यं तप्तलिङ्गं नृपोत्तमैः ।
निःश्राव्यं[3] वादयन् भृत्यैर्नृपहन्तेति सर्व्वतः ॥

---

(१) क्षेत्रभक्षणादिति श्रीतत्त्वकपाठः ।
(२) तेषां भालेषु कर्त्तव्यं इति श्रीतत्त्वकपाठः ।
(३) निःसार्य्य इति श्रीतत्त्वकपाठः ।

अटित्वा नगरीं सर्व्वां निर्व्वास्या विषयाद्बहिः ।
तदा प्रभृति ते सर्व्वे तीर्थे तीर्थे समाचरन् ॥
आर्षेयेषु च देवेषु चरन्तः प्रत्यहं मुदा ।
पश्चिमद्वारकामेत्य हंसद्वारे तथोत्तरे ॥
तथैव पूर्व्वदिग्भागे गङ्गासागरसङ्गमे ।
तथैव दक्षिणे भागे चापाग्रे गन्धमादने ॥
एवं क्रमेण कुर्व्वन्तः[1] भूपरिक्रमणं त्रिभिः ।
चापकोटिमुपागम्य तत्र स्नात्वा दिनत्रयम् ॥
पश्चात्तापसमायुक्ताः सभामागम्य वाग्यताः ।
तदनुज्ञामवाप्याथ चरेयुश्चान्द्रमव्ययम् ॥
पञ्चगव्यं ततः पीत्वा गां दद्याद्विप्रपुङ्गवे ।
एतेन शुद्धिमाप्नोति ह्यद्धा रघुनन्दन । इति ॥

ब्रह्मवैवर्त्ते—

यो विप्रो वृषभं हन्यात् शिवलिङ्गाङ्कितं तनौ ।
भाले[2] तप्तचिह्नं[3] कृत्वा निःशार्थं[4] भ्रमयेत् स्वयम् ॥
त्रिवारं क्ष्मां परिक्रम्य ब्रह्मचर्य्यव्रते स्थितः ।
पश्चात्तापं समागम्य गन्धमादनपर्व्वते ॥

---

(१) चरन्तं इति श्रीतवेङ्कितपुस्तकयोः पाठः ।
(२) काये इति वेङ्कितपुस्तकपाठः ।
(३) तप्तशिवं इति वेङ्कितपुस्तके पाठः ।
(४) निःशार्थं इति श्रीतपुस्तकपाठः ।

तत्र स्नात्वा[1] त्रिवारं च रामलिङ्गं निरीक्षयेत् ।
पश्चात्तापमुपागम्य सभां गत्वा तदाज्ञया ॥
चान्द्रायणं ततः कुर्य्याद् दद्याद् विप्राय गां शिवाम् ॥
पञ्चगव्यं ततः पीत्वा शुद्धो भवति नान्यथा ।
राज्ञा हन्यात् पूर्व्वमुक्तं वृषभं शिवलाञ्छितम् ॥
दद्यादात्मसमं हेम सहस्रं वा गवां चरेत् ।
विप्राङ्गना परित्याज्या पोषणीया न दानतः ॥
राजस्त्रीणां मतं प्रोक्तं गवां विप्रेभ्यमादरात् ।
वैश्यस्य राजवत्[2] प्रोक्तं तत्तत्स्त्रीणां तथैव च ॥
शूद्रं हन्याददोहत्वा तत्र तं निक्षिपेद् भुवि ।
सहस्रेणाऽथवा दण्ड्याद् अन्यथा दोषमाप्नुयात् ॥
इति हेमाद्रौ उत्कृष्टवृषहननप्रायश्चित्तम् ।

---

(१) स्नानं इति श्रीतर्वेषितपुस्तकयोः पाठः ।
(२) राजतुल्योक्तं इति श्रीतर्वेषितपुस्तकयोः पाठः ।

## अथ बलीवर्द्दहननप्रायश्चित्तम् ।

शिवधर्म्मोत्तरे—

अनड्वान् हन्यते विप्रैरज्ज्वुदण्डशिलादिभिः ।
गृहे वा विपिने तोये भारोद्वाहनकर्म्मणि ।
ज्ञानतोऽज्ञानतो वापि रोषाद्वा मत्सरादपि ॥
न तेषां निष्कृतिरस्ति तप्तकृच्छ्रैस्त्रिभिर्विना ।

वराहपुराणे—

जलमध्ये भारवाहे कृषिकाले च वाहने ।
गृहे जले वने वापि अनड्वान् यदि हन्यते ॥
पादादिताड़ने चैव शृङ्गच्छेदे च दाहने ।
लाङ्गूलच्छेदने वापि निमित्तैः पूर्व्वचोदितैः ॥
एतैरन्यतमैर्वापि विप्रो हन्याद् धुरन्धरम् ।
तस्यैव निष्कृतिमिमां प्रादिशन् मुनिपुङ्गवाः ॥
तप्तकृच्छ्रत्रयं कृत्वा पञ्चगव्यं पिबेत्ततः ।
एतस्माच्छुद्धिमाप्नोति नान्यथा शुद्धिरिष्यते ॥
अनड्वान् येन[1] यत्रैव निमित्तेन वा नृप ।
हन्यते सोऽपि दुष्टात्मा प्रायश्चित्तीभवेत्तदा ।
राजा तं सम्यगालोच्य दण्डयेच्छतरूपतः ।
पश्चात्तापसमायुक्तस्तप्तकृच्छ्रत्रयं चरेत् ॥

---

(१) येन इति श्रोतबेचितपुस्तकपाठः ।

पञ्चगव्येन पूतात्मा शुद्धिमाप्नोति गोऽङ्गनाम् ।
राजा हन्यादनड्वाहं आयुधैर्वहुभिर्यदा ॥
तदा नरकमाप्नोति प्रायश्चित्तार्हमर्हति ।

विप्रस्य प्रायश्चित्तार्हं कुर्य्यादित्यर्थः

वणिक्पुत्रस्तु वाणिज्ये यनड्वाहं यदा हनेत् ।
शूद्रो हन्याद्बलीवर्द्दं निमित्तेन कामतः ॥
शतरूपेण तं दण्ड्यादथवा हस्तमोचनम् ।

हस्तच्छेदनमित्यर्थः । तत्तत्स्त्रीणां तत्तत्प्रायश्चित्तार्द्धं योजनीयम् । बालतारुण्यादिकं पूर्व्वमुक्तम् । बालपौगण्डकुमारावस्थासु यत्र यत्र हननं तत्तत्प्रायश्चित्तं पूर्व्ववत्कल्पनीयम् । भारवाहोऽनडुही-हनने उक्तप्रायश्चित्तं विशोधनम् ।

इति हेमाद्रौ बलीवर्द्दहननप्रायश्चित्तम् ।

## अथ गजवधप्रायश्चित्तमाह ।

लिङ्गपुराणे—

सहायैः साधनोपायैः वाग्भिर्वापि समन्ततः[1] ।
अरण्ये वा स्ववासे वा योहन्यादविचारयन् ॥
पश्चान्नरकमाप्नोति जायते गजचर्मवान् ।
तद्दोषपरिहारार्थं तप्तकृच्छ्रं चरेद्बुधः ॥

कूर्मपुराणे—

उपघाहनने तस्य सहायैस्तु साधनैः ।
अन्यैरङ्गीकृते वापि योविप्रोहस्तिनं हनेत् ॥
राजा तं दण्डयेत्पश्चात् शतरूप्येण दण्डतः ।
स पश्चान्नरकं प्राप्य कुष्ठव्याधियुतोभवेत् ॥
पश्चात्तापसमायुक्तस्तप्तकृच्छ्रं विशुद्धये ।
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ॥
तदर्धं करिपोते च तदर्धं गर्भमोचने ।
तत्क्षीणान्तु तदर्धं स्यात् प्रायश्चित्तमुदीरितम् ॥
लक्ष्मीकामोराजा युद्धादन्यत्र न[2]हस्तिवधं कुर्यात् ।

---

(१) विप्रवत्सलः इति कैश्चित्पुस्तकपाठः ।
(२) न इति श्रोतपुस्तके नोपलभ्यते ।

तदाह देवीपुराणे—

सांपराये गजं हन्याद् यदि स्वहनने स चेत् ।
तदा तस्य न दोषः स्यादित्याह भगवान् यमः ॥
गजयुद्धे गजं हन्यादन्यथा दोषभाग्भवेत् ।
लक्ष्मीः क्षीयेत तस्यास्य[1] परत्र नरकं व्रजेत् ॥

स्कान्दपुराणे—

संपत्कामो युद्धकालादन्यत्र करिहिंसनम् ।
न कुर्य्याद् यदि दुष्टात्मा तस्य सम्पद्विनश्यति ॥
मृत्वा नरकमाप्नोति सांपराये न दोषभाक् ।
आत्माभिमुखमायान्तं हन्तुं स यदि गच्छति ॥
तदा हन्याद्गजं राजा न दोषस्तत्र तस्य[2] हि ।
राजा पश्चात्प्रकुर्व्वीत तत्तत्कृच्छ्रद्वयं मुदा ॥

इदं युद्धादन्यत्र गजहनने वेदितव्यम् । युद्धे हत्वा तात्कालिकगोदानात् शुद्धिः ।

मार्कण्डेयपुराणे—

युद्धादन्यत्र योराजा प्रमादाद्धस्तिनं हनेत् ।
तत्पापशोधनं तत्र प्राजापत्यत्रयं चरेत् ॥
युद्धे गोदानमात्रेण शुद्धो भवति निश्चयः ।
तदर्थं करिपोतो स्यात् तदर्थं गर्भमोचने ॥

---

(१) तस्याशु इति श्रीतद्रुक्तपाठः ।
(२) तत्र तत्र हि इति श्रीतद्रुक्तपाठः ।

वैश्यानान्तु तदर्द्धं स्यात् तत्तत्स्त्रीणां तदर्द्धकम् ।
शूद्रां वै दण्डयेद्राजा शतनिष्कं हरेत्तु[1] वा ।
[ पोते स्यादङ्गुलिच्छेदो गजे स्याद्धस्तमारणम् ] ।

इति हेमाद्रौ गजवधप्रायश्चित्तम् ।

---

(१) हरेत्तु वा इति क्षीतपुस्तकपाठः ।
[—] इदमर्द्धं क्षीतकाशीपुस्तकयोर्न दृश्यते ।

## अथ अश्ववधप्रायश्चित्तमाह ।

स्कन्दपुराणे—

अश्वहन्ता भवेद्विप्रो लोके वेदवहिष्कृतः ।
पूर्व्वोक्तैर्वा निमित्तैर्वा सहायैश्च वा शरैः।
स विप्रो नरकं याति कालसूत्रं सुदारुणम् ।

मार्कण्डेयपुराणे—

मारयित्वा हयं विप्रो निमित्तैर्बहुभिर्यदा ॥
हन्यात् स्वयं वा राजेन्द्र गृहे वा कानने जले ।
सपश्चान्नरकं याति यावदाभूतसंप्लवम् ॥
तस्यैव निष्कृतिरियं व्यासेन परिभाषिता ।
स्वयं हन्यात् षडब्दं स्यात् निमित्ते [1]र्द्धमीरितम् ॥
गृहदाहादिभिः पापी ज्ञात्वा तद्द्विगुणं चरेत् ।
तदर्द्धं वड़वायाश्च तदर्द्धं गर्भमोचने ॥
शिशौ पौगण्डके चैव वड़वार्द्धं समाचरेत् ।

महानारदीये—

जनसङ्घे महारण्ये स्वगृहे यदि पूर्व्वजः ॥
दिवाजननभीत्यातु हयं[2] हन्यान्निमित्तजैः ।
महान्तं नरकं गत्वा यमपाशनिबन्धनम् ॥
पुनर्भुवमुपागम्य जायते शश्विमान् सदा ।
बालं पौगण्डकं वापि युवानं यदि कामतः ॥

---

(१) बधमीरितम् इति श्रीतपुस्तकपाठः ।
(२) चाश्वं इति श्रीतपुस्तकपाठः ।

अश्वं हन्याद् द्विजोयस्तु प्रायश्चित्तीभवेत्तदा।
कुर्य्यात्तत्कर्मशुद्ध्यर्थं षडब्दं तत्क्रमादरात्॥
वडवायामर्द्धमुक्तं तदर्द्धं बालमारणे।
गृहे दाहादिभिश्चार्द्धं तदर्द्धं गर्भमोचने॥
राजा योयदिमं हन्याद् युद्धादन्यत्र वाजिनम्।
स राजा नरकं गत्वा व्याधियुक्तो भवेद्भुवि॥
तस्यैव निष्कृतिर्दृष्टा विप्रस्यार्द्धं मनीषिभिः।
विप्रस्तु राजवत्प्रोक्तं शूद्रोदण्ड्योयथाविधि॥

तत्तत्स्त्रीणां तत्तदर्द्धक्रमेण योजनीयम्। शूद्रान् पूर्व्ववद् दण्डयेत् शतरूप्यकं वा हस्तच्छेदो वा इति सर्व्वव्याख्यातारः। राज्ञा स्त्रोपरिपातने वधः कर्त्तव्योनान्यथा।

मार्कण्डेयपुराणे—

अश्वयुद्धे तु[1] संप्राप्ते स्वयमारुह्य वाजिनम्।
यदा हन्यात्स्वयं तत्र नान्यथादोषसम्भवः॥
प्रायश्चित्तमिदं कृत्वा शुद्धिमाप्नोत्यनुत्तमाम्।

इति हेमाद्रौ अश्ववधप्रायश्चित्तम्।

---

(१) अश्वयुद्धे वहाप्राप्ते इति क्रीतपुस्तकपाठः।

## अथ उष्ट्रवधप्रायश्चित्तमाह ।

स्कन्दपुराणे—

पट्टने च वने राजन् प्रमादाद्वा क्रमेलकम् ।
उपायैर्हननैर्योग्यैर्मेलयित्वा महात्मभिः ॥
हत्वा पश्चात्तदा प्राणाद्रौरवं नरकं व्रजेत् ।
तदन्ते भुवमासाद्य वक्राङ्गो जायतेऽधुना ॥
तद्दोषपरिहारार्थं प्राजापत्यव्रतं चरेत् ।

एतन्महायमाणेऽप्युक्तम् । अथ हनने विशेषमाह ॥

ब्रह्माण्डपुराणे—

उष्ट्रं ज्ञात्वा द्विजोहन्याद् दण्डाद्यैर्गलपीड़या ।
यमलोकमुपागम्य भुक्त्वा तत्रैव यातनाः ॥
ततोऽपि भुवमासाद्य जायते पक्षघातवान् ।
तद्दोषपरिहारार्थमब्दं कुर्य्यात् प्रयत्नतः ॥
पौगण्डे तच्छिरश्चार्द्धं तदर्द्धं गर्भमोचने ।
क्षत्रियोयदिमं हन्यात् क्रमेलकमधर्म्मतः ॥
अधर्म्मोनाम तद्राज्ञां युद्धादन्यत्र उच्यते ।

नारदीये—

युद्धादन्यत्र योराजा दण्डाद्यैर्बहुभिर्यदा ।
क्रमेलकं हनेद्दूयत्र चत्वरे निर्ज्जने तथा ॥
ग्रामे वा कारणं त्यक्त्वा शस्त्राद्यैर्भृत्यचोदितैः ।
स गत्वा नरकं पापी पशुहन्ता भवेद्भुवि ॥

कारणं युक्तमेव पूर्व्वोक्तम् ।

तद्दोषपरिहारार्थं कायकृच्छ्रं विशोधनम् ।
विप्रस्तु तत्तथा प्रोक्तं पूर्व्वमत्रविचक्षणैः ॥
हन्याच्चेद्बलो राजा दण्डयेत् तं न मारयेत्[1] ।
तत्तत्स्त्रीणां तदर्द्धं स्यात् तावदर्द्धं प्रचोदितम् ॥
[ शिशौ पौगण्डके यूनि तदर्द्धं गर्भविप्लवे ] ।

इति हेमाद्रौ प्रायश्चित्तखण्डे[2] उद्बन्धप्रायश्चित्तम् ।

---

(१) न्यूनोहन्याच्च तं राजा दण्डयेन्नतु मारयेत् इति श्रीतर्केभूषितपुस्तकपाठः ।
[—] अयमधिकः पाठः काशीपुस्तके दृश्यते ।
(२) प्रायश्चित्तखण्डे इति श्रीतर्केभूषितपुस्तकयोर्नोपलभ्यते ।

## अथ खरहननप्रायश्चित्तम् ।

मार्कण्डेयपुराणे—

पशुबुद्ध्या खरं हत्वा विप्रोनिशि महापथे ।
पश्चाज्ज्ञात्वा खरहति निमित्तैर्वा दुरात्मभिः ॥
स एव नरकस्थायी यावदाभूतसंप्लवम् ।
पश्चाद्भवति चाण्डालोभुवमासाद्य भूमिप ॥

राजविजये—

अज्ञात्वा पापबुद्ध्या योविप्रोहन्यात् खरं मुदा ।
निमित्तैः सङ्कदोषाद्वा सहायैर्जनचो'दितैः ॥
अन्धकारे महाघोरे पश्चाज्ज्ञात्वा महान् खरः ।
इति मत्वा स पापीयान् लब्ध्वा दोषं महत्तरम् ॥
चाण्डालत्वमवाप्नोति त्रिषु जन्मसु भूमिप ।
न हिंस्यान्मृगचाण्डालं कर्मणा मनसा गिरा ॥

कूर्म्मपुराणे—

विप्रस्तु मृगचाण्डालं न हिंस्यात् कामकारतः ।
निमित्तैरथवा चान्यैः सहायैर्हननोद्यतैः ॥
सोऽनुभूय महत्पापं मातङ्गत्वमवाप्नुयात्[१] ।
तस्यैव निष्कृतिर्दृष्टा मुनिभिर्ब्रह्मवादिभिः ॥
स्वयं हत्वा तु चान्द्रं स्यात् पराकः सहसङ्गतः ।
निमित्तैर्यावकं प्रोक्तमज्ञीकारे सुवर्णसम् ॥

---

(१) जनतोचितं इति कोनपुस्तकपाठः ।
(२) अवाप्यते इति केचितपुस्तकपाठः ।

"सुवर्च्चसं" पञ्चगव्यम्[1] ।

राजा हन्यात् खरं मोहात् भृत्यैर्वाल्यैः प्रमादतः[2] ।
तस्य देहविशुद्ध्यर्थं पराकः परिकीर्त्तितः ॥
विप्रस्तदेव योक्तव्यं प्रयत्नेन नृपोत्तम ।
शिशौ पौगण्डके चैव राजाऽर्द्धं परिकल्पयेत् ॥
राजा तदेव[3] कुर्व्वीत राजवत्तत्र वणिक्पतिः ।
तत्क्षीणान्तु तदर्द्धार्द्धं योजनीयं विचक्षणैः ॥
शूद्रोदयाच्छतं कृच्छ्रं न वधो मुनिभिः स्मृतः ।

रासभभेदेन प्रायश्चित्तमेवं योजनीयम् । तस्य पौगण्डकौमाराद्यपि पूर्व्वमुक्तम् तत्तत्तारतम्यहननप्रायश्चित्तं यथायथं योजनीयम् । रासभभेदा बहवः सन्ति तेषां मध्ये बहुसञ्चारतया प्रवर्त्तमानएव ग्राह्यः ।

इति हेमाद्रौ खरहननप्रायश्चित्तम् ।

---

(१) अयं पाठः केषुचित्पुस्तके नास्ति ।
(२) प्रमादश्चैरिति श्रीतकेषुचित्पुस्तकपाठः ।
(३ वदेव इति श्रीतपुस्तकपाठः ।

अथेदानीं महिषी[1]हननप्रायश्चित्तमाह ।

विष्णुपुराणे—

[2]महिषीं यो द्विजो राजा वणिग्वा शूद्र एव वा ।
हन्याद्व्याघ्रादिभिः क्रूरैर्निमित्तैस्त वा स्वयम् ॥
स महानरकं याति कालसूत्रं सुदारुणम् ।
तदन्ते भुवमासाद्य लालालपनवान् भवेत् ॥
*महिषीमात्मजो यस्तु बाहुजोरुजपादजाः ।
व्याघ्रदाहादिभिर्वाऽन्यै[3] र्निमित्तैर्बहुभिर्यदा ॥
घ्नन्ति मर्त्यैः स्वयं पश्चा तत्रैव निरयं गताः ।
महान्तं नरकं गत्वा ते लालावदनाऽभवन् ॥

शिवधर्मोत्तरे—

राजपुत्रो वणिग्वापि शूद्रजः पादसम्भवः ।
वनमध्ये जले गेहे महिषीं यदि हन्ति वै ॥
विहिंसन्ति तदा क्रूराः प्रविशन्ति च [4]काननम् ।
पुनर्भुवमुपागम्य भाद्रीस्थाः सम्भवन्ति ते ॥
तद्दोषशमनायालं महासान्तपनं विदुः ।
पञ्चगव्यविधानेन पञ्चगव्यं पिबेत्ततः ।

---

(१) महिषहनन इति केचित्पुस्तकपाठः ।

(२) महिषं इति केचित्पुस्तकपाठः ।

* पूर्वार्द्धस्थाने—इत्यधिकः पाठः केचित्पुस्तके दृश्यते ।

(३) राजा इति कतिपयकेचित्पुस्तकपाठः ।

(४) च काननम् इति केचित्पुस्तकपाठः ।

शुचिमन्तस्तथाभूवन् नान्यथा शुद्धचेतसः॥
सापेक्षवेद्[1] बालवत्सा तद्धिंसायां नराधिप।
विप्रः कुर्य्यात् तदा स्नात्वा महासान्तपनद्वयम्॥
राजा सान्तपनं कुर्य्यादूरुजः क्षत्रियार्द्धतः।
पादजः पादमात्रञ्च प्रायश्चित्तं यथाक्रमम्।
तत्तत्स्त्रीणां तत्तदर्द्धं प्रायश्चित्तमुदीरितम्॥

बालपौगण्डकौमारादीनि पूर्ब्ववद् विचारणीयानि। स्वयं हनने पूर्णं प्रायश्चित्तम्। स्त्रियादीनां? गड्डदाहादिभिर्मृता यदि तदा अर्द्धं प्रायश्चित्तम्। यस्तु महिषीमुपेक्षया प्रायश्चित्तमकुर्व्वाणः पूर्ब्बमुक्तं नरकं भुक्त्वा नीचतमोभवति दोषबाहुल्यात् प्रायश्चित्तमपि[2] बलीयः। वर्षत्रये पञ्चगव्यमपि।

इति हेमाद्रौ महिषीवधप्रायश्चित्तम्।

---

(१) सापेत् तन्नी इति क्वीतकेचितपुस्तकपाठः।
(२) प्रायश्चित्तमाचरणीयम् इति क्वीतपुस्तकपाठः।

## अथ महिषवधप्रायश्चित्तमाह।

मार्कण्डेयपुराणे—

महिषं कामकारेण रज्ज्वदण्डाश्मपातनैः।
योविप्रोवनमध्ये वा गृहदाहे जलाप्लवे॥
निहन्याद्दुष्टसञ्ज्ञाद्वाऽप्यन्धकारे निरन्तरे।
स विप्रोनिधनं गत्वा महत्पापमवाप्नुयात्[१]
भुवं पुनरुपागम्य जायते भिन्नजन्मवान्।

कूर्मपुराणे—

महिषं पूर्व्वजोयेन दोषेण महताहतः॥
हत्वा निमित्तैर्बहुभिर्भृत्यवर्गैरथापि वा।
अरण्ये गृहदाहे वा कृषिकाले जलोद्भवे॥
महान्तं नरकं गत्वा भुक्त्वा[२] तत्रैव यातनाः।
पुनर्गत्वा स जगतीं भिन्नजन्म समश्नुते॥

लिङ्गपुराणे—

महिषं कृषिकाले तु ताड़नैरश्मपातनैः।
मठे वा गृहदाहे वा योहन्यात् पूर्व्वजोवधा।

(१) अवाप्नुयात् इति लेखितपुस्तकपाठः।
(२) भुक्त्वा इति लेखितपुस्तकपाठः।

मृत्वाऽनुभूय नरकं म्लेच्छोभवति भूतले ।
तस्यैव निष्कृतिरियं सृष्टा मुनिपरायणैः ॥
अज्ञानात्तत्तत्कृच्छ्रं स्यात् प्राजापत्यं निमित्ततः ।
परप्रेरणया वापि ज्ञात्वा वा द्विगुणं चरेत् ॥
बाले पादश्च पौगण्डे चार्द्धं यूनि प्रपूर्णता ।
राजा वणिक् पादजो वा कारणैर्वा [1]निपातनैः ॥
भारदाह[2]निमित्ताद्वा निर्म्मोचनतमज्ञापथैः ।
महिषं दण्डपातैर्वा हन्याद्यदिह पातकी ॥
नरकं चानुभूयाथ म्लेच्छजातिरभूत्तदा ।
अकामतस्तत[3]कृच्छ्रं प्राजापत्यं निमित्ततः ॥
ज्ञात्वा तद्विगुणं प्रोक्तं बाले पादं विशोधनम् ।
पौगण्डेऽर्द्धं तदाज्ञेयं यूनि पूर्णमतःपरम् ॥
बाहुजोरुजयोरेवं प्रायश्चित्तं विशोधनम् ।
पादजे पादकृच्छ्रं स्यात् तत्तत्स्त्रीणां तथा पृथक् ॥
[4]अर्द्धार्द्धधनमानेन योजनीयं यथाक्रमम् ।
विप्रस्तु महिषं हत्वा भिल्लोवा जायते तथा ॥
राजा च पौक्कसो भूयात् वणिग्वैणवजातिमान् ।
शूद्रः सङ्करतामेति महिषोजायते वने ॥

---

(१) वापि पातनैरिति काशीकेचित्पुस्तकयोः पाठः ।
(२) भारवाहनिमित्ताद्वा इति श्रौतपुस्तकपाठः ।
(३) तदा कृच्छ्रं इति केचित्पुस्तकपाठः ।
(४) अर्द्धार्द्धेन च मानेन इति श्रौतपुस्तके पाठः ।

तत्तचारी तथा भूयात् तद्दोषात्तत्परिग्रहः ॥
यतोन हिंस्यान्महिषं विप्रोवा राजवल्लभः ॥

इति हेमाद्रौ प्रायश्चित्तखण्डे महिषवधप्रायश्चित्तम् ।

---

[1]अजवधप्रायश्चित्तमाह ।

महाराजविजये—

अजं वत्सं द्विजो हन्यात् कारणेन विना नृप ।
नरकं चानुभूयाशु ततः शुनो[2] भवेत् कलौ ॥

लिङ्गपुराणे—

ब्राह्मणो निर्निमित्तेन वत्साजौ निहनेत्तथा ।
नरकं कालचक्रन्तु ह्यनुभूय महत्तरम् ॥
पुनःक्ष्मामुपगम्याशु सूनुर्भवति पूर्व्वजः ।
यज्ञार्थं [3]हन्ति यो विप्रो [4]ह्यनन्तं फलमश्नुते ॥

गौरीकाण्डे—

यज्ञार्थं हन्ति योविप्रो अजं मेषं सुपुण्यधीः ।
स याति ब्रह्मणः स्थानं पुनरावृत्तिदुर्लभम् ॥
कारणेन विना राजन् अजं वत्सं न हिंसयेत् ।
योविप्रोधर्म्ममुल्लङ्घ्य पापमेतत् समाचरेत् ॥
स याति नरकं घोरं पुन[5]र्जन्मभवेदिह ॥

कूर्म्मपुराणे—

यागार्थं हन्ति योविप्रः अजं लोकपरायणः ।
सयाति ब्रह्मसदनं ब्रह्मणा सहमुच्यते ॥

---

(१) वत्सवधप्रायश्चित्तमिति केषाञ्चितपुस्तके पाठः ।
(२) सूनुर्भवेदिति क्रीतपुस्तके पाठः ।
(३) वहि यो विप्रः इति केषाञ्चितपुस्तके पाठः ।
(४) चानन्तफलमश्नुतेइति क्रीतपुस्तके पाठः ।
(५) पुनोजन्मभवेदिह इति क्रीतपुस्तकपाठ ।

वत्सं वापि हनेद्यस्तु स यातीन्द्रपदं शुभम्[1] ।
यागार्थं हिंसनं प्रोक्तं द्वयोर्ब्रह्मविशुद्धयोः ॥
निष्कारणेन तं हन्यात् यमलोकं सुदारुणम् ।
गत्वा भुवमुपागम्य मृतुर्भवतिचाव्ययः ॥
तद्दोषपरिहारार्थं प्राजापत्यद्वयं चरेत् ।
[2]अज्ञाद्वा यदिगत्वा तु निमित्तैर्यदि हिंसयेत् ॥
प्राजापत्यं तथाकुर्य्यात् तथैवाजवधे नृप ।
प्राजापत्यं भुवोभर्त्ताब्विक्कुर्य्यात्तथैव च ॥
शूद्रे[3]भिक्षाप्रकर्त्तव्या तत्तत्स्त्रीणां तदर्द्धकम् ।
बालपौगण्डयूनां यथाक्रमेण[4] प्रयोजनीयम् ॥

इति हेमाद्रौ प्रायश्चित्तखण्डे ध्वजवधप्रायश्चित्तम् ।

---

(१) स याति परमं पदं इति क्रीतकाशीपुस्तकपाठः ।
(२) अज्ञात्वा यदि इति क्रीतकाशीपुस्तकपाठः ।
(३) शूद्रैर्भिक्षा प्रकर्त्तव्या इति क्रीतपुस्तकपाठः ।
(४) यथाक्रमं इति क्रीतपुस्तकपाठः ।

## अथ द्रुमच्छेदप्रायश्चित्तमाह ।

गौरीकाण्डे—

इन्धनार्थं द्रुमच्छेदी ग्रामे वाऽरण्यमध्यतः ।
लाभार्थं वा नरश्रेष्ठ स याति नरकं ध्रुवम् ॥

एतत्साधारणवृक्षविषयम् । यज्ञियवृक्षच्छेदने विशेषमाह

कूर्म्मपुराणे—

वैकङ्कतश्च खदिरः किंशुकस्तम्ब[1]एव च ।
उदुम्बरश्च न्यग्रोधः शमी विल्वस्तथैव च ॥
[2]श्लेष्मातकश्च सरलएते [3]यज्ञीयवृक्षकाः ।
चूतश्च तिंचिणीवृक्षः कपित्थामलकौ तथा ॥
कोविदार[4]तरश्चैव निम्बवृक्षोमधुद्रुमः ।
अम्बूतकर्णदीवृक्षः अशोकतरुरेव च ॥

एते[5] वन्ध्याः ।

चम्पकः पनसश्चैव [6]मातुलङ्गोऽर्ज्जुनस्तथा ।
जम्बीरैरण्डवृक्षश्च [7]नारिकेलश्च खर्ज्जुरः ॥

---

(१) स्तम्बएव च इति केचित्पुस्तकपाठः ।
(२) श्लेष्मातकश्च इति केचित्पुस्तकपाठः ।
(३) यज्ञियवृक्षकाइति क्रीतपुस्तकपाठः ।
(४) कोविदारतरश्चैव इति केचित्पुस्तकपाठः ।
(५) ते वन्ध्या इति केचित्पुस्तकपाठः क्रीतपुस्तके तु अयमंशोनोपलभ्यः ।
(६) मातुलिङ्ग इति क्रीतपुस्तकपाठः ।
(७) नारीकेल इति क्रीतपुस्तकपाठः ।

दाड़िमोबदरीवृक्षः कुरण्टकश्चिरण्टकौ ।
गुञ्जावृक्षश्च[1] वकुलो नीपवृक्षस्तथैव च ॥

एते ह्यारामजाः—

भल्लातको वृहत्पर्णौ ये ये वृक्षा मनोरमाः ।
तथैव नीचवृक्षाये फलवन्तश्च पुष्पिताः ॥
वन्य[2]वृक्षा अमी राजन् एतेषु यदि हिंसनम् ।
तस्यैव तारतम्येन प्रायश्चित्तमिहोच्यते ॥
काष्ठार्थं यज्ञपातार्थं यश्छिन्द्यात्फलजं सकृत् ।
तस्यैव निष्कृतिरियं कथिता मुनिसत्तमैः ॥
इन्धनार्थं द्रुमच्छेदी तस्य दोषोपशान्तये ।
प्राजापत्यं सकृत् कृत्वा शुद्धिमाप्नोत्यनुत्तमाम् ॥
काष्ठार्थं वृक्षहा पापी प्राजापत्यद्वयं चरेत् ।
काष्ठार्थमिन्धनार्थं वा यज्ञवृक्षविभेदने ॥
पराकं तत्र कुर्व्वीत शुद्धोभवति वृक्षहा ।
वैकङ्कतस्य[3] विच्छेदी प्राजापत्यं समाचरेत् ॥
खदिरे किंशुके चैव पराकः शुद्धिरीरितः[4] ।
उदुम्बरे च न्यग्रोधे पराकात् पूर्व्ववच्छुचिः[5] ॥

---

(१) गुञ्जावृक्षो च वकुलो नीपवृक्ष इति कोतपुस्तकपाठः ।
(२) अन्यवृक्षा इति कोतपुस्तकपाठः ।
(३) वैकङ्कतं च विच्छेदी इति कोतपुस्तकपाठः ।
(४ शुद्धिरीरिता इति कोतपुस्तकपाठः ।
(५) शुद्धिरिति केम्ब्रिजपुस्तकपाठः ।

विल्वाश्वत्थौ यदा भिन्द्यात् तदा चान्द्रायणं चरेत् ।
श्लेष्मान्तके[1] शमीवृक्षे देवदारौ वके[2] तथा ॥
मयूरपादवृक्षे च भेदने तप्तमुच्यते ।
भल्लातके वृहत्पर्णे [3]ये ये च फलपुष्पिताः ॥
तथैव नीपवृक्षा ये तेषां भङ्गे वनेऽपि च ।
प्राजापत्यं वनच्छेदी नीरवृक्ष[4]समा तु ते ॥
[ भल्लातके वृहत्पर्णे कायकृच्छ्रं समाचरेत् । ]
तिंतिडीचूतवृक्षे च बहुजन्तूपकारिणि ॥
कपित्थामलकच्छेदे[5] सम्यक् चान्द्रायणं चरेत् ।
[कोविदारतरौ निम्बे प्राजापत्यं विशोधनम् ॥ ]
मधुद्रुमे जम्बुतके[6] प्राजापत्यञ्च पूर्व्ववत् ।
नदीवृक्षे त्वशोके च पूर्व्ववत् शुद्धिरीरिता ॥
खर्ज्जूरे नारिकेले च तालहिन्तालयोस्तथा ।
तप्तकृच्छ्रं चरेद्विद्वान् छेददोषोपशान्तये ॥

---

(१) श्लेष्मान्तकी शमीवृक्षे इति लेखितपुस्तकपाठः ।
(२) देवदारुवकास्तथा इति लेखितपुस्तकपाठः ।
(३) कायकृच्छ्रं समाचरेत् इति क्रीतपुस्तकपाठः ।
(४) नीपवृक्षसमा न ते इति क्रीतपुस्तकपाठः ।
[ ] अयं पाठः क्रीतकाशीपुस्तकयोर्नोपलब्धः ।
(५) कपित्थामलकच्छेदी इति क्रीतपुस्तकपाठः ।
[ ] अयं पाठः क्रीतकाशीपुस्तकयोर्नोपलब्धः ।
(६) जम्बतके इति क्रीतपुस्तकपाठः ।

वनच्छेदी महापापी कुर्य्याचान्द्रस्य भक्षणम् ।
जम्बीरमातुलङ्गान् वा च्छित्वा पापविशुद्धये ॥
सम्यक् स्नात्वा शुचिर्भूत्वा गीताध्यायं पठेत् क्रमात् ।
पुष्पारामस्य विच्छेदी देवद्रोहीति गद्यते ॥
तद्दोषपरिहारार्थं गायत्रीलक्षमाचरेत् ।
तटाककूपकासारच्छेदने विप्रसत्तम ॥
पूर्व्ववत्तद्दढं कृत्वा कायकृच्छ्रं समाचरेत् ।

एतदल्पतटाकच्छेदविषयम् । महातटाकच्छेदने विशेष[1]माह—

देवल:—

बहूदस्योद्भवे[2] राजन् तटाकस्य विभेदने ।
ब्रह्महत्याव्रतं कृत्वा कपालध्वजवर्ज्जितम् ॥
पुनः संस्कारकृत्पश्चात् शुद्धिमाप्नोति नैष्ठिकीम् ।
अन्यथा पतितं [3]विद्यात् नालपेत्तं कदाचन ॥

अल्पाल्पतटाकच्छेदने ।*

"द्विजः पापी पुनर्बुद्ध्या चरेच्चान्द्रायणं सकृत् ॥
चान्द्रायणं पराकञ्च तद्द्वयं पूर्णशून्ययोः ।

देवाधिष्ठितालयच्छेदने [4]चान्द्रायणं शून्यालयच्छेदने पराकमित्यर्थः एवं रेणुकालयादिषु वेदितव्यम् । काशीवापाद्यादिषु लेपेषु

(१) निषेधमाह इति कौतवेष्टितपुस्तकपाठः ।
(२) बहूदकोद्भवन्राजन् इति कौतपुस्तकपाठः ।
(३) विन्द्यात् इति पाठः कौतवेष्टितपुस्तकयोः ।
* अल्पागमस्य इति कौतपुस्तकपाठः ।
(४) देवाधिष्ठितताकच्छेदने इति कौतपुस्तकपाठः ।

देवाधिष्ठितेषु गुल्मेषु वा च्छेदने हस्ततटाकच्छेदप्रायश्चित्तवत्सर्व्वं कुर्य्यात्।

राजा वणिग्वा एतेषां पूर्व्वोक्तानां विभेदने तत्प्रायश्चित्त-द्विगुणं चरेत्। पादजस्य तत्तद्गुरुलाघवतया सहस्रं शतं दश वा क्रमेण दण्डयेत् राजा सम्यग्विचार्य्य।

तत्तत्स्त्रीणां तत्तद्विभेदने तत्तदर्द्धप्रायश्चित्तं कल्पनीयम्।

इति हेमाद्रिविरचिते प्रायश्चित्ताध्याये
द्रुमच्छेदप्रायश्चित्तम्।

## अथाऽनाश्रमिणः प्रायश्चित्तमाह ।

कुमारविजये—

ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः ।
चत्वारआश्रमास्त्वेते पञ्चमो[1] नोपपद्यते ॥
वानप्रस्थाश्रमस्तेषां कलौ नास्तीह [2]दुस्तरः ।
आश्रमास्त्रिविधा राजन् परलोकप्रदायिनः ॥
ब्रह्मचारी ब्रह्मचर्य्यं कृत्वा भार्य्यां समुद्वहेत्[3] ।
कुर्य्याद्यागादिकान् धर्म्मान् यत्नायं[4] पापशङ्कया ॥
[5]न त्यजेदिह कर्म्माणि त्यक्त्वा पापं समश्नुते ।
स्नानं सन्ध्यां जपं होमं ब्रह्मचर्य्यञ्च तर्पणम् ॥
[6]उपासनं देवपूजां वैश्वदेवं तथातिथिम् ।
सायंसन्ध्यां तथा होमं धर्म्मशास्त्रविचारणम् ॥
एवं गृही यदा कुर्य्यात् सर्व्वान् कामानवा[7]प्नुयात् ।
शिवलोकमवाप्नोति पुनरावृत्तिदुर्लभम् ॥
अतःपरन्तु संन्यासः कार्य्योविद्वद्भिरादरात् ।
न काञ्चनं प्रगृह्णीयात् नैकभिक्षां समाचरेत् ॥

---

(१) पञ्चमं नोपपद्यते इति लेखितपुस्तकपाठः ।
(२) दुस्तरादिति क्रीतलेखितपुस्तकपाठः ।
(३) समुद्वरेत् इति क्रीतपुस्तकपाठः ।
(४) यत्नाद्वं पापशङ्कया इति क्रीतपुस्तकपाठः ।
(५) न जानेदिह इति लेखितपुस्तकपाठः ।
(६) उदासनमिति क्रीतपुस्तकपाठः ।
(७) अवाप्यते इति लेखितपुस्तकपाठ ।

न कुर्य्याल्लोकवार्त्तां वा प्रणवं नित्यमाचरेत्।
एवं यः कुरुते नित्यं परं निर्व्वाणमश्नुते॥
गृहस्थस्य यदा राजन् पत्नीनाशो भवेदिह।
तदा प्रभृत्ययं विप्रो [1]ह्यनाश्रम इतीरितः॥
दानव्रतेषु श्राद्धेषु नित्यकर्म्मसु केषु च।
नाधिकारो भवेत्तस्य [2]तस्मादुद्वाहयेत् पुनः॥

[3]पञ्चाशद्वर्षादूर्द्धं विवाहो न समीचीनो महादोषसम्भवात्।
तदाह गोतमः—

पञ्चाशद्वत्सरादूर्द्धं न याह्यं पाणिपीड़नम्।
[4]कलेर्युगस्य दुष्टत्वात् त्याज्यमाहुर्मनीषिणः॥
युवानं प्रीणयेन्नारी स्वयं जीर्णाऽपि सर्व्वदा।
व्यभिचारात् कुलं नश्येत् कुलनाशात् [5]कुलाङ्गनाः॥
[6]भ्रश्यन्ति [7]सङ्करस्तेन सङ्करो नरकाय वै।
नरकान्नानुवर्त्तन्ते तस्मान्नेच्छन्ति पण्डिताः॥
कलत्रं यस्य यत्रैव म्रियते तत्परित्यजेत्।
तदा प्रभृत्यसौ विप्रः अनाश्रम इतीरितः॥

---

(१) सर्व्वकर्म्मसु निन्दित इति क्रीतपुस्तकपाठः।
(२) तस्मा उद्वाहयेत् इति लेखितपुस्तकपाठः।
(३) पञ्चाशद्वत्सरादूर्द्धमिति क्रीतलेखितपुस्तकपाठः।
(४) कलौ युगस्य इति लेखितपुस्तकपाठः।
(५) कुलाङ्गना इत्येतद्वचनान्तमेव क्रीतलेखितपुस्तकयोर्दृश्यते।
(६) भ्रश्यति इति क्रीतलेखितपुस्तकपाठः।
(७) सङ्कराभुवन् इति क्रीतलेखितपुस्तकपाठः।

अग्निपूर्व्वो[1] गृहस्थः स्यात् सोमयाजी विशेषतः ।
तयोर्यदि मृता भार्य्या तज्जन्म विफलं भवेत् ॥
तस्मादनाश्रमी वासोन स्यातव्योद्विजन्मभिः ।
अग्निहीनोयदा विप्रः पतिहीना यदाङ्गना ॥
न तयोर्भाषणं कुर्य्यात् न पश्येत् शुभकर्म्मसु ।
अनाश्रमी द्विजो विप्रो[2] यावज्जीवति भूतले ॥
मासि मासि नरश्रेष्ठ प्राजापत्यं विशुद्धये ।
अन्यथा दोषमाप्नोति [3]ततोनरकमश्नुते ॥
यद्यशक्तस्तथा कर्त्तुं कुर्य्याद्वा ह्यब्दमन्तरम् ।
ततः शुद्धिमवाप्नोति परलोकाञ्च विन्दति ॥

लिङ्गपुराणे—

अनाश्रमस्य यावन्ति दिनानि मुनिसत्तम ।
मासि [4]मासि च तावन्ति गणयित्वा तदात्मजः ॥
तावत् कृच्छ्राणि कुर्व्वीत म्रियमाणे ह्यनाश्रमी ।

[इत्यनाश्रमिणः प्रायश्चित्तम् ॥]

---

(१) अग्निपूर्व्वं इति श्रौतपुस्तकपाठः ।
(२) वस्तु इति काशीपुस्तकपाठः ।
(३) मृत्वा इति काशीपुस्तकपाठः ।
(४) मासीह इति श्रौतपुस्तकपाठः ।
[ ] अयं पाठः केषुचित्पुस्तके नोपलभ्यते ।

## अथ भृतकाऽध्यापनप्रायश्चित्तम् ।

ज्ञात्वा तदवरं[1] कर्म्म परलोकविगर्हितम् ।
स्वं गृहीत्वा द्विजोयस्तु जीवयन् पठते श्रुतिम् ।
स विप्रो भृतकाध्यापी तन्मुखं नावलोकयेत्[2] ॥

कूर्म्मपुराणे—

यो विप्रो भृतकं[3] कृत्वा मासि मासि प्रचोदितम् ।
शिष्यानध्यापयेद्वेदं साक्षान्नारायणात्मकम् ॥
स वै नारायणद्रोही स च वै सूतको भवेत् ।
न यौन्योऽहव्यकव्येषु न दानेषु मुनीश्वराः ॥
वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः ।
तावन्ति हरिनामानि कीर्त्तितानि न संशयः ॥
मासं गृहीत्वा भृतकं यः पठेद्वेद[4]मादरात् ।
स वै नारायणद्रोही सर्व्वदा तं परित्यजेत् ॥

विष्णुधर्म्मोत्तरे—

येभ्यो गृहीत्वा भृतकं शिष्येभ्योऽयं प्रकीर्त्तयेत् ।
दिने दिने ब्रह्महत्यापापञ्च समवाप्यते ॥

---

(१) तदर्थेन्द इति काशीश्रीतपुस्तकपाठः ।
(२) नावलोकनं इति श्रीतपुस्तकपाठः ।
(३) यो कृत्वा भृतकं विप्र इति श्रीतपुस्तकपाठः ।
(४) पठेद्वेदमातरं इति श्रीतपुस्तकपाठः ।

मरीचिः—

द्विजेभ्यो वाऽन्यजातिभ्योयोभृत्वा[1] भृतकं पठेत् ।
स एव नरकस्थायी यावदाभूतसंप्लवम् ॥
शाखा[2]पूर्वं वदेद्यस्तु भृतकं पापरूपिणम् ।
धृत्वा संवत्सरं वापि मासमेकमथापि वा
ब्रह्महत्यामवाप्नोति निष्कृतिर्न हि विद्यते *
ब्रह्मजन्तुसमः सोऽपि भृतकं यस्तु संवदेत् ॥

आवालिः—

अब्दं यो भृतकं धृत्वा[3] वेदपाठी द्विजोयदि ।
[4]तस्य चान्द्रत्रयं प्रोक्तं भृतकं योवदेद्द्विजः ॥
अब्दद्वयं वदेद् यस्तु तस्य पापस्य शोधनम् ।
पश्चात्तापसमायुक्तः कुर्य्याच्चान्द्रचतुष्टयम् ॥
अब्दत्रये तु शुद्धः स्यात् षड्भिश्चान्द्रैर्यथाक्रमम् ।
ततऊर्द्ध्वं ब्रह्महन्ता ललाटे द्विजवर्ज्जितः ॥

नारदीये—

पंक्तिभेदी पृथक्पाकी ब्राह्मणानाञ्च निन्दकः ।
आदेशी वेदविक्रेता पञ्चैते ब्रह्मघातकाः ॥

---

(१) भृत्वा इति श्रीतपाश्रीपुस्तकपाठः ।
(२) शाखां पूर्वां इति श्रीतपुस्तकपाठः ।
* इष्यते इति श्रीतपुस्तकपाठः ।
(३) कृत्वा इति वैधितपुस्तकपाठः ।
(४) तत्र चान्द्रायणं प्रोक्तं इति श्रीतपुस्तकपाठः ।

योऽभृत्वा भृतकं विप्रोवक्तारमथमादरात्।
वेदपाठं[1] द्विजातिभ्यो वदेद्धर्मसमन्वितः॥
ब्रह्महत्याव्रतं पाप मनवाप्य [2]बुधोपमः।
अतःपरं ब्रह्महन्ता ललाटे चिह्नवर्ज्जितः॥
[ब्रह्महत्याव्रतं कुर्य्यात् कपालध्वजवर्ज्जितम्।
ततः शुद्धिमवाप्नोति कपालध्वजवर्ज्जितम्]॥

ब्रह्माण्डपुराणे—

ब्रह्मघ्ना वेदविक्रेता अयज्ञोव्रतचारणे।
ततोदेहविशुद्ध्यर्थं तप्तकृच्छ्रं समाचरेत्॥
पश्चादयोः पृथक् कार्य्यं कर्त्तव्यं विधिचोदनात्॥

मरीचिसंहितायां—

आचार्य्यऋत्विजो ब्रह्मा तुलायां गोषु लाङ्गले।
तथैव भृतकाध्यापी कल्पपादपसंग्रहे॥
हिरण्यधेनुदत्तौ च हेमहस्तिरथग्रहे।
धरां गृह्णन् कल्पलतां अधन्यो[3]विप्रसत्तम॥
उक्तेष्वन्येषु दानेषु आचार्य्योयदि वा भवेत्।
तुलादिसप्तदानेषु आचार्य्योब्रह्मऋत्विजः॥

---

(१) वेदपाठः इति श्रोतपुस्तकपाठः।
(२) बुधोत्तमः इति श्रोतपुस्तके पाठः।
[ ] अयं श्लोकः श्रोतकाशीपुस्तकयोर्न दृश्यते।
(३) न हन्य इति श्रोतवेचितपुस्तकपाठः।

[1]प्रायश्चित्ताधिकं कृत्वा पुनः कर्म्म समाचरेत् ।
यावत् कुर्य्युः पुनः कर्म्म ह्याचार्य्यर्त्विजोयदि ॥
नष्टद्रव्या न सम्भाव्याः शुभकर्म्मविवर्ज्जिताः ।
पुनः कर्म्मविहीनाय[2] कुर्य्यात् यागादिकं सकृत् ॥
न तस्य फलमाप्नोति कृत्वा दानशतैरपि ।
यज्ञस्येदं पुनः कर्म्म [3]म्रियते यदि दैवतः ॥
तत्रापि कर्म्म कर्त्तव्यं नान्यथा लोकमाप्नुयात् ।
एतेषां मृत्विजां [4]विन्द्यात् ह्याचार्य्याणां विशुद्धये ॥
न च कर्म्म प्रवक्तव्यं कर्त्तव्यं [5]शुभलिप्सुभिः ।

इति हेमाद्रिविरचिते धर्म्मशास्त्रे प्रायश्चित्ताध्याये
मृतकाध्यापनप्रायश्चित्तम् ।

---

(१) प्रायश्चित्तादिकं इति श्रौतकाशीपुस्तकयोः पाठः ।
(२) विहीनो यः इति श्रौतपुस्तकपाठः ।
(३) म्रियन्ते इति केषुचित् पुस्तकपाठः ।
(४) विद्यात् इति श्रौतपुस्तकपाठः ।
(५) प्रकर्त्तव्यं इति श्रौतपुस्तकपाठः ।

## अथ भृतकाध्ययनप्रायश्चित्तमाह ।

ब्रह्मवैवर्त्ते—

शिष्यो यस्तु धनं हृत्वा भृतकं पूर्व्ववद्वहेत्[1] ।
शाखासमाप्तिपर्य्यन्तं स चाण्डालसमो भवेत् ॥

लिङ्गपुराणे—

भृतकाध्यापिनो *वेदान् शिष्यो [2]दत्त्वा धनं वसु ।
पतितः स पुमान् सद्यः पातकी स्यादसंशयः ॥
ततः शुद्धिमवाप्नोति भृतकाध्यायी[3] वै द्विजः ।

इति हेमाद्रिविरचिते धर्म्मशास्त्रे प्रायश्चित्ताध्याये
भृतकाध्ययनप्रायश्चित्तम् ।

---

(१) पूर्व्ववद् वहनु इति काशीतकाशीपुस्तकपाठः ।
* वेद इति काशीपुस्तकपाठः ।
(२) हृत्वा इति लेखितपुस्तकपाठः ।
(३) भृतकाध्यापकोद्विज इति काशीतलेखितपुस्तकपाठः ।

## अथाऽधीतविस्मृतिप्रायश्चित्तमाह ।

देवलधर्म्मे[1]—

वेदान्तं मन्त्रशाखां वा वेदं वा तत्त्वमेव वा ।
ब्रह्मबन्धुर्वयोविप्रोविस्मृत्य यदि वर्त्तते ॥
सर्व्वेच चाभिमानेन ऐश्वर्य्यमदवत्तया ।
सद्योवै नरकस्थायी पतितः सर्व्वकर्म्मसु ॥

पद्मपुराणे—

वेदं वा तत्त्व तत्त्वं वा तथा [ वेदाङ्ग मेववा ] ।
गुरोरधीत्य सकलं विस्मृत्य मदवत्तया ॥

[महाभारते—

भृतकाध्ययनं कुर्व्वन् द्विजो यस्तु धनेप्सया ।
शाखामात्रं तदर्द्धं वा स चाण्डालत्वमाप्नुयात् ॥

पद्मपुराणे—

अन्तेवासी धनं [2]भुत्वा भृतकाध्ययनं चरेत् ।
स विप्रो नरकान् याति अन्तेवासी महान् [3]बहून् ॥

---

(१) देवलः इति क्रीतकाशीपुस्तकपाठः ।

[ ] अयं पाठः क्रीतलेखितपुस्तकयोर्नोपलभ्यः ।

[ ] अनयोर्रेखयोरन्तर्गतः पाठः भृतकाध्यापनप्रायश्चित्तप्रकरणीयः लिपिकर प्रमादादेव अत्र आयात इति सम्भाव्यते ।

(२) दत्त्वा इति क्रीतपुस्तकपाठः ।

(३) महारवन् इति क्रीतपुस्तकपाठः ।

नरकान् भीकरान् भुक्त्वा तदन्ते भिन्नजातिषु।
मासं पठित्वा श्रुतकं प्राजापत्यं समाचरेत्॥
मासद्वये पराकः स्यात् चान्द्रं मासत्रये[1] स्मृतम्।
षण्मासे तु षडब्दं स्यात् वत्सरे तत्त्रयं चरेत्॥
अब्दत्रये तु पूर्वं स्यात् ततः पापीति विप्रहा।
ब्रह्महत्याव्रतं कुर्य्यात् द्वादशाब्दं समाहितः॥
अथवा त्रिः परिक्रम्य पञ्चाशत्कोटिविस्तरम्[2]।
स सर्व्वशास्त्रहन्ता स्यात् सर्व्वकर्म्मसु गर्हितः।
पतितस्यैव[3] यत्पापं तत्पापफलमश्नुते॥]

गारुड़पुराणे—*

पादं वापि तदर्द्धं वा तत्त्वं मन्त्रमथापि वा।
विस्मृत्य योऽद्विजो गर्व्वात् वर्त्तते यद्यहर्निशम्॥
प्रत्यहं गोवधे पापं स प्राप्नोति न संशयः।
मासमात्रे[4] पराकः स्यात् तप्तं मासत्रये स्मृतम्॥
ऋतुत्रयेऽपि चान्द्रं स्यात् अब्देनौद्दालकं चरेत्।
वर्षद्वये महापापी पतितस्तत्परं विदुः॥

---

(१) मासद्वये इति ज्ञातपुस्तकपाठः।

(२) विस्तृतम् इति ज्ञोतकाशीपुस्तकपाठः।

(३) पतितस्येव तत्पापमिति ज्ञोतपुस्तकपाठः।

* अयं पाठः काशीपुस्तकेनोपलब्धः।

(४) मासमात्रं इति ज्ञोतवेष्टितपुस्तकपाठः।

प्रायश्चित्तविशुद्धात्मा दक्षिणां गुरवे ददन् ।
सर्व्वं पादं पुनर्धृत्वा अभ्यसेत् पूर्व्ववत् क्रमात् ॥
अन्यथा दोषमाप्नोति नरकञ्चाधिगच्छति ॥

इति हेमाद्रिविरचिते धर्म्मशास्त्रे प्रायश्चित्ताध्याये
अधीतिविस्मृतिप्रायश्चित्तम् ।

## अथ गुरुधिक्कारप्रायश्चित्तमाह ।

[1]पद्मपुराणे—

जनिता [2]चोपनेता च यस्तु विद्यां प्रयच्छति ।
श्वशुरश्चाग्रजो भ्राता पञ्चैते गुरवः स्मृताः ॥
अन्नदाता भयत्राता क्रता[3]वाधानदायकः ।
मातुलश्च पितृव्यश्च धर्म्मशास्त्रोपदेशकृत् ॥
[पुराणसंहितावक्ता गीताशास्त्रोपदेशकृत्] ।
बुद्धिप्रदः कुबुद्धीनामाचार्य्यः सर्व्वकर्म्मसु ॥
एते वै गुरवोलोके पूज्या वन्द्याश्च सादरम् ।
एतेभ्यो[4] नापकुर्व्वीत एतद्वाक्यं न लङ्घयेत् ॥

[5]स्कान्दपुराणे—

जनिता चोपनेता च यस्तु विद्यां प्रयच्छति ।
त्रयस्ते गुरवः प्रोक्ताः उपाध्यायास्तथापरे ॥
त्रिषु द्रोहं न कुर्व्वीत कर्म्मणा मनसा गिरा ।

पितुरभावे ज्येष्ठभ्राता पितृव्यादिभिरुपनीतो गायत्री- ...न-

---

(१) पाद्मे इति क्रीतपुस्तकपाठः ।
(२) चोपनीता च इति क्रीतवेखितपुस्तकपाठः ।
(३) क्रेता वा धनदायकः इति क्रीतपुस्तकपाठः ।
[ ] इदं श्लोकार्द्धं क्रीतपुस्तके नोपलब्धम् ।
(४) एतेभ्यो नहि धिक्कारः इति क्रीतपुस्तकपाठः ।
(५) स्कान्दे इति क्रीतपुस्तकपाठः ।

ज्ञगुरुः। अतएव पितृ[1]भ्राता गुरुः [ तेषां हितोपदेशकत्वात् परमगुरुः ] त्रयोगुरवः, इतरे वन्द्याः। अतएव त्रयाणां मध्ये एकं वा [2]नोपेक्षेत न द्रुह्या[3]न्नौदासीन्यं वा कुर्य्यात्।

तथैव नारदः—

गुरुंत्वंकृत्य हुङ्कृत्य योवदेन्मन्दधीर्नरः।
सोऽरण्ये [4]निर्जने देशे भवति ब्रह्मराक्षसः॥

स्कन्दपुराणे गौरीकाण्डे—

पितरं वा गुरुं वापि ज्येष्ठं भ्रातरमेव वा।
त्वङ्कारं वाथ हुङ्कारं कृत्वा पुत्रः स पाप[5]भाक्॥
[6]तदन्ते नरकं भुक्त्वा पुनर्जन्म प्रपद्यते।
पापाद् योनिषु रक्षःसु तथैव च कुयोनिषु[7]॥
[ तदन्ते भुवमासाद्य राक्षसत्वं भजेदिह। ]
तद्दोषपरिहारार्थं नाचिकेतं व्रतं चरेत्॥

---

(१) पिता भ्राता वा गुरुः इति लेखितपुस्तकपाठः।
[—] अयं पाठः क्रीतकाशीपुस्तकयोर्नोपलब्धः।
(२) नोपेक्षयेत् इति लेखितपुस्तकपाठः।
(३) नोदासीनं वा इत्येव पाठः क्रीतलेखितपुस्तकयोः।
(४ निर्जले इति क्रीतपुस्तकपाठः।
(५) स पापभुक् इति लेखितपुस्तकपाठः।
(६) इदमर्द्धं लेखितपुस्तके नास्ति।
(७) नरकं घोरं इति लेखितपुस्तकपाठः।
[ —] अयं पाठ. क्रीतपुस्तके नास्ति।

ब्रह्माण्डपुराणे—

य: पुत्र: पितरं ज्येष्ठं गुरुं वापि निपीडयेत् ।
एकशब्देन नामोक्त्वा त्वङ्कारं हुङ्कृतिञ्च वा ॥
वदेद्यदिह पापात्मा नरकं याति दारुणम् ।
पुनर्भुवमुपागम्य राक्षसोभवति द्रुमे ॥
तद्दोषपरिहारार्थं नाचिकेतव्रतं चरेत् ।

देवीपुराणे—

नचिकेता: पुरा राजन् गुरुं चोद्दालकं प्रति ।
प्रतिभाष्य तदा गत्वा दृष्ट्वा यमपुरं महत् ॥
पुनर्गत्वा भुव: पृष्ठं पितरं प्रणिपत्य च ।
तद्वाक्येन तत: पश्चात् देहशुद्ध्यर्थमादरात् ॥
चकार मण्डलं तत्र गवां घोरं दिने दिने ।
पीत्वा शुद्धिमवा'पाथ चाण्डाल्याद्विप्रसत्तम: ॥
तत: परं विशुद्धात्मा पितरं प्रतिपादयेत् ।
अथवा देहशुद्ध्यर्थं षडब्दं कृच्छ्रमाचरेत् ।

कलौ युगे नाचिकेतव्रतस्य दुष्करत्वात् षडब्दं प्राजापत्यं कुर्य्यात् इति ।

इति हेमाद्रिविरचिते धर्मशास्त्रे प्रायश्चित्ताध्याये
गुरुधिक्कारप्रायश्चित्तम् ।

---

(१) अवाप्नोति इति केचितपुस्तकपाठ: ।

## [1]अथाज्ञानप्रायश्चित्तमाह ।

मार्कण्डेय पुराणे—

विप्रस्तु सत्कुले भूत्वा वेदशास्त्राधिकारवान् ।
अयं गुरुरियं माता ज्येष्ठोऽयं मातुलोऽपि वा ॥
अयं विद्वानिदं शास्त्रमाचारोमुनिचोदितः ।
वेदोऽयं दैवतं चेदं इदं तीर्थमियं नदी ॥
इति सर्व्वं स सहसा शीघ्रं विस्मृतवान् यदि[2] ।
उन्मत्तइव वर्त्तेत स चाज्ञः परिकीर्त्तितः ॥

लिङ्गपुराणे—

मातरं पितरं श्वश्रूं गुरुं देवं तथाऽनलम् ।
विप्रं गां व्रतिनं नारीं [3]समुपेक्ष्य सदा नरः ॥
यो वर्त्तेत सदा तात स विप्रोऽज्ञइतीरितः ।
तस्य[4] वै निष्कृतिर्दृष्टा मुनिभिर्धर्म्मवित्तमैः ॥
प्रत्यहं दोषशान्त्यर्थं महापातकनाशनम् ।
तण्डुलप्रस्थमात्रेण पाचयित्वा चरुं मुदा ॥

---

(१) अय इत्यंशो न दृष्टः श्रीतपुस्तके ।
(२) विस्मृतवानय इति श्रीतपुस्तकपाठः ।
(३) सर्व्वज्ञो न सदा नरः इति श्रीतवेंकितपुस्तकपाठः ।
(४) तस्येन इति श्रीतकाशीपुस्तकपाठः ।

भक्षयेद्दैवतोद्देशे मण्डलेन विशुध्यति।
अन्यथा दोषमाप्नोति यथा शूद्रस्तथैव सः॥

इति हेमाद्रिविरचिते प्रायश्चित्ताध्याये
अज्ञानप्रायश्चित्तम्।

---

## अथाऽपण्यविक्रयप्रायश्चित्तमाह ।

शिवपुराणे—

तण्डुलाश्च तिलामाषाः फलं पुष्पं तथा गुडम् ।
नागवल्लीदलं पूगं चूर्णं कर्पूरमेव च ॥
कस्तूरी कुङ्कुमं मूलं दुग्धं दधि घृतं तथा ।
कृष्णाजिनञ्च रुद्राक्षं ब्रह्मसूत्रं कमण्डलुः ॥
ताम्रं कांस्यं तथा वस्त्रं कम्बलं रोचनं तथा ।
लवणं तिन्त्रिणीशाकं पञ्चमश्च मुनीश्वराः ॥

इमान्यपण्यानि विप्राणां । एकैकविक्रये ब्रह्महाऽसौ भवति । कार्पासताम्रकांस्यत्रपुसीसायःपिण्डविक्रये पञ्चालजातिमान् भवेत् ।

महानारदीये—

कार्पासताम्रकांस्यत्रपुसीसायःपिण्डविक्रये ।
पञ्चालजातिमान् विप्रो नरकं प्रतिपद्यते ॥
[ तण्डुलांश्च तिलान् माषान् फलपुष्पगुडान्यपि ।
नागवल्लीदलं पूगं चूर्णं कर्पूरमेव च ॥
कस्तूरीकुङ्कुमं मूलं दुग्धं दधि घृतं तथा ।
कृष्णाजिनञ्च रुद्राक्षं ब्रह्मसूत्रं कमण्डलुम् ॥
ताम्रं कांस्यं तथा वस्त्रं कम्बलं रोचनं तथा ।
तिन्त्रिणीं लवणं मूलं शाकमश्चं द्विजोयदि ॥ ]

---

[ ] अयं पाठः क्रीतकाशीपुस्तकयोर्नोपलभ्यः ।

[1]विक्रयित्वा तथा जीवेत् स तु शूद्रो न संशयः।
एतानि विक्रयित्वा तु हव्यकव्यानि चादरात्॥
पितरोनोपतिष्ठन्ति श्राद्धकर्त्ता महानपि।
स्वारामसम्भवान् क्रीत्वा उचितव्ययमाचरेत्॥
अन्यथा दोषमाप्नोति प्राजापत्यं समाचरेत्।
धनस्य संग्रहार्थन्तु द्विगुणं कृच्छ्रमाचरेत्॥
उचितव्ययसिद्धार्थं गव्यं विप्रोन विक्रयेत्।
षण्मासान् लोभतः कृत्वा शूद्रो भवति निश्चयः॥
तत्र क्रीत्वा द्विजगृहे पैठकादीनि[2] सञ्चरेत्।
भोक्तारो दोषवन्तस्ते कर्त्ता स्यात् पातकी भुवि॥
विप्रस्तु पक्षमात्रञ्च गोरसं विक्रयेद्यदि।
तस्य देहविशुद्ध्यर्थं तप्तकृच्छ्रमुदीरितम्॥
मासं वा विक्रयित्वा तु चान्द्रायणमुदाहृतम्।
ऋतुद्वयं विक्रयित्वा मण्डलं यावकं चरेत्॥
ऋतुत्रये [3]तु विक्रीय ब्रह्मोक्तं तस्य वै ध्रुवं।
षड्विधं गोरसं पक्का पीत्वा शुद्धिमवा[4]प्नुयात्॥

---

(१) इतः पूर्व्वं "तण्डुलादीनि पूर्व्वोक्तानि श्रवाम्यानि" इत्यधिकः पाठः क्रीत-काशीपुस्तकयोः समुपलब्धः।

(२) पैठकाद्यांश्च सञ्चरेत् इति क्रीतपुस्तकपाठः।

(३) यदि क्रीत्वा इति क्रीतबेंखितपुस्तकपाठः।

(४) श्रवाप्यते इति बेंखितपुस्तकपाठः।

मासमात्रं पयः पक्त्वा पीत्वा शुद्धिमवाप्नुयात्।
तद्गृहे यो द्विजः क्रीत्वा पूर्व्ववन्माससंख्यया।
कुर्य्याद्देहविशुद्ध्यर्थं प्रायश्चित्तं यथाक्रमम्॥
षण्मासं तत्र यः क्रीत्वा[1] तावुभौ समपापिनौ[2]।
तयोरुक्तविधानेन प्रायश्चित्तं विशोधनम्।
कृष्णाजिनञ्च रुद्राक्षं ब्रह्मसूत्रं कमण्डलुम्॥
ताम्रं कांस्यं तथा वस्त्रं कम्बलं रोचनं तथा।
विक्रयित्वा द्विजो यस्तु मासं मासद्वयञ्च वा॥
मासे पूर्णे पराकः स्यात् द्वितीये चान्द्रभक्षणम्॥
मासत्रये च पूर्णे तु मण्डलं यावकं चरेत्।
षण्मासं विक्रयित्वा तु पतितः स्यान्न संशयः॥
केशानां वपनं कृत्वा पुनर्मौञ्जीं विधानतः।
कृत्वा षण्मासपर्य्यन्तं भग्नमुष्टि[3]गवाह्निकम्॥
पश्चात् शुद्धिमवाप्नोति नान्यथा तस्य निष्कृतिः।
लवणं पक्वमन्नञ्च द्विजो मासन्तु विक्रयेत्॥
स शूद्रयोनिमासाद्य शूद्रवत् वर्त्तते तथा।
तस्यैव निष्कृतिरियं वत्सरं यावकं चरेत्॥

(१) पीत्वा इति श्रीतपुस्तकपाठः।

(२) समपोषिणौ इति पाठान्तरम्।

(३) भग्नवृत्तिं गवेषिकं इति वेङ्कटपुस्तकपाठः भग्नवृत्तिगवेषिकं इति श्रीत-
पुस्तकपाठः।

तस्योपनयनं भूयः कृत्वा शुद्धिमवाप्नुयात्[1]।
रौरवं नरकं याति विप्रोऽपत्यविक्रयी॥

इति हेमाद्रिविरचिते धर्मशास्त्रे प्रायश्चित्ताध्याये
अपत्यविक्रयप्रायश्चित्तम्।

---

(१) अवाप्नुते इति क्रीतवैश्यितपुस्तकपाठः।

[ अथ निन्दितार्थोपजीवनप्रायश्चित्तमाह ।

कूर्म्मपुराणे—

अश्वो धेनुर्मनुष्यश्च रासभः कुञ्जरस्तथा ।
कन्या नारी त्वजा-मेषौ पुस्तकं ब्रह्मसूत्रकम् ॥
लवणं ललनं चर्म्म लशुनं गृञ्जनं तथा ।
शुण्ठी-पिप्पल-मारीच-लवङ्गैला-हरिद्रकाः ।
उपधानौह यावन्ति मत्स्यकुक्कुटसूकराः ।
हिङ्गुजीरकवस्तूनि ताम्रं कांस्यादिकं तथा ॥
एतान्मूल्यैर्द्विजः क्रीत्वा सुलभैर्मूल्यसंख्यया ।
तेभ्यश्च द्विगुणैर्मूल्यैरल्पमूल्यैरथापि वा ॥
विक्रयित्वाऽऽत्मभरणं कुर्य्याद्यदिह पापभाक् ।
मृत्वा नरकमासाद्य कृमिकूपे पतत्यधः ॥
तस्मादेतद्विशुद्ध्यर्थं प्रायश्चित्तमिहोच्यते ।
सकृच्चाथ द्विवारं वा बहुवारमनेकशः ॥
तप्तं पराकं चान्द्रञ्च यावकं वर्षमाचरेत् ।
तस्योपनयनं भूयः पञ्चगव्येन शुध्यति ॥

इति हेमाद्रिविरचिते प्रायश्चित्ताध्याये निन्दितार्थोप-
जीवनप्रायश्चित्तम् । ]

---

[–] एष ग्रन्थांशः क्रीतकाशीपुस्तकयोर्नोपलब्धः ।

## अथ कृषीवलप्रायश्चित्तमाह ।

लिङ्गपुराणे—

वरं तस्याऽग्निहोत्रार्थं कुटुम्बभरणं तथा ।
यावता धान्यजातेन तावता कृषिमाचरेत् ॥
धान्ये गृहगते[1] पश्चाद् भङ्गविंशतिमव्ययम् ? ।
कृत्वाऽतिथिभ्यः सत्कारी वैश्वदेवपरायणः ॥
दर्शञ्च पूर्णमासञ्च अग्निहोत्रं दिने दिने ।
संवत्सरपशुं कृत्वा शुद्धिमाप्नोति पूर्व्वजः ॥
कृषिदोषेण महता कदाचिन्न विलिप्यते ।

अन्यथा दोषमाह मार्कण्डेय पुराणे—

वृथा कृषिं द्विजः कृत्वा धान्यं विक्रीय वा तथा ।
भोगार्थं सञ्चयार्थं वा महापापं समश्नुते ॥
वत्सरं धान्यविक्रेता कृषिं [2]कुर्य्याद् यदा द्विजः ।
तस्य देह विशुद्ध्यर्थं वत्सरे[3] चान्द्रमीरितम् ॥
द्वितीये द्विगुणं प्रोक्तं तृतीये पतितोभवेत् ।

वत्सरत्रयं कृष्युद्भवं धान्यं द्विजोधनार्थं[4] विक्रीय पतितप्रायश्चित्तं कृत्वा शुद्धिं प्राप्नोतीत्यर्थः ।

इति हेमाद्रिविरचिते धर्म्मशास्त्रे प्रायश्चित्ताध्याये
वृथाकृषीवलप्रायश्चित्तम् ।

---

(१) गृहपतिः इति कौतपुस्तकपाठः ।
(२) कृत्वा इति कौतलेखितपुस्तकपाठः ।
(३) वत्सरं इति कौतपुस्तकपाठः ।
(४) धनार्थमित्यंशः लेखितपुस्तके नास्ति ।

## अथ निन्दितधनाऽऽदानप्रायश्चित्तमाह।

कूर्म्मपुराणे—

ब्रह्महन्ता सुरापी च स्तेयी गुर्व्वङ्गनागमः।
महापातकिनश्चैते तत्संयोगी च पञ्चमः॥
कुण्डश्च गोलकश्चैव तथा सोमलताक्रयी।
परिवित्तिः परिवेत्ता परिविन्नश्च वै तथा॥
तथा परिविधा[1]दानः दत्ताग्निः कौकसानुगः।
स्मृतिविक्रयिकश्चैव परार्थं काम्यिकागमः॥
धर्म्मविक्रयकश्चैव तथा शूद्रापति[2]र्द्विजः।
नामविक्रयकश्चैव कामिनीह्रपलीपतिः॥
तथैव भृतकाध्यायी तुलासु कृतबुद्धिमान्।

तुलास्विति बहुवचनं षोडशमहादानोपलक्षणम्॥

दुश्चर्म्मा क्षयरोगी च कुनखी श्यावदन्तकः।
ग्रामणीश्चा[3]रवाकश्च गायकोनर्त्तकस्तथा॥
परदाराभिगामी च भिषग्दे वलकस्तथा।
एते वै निन्दिता राजन् हव्यकव्येषु सर्व्वदा॥
न सम्भाष्याः सदा विप्रैः परलोकपरायणैः।
एतेभ्योयाचनाद्राजन् [4]उत पुण्यपरिग्रहात्॥

---

(१) परिविधानानः इति लेखितपुस्तकपाठः।
(२) तथा शूद्रोपतिर्द्विजः इति क्रीतपुस्तकपाठः।
(३) चारवाकः इति क्रीतलेखितपुस्तकपाठः।
(४) सुकृतपुण्यः परिग्रहात् इति क्रीतपुस्तकपाठः।

यागार्थं नित्यलोपार्थं न प्रतिग्रहणं चरेत् ।
दृष्ट्वा मार्त्तण्डमालोक्य: सम्भाष्य द्विजभाषणम् ॥
दृष्ट्वा सचैलं स्नायीत चान्द्रं धान्यपरिग्रहे ।
सद्दैव भोजनं कृत्वा चान्द्रद्वयमुदीरितम् ॥
स्वर्णमात्रं द्विजोयस्तु प्रतिगृह्याशु कर्म्मसु ।
योजयेद्यदि मूढ़ात्मा षड्ब्दं कृच्छ्रमाचरेत् ॥

इति हेमाद्रिविरचिते धर्म्मशास्त्रे प्रायश्चित्ताध्याये
निन्दितेभ्योधनाऽऽदानप्रायश्चित्तम् ।

---

[ अथ वार्द्धुष्यजीवकस्य प्रायश्चित्तम् ।

नृसिंहपुराणे—

वृद्धेरपि च या वृद्धिश्चक्रवृद्धिरुदाहृता ।
मासि मासि च या वृद्धिः सा शिखावृद्धिरुच्यते ॥
ताभ्यां जीवेद्यदा विप्रो निष्फलं याति सर्व्वदा ।
धर्म्मशास्त्रविरोधेन जीवेद्यदिह पूर्व्वजः ॥
अस्वर्ग्यं लोकविद्विष्टं धर्म्ममप्याचरेन्न तु ।
धर्म्मो विप्रस्य पाथेयं स्वर्गारोहणकर्म्मणि ॥
तस्मादिदं परित्याज्यं वार्द्धुष्यं विप्रसत्तमैः ।
तस्यैव निष्कृतिर्दृष्टा पाराशर्य्येण चक्षुष ॥
मासं जीवेद्यदा वृद्ध्या तदा यावकमुच्यते ।
मासद्वये तु तप्तं स्यात् चान्द्रं मासत्रये स्मृतम् ॥
षण्मासे तु महाचान्द्रं वत्सरे द्विगुणं चरेत् ।
पतितः स्यात्परं विप्रः सर्व्वकर्म्मबहिष्कृतः ॥

वत्सराद्‌र्द्धं वार्द्धुष्यजीवने पतितप्रायश्चित्तं कृत्वा शुद्धिमाप्नोति ।

इति हेमाद्रिविरचिते धर्म्मशास्त्रे प्रायश्चित्ताध्याये
वार्द्धुष्यजीवनप्रायश्चित्तम् । ]

---

[—] अयं भागः लेखितपुस्तके नोपलभ्यते ।

## अथ हिंसायन्त्रविधानप्रायश्चित्तमाह ।

गौरीकाण्डे—

मनुष्यपशुपक्ष्यादिहिंसने[1] यन्त्रवर्त्तनम्[2] ।
मार्गेऽरण्ये जले वापि पर्व्वते चैत्यवृक्षके ॥
देवालये सभायाञ्च हिंसार्थं यन्त्रधारणम् ।

यन्त्रस्वरूपमाह—

गजबन्धने भुवःखननं, पक्षपशुमनुष्यबन्धने मार्गेषु [3]श्वभ्र-निर्म्माणं, अरण्ये पशुपक्षिहिंसार्थं जालवागुरास्तरणं, पर्व्वतेषु व्याघ्र[4]भल्लूकवराहादिहिंसनार्थं दारु:, जले पशुमनुष्यमारणार्थं शङ्क्वादिस्थापनं, गृहेषु [5]मूषिकहननार्थं फलकादिभिर्यन्त्रविधानं, वृक्षेषु शुकसारिकाचटकादिहननार्थं ग्रीवारज्ज्वादिकरणम् । एतानि यन्त्रविधानानि शास्त्रगर्हितानि । एतानि द्विजः सङ्ग-दोषात् स्वयं वा कृत्वा नरकमाप्नोति ।

तदाह गौतमः—

पर्व्वते वा जले वापि गृहे वाऽरण्यदेशतः ।
द्विजः कुर्य्यात् सङ्गदोषात् हिंसायन्त्रविधारणम् ॥
स वै नरकमासाद्य मृगयुर्जायते भुवि ।
तस्य दोषविशुद्ध्यर्थं पराकद्वयमीरितम् ॥

---

(१) हिंसनं इति श्रीतपुस्तकपाठः ।
(२) यन्त्रकल्पनम् इति श्रीतवेष्टितपुस्तकपाठः ।
(३) गुप्तनिर्म्माणं इति श्रीतपुस्तकपाठः ।
(४) भल्लुक इति श्रीतपुस्तकपाठः ।
(५) मूषक इति श्रीतपुस्तकपाठः ।

संवत्सरात् परं राजन् चान्द्रद्वयमुदाहृतम् ।
अतःपरं न शुद्धोऽभूत् यथा व्याधस्तथैव सः ॥

संवत्सरात्परं विप्रस्तु यन्त्रनिर्म्माणे पतितप्रायश्चित्तं कृत्वा शुद्धि-माप्नोति ।

इति हेमाद्रिविरचिते धर्म्मशास्त्रे प्रायश्चित्ताध्याये हिंसायन्त्रविधानप्रायश्चित्तम् ।

इत्युपपातकप्रायश्चित्तप्रकरणम् ।

---

## अथ सङ्कलीकरणप्रायश्चित्तमाह ।

ब्रह्माण्डपुराणे—

अथ मनुष्यविक्रये—

अज्ञातकुलनामानमन्यदेशादुपागतम् ।
ब्राह्मणं क्षत्रियं वाऽपि वैश्यं पादजमेव वा ॥
भ्रामयित्वा परं[1] विप्रस्त्वौषधादिभिरादरात् ।
विक्रयित्वा नरं पापी जीवयेद्यदि [2]मोहतः ॥
महापातकिसंज्ञः स्यान्मृत्वा नरकमश्नुते ।

लिङ्गपुराणे—

मोहयित्वौषधैर्मन्त्रैरन्यदेशादुपागतम् ।
अज्ञातकुलनामानं विक्रयेद्यदि पूर्व्वजः ॥
न तस्य निष्कृतिर्दृष्टा[3] ब्रह्महत्याञ्च विन्दति ।

नृसिंहपुराणे—

पूर्व्वजः पूर्व्वजं पापी बाहुजोरुजपादजान् ।
वशीकृत्यौषधैर्मन्त्रैर्विक्रयेद्यदि पापधीः ॥
न तस्य पुनरावृत्तिर्यमलोकात् कदाचन ॥

---

(१) नरं इति लेखितपुस्तकपाठः ।
(२) मोहयेत् इति क्रीतपुस्तकपाठ ।
(३) नास्ति इति लेखितपुस्तकपाठः ।

स्कन्दपुराणे—

मुखजः पापधीर्मर्त्त्योराजानं वा वणिक्पतिम् ।
शूद्रं वा भ्रामयित्वा तु चौषधाद्यैर्विगर्हितैः ॥
विक्रयित्वा परस्मै तं यमलोकं स गच्छति ।
पुनर्भुवमुपागम्य सूनुरेव भवेत्पुनः ॥
विप्रोविप्रस्य विक्रीय(१) कुर्य्यादात्मविपोषणम् ।
तस्यैवं निष्कृतिर्दृष्टा मनु-नारद-गालवैः ॥
क्षत्रिये तु षड़ब्दं स्याद् वैश्यः(२)पादोनमाचरेत् ।
शूद्रे(३)त्वर्द्धं सङ्करे तु पादं कृत्वा विशुध्यति ॥
विप्रं यः क्षत्रियोहृत्वा विक्रयित्वा यदाऽऽ(४)धिमान् ।
ब्रह्महत्याव्रतं कृत्वा शुद्धिमाप्नोति पातकी ॥
अथवा गोसहस्रन्तु दत्वा शुद्धिमवाप्नु(५)यात् ।
तदर्द्धेनैव (६)शुद्धःस्यात् अवजोविप्रविक्रयी ।
शूद्रोविक्रीय विप्रं तु स मौसल्यञ्च नान्यथा ॥

सङ्करजातिर्विप्रविक्रये शूद्रोवा मौसल्यमर्हति । विशेषमाह गारुड़पुराणे—

---

(१) विक्रीत्वा इति क्रीतवेंचितपुस्तकयो पाठः ।
(२) वैश्यैः पादोनं इति क्रीतपुस्तकपाठः ।
(३) शूद्र त्वर्द्धं इति क्रीतपुस्तकपाठः ।
(४) यदा धिया इति क्रीतपुस्तकपाठः ।
(५) शुद्धिमवाप्नुते इति क्रीतवेंचितपुस्तकपाठः ।
(६) शुद्धिःस्यात् इति क्रीतवेंचितपुस्तकपाठः ।

[1]बालेचान्द्रं द्विजे प्रोक्तं पौगण्डे तद्द्वयं चरेत् ।
तरुणे तु महाचान्द्रं यूनि प्रोक्तास्तु तत्त्रयम् ॥
जीर्णे तु विक्रयं कृत्वा सहस्रं कृच्छ्रमाचरेत् ।
विप्रजात्यादिस्त्रीणां मनुष्यविक्रये तत्तत्प्रायश्चित्तार्द्धं वेदितव्यम् ।

इति हेमाद्रिविरचिते धर्म्मशास्त्रे प्रायश्चित्ताध्याये
मनुष्यविक्रयप्रायश्चित्तम् ।

---

(१) बालचान्द्रं इति लेखितपुस्तकपाठः ।

## अथाऽऽत्मविक्रयप्रायश्चित्तमाह ।

स्कन्दपुराणे पातालखण्डे—

पानमक्षाःस्त्रियश्चैव मृगया चौर्य्यदण्डनम् ।
अतीवपरुषं वाक्यं सर्व्वस्वं दानमेव च ॥

एतानि सप्तव्यसनानि ।

अनृतं गन्धपुष्पाणां सेवनं दोषचारणम् ।
सदा ताम्बूलवस्त्राणां भोगोऽयं दोषसाधनम् ॥
ऋणं कृत्वा घृतं पीत्वा प्रत्यहं भोजनस्पृहा ॥
[1]स्वकं किञ्चन न ज्ञात्वा ऋणं कृत्वा व्ययं चरेत् ॥
[2]भोगासक्तः स्वमात्मानं विक्रयित्वाऽथ वर्त्तयेत् ।
वर्षं वर्षार्द्धमर्द्धं वा भवदाधीन्यमाचरम् ॥
इति स्वसंविदं कृत्वा वर्त्तयेत् यदि पापधीः ।
नित्यकर्म्माणि काम्यानि इष्टापूर्त्तादिकानि च ॥
सर्व्वं तस्यैव भवति यद्वैनिष्फलतो भवेत् ।
अग्नौ दग्धं जले मग्नं भूमौ निपतितञ्चयत् ॥
तत्सर्व्वं परलोकाय द्यूते नष्टं विनश्यति ।
पतितोभवति स पापी भ्रंशाद्यैर्नित्यकर्म्मणाम् ॥

---

(१) सर्व्वं स्वकीयं ज्ञात्वा च इति क्रीतकाशीपुस्तकपाठः ।

(२) एवं भोगासक्तः स्वात्मानं विक्रयित्वा वर्त्तयेत् । इति येचितक्रीतपुस्तक पाठः ।

नरके नियतं वासः पापकारी भवेत्ततः ।
तस्यैवं निष्कृतिं दृष्टा मुनिभिर्धर्म्मकोविदैः ॥
'एवं—हिरण्यगर्भप्रतिग्रहप्रायश्चित्तवत्सर्व्वं कुर्य्यात ; इति शेषः ।

इति हेमाद्रिविरचिते धर्म्मशास्त्रे प्रायश्चित्ताध्याये
आत्मविक्रयिणः प्रायश्चित्तम् ।

---

(१) एव मित्यंशः क्रीतलेखितपुस्तकयोर्नोपलभ्यः ।

## अथ सुतविक्रयप्रायश्चित्तमाह ।

कूर्म्मपुराणे—

योविप्रोधनलोभेन स्वसुतं विक्रयेद्यदि ।
स वै पिशाचतां याति यावदाभूतसंप्लवम् ॥

लिङ्गपुराणे—

गृहदाहोदारनाशो देहे पीड़ा सुतात्मनोः ।
राजा हरति सर्व्वस्वं पञ्चवस्वार[1]नाशिता: ॥
बान्धवैश्च परित्यागमात्मवस्त्रविहीनता ।
अष्टौ कष्टानिमे राजन् सम्भवेय्येषु मानवः ॥
सुतं न विक्रयेत् पापी स वै [2]पैशाचजन्मवान् ।
अहो कष्टमहो कष्टमहो कष्टं दरिद्रता ॥
तत्रापि पुत्त्रदाराणां बाहुल्यमतिकष्टता ।
औरसे वाऽन्यपत्नीजे न द्विजोविक्रयं चरेत् ॥
स एव नरकं भुक्त्वा पिशाचत्वमवाप्नुयात् ।

गारुड़पुराणे—

आपत्सु धनलोभाद्वा महाक्षोभेषु भूमिप ।
औरसं वाऽन्यजं वापि द्विजोयदिह विक्रयेत् ॥
स एव नरकान् भुक्त्वा पिशाचत्वमवाप्नुयात्[3] ।
तद्दोषपरिहारार्थं महासान्तपनं चरेत् ।

---

(१) चापिनाशिता इति मौतपुस्तकपाठः ।
(२) पिशाचजन्मवान् इति लेखितपुस्तकपाठः ।
(३) अवाप्यते इति लेखितपुस्तकपाठः ।

बाले सान्तपनं प्रोक्तं पौगण्डे तद्द्वयं स्मृतम् ।
कौमारे प्रौढ़काले तु महासान्तपनत्रयम् ॥
स्त्रीणामर्द्धं विक्रयित्वा विप्रे क्षत्रियवैश्ययोः ।
तत्स्त्रीणाञ्च तदर्द्धं स्यात् शूद्रे तद्वनमाहरेत् ॥

इति हेमाद्रिविरचिते धर्म्मशास्त्रे प्रायश्चित्ताध्याये
सुतविक्रयप्रायश्चित्तम् ।

## अथ पत्नीविक्रयप्रायश्चित्तमाह ।

देवस्वामी—

पूर्व्वोक्तेष्विह कष्टेषु महदापत्सु भूमिप ।
न पत्नीं विक्रयेद्विप्रो दुष्टामपि सतीमपि ॥

गर्भे त्यागो विधीयत इति सर्व्वेषामनुषङ्गः । कलौयुगे व्यभिचारे [1]स्वदृष्टे गर्भधारणमेव दुष्टत्वम् । व्यभिचारमात्रे पोषण मेव न त्यागः ।

[2]स्कन्दपुराणे—

आपत्स्वपि हि कष्टेषु महाघोरे जनक्षये ।
धर्म्मपत्नीं सपत्नीं वा संदृष्टां [3]दुष्टचारिणीम् ।
[4]क्रमाद्द्विजोविक्रयीत परस्मै मत्सरातुरः ॥
यदि विक्रीय वर्त्तेत महान्तं नरकं व्रजेत् । इति

भविष्योत्तरे—

सतीं स्वपत्नीमापत्सु भर्त्ता विप्रोन विक्रयेत् ।
धर्मं यदि परित्यज्य वर्त्तयेदिह कर्म्मणि ।
यमलोकमुपागम्य [5]रौरवे नरके वसेत् ॥
[6]पुनर्भुवमुपागम्य दारहीनोभवेद्भुवि ।

---

(१) व्यभिचारेण दृष्टे इति क्रीतकाशीपुस्तकपाठः ।
(२) स्कान्दे इति क्रीतपुस्तकपाठः ।
(३) स्वदृष्टा इति लेखितपुस्तकपाठः ।
(४) विक्रयेद्दृद्विजः क्रमात् इति लेखितपुस्तकपाठः
(५) रौरवं नरकं वसेत् इति क्रीतपुस्तकपाठः ।
(६) पुनर्भवमिति लेखितपुस्तकपाठः ।

एतद्दोषविशुद्ध्यर्थं प्रायश्चित्तं समाचरेत्।
[1]सतीविक्रयके चान्द्रं पराकं दुष्टचारिणीम्॥
बालिकायां षडब्दं स्यात् प्रौढायां नास्ति निष्कृति"रिति॥

एतदज्ञानविषयम्। [2]ज्ञात्वा चेद्द्विगुणं चरेत्। क्षत्रियवैश्ययो-र्विप्रवत् प्रायश्चित्तं। शूद्रे तद्धनं राजा सर्व्वं गृह्णीयात्।

[इति हेमाद्रौ पत्नीविक्रयप्रायश्चित्तम्।]

---

(१) सतीं च विक्रयेच्चान्द्रं इति मुद्रितपुस्तकपाठः।
(२) ज्ञात्वा च द्विगुणं इति मुद्रितपुस्तकपाठः।
[—] अयमंशः मुद्रितपुस्तके नोपलभ्यः।

## अथ मातृविक्रयप्रायश्चित्तमाह[१] ।

शिवपुराणे—

मातरं तत्सपत्नीं वा भगिनीं भ्रातृबान्धवीम् ।
पितृव्यपत्नीं विधवां स्नुषां [२]कामातुराग्रणीम् ॥
*ब्राह्मणोमत्सरासक्तोव्यभिचारादिशङ्कया ।
न विक्रयेत् सुतोभ्राता यदि [३]कुर्य्यात् स दोषभाक् ॥

लिङ्गपुराणे—

मातरं भगिनीं भ्रातृबान्धवीं स्वस्नुषामपि ।
सपत्नीं विधवां पत्न्याः सपत्नीं [४]मातुलायनीम् ॥
पितृव्यपत्नीं भ्रातृजायां गुरुपत्नीमथापि वा ।
[५]व्यभिचारादिवार्त्ताभिर्मत्सराद्वा नराधिप ॥
एतासु विप्रोन द्रुह्येत् सति दोषे महत्यपि ।
न विक्रयेद्द्विजोलोभान्मृत्वानरकमश्नुते ॥

[६]मार्कण्डेयपुराणे—

शृणु राजन् प्रवक्ष्यामि दोषबुद्धिमिमामिह ।
विप्रस्तु मातरं [७]धात्रीं तत्सपत्नीं सहोदराम् ॥

---

(१) आह इति क्रीतपुस्तके नास्ति ।
(२) वा मातुरग्रणीम् इति लेखितपुस्तकपाठः ।
* यो विप्रः इति क्रीतलेखितपुस्तकपाठः ।
(३) क्रीत्वा इति क्रीतलेखितपुस्तकपाठः ।
(४) मातुरग्रणीम् इति क्रीतपुस्तकपाठः ।
(५) व्यभिचाराभिवार्त्ताभिः इति क्रीतपुस्तकपाठः ।
(६) मार्कण्डेये इति क्रीतपुस्तकपाठः ।
(७) भ्रात्रीं इति क्रीतलेखितपुस्तकपाठः ।

स्वसारं विधवां साध्वीं पैतृव्यां[1] स्नुषामपि।
मातुलानीं गुरोर्दारान् व्यभिचारे महत्यपि॥
जनवादाद्रोहबुद्ध्या न दुष्याद्दै कदाचन।
मातरं तल्पपत्नीं वा विक्रीय[2] पतितोभवेत्॥
[3]भागिनेयीं स्वसारं तु विक्रयेद्यदि पापधीः।
निष्कारणतया राजन् कारीषवधमर्हति॥
विधवां मातुलानीं वा स्नुषां पितृव्यसम्भवाम्।
विक्रयित्वा द्विजोमोहादन्यदेशगतोयदि॥
महासान्तपनं चान्द्रं षड़ब्दं तु परिक्रमः[4]।
यथाक्रमं योजनीयं गर्भे त्यागोविधीयते॥
मातरं न त्यजेद्विद्वान् पूर्व्ववत् शुद्धिमाचरेत्॥

गुरुदारविक्रये कारीषवधएव। वयस्तारतम्यं पूर्व्ववद् वेदितव्यम्। तत्र विक्रये तत्तत्प्रायश्चित्तं योजनीयम्। क्षत्रियवैश्ययोर्विप्रप्रायश्चित्तम्। शूद्रे तद्धनस्वीकारः। सर्व्वत्र गर्भे स्वदेशादन्यदेशे त्यागएव। मात्रोः पूर्व्ववद् वेदितव्यम्।

इति हेमाद्रौ मात्रादिविक्रयप्रायश्चित्तम्।

---

(१) पितृव्यां इति क्रीतकाशीपुस्तकपाठः।
(२) विक्रये इति क्रीतलेखितपुस्तकपाठः।
(३) भगिनीं वा इति क्रीतलेखितपुस्तकपाठः।
(४) परिक्रमात् इति क्रीतपुस्तकपाठः।

## अथ पुत्रीविक्रयप्रायश्चित्तमाह ।

स्कन्दपुराणे—

विवाहोर्द्धं विवाहात्प्राक् कन्यां गौरीमथाऽपि वा ।
रोहिणीं पुष्पिणीं वाऽपि योरत्नं कन्यकाधनम् ॥
विवाहार्थमितिव्याजं कृत्वा स्वीकरणं चरेत् ।
पितरोनरकं यान्ति स्वयं पत्नीसमन्वितः ॥
रौरवे नरके घोरे वसत्याचन्द्रतारकम् ।
जामातुरतिमात्रं स्यात् सा वै किङ्करिणीभवेत् ॥

गौतमधर्म्मे—

अष्टवर्षा भवेत्कन्या नववर्षा तु रोहिणी ।
दशवर्षा भवेद्गौरी अतऊर्द्धं रजस्वला ॥
क्रयक्रीता तु या नारी [1]सा न पत्न्यभिधीयते ।
न योग्या हव्यकव्येषु दासीं तां मुनयोविदुः ॥

कन्यादाने विशेषमाह—

मार्कण्डेयपुराणे—

सम्बन्धिनं माणवकं श्रोत्रियं व्याधिवर्ज्जितम् ।
[2]कन्यां दद्याच्च तस्मै तां व्रतस्नातकशुद्धये ॥
मातृतः पितृतश्चैव सप्त सप्त च सप्त च ।
पितृनुद्धरते पूर्व्वं पश्चाद्ब्रह्मणि लीयते ॥

---

(१) सा न पत्न्यभिधीयते इति केचित्पुस्तकपाठः ।
(१) आर्षेण दानं तस्मै तां इति केचित्पुस्तकपाठः ।

कूर्म्मपुराणे—

[1]वस्त्रादिना शुभां राजन् शक्त्याऽलङ्कृत्य स्वां सुताम्।
कुलजाय सुशीलाय स्नातकव्रतचारिणे॥
अरोगाय श्रुतवते यो दद्यात्तां शृणुष्व मे।
पितरस्तृप्तिमायान्ति स्वयञ्च ब्रह्मणःपदम्॥
[2]एतस्य वैपरीत्ये तु पितरोनिरयं गताः।
कुम्भीपाकं स्वयं याति कन्याविक्रयणे फलम्॥

विवाहार्थं यं कं वा व्याजमाश्रित्य धनस्वीकारएव मौल्यं, कन्याशुल्कं तदेवाह।

देवलधर्म्मे—

विवाहार्थं धनं गृह्णन् यं कं वा व्याजमाश्रितः।
तदेव विक्रये[3] मौल्यं विप्रस्तस्मात्तु[4]संत्यजेत्॥
न तस्य निष्कृति[5]र्वास्ति त्रिभिश्चान्द्रायणै[6]र्विना।
रोहिणीविक्रये राजन् महाचान्द्रायणं स्मृतम्॥
गौरीविक्रयणे तात महासान्तपनत्रयम्।
रजस्वलाविक्रयणे कारीषवधएव हि॥

---

(१) अस्त्रादि संत्यक्ता इति लेखितपुस्तकपाठः।
(२) एतस्यै परित्यज्य इति क्रीतपुस्तकपाठः।
(३) विक्रयोमौल्यं इति क्रीतपुस्तकपाठः।
(४) तस्मात् सुसन्त्यजेत् इति लेखितपुस्तकपाठः।
(५) नास्ति इति लेखितपुस्तकपाठः।
(६) चान्द्रायणं विना इति क्रीतलेखितपुस्तकपाठः।

एतासां च चतसृणां मूल्यं धृत्वा विवाहयेत् ।

न तत्र विप्रा[1]भुञ्जन्ति तत्तत्पापाईमाप्नुयुः[2] ॥

तदाहाऽपस्तम्बः—

"दोषेण वा मीमांसमानस्य मीमांसितस्य वा आत्मानं हिंसितस्य भक्षयतीति विज्ञायते" ।

अत्र कन्याशुल्कस्वीकारएव दोषः । अतएव कन्यामूल्यस्वीकारएव विक्रयः नान्यत्[3] ।

इति हेमाद्रौ कन्याविक्रयप्रायश्चित्तम् ।

---

(१) विप्रोभुञ्जीत इति क्वीतपुस्तकपाठः ।

(२) आप्नुयादिति क्वीतपुस्तकपाठः

(३) अन्यत् इत्येव लेखितपुस्तकपाठः ।

## अथ गजविक्रयप्रायश्चित्तमाह।

कूर्मपुराणे—

गजं क्रीत्वा तु धृत्वा वा व्यवहारतया द्विजः।
[ विक्रयेद्यदि मूढात्मा धनलोभधृतादरः ]
न तस्य पुनरावृत्तिर्यमलोकात् कदाचन॥

लिङ्गपुराणे—

सम्पाद्य नागं धृत्वा वा विप्रोलोभपरायणः।
विक्रयेद्यदि दोषात्मा न तस्य पुनरुद्भवः॥

स्कान्द[1]पुराणे—

हस्तिनं प्रतिगृह्याशु क्रीत्वा द्रव्याल्पमानसः।
विक्रयित्वा पुनर्लोभाद् यमलोकम[2]वाप्नुयात्॥
बालविक्रयणे चान्द्रं पौगण्डे तद्द्वयं स्मृतम्।
युवानं विक्रयित्वा तु दशतप्तं समाचरेत्।
स्त्रीणामर्द्धं मुनिश्रेष्ठाः प्रायश्चित्तं मनीषिभिः॥

धेनु-गजविक्रये स्त्रीणामर्द्धं प्रायश्चित्तमुक्तम्। क्षत्रियवैश्ययोरेवं प्रायश्चित्तम्। शूद्रे तु 'सम्पूर्णमेव इति केचित्। अर्द्धं शूद्रवैश्ययोर्वेदितव्यम।

इति हेमाद्रौ गजविक्रयप्रायश्चित्तम्।

---

(—) इदं श्लोकार्द्धं क्रीतलेखितपुस्तकयोर्नोपलभ्यम्।
(१) स्कान्दे पुराणे इति क्रीतपुस्तकपाठः।
(२) अवाप्यते इति क्रीतलेखितपुस्तकपाठः।

## अथ धेनुविक्रयप्रायश्चित्तमाह ।

शिवपुराणे—

[ सम्पाद्य बहुधा यत्नैर्धेनुं विप्रः प्रतिग्रहात् ।
विक्रयेद्यदि मूढात्मा रौरवं नरकं व्रजेत् ॥

लिङ्गपुराणे—]

[1]धेनुं सम्पाद्य विप्राय अग्निहोत्रार्थमादरात् ।
दुग्धाभावे तथा युक्तो विक्रयेद्यदि पापधीः ॥
स वै नरकमासाद्य चाण्डालत्वमवाप्नुयात् ।
बालपौगण्डके वापि धेनूं वा द्रव्यलोभवान् ॥
विक्रयेद्यदि मूढात्मा दहत्यासप्तमं कुलम् ।
बाले चान्द्रन्तु पौगण्डे महाचान्द्रमुदीरितम् ॥
युवतीं विक्रयित्वा तु तप्तकृच्छ्रत्रयं विदुः ।
धेनुं द्विजोविक्रयित्वा गोसूक्तं मण्डलं जपेत् ॥
आसायं प्रातरारभ्य [2]स्नात्वाऽभुञ्जन् फलं मुदा ।
मण्डलेन [3]विशुद्धिःस्यात् पञ्चगव्यं ततः परम् ।

भूसूक्तमित्यर्थः

इति हेमाद्रौ धेनुविक्रयप्रायश्चित्तम् ।

---

[ —] अयं अंशः क्रीतपुस्तके नोपलब्धः ।
(१) धेनुमित्यंशः क्रीतपुस्तकेनास्ति ।
(२) स्नात्वाभुक्तिफलं इति क्रीतपुस्तकपाठः ।
(३) विशुद्धःस्यात् इति क्रीतपुस्तकपाठः ।

## [1]अथ बलीवर्द्दविक्रयप्रायश्चित्तम् ।

मार्कण्डेयपुराणे—

अनड्वाहं यदा विप्रोविक्रयेद्यदि मोहतः ।
स पापी नरकं याति असिपत्रं सुदारुणम् ॥

[ लिङ्गपुराणे—

अनड्वान् पूर्व्वजेनाऽथ द्रव्यलोभपरेण वा ।
विक्रीयते महान्घोरो नरकः सम्भवेदतः ॥ ]

कूर्म्मपुराणे—

अनड्वाहं द्विजोधृत्वा गृहीत्वा वा [2]नरोत्तमात् ।
द्रव्यलोभेन महता विक्रयेद्यदि कामतः ॥
महान्तं नरकं गत्वा [3]भुवि भूयात् स हिंसकः ।
तस्य [4]दोषस्य शान्त्यर्थं तत्तत्कृच्छं समाचरेत् ॥
[5]पोषयित्वा गृहे वत्सं स्वधेनूदरसम्भवम् ।
तं विक्रयित्वा मोहेन कुर्य्याच्चान्द्रायणं बुधः ॥
बाले पौगण्डके चैव प्राजापत्यं विशोधनम् ।
विप्रस्त्रीणामेवमेव[6] प्रायश्चित्तार्द्धमाचरेत् ॥

---

(१) अथानड्वाह इति क्रीतलेखितपुस्तकपाठः ।

[ ] अयं पाठः क्रीतकाशीपुस्तकयोर्नोपलभ्यः ।

(२) नरोत्तमान् इति लेखितपुस्तकपाठः ।

(३) न स भूयात् स हिंसक इति क्रीतपुस्तकपाठः ।

(४) दोषोपशान्त्यर्थं इति लेखितपुस्तकपाठः ।

(५) तोषयित्वा इति क्रीतलेखितपुस्तकपाठः ।

(६) तत्तत्स्त्रीणामेव तदर्द्धं इति क्रीतपुस्तकपाठः ।

क्षत्रियवैश्ययोरेवं वेदितव्यम् । तत्तत्स्त्रीणामेतदर्थम् । पादजे [6]धनस्वीकारः ।

इति हेमाद्रौ [7]बलीवर्द्दविक्रयप्रायश्चित्तम् ।

---

(६) धन इत्यंशः क्रीतपुस्तके नोपलभ्यः ।

(७) अनड्वाह इति क्रीतलेखितपुस्तकपाठः ।

## अथ महिषीविक्रयप्रायश्चित्तमाह ।

ब्रह्माण्डपुराणे—

महिषीं पोषयित्वा तु स्वगृहे पुत्रवत्तथा ।
तां पश्चाद्विक्रयित्वा तु विक्रेयः पापधीर्नरः ॥

नरशब्दोजातिमात्रसाधारणः ।

स याति नरकं घोरं [1]आक्रोलं नाम नामतः ।

लिङ्गपुराणे—

[2]महिषीं स्वगृहे तात पोषयित्वा स्वयं द्विजः ।
[3]पुत्रवत्पालयित्वा तु विक्रयेदन्यचोदितः ॥
स एव नरकस्थायी तद्वै पापमनुस्मरन् ।
महिषं स्वगृहे जातं क्रीत्वा वा राजनन्दन ॥
प्रतिगृह्य द्विजो यस्तु विक्रयेद्धनलोभतः ।
यमलोकमनुप्राप्य नरकं याति दारुणम् ॥
गृहजां विक्रयेद्राजन् तस्य चान्द्रायणं स्मृतम् ।
वणिक् पापेन संक्रीत्वा [4]विक्रयेत् तद्द्वयं चरेत् ॥
प्रतिगृह्य द्विजस्त्वेनां षड़ब्दं विक्रये स्मृतम् ।

---

(१) अक्रालं नाम नामतः इति काशीपुस्तकपाठः ।
(२) महिषं इति लेखितपुस्तकपाठः ।
(३) पुत्रवत्पालितायेन इति क्रीतपुस्तकपाठः ।
(४) विक्रयीत् इति काशीपुस्तकपाठः ।

तत्स्त्रीणान्तु तदर्द्धं स्यात् क्षत्रियाणां [1]द्विजोक्तवत् ॥
वैश्यानान्तु क्षत्रिय[2]वत् [शूद्राणाम्] तद्धनं हरेत् ।

इति हेमाद्रौ महिषीविक्रयप्रायश्चित्तम् ।

---

(१) द्विजोत्तम इति क्रीतपुस्तकपाठः ।

(२) क्षत्रियत्वात् इति लेखितपुस्तकपाठः ।

[ ] अयं पाठः क्रीतलेखितपुस्तकयोर्नास्ति ।

## अथाऽज-वस्त[1]विक्रयप्रायश्चित्तमाह ।

नागरखण्डे —

[2]अजं वस्तं द्विजोयस्तु सम्पाद्य बहुयत्नतः ।
पश्चात्तौ विक्रयेत् पापी नरकं [3]याति दारुणम् ॥

स्कन्दपुराणे —

विप्रः प्रयत्नतो राजन् सम्पाद्येमौ प्रगृह्य वा ।
पश्चात्तौ [4]विक्रयेत्पापी नरकं याति गौरवात् ॥

[ लिङ्गपुराणे—

अजं वस्तं द्विजोयस्तु सम्पाद्य बहुयत्नतः ।
पश्चात्तौ विक्रयित्वा चेत् नरकं याति दारुणम् ॥ ]

तत्पापपरिशुद्ध्यर्थं प्राजापत्यं समाचरेत् ।
नारीं [5]वा विक्रयेद्यस्तु तदर्द्धं [6]तस्य कीर्त्तितम् ॥

इति हेमाद्रौ अज-वस्तविक्रयप्रायश्चित्तम् ।

---

(१) विक्रये प्रायश्चित्तमिति लेखितपुस्तकपाठः ।
(२) अजवस्तं इति लेखितपुस्तकपाठः ।
(३) चानुभूयते इति लेखितपुस्तकपाठः ।
(४) विक्रयित्वाचेत् नरकं याति दारुणम् इति क्रीतपुस्तकपाठः ।
[ ] अयं पाठः क्रीतपुस्तके नोपलब्धः ।
(५) नारीं वो विक्रयेद्यस्तु । इति क्रीतलेखितपुस्तकपाठः ।
(६) परिकीर्त्तितं इति क्रीतलेखितपुस्तकपाठः ।

## अथ खरविक्रयप्रायश्चित्तमाह[1]।

[2]स्कन्दपुराणे—

रासभं विक्रयेद्विप्रः पशुचाण्डालमादरात्।
स वै चाण्डालतां याति नरकं चानुभूय च॥

स्कन्दपुराणे—

रासभं पूर्व्वजो लोभात् क्रीत्वाऽल्पद्रव्ययोगतः।
पश्चाद्बहुधनाकाङ्क्षी विक्रयेद्यदि दैवतः॥
[स चाण्डालत्वमासाद्य यावद्ब्रह्मा लयं[3] गतः।
तावत्कालं तथा नीत्वा भवेत्कण्डूतिमान् भुवि॥

लिङ्गपुराणे—

रासभं विक्रयेन्मोहात् क्रीत्वा वा धनलोभवान्।
स चाण्डालत्वमासाद्य पश्चात्कण्डूतिमान् भवेत्]॥
प्राजापत्यं भवेत् बाले कौमारे तत्समाचरेत्।
यूनि क्रीत्वा[4] षड़ब्दं स्यात् ततः शुद्धिमवाप्नुयात्॥

स्त्रीणामेतदर्द्धं। क्षत्रियवैश्ययोर्विप्रवत्। पादजे सर्व्वस्वहरणम्।

इति हेमाद्रौ रासभविक्रयप्रायश्चित्तम्।

---

(१) आह इति क्रीतपुस्तके नास्ति।
(२) अयं पाठः क्रीतलेखितपुस्तकयोर्नास्ति।
[ ] अयं पाठः क्रीतपुस्तकेनास्ति।
(३) अयं पाठः काशीपुस्तकेनोपलभ्यः।
(४) कृत्वा इति क्रीतलेखितपुस्तकपाठः।

## अथोष्ट्रविक्रयप्रायश्चित्तमाह[1] ।

लिङ्गपुराणे—

उष्ट्रं द्विजोऽथ क्रीत्वा वा सम्पाद्य लघुमूल्यतः ।
विक्रयेत्तं धनाधिक्यात् काल[2]सूत्रं प्रपद्यते ॥

स्कन्दपुराणे—

स्तेयं कृत्वाऽथवा क्रीत्वा द्विजः कुर्य्यात् क्रमेलकम् ।
विक्रयेद्[3] यदि पापात्मा नरकं याति दारुणम् ॥

भविष्योत्तरे—

"क्रमेलकं द्विजोयस्तु सम्पाद्य बहुयत्नतः ।
न तस्य निष्कृति र्नास्ति[4] कालसूत्राद्भयङ्करात् ॥
बाले पराकं सम्प्रोक्तं पौगण्डे तप्तमीरितम् ।
यूनि चान्द्रं षडब्दं वा कृत्वा शुद्धिमवाप्नुयात् ॥
विप्रस्त्रीणां तदर्द्धं स्यात् पूर्णं क्षत्रविशामिह ।
पादजे तु धनाऽऽदानमेवमेव प्रचोदित" मिति ॥

इति [5]हेमाद्रौ उष्ट्रविक्रयप्रायश्चित्तम् ।

---

(१) आह इत्यंशः क्रीतपुस्तकेनास्ति ।
(२) कालसूत्रं इति क्रीतपुस्तकपाठः ।
(३) विक्रये इति लेखितपुस्तकपाठः ।
(४) नास्ति इति लेखितपुस्तकपाठः ।
(५) हेमाद्रौ इत्यंशो लेखितपुस्तके नोपलब्धः ।

## अथ हरिणीविक्रयप्रायश्चित्तमाह[1]।

लिङ्गपुराणे—

अरण्यजां वा गृहजां विप्रो यदिह विक्रयेत्।
एणीं तद्द्रव्यलोभेन स याति [2]ब्रह्महन्तृताम्॥

मत्स्यपुराणे—

देवालये[3] गृहे वाऽपि पोषयित्वा मृगाङ्गनाम्।
द्विजस्तां[4] विक्रयेद्यस्तु स महापातकी भवेत्॥
विक्रयेद्यदि हिंसार्थं स चाण्डालत्वमाप्नुयात्।

चतुर्विंशतिमते—

अरण्यजां वा गृहजां विप्रो हिंसार्थमादरात्।
विक्रयेद्यदि पापात्मा भुवि चाण्डालजन्मवान्॥
न तस्य निष्कृतिर्वाऽस्ति[5] यमलोकात्कदाचन।

राजविजये—

ब्राह्मणः समुपादाय हरिणीं [6]वनसम्भवाम्।
क्रीत्वा वा राजराजेन्द्र हिंसार्थं विक्रयेद्यदि॥
स वै नरकमासाद्य तत्र भुक्त्वा महद्भयम्।
भुवि गत्वा च पापीयान् चाण्डालत्व[7]मवाप्नुयात्॥

---

(१) आहेत्यंशः क्रीतपुस्तके नास्ति।
(२) ब्रह्महन्तृतामिति क्रीतलेखितपुस्तकपाठः।
(३) देवालयमठे इति पाठः क्रीतपुस्तके दृष्टः।
(४) द्विजस्तु इति क्रीतपुस्तकपाठः।
(५) नास्ति इति लेखितपुस्तकपाठः।
(६) नवसम्भवां इति क्रीतपुस्तकपाठः।
(७) अवाप्यते इति लेखितपुस्तकपाठः।

तत्पापशोधनार्थाय निष्कृतिं प्राह पद्मभूः ।
प्रातःस्नात्वा[1] यथाऽऽचारं नित्यकर्म्म समाप्य च ॥
रहःस्थान[2] उपाविश्य स्वगृह्याग्नौ विधानतः ।
अग्न्योष्ठनादि[3] पात्रान्ते पिष्टाज्यसहितैस्तिलैः ॥
विरजाहोमविधिना कृत्वा होमसहस्रकम् ।
जयादींश्च ततोहुत्वा होमशेषं समापयेत् ॥
फलाहारः प्रकर्त्तव्योहोमकर्म्मफलाप्तये ।
सायं सन्ध्यामुपास्याय[4] तत्रौपासनमाचरेत् ॥
अग्निश्च रक्षयेद्धोमान् यावद्धोमा समाप्यते ।
एवं पञ्चदिनं कृत्वा तस्मात् पापात् प्रमुच्यते ॥

सहस्रमित्यत्र तिलान् जुहोमीति चतुर्व्विंशतिभि[5]र्वाक्यैः पृथक् संख्या कर्त्तव्या । एतैर्वाक्यैस्तिलैः सह संख्या भवति ? । एतया संख्यया पञ्चरात्रं पञ्चसहस्रं जुहुयादिति वेदितव्यम् ।

इति हेमाद्रिविरचिते धर्म्मशास्त्रे प्रायश्चित्ताध्याये
हरिणीविक्रयप्रायश्चित्तम् ।

---

(१) स्नात्वाऽथवाचारं इति कीतपुस्तकपाठः ।
(२) रहःस्थानमुपाविश्य इति कातपुस्तकपाठः ।
(३) अग्न्योष्ठनादौ इति कीतपुस्तकपाठः ।
(४) उपासित्वा इति लेखितपुस्तकपाठः ।
(५) वाद्यैरिति काशीपुस्तकपाठः ।

## अथ रुरुविक्रयप्रायश्चित्तमाह[1] ।

ब्रह्माण्डपुराणे—

यज्ञार्थं कल्पितं पूर्व्वं ब्रह्मणा पद्मयोनिना ।
यस्मिन्देशे मृगः कृष्णः स देशः पुण्यवानिह ॥
तं क्रीत्वा वा गृहीत्वा वा पूर्व्वजोद्रव्यतृष्णया ।
विक्रयित्वा सकर्म्मभ्यः स वै चाण्डालवानिव ॥
तस्मान्नविक्रयेद्धीमान् रुरुं स्वप्नेऽपि नारद ।
विक्रयेद्यदि मूढ़ात्मा प्रायश्चित्तीभवेत्तदा ॥

लिङ्गपुराणे—

ब्रह्मणा कल्पितं रङ्कुं सम्पाद्य बहुयत्नतः ।
पूर्व्वजः सङ्गदोषेण विक्रयेद्यदि पापभाक् ॥
महान्तं नरकं गत्वा चाण्डालत्वं भजेदिह[2] ।
न तस्य निष्कृति[3]र्वास्ति त्रिषु जन्मसु भुमिज ॥
स्वगृह्याग्नौ विधानेन दशरात्रमतन्द्रितः ।
कुष्माण्डगणहोमैश्च सहस्रं जुहुयात् क्रमात् ॥
एतैः शुद्धिमवाप्नोति नान्यथा तस्य पापिनः ।

---

(१) आह इति क्रीतपुस्तके नास्ति ।
(२) भवेदिह इति क्रीतलेखितपुस्तकपाठः ।
(३) नास्ति इति लेखितपुस्तकपाठः ।

सहस्रं कुष्माण्डहोमः [ तदर्थं गणहोमः ] तमग्निं दशरात्र-मजस्रं[1] कृत्वा दशरात्रं फलाहारःस्थण्डिले शयनं कृत्वा शुध्यति ।

इति हेमाद्रिविरचिते धर्म्मशास्त्रे प्रायश्चित्ताध्याये रसविक्रयप्रायश्चित्तम् ।

---

[ ] अयं पाठः कीतपुस्तकेनास्ति ।

(१) अलुप्तं इति कीतपुस्तकपाठः ।

अथ अश्वविक्रयप्रायश्चित्तमाह ।

ब्रह्मवैवर्त्ते—

उत्तमाश्वं गृहे जातं क्रीत्वा मूल्यैरनेकधा ।
पोषयित्वा चिरं कालं विप्रस्तं विक्रयेद्यदि ॥
कालकूटमुपागम्य यमलोके भयङ्करे ।
पुनर्भवमुपागम्य व्याधोभवति कानने ॥

पद्मपुराणे—

मेरुमन्दरतुल्यानि पापानि विविधानि च ।
रुद्रजापी हरेत्सर्व्वं न कन्याहयविक्रयी ॥
हयविक्रयिणः पापं यत्र गत्वा न क्षीयते ।
तस्मादेतत् परित्याज्यं पूर्व्वजैः पापभीरुभिः ॥

शिवपुराणे—

कन्यां दासीं हयं विप्रः पोषयित्वा प्रयत्नतः ।
तामेतान् विक्रयेत् पापी व्याधोभवति कानने ॥

विष्णुधर्म्मोत्तरे—

कन्यां हयञ्च दासीञ्च स्वगृहे सम्भवान् शुभान् ।
पोषयित्वा द्विजोलोभात् पश्चादेतांश्च विक्रयेत् ॥
स भुक्त्वा यातनाः सर्व्वाः पश्चाद्व्याधोभवेदिह ।
तस्य देहविशुद्ध्यर्थं प्रायश्चित्तमिदं शुभम् ॥

---

(१) पुनर्भुवं इति क्रीतपुस्तकपाठः ।
(२) पापं क्रीतवेष्टितपुस्तकपाठः ।

उत्तमाश्वं द्विजः कस्मै [1]क्रीत्वा दद्याद्विजन्मने।
साधारणहये राजन् तप्तकृच्छ्रं विशोधनम्॥
वड़वाविक्रये तात प्राजापत्यं समाचरेत्।
आत्मे परार्थं पौगण्डे तप्तं यूनीह यावकम्॥
तदर्द्धं विप्रनारीणां विप्रोक्तं राजवैश्ययोः।
तत्स्त्रीणाञ्च तदर्द्धं स्यात् पादजे मूल्यमाहरेत्॥
एवं विप्रोभवेत्पूतः पापादस्माद्विशाम्पते।

इति हेमाद्रिविरचिते धर्म्मशास्त्रे प्रायश्चित्ताध्याये
अश्वविक्रयप्रायश्चित्तम्।

---

(१) विक्रयित्वा चरेदिद्मं इति केचित्पुस्तकपाठः।

## अथ दुष्टमृगविक्रयप्रायश्चित्तमाह ।

मनुरहस्ये—

सिंहोव्याघ्रश्च [1]भल्लूकः किटिः शल्लएवच ।
शरभाः खड्गिनो ये च ते मृगादुष्टसंज्ञिताः ॥
एतान् गृहीत्वा दुष्टात्मा जालैः श्वभ्रैश्च शङ्कुभिः ।
[2]व्याधसंसर्गितामेत्य विप्रोलोकविगर्हितः ॥
[3]तानादाय यदाराजन् विक्रयेद् यदि लीलया ।
तस्य देहविशुद्ध्यर्थं पराकं मुनिचोदितम् ॥
तेन शुद्धिमवाप्नोति नान्यथा शुद्धिरिष्यते ।

इति श्रीहेमाद्रौ प्रायश्चित्ताध्याये दुष्टमृग
विक्रयप्रायश्चित्तम् ।

---

(१) भल्लाक इति लेखितपुस्तकपाठः ।
(२) व्याधसंसर्गतामेत्य इति लेखितपुस्तकपाठः ।
(३) तामादाय इति लेखितपुस्तकपाठः ।

अथाऽऽरण्यकमृगपक्षिविक्रयप्रायश्चित्तमाह ।

देवीपुराणे--

[1]खड्गटिट्टिभिचक्रं[2] वा हंसकारण्डवं तथा ।
मयूरं सारसञ्चैव [3]मरीचमृगमेव च ।
[4]वार्षञ्च मृगनाभिञ्च कपोतं[5] जालपादकम्[6] ॥
शुकं चाषं बलाकाञ्च शिशुमारं च [7]कण्ठपम् ।
शारिकाञ्च भरद्वाजं ये चान्ये पक्षिणस्तथा ॥
एतान्योद्रव्यलोभेन द्विजोयदिह विक्रयेत् ।
तस्येह शुद्धिरुदिता द्वादशाहमभोजनम् ॥
मकरं नकुलं काकं[8] कुक्कुटं मूषिकं तथा ।
मार्ज्जारं नकुलं सर्पं भारद्वाजं कपिं तथा ॥
करिकं[9] चटकं श्वानं विक्रयेद् यदि पूर्व्वजः ।

---

(१) खड्गं टिट्टिभ चक्रं वा इति क्रीतपुस्तकपाठः ।
(२) हंसं कारण्डवं तथा इति काशीपुस्तकपाठः ।
(३) मरीचिं मृगमेवच इति क्रीतपुस्तकपाठः ।
(४) वर्षञ्च इति क्रीतपुस्तकपाठः ।
(५) कपोलं इति लेखितपुस्तकपाठः ।
(६) जालपादुकं इति क्रीतपुस्तकपाठः ।
(७) कठपं इति लेखितपुस्तकपाठः ।
(८) कालं इति क्रीतपुस्तकपाठः ।
(९) करकं इति क्रीतपुस्तकपाठः ।

[८]सुपर्णमृगश्येनांश्च शिवाकङ्कं[९] सृगालकम् ॥
कृच्छ्रार्द्धमाचरेद्विद्वान् ज्ञात्वा तद्द्विगुणं चरेत् ॥

इति हेमाद्रिविरचिते धर्म्मशास्त्रे प्रायश्चित्ताध्याये
मृगपक्षिविक्रयप्रायश्चित्तम् ।

---

(८) सुपर्णमृगगोमांश्च इति कोतपुस्तकपाठः ।
(९) शिवाकङ्क इति कोतपुस्तकपाठः ।

## अथ गोधूम-तिल-माषविक्रयप्रायश्चित्तमाह ।

मार्कण्डेयपुराणे—

गोधूमाश्च तिला माषाः हव्यकव्यशुभप्रदाः ।
स्वल्पविप्रापिता राजन् पितृप्रीतिकराः शुभाः ॥
द्विजोयदिह लोभेन सञ्चयार्थं हि विक्रयेत् ।
तस्यैव निष्कृतिर्नास्ति यमलोकात्कदाचन ॥

[ लिङ्गपुराणे—

तिल-गोधूम-माषान् यः स्वल्पेकत्रवानिमान् ।
धर्म्मशास्त्रं परित्यज्य[1] विप्रोयदिह विक्रयेत् ॥
न तस्य निष्कृतिर्नास्ति यमलोकात्[2]सुदुःखदात् । ]

महाराजविजये—

तिलान् गोधूम-माषांश्च स्वल्पेकत्रवान् द्विजः ।
विक्रयेद्धनलोभेन महान्तं नरकं व्रजेत् ॥
गोधूमविक्रये राजन् प्राजापत्यं समाचरेत् ।
माषाणां तप्तमात्रश्च तिलानां चान्द्रभक्षणम् ॥

---

[—] अयं पाठः क्रीत पुस्तके नोपलभ्यः ।
(१) परित्यज्य इति केचितपुस्तकपाठः ।
(२) सुदुःखदात् इति क्रीतपुस्तकपाठः ।

एतत्प्रायश्चित्तं खारीप्रमाणे योजनीयम् । अल्पविक्रये तदर्द्धम् । तत्पत्नीनां तदर्द्धम् । राज्ञां विप्रवत्प्रायश्चित्तम् । वैश्यस्य सहजमेव । शूद्रादीनां न दोषः ।

इति हेमाद्रौ गोधूम-तिल-माषविक्रयप्रायश्चित्तम् ।

---

## अथ मुद्ग-तण्डुलविक्रयप्रायश्चित्तमाह[1]।

मार्कण्डेयपुराणे—

मुद्गाश्च तण्डुला राजन् सर्व्वजन्तूपकारकाः।
ब्रह्मा[2] लोकस्य रक्षार्थं सृष्ट्यादौ सृष्टवानिमान्॥
हव्यकव्येषु शस्ताःस्युर्विप्राणाञ्च विशेषतः।
द्रव्यस्य सञ्चयार्थं वा उत लोभपरायणः॥
[3]नरकं प्रतिपद्याशु कष्टतोजातिहा भवेत्।
| विक्रयेद् यदि मूढ़ात्मा नरकं संप्रपद्यते॥

मरीचिः—

मुद्गाश्च तण्डुला राजन् ब्रह्मणा निर्म्मिताः पुरा।
तान् विक्रयित्वा योविप्रोद्रव्यलोभपरायणः॥
नरकं प्रतिपद्याशु कष्टजोजातिहा भवेत॥ [3]

गौतमधर्म्मे—

तण्डुलांश्चैव मुद्गांश्च विप्रोलोभपरायणः।
विक्रयेद्यदि मोहात्मा प्रायश्चित्तीभवेदिह॥

---

(१) आहेति शीतपुस्तके नास्ति।
(२) ब्रह्मणा इति लेखितपुस्तकपाठः।
(३) इदं श्लोकार्द्धं लेखितपुस्तके नास्ति।
[ ] अत्र पाठः कोषकारग्रन्थयोर्न दृष्टः।

प्राजापत्यं तण्डुलेषु तप्तं मुद्गेषु शस्यते ।
खारिकायामिवमेव तदर्द्धञ्च [1]तदर्द्धके ॥

एकवारविक्रये प्रायश्चित्तमिदं, द्विवारे द्विगुणं, अभ्यासे चतुर्गुणम् । अतःपरं द्विजः शूद्रतुल्य इत्यर्थः । तत्स्त्रीणां तदर्द्धम् । क्षत्रियाणां विप्रवत्प्रायश्चित्तम् ॥

इति हेमाद्रौ मुद्ग-तण्डुलविक्रयप्रायश्चित्तम् ।

---

(१) तदर्द्धकं इति लेखितपुस्तकपाठः ।

## अथ व्रीह्यादिधान्यविक्रयप्रायश्चित्तमाह[1] ।

लिङ्गपुराणे—

व्रीहयश्चणका राजन् श्यामाकाः कोद्रवास्तथा ।
प्रियङ्गवः कुलित्थाश्च[2] यावनाला महाव्रताः ॥
एतानि कृषिजातानि स्वोद्भवानि नृपोत्तम ।
एतेषां विक्रयं कृत्वा नित्यलोपी समाचरेत् ॥

नित्यलोपइति दर्शपूर्णमासाऽऽग्रयणपश्वपित्रा[3]ह्निकलोपः [4]तदर्थं विक्रये न दोषः । द्रव्यसञ्चयार्थं विक्रये तु दोषमाह—

कूर्म्मपुराणे—

विक्रयित्वा द्विजोधान्यं नित्यलोपी न दोषभाक् ।
आत्मनश्चोपभोगार्थं महान्तं नरकं व्रजेत् ॥

वराहपुराणे—

द्विजस्य विक्रये धान्ये लोपश्चेन्नित्यकर्म्मणाम् ।
महान्तं दोषमासाद्य मृत्वा नरकमश्नुते ॥
[5]सर्व्वासां धान्यजातीनां वृथा विक्रीय योद्विजः ।
आत्मपुत्रस्वदाराणां भोगार्थं पापमाचरेत् ॥

---

(१) आहेति क्रीतपुस्तके नास्ति ।
(२) कुलित्थास्तु इति क्रीतपुस्तकपाठः ।
(३) पित्र्योराह्निक इति क्रीतश्वेक्षितपुस्तकपाठः ।
(४) तदर्थमिति क्रीतश्वेक्षितपुस्तकयोर्नास्ति ।
(५) सर्वे प्राधान्यजातानां इति श्वेक्षितपुस्तकपाठः ।

प्रायश्चित्तमिदं कृत्वा शुद्धिमाप्नोति पूर्व्वज ।
[1]अर्द्धं पराकोविप्राणामनर्द्धं चान्द्र[2]मीरितम् ॥
एकस्मिन् वत्सरे तात प्रायश्चित्तमितीरितम् ।
द्वितीये द्विगुणं प्रोक्तं तृतीये शूद्रएव सः ॥
तत्पत्नीनां तथा प्रोक्तं क्षत्रियो[3]विप्रवच्चरेत् ।
अन्यथा दोषमाप्नोति यथा शूद्रस्तथैव सः इति ॥

इति हेमाद्रौ [4]नानाधान्यविक्रयप्रायश्चित्तम् ।

---

(१) अर्द्धं पराक इति क्रीतपुस्तकपाठः ।
(२) अर्द्धं चान्द्रमितीरितं इति क्रीतपुस्तकपाठः ।
(३) क्षत्रिये विप्रवद्दद्यात् इति क्रीतकाशीपुस्तकपाठः ।
(४) नाना इति क्रीतपुस्तके नास्ति ।

## अथ गुड़विक्रयप्रायश्चित्तमाह ।

[1]देवीपुराणे—

गुड़ं सम्पाद्य यत्नेन देवकार्य्येषु शुद्धिदम् ।
पलमात्रं द्विजोदत्त्वा देवलोकमुपाविशेत् ॥

लिङ्गपुराणे—

पूर्व्वजोबहुभिर्यत्नैः केदारारामसम्भवैः[2] ।
गुड़ं सम्पाद्य बहुधा न कुर्य्यात्तस्य विक्रयम् ॥
महान्तं नरकं भुक्त्वा यमलोके सुदारुणे ।
पुन [3]र्भुवमुपागम्य [4]खरजोजायते ध्रुवम् ॥

पद्मपुराणे—

स्वारामसम्भवं विप्रोगुड़ं सम्पाद्य भूरिशः ।
पश्चाल्लोभपरीतात्मा विक्रयित्वा यमं व्रजेत् ॥
[5]भूलोकमुपसंगम्य जायते मधुमक्षिका ।
तस्य निष्कृतिरुत्पन्ना पलानां शतविक्रये ॥
प्राजापत्यं शतादूर्द्ध्वं सहस्रे चान्द्रमुच्यते ।
ततोऽधिकं विक्रयित्वा महापापमवाप्यते ॥

---

(१) देवीपुराणे इति पाठ क्रीतपुस्तके नास्ति ।
(२) सम्भवम् इति क्रीतपुस्तकपाठः ।
(३) भवमुपागम्य इति लेखितपुस्तकपाठः ।
(४) खरश्चा इति क्रीतपुस्तकपाठः ।
(५) भूर्लोकं इति क्रीतपुस्तकपाठः ।

चान्द्रायणद्वयं कृत्वा सहस्रादधिके[1] द्विजः ।
शुद्धिमाप्नोति राजेन्द्र नान्यथा गतिरस्ति हि ॥

विप्राङ्गनानां विप्रस्यार्द्धम् । क्षत्रियाणां विप्रवत्प्रायश्चित्तम् । वैश्यानां स्वजातिविहितमेव ।

इति हेमाद्रौ गुडविक्रयप्रायश्चित्तम् ॥

---

(१) अधिकोद्विजः इति श्रीनवोचितपुस्तकपाठः ।

अथ लवणविक्रयप्रायश्चित्तमाह ।

वराहपुराणे—

कुडवं माष्य[1]मात्रं वा प्रस्थं वाऽथ[2] ततोऽधिकम् ।
द्विजः क्रीत्वा [3]विक्रयेत्तद् यदि पण्यविक्रये ॥
सएव नामधारः स्यात् चाण्डालोविप्र[4]उच्यते ।
यमलोकमुपागम्य खेदरोगी भवेद्भुवि ॥

स्कन्दपुराणे—

लवणं बहुधा क्रीत्वा पूर्व्वजोऽर्थलोभतः ।
पश्चात्तद्विक्रयं कृत्वा महान्तं नरकं व्रजेत् ॥
पुनर्भवमुपागम्य खेदरोगी महान्[5] भवेत् ।
असम्भाष्योऽप्यपाङ्क्तेयोवैडालोविप्रउच्यते ॥

दशविधब्राह्मणाः—

वैडालस्तन्तुवायश्च [ कारुकोमदकस्तथा ] ।
तक्षकः स्वर्णकोपश्च कार्पासः स्वेच्छया वणिक् ॥
शूद्रापतिः कर्म्महीनोदशधा विप्रसंज्ञिताः ।
तन्तु[6]मात्रपरास्त्वेते न [7]संभाष्याः कथञ्चन ॥

---

(१) माषमात्रं वा इति क्रीतपुस्तकपाठः ।
(२) वापि इति क्रीतपुस्तकपाठः ।
(३) विक्रयेत इति क्रीतपुस्तकपाठः ।
(४) विप्रउच्यते इति क्रीतपुस्तकपाठः ।
(५) महान् अद्भुत् इति वेष्टितपुस्तकपाठः ।
[ ] अयं पाठः क्रीतवेष्टितपुस्तकयोर्नोपलभ्यः ।
(६) तन्तुमात्रपरा इति वेष्टितपुस्तकपाठः ।
(७) संभाष्या इति वेष्टितपुस्तकपाठः ।

चतुर्विंशतिमते—

मुख्यजोलवणं क्रीत्वा वणिग्भिः सह लाभतः।
पश्चात्तद्विक्रयित्वा[1]तु स याति यममन्दिरम्॥
स्थित्वा बहुदिनं तत्र स्वेदाज्जोजायते भुवि।
स तु वैडालविप्रः स्यादसम्भाष्यः कदाचन॥
तस्य देहविशुद्ध्यर्थं प्राजापत्यं मनूदितम्।
लवणं विक्रयेत्पक्षं तप्तकृच्छ्रद्वयं स्मृतम्।
मासं तद्विक्रयं कृत्वा तप्तकृच्छ्रचतुष्टयम्॥
[2]ऋतुमासत्रयस्तात तस्य चान्द्रमुदाहृतम्।
ऋतुद्वये द्वयं प्रोक्तं वत्सरे पतितोभवेत्॥
पश्चात्तापसमायुक्तः [3]पतितस्तु यदस्ति चेत्।
तस्योपनयनं भूयोनान्यथा शुद्धिरीरिता॥
तत्पत्नीनां तदर्द्धं स्यात् क्षत्रियाणां [4]द्विजोक्तवत्।
विट्शूद्रयोः स्वभावः स्यादसौ लवणविक्रयः॥

इति हेमाद्रौ लवणविक्रयप्रायश्चित्तम्।

---

(१) विक्रयित्वाऽथ इति कौतपुस्तकपाठः।
(२) ऋतुमासत्रये तात इति लेखितपुस्तकपाठः।
(३) पतितस्य इति लेखितपुस्तकपाठः।
(४) द्विजे भवेत् इति कौतकाशीपुस्तकपाठः।

## अथ कार्पासविक्रयप्रायश्चित्तमाह।

देवीपुराणे—

कृषेः प्राप्तस्तु क्रीत्वा वा [1]वणिक्तुल्यतया द्विजः।
तद्विक्रयित्वा दुष्टात्मा नरकं प्रतिपद्यते॥
ततोभुवमुपागम्य हस्तयोः स्वेदवान् भवेत्।

मार्कण्डेयपुराणे—

कार्पासं कृषिसम्भूतं क्रीत्वा वाणिज्यतोद्विजः।
विक्रयित्वा ततः पश्चान्नरकं प्रतिपद्यते॥
[ तत्राऽनुभूय सुचिरं भुवं गत्वा स पापवान्।
जायते हस्तरोगी स्यान् नसम्भाष्यः कदाचन॥

लिङ्गपुराणे —]

[2]यः क्रीत्वा बहुकार्पासं यद्वा स्वकृषिसम्भवम्।
द्विजो [3]लुब्धतया पश्चात् विक्रयेद्यदि पापधीः॥

---

(१) वणिक् स्वल्पतया इति क्रीतपुस्तकपाठः।
[ ] अयं पाठः क्रीतपुस्तके नोपलभ्यः।
(२) क्रयित्वा बहु कार्पासं इति पुस्तकपाठः।
(३) लोभतया इति क्रीतक्षेमितपुस्तकपाठः।

स गत्वा नरकं घोरं जायते स्वेदपायिकः[1] ।
पूर्व्ववन्निष्कृतिर्दृष्टा मुनिभिस्तत्त्वदर्शिभिः ॥

लवणविक्रये विप्रस्य यत्प्रायश्चित्तमुक्तं [2]तदेवात्र योजनीयम् । स्त्रीणां क्षत्रियाणा[3]मेवम् ।

इति हेमाद्रिविरचिते "[4]धर्म्मग्रासे प्रायश्चित्ताध्याये" कार्पासविक्रयप्रायश्चित्तम् ।

---

(१) स्वेदपायिना इति क्रीतपुस्तकपाठः ।
(२) तदेवात्राऽपि इति क्रीतपुस्तकपाठः ।
(३) क्षत्रियाणामपि इति पाठः काशीपुस्तके ।
(४) क्रीतलेखितपुस्तकयोर्नास्ति ।

## अथ नीलीविक्रयप्रायश्चित्तमाह।

लिङ्गपुराणे—

नीलीं यः पूर्व्वजः क्रीत्वा वणिग्भिः पापकर्म्मधीः।
पलं वा विंशतिपलं शतं वाऽथ ततः परम्॥
विक्रयेद्यदि पापात्मा स सद्यः पतितोभवेत्।
स गत्वा नरकं घोरं तन्तुवायद्विजोभवेत्॥

महानारदीये—

मुखजो विप्रतां[1] त्यक्त्वा वणिग्भिः सह पापकृत्।
क्रीत्वा नीलीं धनैर्वापि विक्रयेद्यदि लोभतः॥
न तस्य निष्कृति[2]र्वास्ति यमलोकात् कदाचन
भुवं ततः पुनर्गत्वा द्विजोऽभूत्तन्तुवायकः॥

स्कन्दपुराणे—

नीलीं सम्प्राप्य विप्रोऽयं धनैर्विनिमयेन वा।
क्रीत्वा तद्विक्रयेत् पश्चान्महान्तं नरकं व्रजेत्॥
अनुभूय महाघोरं तन्तुवायद्विजस्तवान्।
पश्चात्तापसमायुक्तः प्रायश्चित्तं विधाविदम्॥

---

(१) विप्रत्वं इति कोतपुस्तकपाठः।
(२) नास्ति इति केचित्पुस्तकपाठः।

तप्तचान्द्रायणं कृत्वा पुनः संस्कारपूर्व्वकम् ।
शुद्धिमाप्नोति महतीं नाऽन्यथा शिखिवाहन ॥

विप्रस्त्रीणां नीलीविक्रये तदर्द्धम् । क्षत्रियवैश्ययोर्विप्रवद्वैश्य-स्यापि गर्हितत्वात् ।

इति हेमाद्रौ नीलीविक्रयप्रायश्चित्तम् ।



### अथ पलाण्डु-लशुन-विक्रयप्रायश्चित्तमाह ।

भविष्योत्तरे—

पलाण्डुं लशुनं [1]गृञ्जं कलञ्जं पूर्व्वजोत्तमः[2] ।
क्रीत्वा स्वारामजं वापि [3]विक्रयेद्यदि मोहतः ॥

धनलाभोबहु भवेदिति [4]मोहः अज्ञानमिति यावत् ।

तदेवाह गौतमः—

[5]कलञ्जं गृञ्जनं विप्रः पलाण्डुं लशुनं तथा ।
सम्पाद्य बहुधा मूल्यैर्वणिग्भावमुपाश्रितः ॥
विक्रयेद्यदि तानीह अविचार्य्य महद्भयम् ।
कृतान्तवशगोभूत्वा चिरकालं स पापधीः ॥
भवेत् कार्पासकोविप्रो [6]दशजन्म च पञ्च च ।

[7]मार्कण्डेयः—

विप्रः करञ्जं लशुनं पलाण्डुं गृञ्जनं तथा ।
सम्पद्यमानोबहुधा विक्रयेत्तानि सर्व्वदा ॥
नरकं याति दुष्टात्मा [8]कार्पासाख्योभवेद्भुवि ।
न तस्य निष्कृति र्नास्ति चान्द्रायणचतुष्टयात् ॥

---

(१) विक्रयेत्वंयः क्रीतकाशीपुस्तके नास्ति ।
(२) गृञ्जनं कलिङ्गं इति क्रीतपुस्तकपाठः ।
(३) पूर्व्वजोत्तमात् इति वेङ्कितपुस्तकपाठ ।
(४) मोहतः इति वेङ्कितपुस्तकपाठः ।
(५) कलिङ्गं इति क्रीतपुस्तकपाठः ।
(६) दशजन्मसुपञ्च च इति क्रीतवेङ्कितपुस्तकपाठः ।
(७) मार्कण्डेयपुराणे इति क्रीतपुस्तकपाठः ।
(८) कार्पासारोभवेद् इति वेङ्कितपुस्तकपाठः ।

स्वौषधार्थं[1] पिबेत् पञ्चगव्यं चैकोपवासतः ॥
एतस्मात् शुद्धिमाप्नोति नान्यथा गतिरस्तिहि ।
गृञ्जनं वीर्य्यजनकं पर्णचूर्णं विशेषतः ॥
[ पुनस्तं विक्रयेल्लोभात् स पापो रौरवं व्रजेत् । ]
"कालञ्जं" सुरालेपनं[2] ज्ञात्वा उन्मादजनकोवटविशेषः[3] । तद्विक्रये विप्रस्याञ्चायणचतुष्टयं कृत्वा शुध्यति । पौषधार्थसम्भवे एकाह मुपोष्य पञ्चगव्यं पीत्वा शुद्धिमाप्नोति ॥

इति हेमाद्रौ पलाण्डु-लशुन-गृञ्जन-कारञ्जविक्रय प्रायश्चित्तम् ।

---

(१) औषधार्थं इति केचित् कोतपुस्तकपाठः ।
[ ] अयं पाठः केचितपुस्तके नास्ति ।
(२) केषं इति कोतपुस्तकपाठः ।
(३) उन्मादजनका वटविशेषा इति कोतपुस्तकपाठः ।

## अथ हिङ्ग्वादिविक्रयप्रायश्चित्तमाह।

कूर्म्मपुराणे—

रामठं स्वर्णबन्धञ्च एलां[1] वा जीरकद्वयम्।
अजामोदं[2] पिप्पलीञ्च जायिपत्रं[3] तदुद्भवम्॥
अन्यानि सूक्ष्मद्रव्याणि सर्षपादीनि यानि च।
द्विजः क्रीत्वाऽथ सम्पाद्य विक्रयेद्यदि लोभतः॥
यदि मानमुपागम्य मासे तप्तं समाचरेत्।
द्विमासे तु पराकं स्यात् कार्य्यं पश्चादृतुत्रये[4]॥
चान्द्रन्तु वत्सरे प्रोक्तमभ्यासे तद्द्वयं चरेत्॥

एतद्धिङ्गुस्वर्णबन्धव्यतिरिक्तविषयम्।

तयोर्द्वयोर्विशेषमाह।

मत्स्यपुराणे—

रामठं स्वर्णबन्धञ्च साभ्राणीञ्च द्विजोत्तमः।
सम्पाद्य मूलतोद्विभागोविक्रयेद्यदि लोभतः।
पलद्वये पराकं स्यात्प्राजापत्यं चतुष्टये॥
दशमे तप्तकृच्छ्रं स्यात् ततश्चान्द्रायणं स्मृतम्।

---

(१) एलां अम्बीरकद्वयं इति क्रीतपुस्तकपाठः।
(२) अजमोदं इति क्रीतपुस्तकपाठः।
(३) जावपत्रीं तदुद्भवां इति क्रीतकाशीपुस्तकपाठः।
(४) ऋतुत्रयं इति क्रीतपुस्तकपाठः।

माससंख्या पूर्व्ववत् । वत्सरादूर्द्ध्वमभ्यासे चान्द्रायणचतुष्टयम् । पुनः संस्कारश्च । स्वर्णबन्धनं नाम स्वर्णादि [1]पाके यत्स्पर्शनमात्रेण सर्व्वं जलप्रायं भवति तत् स्वर्णबन्धनम् ॥

इति हेमाद्रौ शिल्पादिविक्रयप्रायश्चित्तम् ।

---

(१) स्वर्णादि पावकस्पर्शनमात्रेण इति कौतवेक्षितपुस्तकपाठः ।

## अथ रसविक्रयप्रायश्चित्तमाह ।

स्कन्दपुराणे—

रसं क्रीत्वा द्विजो लोभाद्देशान्तरमुपागतः ।
पुनस्तं विक्रयेल्लोभात्स पापी रौरवं व्रजेत् ॥

लिङ्गपुराणे—

शम्भोर्वीर्य्यं यदा विप्रः क्रीत्वा लोभमुपाश्रितः ।
तं पश्चाद्विक्रयित्वा तु स वै पातकिनां वरः ।
तं कदा नालपेद्विद्वान् यदि निर्मानुषी[1] मही ॥

न रसोद्भवेषु [2]औषधेषु क्रीत्वा विक्रीय वा तत्पापमवाप्नुयादिति ।

पराशरसंहितायां—

पूर्णचन्द्रोदयश्चैव वसन्तकुसुमाकरः[3] ।
आनन्दभैरवश्चैव[4] मृगाङ्कं राजपूर्व्वकम् ॥
भूपतिश्चाग्निपुत्रश्च स्वर्णभस्म तथैव च ।
ज्वराङ्कुशं विद्याहश्च तथा[5] ग्रहणीकवाटकम् ॥
अन्यान्यौषधजालानि शम्भुबीजोद्भवानि वै ।
गन्धकं पार्व्वतीबीजं सिन्दूरं हरितालकम् ॥

---

(१) निर्मानुषं इति कीतलेखितपुस्तकधो पाठ ।
(२) औषधीषु इति कीतलेखितपुस्तकपाठः ।
(३) वसन्तकुसुमाकरं इति कीतपुस्तकपाठः ।
(४) अपि इति कीतपुस्तकपाठः ।
(५) तथा पत्नीकवाटकं इति कीतपुस्तकपाठः ।

अभ्रकं तालकञ्चैव कुसुमं वाऽश्मसम्भवम् ।
लाक्षातैलं मस्तिगन्धं कुष्माण्डाख्यं घृतं तथा ॥
विप्रस्त्वेतानि सर्व्वाणि क्रीत्वा तानि स विक्रयेत् ।
यदि क्रीत्वा विक्रयेद्वा स सद्यः पतितोभवेत् ॥
असम्भाष्योह्यपांक्तेयः सर्व्वकर्म्मवहिष्कृतः ।
पश्चात्तापसमायुक्तोविप्रोयदि कृतात्मभीः ॥
मण्डले नियमं कृत्वा प्रातः स्नात्वा यथाविधि ।
सूर्य्योदयादस्तमयादुपविश्य सुखासने ॥
न्यासं ध्यानं पुरःकृत्वा जपेन्मन्त्रं त्रियम्बकम् ।
मध्याह्ने पूर्व्ववत् स्नात्वा माध्याह्निकमथाऽऽचरेत् ॥
पुनरागत्य तत्स्थानं जपकर्म्म समाचरेत् ।
सायंकाले फलाहारः स्वपद्भूमौ निरिन्द्रियः[1] ॥
ततः प्रातः समुत्थाय पूर्व्ववज्जपमाचरेत् ।
लक्षत्रयं यथा भूयान्मण्डले राजवल्लभ ॥
ततः शुद्धिमवाप्नोति रसविक्रयजादिह ।
नान्यथा शुद्धिरुदिता पूर्व्वजैर्बहुवित्तमैः ॥

इति हेमाद्रिविरचिते धर्म्मशास्त्रे प्रायश्चित्ताध्याये
रसविक्रयप्रायश्चित्तम् ।

---

(१) निरम्बरं इति क्रीतपुस्तकपाठः

## अथ हरिद्रादिमूलविक्रयप्रायश्चित्तमाह ।

लिङ्गपुराणे—

हरिद्रां [1]शृङ्गिवेरञ्च सूरणं मूलकं तथा ।
मुस्तादीनि द्विजोहत्वा क्रीत्वा वा मूल्यतः स्वयम् ॥
विक्रयेद्यदि लोभात्मा स शूद्रसमतां व्रजेत् ।

स्कन्दपुराणे—

मूलकं सूरणं शुण्ठिं हरिद्रादीनि यानि च ।
[2]वाणिज्यभावमाश्रित्य विक्रयेद्यदि पूर्व्वजः ॥
ऋतुत्रये पराकं स्यादृवर्षे चान्द्रमुदीरितम् ॥

इति हेमाद्रौ [3]प्रायश्चित्ताध्याये हरिद्राविक्रयप्रायश्चित्तम् ।

---

(१) शृङ्गवेरं इति क्रीतपुस्तकपाठः ।
(२) वणिक्स्वभावं इति काशीपुस्तकपाठः ।
(३) प्रायश्चित्ताध्याय इत्येव क्रीतपुस्तकपाठः ।

198 अथ क्रमुकादिफलविक्रयप्रायश्चित्तमाह ।

मार्कण्डेयपुराणे—

क्रमुकं कदली मातुलङ्ग[1] दाड़िममेव च ।
नारिकेलञ्च खर्जूरं कपित्थं तिन्तिणीफलम् ॥
जम्बूनि चूतं[2] जम्बीरं तालं हिन्तालजं तथा ।
पनसं वदरी-प्लक्ष [3]फलमुर्व्वारुकं तथा ॥
एतान्यन्यानि यः[4] क्रीत्वा विक्रयेन्मुखजोयदि ।
तस्य देहविशुद्धार्थं पराकं कृच्छ्रमीरितम् ॥
गणयित्वा फलानीह पूर्व्वोक्तानि नराधिप ।
शतादूर्द्धं सहस्रान्तं विक्रयित्वेदमाचरेत् ॥
ततस्त्रीणान्तु तदर्द्धं स्याद् एवं सर्व्वत्र निश्चितम् ।

इति हेमाद्रौ क्रमुकादिफलविक्रयप्रायश्चित्तम् ।

---

(१) मातुलिङ्ग इति क्रीतपुस्तकपाठः ।
(२) निचूलं इति क्रीतपुस्तकपाठः ।
(३) प्लक्षं इति काशीक्रीतपुस्तकपाठ ।
(४) एतानि तानि इति क्रीतपुस्तकपाठः ।

देवीपुराणे—

व्याघ्रचर्म्म रुरोश्चर्म्म त्वैणेयं[1] वल्कलादिकम् ।
द्विजः क्रीत्वा स्वयं पश्चाद्विक्रयेद्धनलोभतः ॥
स चाण्डालसमोज्ञेयोमृत्वा यमपुरं व्रजेत् ।
तत्र भुक्त्वा महा[2]दुःखं चर्म्मकारोभवेद्भुवि ॥

महाराजविजये—

अजिनं रौरवं व्याघ्रचर्म्म वल्कल[3] विक्रये ।
द्विजोयमपुरं गत्वा स भूमौ[4] चर्म्मकारकः ॥
तस्यैव निष्कृतिरियं प्राजापत्यं विशोधनम् ।
एकवारे पञ्चगव्यं द्विवारे यावकं भवेत् ॥
त्रिवारे बहुवारे वा प्राजापत्यं समाचरेत् ।
अभ्यासे द्विगुणं प्रोक्तं वर्षादूर्द्धं पतत्यसौ ॥ इति ।

इति हेमाद्रौ चर्म्मविक्रयप्रायश्चित्तम् ।

---

(१) पण्येयं इति केचितपुस्तकपाठः, पण्यं पटं कम्बलादिकं इति क्रीत पुस्तकपाठः ।
(२) महद्दुःखं इति क्रीतपुस्तके पाठः ।
(३) चर्म्मवत्फलविक्रये इति क्रीतपुस्तकपाठः ।
(४) भवेत् इति क्रीतपुस्तकपाठः ।

## अथ दासीविक्रयप्रायश्चित्तमाह ।

देवलधर्म्मे —

दासीं क्रीत्वा द्विजोयस्तु महापामादि[1] सम्भवे ।
पुनस्तां विक्रयेन्मोहाद्[2] रौरवं नरकं व्रजेत् ॥
स्थाप्य दासीं विप्रोऽयं रूपलावण्यविभ्रमां ।
युवतीं विक्रयेद्यस्तु स [3]चण्डालसमोभवेत् ॥
द्विज: सम्पाद्य योदासीं गृहधर्म्मसुखाप्तये ।
पश्चात्तां विक्रयेद्यदि तात स चण्डालो[4]भवेद्भुवि ॥
तस्य निष्कृतिरुत्पन्ना स्कान्दे षण्मुखलापिते ।
बालिकाविक्रये चान्द्रं पौगण्डे तद्द्वयं चरेत् ॥
[5]युवतीविक्रये तात षडब्दं कृच्छ्रमाचरेत् ।
पञ्चगव्यं [6]पिवेत् पश्चात् शुद्धिमाप्नोति पूर्व्वज: ॥

तत् क्रीणां तदर्द्धं क्षत्रियवैश्ययोर्विप्रवत् प्रायश्चित्तम् ।

इति हेमाद्रौ दासीविक्रय प्रायश्चित्तम् ।

---

(१) महापापामादिसम्भवं इति केषाञ्चितपुस्तके पाठः ।
(२) विक्रयेद् यस्तु इति केषाञ्चितपुस्तकपाठः ।
(३) चाण्डाल इति क्रीतपुस्तकपाठः ।
(४) चाण्डालसम इति क्रीतपुस्तकपाठः ।
(५) युवतीं विक्रयेत् तात इति क्रीतपुस्तकपाठः ।
(६) पिबेद्यस्तु इति क्रीतपुस्तकपाठः ।

मार्कण्डेयपुराणे—

दन्तं [2]करिसमुद्भूतमश्वजं कीटजं तथा ।
नखं व्याघ्रसमुद्भूतं सम्प्राप्य द्विजनायकः ॥
पश्चात्तान्विक्रयेन्मोहाद्व्यवहारतया नृप ।
यमलोकमुपागम्य मृत्वा[3] तत्र चिरं वसेत् ॥
भूयाद्भूमौ स पापीयान् दन्तकारतनुर्महान् ।

लिङ्गपुराणे

दन्तमश्वसमुद्भूतं करिदन्तञ्च [4]पौषिजम् ।
नखं व्याघ्रसमुद्भूतं क्रीत्वा पश्चात् स्वयं पुनः ॥
विक्रयित्वा द्विजोयस्तु दन्तकारोभवेत्पुनः ।
प्रायश्चित्तमिदं तस्य साधकं मुनिभोदितम् ॥
हस्तिदन्ते च तप्तं स्यादश्वदन्ते तु यावकम् ।
प्राजापत्यं कीटदन्ते त्रिरात्रं नखविक्रये ॥

तत्तत्क्रीणां तदर्द्धं मानं ।

इति हेमाद्रौ [5]दन्तनखविक्रयप्रायश्चित्तम् ।

---

(१) आहेति क्रीतकाशीपुस्तकयोर्नास्ति ।
(२) करिवक्तदुद्भूतं इति क्रीतपुस्तकपाठः ।
(३) स्थित्वा इति बेंकितपुस्तकपाठः ।
(४) पौषिजं इति क्रीतकाशीपुस्तकपाठः ।
(५) पशुनख इति क्रीतबेंकितपुस्तकपाठः ।

## अथोपवीतविक्रयप्रायश्चित्तमाह[1] ।

गारुड़पुराणे—

उपवीतान् बहून् क्रीत्वा विप्रो वाणिज्यकर्म्मणि ।
पुनस्तान् विक्रयेल्लोभाद्भल्लूको जायते भुवि ॥

लिङ्गपुराणे—

वणिग्भावमुपाश्रित्य पूर्व्वंजो धनलोभवान् ।
क्रीत्वोपवीतान् सुगुणान् पश्चात्तान् विक्रयेद्यदि ॥
स पापमनुभूयाऽऽशु भल्लूको भुवि जायते ।
तस्य दोषविनाशाय माषे तत्समुदीरितम् ॥
मासत्रयेऽपि चान्द्रं स्यान्महाचान्द्रन्तु वत्सरे ।
वर्षादूर्द्ध्वं पुनः जत्वा शुद्धस्तुष्टो भवेदिह ॥

[2]तत्तत्स्तोणां पूर्व्ववत् ।

इति हेमाद्रौ उपवीतविक्रयप्रायश्चित्तम् ।

---

(१) आहेति श्रीतपुस्तके नास्ति ।
(२) अयं पाठः श्रीतकाशीपुस्तकयोर्नास्ति ।

अथाऽन्नविक्रयप्रायश्चित्तमाह ।

विष्णुधर्म्मोत्तरे—

देवालये महारण्ये स्वगृहे राजवेश्मनि ।
अन्नं पक्का द्विजोयस्तु विक्रयेद्यदि मूढ़धीः ॥
शाक कोशादिकांश्चैव उपदंशमथापि वा ॥
भक्ष्यानानाविधान् राजन् द्रव्यलोभपरायणः ।
महान्तं नरकं गत्वा तेन हीनोभवेद्भुवि ॥

लिङ्गपुराणे—

भक्ष्यान् नानाविधान् काम्यान् शाक कोशादिकांस्तथा ।
उपदंशं तथाप्यन्नं पक्का मार्गे शिवालये ॥
पूर्व्वजः स्वगृहे स्वेभ्योविक्रयेद्द्रव्यलोभतः ।
यमलोकमुपागम्य पुनर्भूयाद्दरिद्रवान् ॥
उपदंशे तथा प्रोक्तं मासि मासि द्वयञ्च वा ।
कोशेषु पञ्चरात्रं स्यात् शाके यावकमुच्यते ॥
अन्ने मासद्वयं राजन् षड़ब्दं कृच्छ्रमाचरेत् ।
वक्ष्माशे तद्द्वयं प्रोक्तं वर्षान्ते पतितोभवेत् ॥

वर्षान्ते पतितप्रायश्चित्तं कृत्वा शुद्धिमाप्नोति तत्स्त्रीणां पूर्व्ववद् वेदितव्यम् ।

इति हेमाद्रिविरचिते धर्म्मशास्त्रे प्रायश्चित्ताध्याये अन्नविक्रयप्रायश्चित्तम् ।

---

(१) शाककोशादिकांश्चैव इति क्रीतपुस्तकपाठः ।

सूतप्रोक्ते —

पयोदधि घृतं वस्तु[1] कौलालं गोमयं तथा।
विक्रयेत् पूर्व्वजो यस्तु नारो वा विप्रनन्दिनी॥
सद्यः पतति विप्रोऽसौ शूद्रतुल्यो भवेदिह।

महानारदीये—

कौलालं गोमयं राजन् पयोदधि घृतञ्च यत्।
नवनीतं तथा यस्तु तैलं क्रीत्वा [2]तथा मधु॥
विक्रीयेद्यदि मोहाद्वा पूर्व्वजो धनसंग्रही।
एरण्डतैलमथवा सद्यः पततिपातकी॥

स्कान्दपुराणे—

मधु दुग्धं घृतं यस्तु कौलालं गोमयं दधि।
तैलमेरण्डकञ्चैव क्रीत्वा [3]वा गन्धसम्भवम्॥
विक्रीय मासं वैड़ालः द्विमासं वा तथोदरः।
मासत्रये सूचकः स्यात् षण्मासे शूद्रतां व्रजेत्॥
मासे तप्तं पराकञ्च द्वितीये चान्द्रमुच्यते।
तृतीये शृणु राजेन्द्र षण्मासे तु षडब्दकम्॥

---

(१) सूतप्राप्ते इति क्रीतपुस्तकपाठः।

(२) वस्तु इति लिखितपुस्तकपाठः।

(३) यथा इति इति क्रीतपुस्तकपाठः।

(४) गन्धसम्भवं इति लिखितपुस्तकपाठः गन्धसम्भवाः इति क्रीतपुस्तकपाठः।

ततः परं पतत्यत्र द्विजोयोगव्यविक्रयी[1]।

संवत्सरादूर्ध्वं गव्य-तैल-मधुविक्रये पतितप्रायश्चित्तवत् कृत्वा शुद्धो-भवतीति। तत्स्त्रीणामर्द्धम्।

इति हेमाद्रौ गोरसविक्रयप्रायश्चित्तम्।

---

(१) गव्यविक्रये इति केचित्पुस्तकपाठः।

## अथ मधुमांसविक्रयप्रायश्चित्तमाह[1]।

सौपर्णे—

मधु मांसं विहङ्गानां महाद्रव्यसमागमे।
क्रीत्वा स्वयं द्विजोमोहात्पश्चात्तद्विक्रयेद्यदि॥
राज्ञा[2] दण्ड्यः स पापीयान् [3]स तु सम्यग्विचारयेत्।
मृत्वा नरकमासाद्य भुवि [4]चाण्डालतां व्रजेत्।

लिङ्गपुराणे—

मांसं मधु विहङ्गानां हिंसाद्वृत्तिमुपाश्रितः।
महाद्रव्यं भवेदस्य विक्रये भाग्यवानहम्॥
इति मत्वा द्विजोयस्तु क्रीत्वा तद्विक्रयेत् पुनः।
महापापमवाप्नोति राजा तं दण्डयेच्छतम्॥
एकाहं विक्रयेद्यस्तु मधुमांसद्वयं मुदा।
तप्तकृच्छ्रं चरेत्तत्र पञ्चगव्यमतः परम्॥
पञ्चरात्रं द्विजोयस्तु विक्रयेत्तद्द्वयं सकृत्।
चान्द्रं तस्य विशुद्ध्यर्थं पञ्चगव्यञ्च पूर्ववत्॥
मासमेकं द्विजोयस्तु विक्रयेत्[5] पिशितं मुदा।
राज्ञा[6] सहस्रं दण्ड्यः स्यात् षडब्दं कृच्छ्रमाचरेत्॥

---

(१) आहेति इति क्रीतपुस्तके नास्ति।
(२) राजदण्ड्यः इति क्रीतपुस्तकपाठः।
(३) शतं इति लेखितपुस्तकपाठः।
(४) चण्डालता इति लेखितपुस्तकपाठ।
(५) विक्रयेत शतं सुरा इति क्रीतपुस्तकपाठ।
(६) राजा इति क्रीतपुस्तकपाठ।

तस्योपनयनं भूयः सावित्रीदानमेव च ।
द्विजस्त्यजेदिदं कर्म्म लोकद्वय [1]विगर्हितम् ॥

तत् स्त्रीणामेवमुक्तम् । क्षत्रियवैश्ययोरेवमेव[2] ।

इति हेमाद्रौ मधुमांसविक्रयप्रायश्चित्तम् ।

---

(१) विगर्हितः इति क्रीतपुस्तकपाठः ।

(२) एवं कृत्वेव इति क्रीतपुस्तकपाठः ।

## अथ सालग्राम-शिवलिङ्ग-प्रतिमादिविक्रयप्रायश्चित्तमाह[1]।

शिवपुराणे—

प्रतिमां लक्षणोपेतां सालग्रामं शिवं तथा।
चक्रपाणिञ्च राजेन्द्र द्विजः सम्प्राप्य यत्नतः॥
तदर्चनं परित्यज्य भुक्ति-मुक्ति-फलप्रदम्।
विक्रयेदात्मभोगार्थं तस्य पापफलं शृणु॥
आद्वादशाब्दपर्य्यन्तं यमलोकः सुदारुणः।

मार्कण्डेयपुराणे—

शिवलिङ्गञ्च प्रतिमां चक्रपाणिं द्विजोत्तमः।
सम्प्राप्य बहुभिर्यत्नैरकृत्वा तत्र चार्च्चनम्॥
विक्रयेद्यदि पापात्मा रौरवं नरकं व्रजेत्।
आद्वादशाब्दपर्य्यन्तं तिष्ठत्यत्र न संशयः।

देवलः—

सालग्रामं शिवलिङ्गं प्रतिमां चक्रपाणिनम्।
द्विजः सम्प्राप्य सहसा तत्तत्पूजापरायणः॥
पश्चान्नास्तिक्यभावेन लोकसाहाय्यगौरवात्।
विक्रयेद्यदि [2]मौढ्येन स पापी नरकं व्रजेत्।
पश्चाद्भवति लोकेऽस्मिन् नास्तिकोभवति ध्रुवम्॥

---

(१) आहेति क्षीतपुस्तके नास्ति।
(२) मौढ्येन इति क्षीतपुस्तकपाठः।

मार्कण्डेयः—

लक्ष्मीनृसिंहं रामञ्च गोपालं श्रीधरं तथा।
लक्ष्मीनारायणञ्चैव दधिवामनमेव च॥
हिरण्यगर्भ-मत्स्यादिमूर्त्तीस्ताः पापहारिणीः।
[1]सालग्रामशिलारूपास्तत्र चक्राङ्किता द्विजाः॥
शिवलिङ्गं चक्रपाणिं प्रतिमां यदि विक्रयेत्।
रामाऽऽदिविक्रये राजन् चरेच्चान्द्रायणं व्रतम्॥
लक्ष्मीनारायणञ्चैव दधिवामनमेव च।
महाचान्द्रं प्रकुर्व्वीत लक्ष्मी[2]नृसिंहविक्रये॥
पराकं देहशुद्ध्यर्थं चरेद्विप्रोविचारयन्।
शिवे च स्थापिते चैव [3]नरकं विक्रये द्विज॥
मासं दीक्षामुपाक्रम्य प्रातः स्नात्वा यथाविधि।
सूर्य्योदये समारभ्य यावदस्तं गतोरविः॥
तावज्जपं प्रकुर्व्वीत संख्या यावत्समाप्यते।
प्रत्यहं दशसाहस्रं शैवं[4] मन्त्रं षडक्षरम्॥
फलाहारं प्रकुर्व्वीत यदा मन्दायते रविः।
सन्ध्यादिकं समाप्यैव[5] स्थण्डिले केवले स्वपेत्॥

---

(१) सालग्रामशिला भूप तत्र चक्राङ्कितं द्विजाः इति क्रीतपुस्तकपाठः।
(२) नरसिंहविक्रये इति लेखितपुस्तकपाठः।
(३) नरकते इति लेखितपुस्तकपाठः।
(४) चैवमन्त्रं इति क्रीतपुस्तकपाठः।
(५) समाप्यैवं इति क्रीतपुस्तकपाठः।

परेद्युः प्रातरुत्थाय यथापूर्व्वं समाचरेत् ।
मासान्ते [1]शुद्धिमाप्नोति शिवद्रोही न चान्यथा ॥
प्रतिमां चक्रपाणिञ्च विक्रयित्वा चरेदिदम् ।

स्त्रीणामेवमर्द्धं । क्षत्रिय-विट्-पादजानां महापापप्राप्तिर्भवति

इति हेमाद्रौ [2]सालग्रामाऽऽदिविक्रयप्रायश्चित्तम् ।

---

(१) शिवमाप्नोति इति श्रीतपुस्तकपाठः ।
(२) शालग्रामेति श्रीतपुस्तकपाठः ।

## अथ पुष्पविक्रयप्रायश्चित्तमाह[1] ।

कौर्म्मे—

सुगन्धीनि सुपुष्पाणि जाती-कुन्दमुखान्यपि ।
चम्पकाऽशोक-पुन्नागा वकुलं केतकी तथा ॥
स्वारामसम्भवानीह क्रीत्वा वा लाभ[2]लोभितः ।
विक्रयेद्यदि पापात्मा कालसूत्रमवाप्नुयात् ॥
एकवारे [3]पराकःस्यादभ्यासे चान्द्रमुच्यते ।

स्वारामसम्भवपुष्पं विक्रीय एवं प्रायश्चित्तं [4]कुर्य्यात् ।

[5]क्रीत्वा तद्विक्रये द्विगुणम् । तुलसी[6]मरुवकविल्वपत्रादिविक्रये प्रत्यहं पराकः । संवत्सरादूर्द्धं पतितएव ।

इति हेमाद्रौ पुष्पविक्रयप्रायश्चित्तम् ।

---

(१) आहेति क्रीतपुस्तके नास्ति ।
(२) लाभलोभतः इति क्रीतपुस्तकपाठः ।
(३) पराकं स्यादिति क्रीतपुस्तकपाठः ।
(४) ज्ञात्वा इति लेखितपुस्तकपाठः ।
(५) क्रीत्वा तद्विक्रये इत्यंशः क्रीतलेखितपुस्तकयोर्नास्ति ।
(६) तु मरुवक इति लेखितपुस्तकपाठः ।

## अथ रत्नविक्रयप्रायश्चित्तमाह ।

*गौतमः—

मौक्तिकं पुष्परागञ्च पद्मरागं प्रवालजम् ।
गोमेदिकं महारत्नं रत्नं गारुत्मतं तथा ॥
इन्द्रनीलञ्च वज्रञ्च नवधा रत्नमीरितम् ।
[ द्विजः सम्प्राप्य वसुभिर्मुषित्वा वा नराधिप ॥ ]
एतानि बहुधा मूल्यैः सम्प्राप्याऽऽत्मसमुद्भवः[1] ।
विक्रयेदात्मलोभेन रत्नद्रोही निगद्यते ॥

पराशरः—

मौक्तिकं पद्मरागञ्च पुष्परागं प्रवालकम् ।
गोमेदकं महारत्नं वज्रं गारुत्मतं तथा ॥
इन्द्रनीलमिति प्रोक्तं नवधा रत्नमीरितम् ।
द्विजः सम्प्राप्य वसुभिर्मुषित्वा वा नराधिप ॥
एतानि बहुधा मूल्यैः सम्प्राप्याऽऽत्मसमुद्भवः ।
विक्रयेद्यदि पापात्मा स गच्छेद्यमयातनाः ॥
स्तेयं ज्ञात्वा द्विजोयस्तु विक्रयेदेकवारतः ।
तस्य देहविशुद्ध्यर्थं षडब्दं कृच्छ्रमीरितम् ॥
तस्योपनयनं भूयःस्तेयदोषोपशान्तये ।

---

* गौतम इति पाठ कौतपुस्तके नास्ति ।

[ ] अयं पाठः लेखितपुस्तके नास्ति ।

(1) आज्यसमुद्भवं इति लेखितपुस्तकपाठः ।

¹अमूल्यरत्नविक्रये एतद्द्विगुणम्। साधारणरत्नानि क्रीत्वा विक्रये प्रायश्चित्तमाह—

गौतमः—

अमूल्यरत्नजातीनां षडब्दं विक्रये स्मृतम्।
रत्नसाधारणे राजन् तप्तकृच्छ्रं समाचरेत्॥

स्तेयप्रायश्चित्तमुक्तरीत्या कृत्वा पुनरुपनयनाऽनन्तरं षडब्दं कृच्छ्रं कृत्वा शुद्धिमाप्नोति। रत्नसाधारणे तप्तं कृत्वा शुद्धिमाप्नोति।

इति हेमाद्रौ रत्नविक्रयप्रायश्चित्तम्।

---

(१) अमूल्यविरत्नक्रये इति क्षीतपुस्तकपाठः।

## अथ रुद्राक्षविक्रयप्रायश्चित्तमाह ।

गौतमः—

[ अमूल्यरत्नजातीनां षडब्दं विक्रये स्मृतम् ।
रत्नसाधारणे राजन् शतरुद्राक्षमेव वा ॥ ]
[1]दश वा पूर्व्वजोराजन् शतं रुद्राक्षमेव वा ।
सहस्रं दशसाहस्रं सम्पाद्य बहुयत्नतः ॥
ततोलोभातुरः पश्चात् विक्रयेद्यदि धर्म्मतः ।
न तस्य निष्कृतिर्नास्ति त्रिः परिक्रमणाद्भुवः[2] ॥
अथवा [3]कार्म्मुकार्थे तु प्रत्यहं स्नानमाचरेत् ।
मासेनैव विशुद्धिः स्याद् अन्यथा पतितोभवेत् ॥

एतत्सहस्ररुद्राक्षविषयम् । अतऊर्द्धं [4]क्रतुमात्रेण शुध्यतीत्यर्थः । एवं पद्माक्षविक्रयप्रायश्चित्तं विवेचनीयम् । पुत्रजीवविक्रये प्राजापत्यम्[5] ।

इति हेमाद्रौ रुद्राक्षविक्रयप्रायश्चित्तम् ।

---

[ ] अयं श्लोकः छेदितपुस्तके नास्ति ।
(१) दशवेत्यादि श्लोकार्द्धं मौतपुस्तके नास्ति ।
(२) त्रिः परिक्रमणाद्भुवतः इति मौतपुस्तकपाठः ।
(३) कार्मुकार्थेन इति मौतपुस्तकपाठः ।
(४) प्रत्यहं स्नानमाचरेत् इति मौतपुस्तकपाठः ।
(५) प्राजापत्यमात्रं इति मौतपुस्तकपाठः ।

## अथ सुवर्णविक्रयप्रायश्चित्तमाह[1]।

विष्णुधर्म्मोत्तरे[2]—

> अष्टापदं सुवर्णञ्च उत साधारणञ्च वा।
> वणिग्भावं द्विजोभूत्वा विक्रयेत् प्रत्यहं मुदा॥
> न तस्य निष्कृतिर्नास्ति स्तेयिनः पापसङ्कटात्।

अष्टसु लोहेषु शोधितं यत् सुवर्णं तदष्टापदम्। खदिराङ्गारवति यदष्टापदसुवर्णं तन्मध्यमम्। साधारणं रूपकादिकम्। एतेषां विक्रये[3] विप्रःस्तेयी भवति। सुवर्णादिप्रमाणं सुवर्णस्तेयप्रकरणेऽभिहितम्। [4]कात्यायनः—

> द्विजोमार्थं सुवर्णेन वर्त्तयेत् क्रयविक्रयैः।
> सुवर्णघाती विज्ञेयः सर्व्वधर्म्मबहिष्कृतः॥
> ऋतुक्रये [5]प्रवर्त्तेत षड्कालइतीरितः।
> संवत्सरं यथा वर्त्तेत् तत् [6]सुरापेयउच्यते॥

जावालिः—

> [7]द्विजस्याऽष्टापदे शुद्धिर्मासं चान्द्रायणव्रतात्।
> साधारणसुवर्णे तु प्राजापत्यं समाचरेत्॥

---

(१) आहेति क्रीतपुस्तके नास्ति।

(२) विष्णुपुराणे इति क्रीतकाशीपुस्तकपाठः।

(३) एतेषां विक्रये स्तेयं इति क्रीतपुस्तकपाठः।

(४) अयं पाठः लेखितपुस्तके नास्ति।

(५) प्रकुर्व्वीत इति क्रीतपुस्तकपाठ।

(६) तत्सुवर्णं वउच्यते इति क्रीतपुस्तकपाठः।

(७) द्विजस्याष्टापदे इति लेखितपुस्तकपाठः।

रूपकव्यवहारे तु तप्तकृच्छ्रमुदीरितम् ।
एतन्मासे द्विजातीनां प्रायश्चित्तं निरूपितम् ॥
संवत्सरं चरेद्यस्तु सुवर्णस्तेयिनः समः ।
संवत्सरादूर्ध्वं स्तेयप्रायश्चित्तं कृत्वा शुद्धिमाप्नोति न संशयम् ।

इति हेमाद्रौ सुवर्णविक्रयप्रायश्चित्तम् ।

---

## अथ रजतविक्रयप्रायश्चित्तमाह[1]।

जावालिः —

दशनिष्कं समारभ्य शतनिष्कान्तमादरात्।
वणिग्भावमुपागम्य विक्रयेद्यदि पूर्व्वजः॥
स्वर्णस्तेयिसमं पापमवाप्नोति नराधिप[2]॥

गालवः —

दशनिष्कं सहस्रं वा द्विजः क्रीत्वा प्रवर्त्तयेत्।
तस्यैव निष्कृतिर्नास्ति स्वर्णस्तेयसमोहि सः॥
मासं वा ऋतुमात्रं वा वर्त्तयेद्रूप्यकर्म्मणा।
प्राजापत्यञ्च तप्तञ्च चान्द्रायणमनुक्रमात्॥

मासं [3]रजतव्यवहारे प्राजापत्यं प्रायश्चित्तम्। मासद्वये तप्तम्। संवरादधश्चान्द्रं संवत्सरादूर्द्ध्वं सुवर्णस्तेयप्रायश्चित्तवत् कुर्य्यात्।

इति हेमाद्रौ रजतविक्रयप्रायश्चित्तम्।

---

(१) आहेति क्रीतपुस्तकेनास्ति।
(२) नराधिपः इति क्रीतपुस्तकपाठः।
(३) रजतकर्म्मणा इति लेखितपुस्तकपाठः।

## अथ ताम्र-कांस्यविक्रयप्रायश्चित्तमाह[1]।

पराशरः—

ताम्रं कांस्यं द्विजः क्रीत्वा त्रपु-पित्तलिकास्तथा।
तानि पश्चाद्विक्रयित्वा मासं वा ऋतुमेव वा॥
न तस्य पुनरावृत्तिर्यमलोकात्कदाचन।

[2]देवस्वामी—

ताम्रं कांस्यं पित्तलकं त्रपुं क्रीत्वा [3]द्विजोत्तमः।
पलादिशतपर्य्यन्तं क्रीत्वा विक्रीय पापधीः॥
न तस्य पुनरावृत्तिस्ताम्रघाती भवेद्भुवि।
प्राजापत्यं शतपले चान्द्रं चैव ततः परम्॥
कांस्ये तथैव विज्ञेयं [4]प्रायश्चित्तं विशारदैः।
त्रपु-पित्तलयोश्चैव प्राजापत्यन्तु वत्सरे॥

इदं संवत्सरात् प्राग्वेदितव्यम्। अतऊर्द्धं रजतस्तेयप्रायश्चित्तं [5]त्रपु-पित्तलविक्रये प्रायश्चित्तं पूर्व्ववत्।

इति हेमाद्रौ ताम्रकांस्यादिविक्रयप्रायश्चित्तम्।

---

(१) आहेति मीतपुस्तके नास्ति।
(२) अयं पाठः मीतपुस्तके नास्ति।
(३) द्विजोऽधम इति मीतपुस्तकपाठः।
(४) प्रायश्चित्तविशारदैः इति केषितकाशीपुस्तकयोः पाठः।
(५) त्रपु-पित्तलपरस्य विक्रये प्रायश्चित्तं इत्येव केषितपुस्तकपाठ।

अथ शस्त्राऽऽदिविक्रयप्रायश्चित्तमाह[२]।

देवल: —

खड्गं कुन्तं धनुर्वापि खेटं क्रीत्वा द्विजश्चरेत्।
विक्रयेद्यदि तान् पश्चात् रौरवं नरकं व्रजेत्॥
न तस्य निष्कृतिर्नास्ति जन्मन: कारणं भवेत्।
पश्चात्तापमवाप्याऽथ यदृच्छेत् शुद्धिमात्मन:॥
प्राजापत्यद्वयञ्चैव षण्मासे वत्सरे स्मृतम्।
तत: संवत्सरादूर्ध्वं कारकस्य समोभवेत्॥

मरीचि:—

धनु: कुन्तञ्च खड्गञ्च खेटं वापि द्विजाधम:।
क्रीत्वा विक्रीय वर्त्तेत यमलोकान्न च्यवते॥
[१]यदीच्छेत् कृच्छ्रमिति दिता मनुना धर्मशासिना।
प्राजापत्यन्तु षण्मासे तद्द्वयं वत्सरे स्मृतम्॥
तत:परं कारक: स्यात् प्रायश्चित्तं निरर्थकम्।

इति श्रीहेमाद्रौ [२]शस्त्रविक्रयप्रायश्चित्तम्।

---

(२) आहेति क्रीतपुस्तके नास्ति।

(१) यदिच्छेदिति क तपुस्तकपाठः।

(२) शस्त्रादिविक्रय इति क्रीतपुस्तकपाठः।

अथ गृहोपकरणविक्रयप्रायश्चित्तमाह[1] ।

[व्यासः—

उलूखलन्तु मुसलं दृषदं चोपलं तथा ।
पीठं कुण्डलिनीञ्चैव तथा सम्मार्ज्जनीमपि ॥
तुषं काष्ठं च कारीषं गोमयं शूर्पमेववा ।
विक्रयित्वा द्विजोमोहात् यमलोकवाप्नुयात् ॥

गौतमः—

तुषं काष्ठञ्च कारीषं शूर्पं गोमयमेववा ।
सम्मार्ज्जनीं तथा पीठं वेणुपात्रं दृढद्विलम् ।]
[2]उलूखलन्तु मुसलं दृषदश्चोपलं तथा ॥
पूर्व्वजोविक्रयेद्राजन् प्राजापत्यं समाचरेत् ।
चर्म्मं चार्म्रं तथा शुद्धिर्नान्यथा शुद्धिरीरिता ॥

इति हेमाद्रौ गृहोपकरणविक्रयप्रायश्चित्तम् ।

---

(१) चाहेति कौतपुस्तके नास्ति ।
[ ] अयं पाठः कौतकाशीपुस्तकयोर्नोपलभ्यः ।
(२) इतः पूर्व्वं व्यास इति कौतकाशीपुस्तकपाठः ।

मार्कण्डेयः—

कस्तूरीं कुङ्कुमं गन्धं कर्पूरं नागकेसरम् ।
गोरोचनं गन्धदारु [1]मसूरं मुस्तकं तथा ॥
सम्पाद्य पूर्व्वजोयस्तु विक्रयित्वा स पापभाक् ।
महान्तं नरकं गत्वा जायते गन्धमूषकः ॥

जातूकर्ण्यः—

गोरोचनं गन्धदारुमुशीरं मुस्तकं तथा ।
कस्तूरीं कुङ्कुमं गन्धं कर्पूरं नागकेसरम् ।
विक्रयेत् पूर्व्वजः पापी स्वधर्म्ममनुवर्त्तयन् ॥
अनुभूय महादुखं जायते गन्धमूषकः ।
तस्य देहविशुद्ध्यर्थं पराकं वत्सरे स्मृतम् ।
तप्तं [2]ततःपरं ज्ञेयमेतत्कृत्वा विशुध्यति ।

इति हेमाद्रौ कस्तूर्य्याऽऽदिविक्रयप्रायश्चित्तम् ।

---

(१) असूरं इति लेखितपुस्तकपाठः ।
(२) तपःपरं इति लेखितपुस्तकपाठः ।

## अथ वस्त्रविक्रयप्रायश्चित्तमाह[1]।

मनुः—

कम्बलं पट्टवस्त्रञ्च कौषेयं चित्रवस्त्रकम्।
सूक्ष्मतन्तुजातं वासः [2]विक्रयेन्नैव पूर्व्वजः॥

हारीतः—

कम्बलं पट्टवस्त्रञ्च सूक्ष्मतन्तुजातं तथा।
चित्रवस्त्रन्तु कौषेयं विक्रयेद्यदि लोभतः।
द्रव्याधिक्ये तु चान्द्रं स्यात् वत्सरे त्द्वयं भवेत्॥
द्रव्यहीने पराकं स्यात् सूक्ष्ममूल्ये तु यावकम्।

सर्व्वत्र संवत्सरात् प्रागेव तत्प्रायश्चित्तं वेदितव्यम्। अतऊर्द्धं [3]द्विरावृत्तिः।

इति हेमाद्रौ वस्त्रविक्रयप्रायश्चित्तम्।

---

(१) आहेति श्रीपुस्तकेनास्ति।

(२) विक्रयेत् पूर्व्वजः क्रमात् इति श्रीतवेश्वितपुस्तकपाठः।

(३) द्विधावृत्तिः इति वेश्वितपुस्तकपाठः।

यमः--

स्नानादिनित्यकर्म्माणि इष्टापूर्त्ताऽऽदिकानि च।
तटाकाऽऽराम-कासारनिर्म्माणादीनि यान्यपि॥
काशीक्षेत्रादिकानीह तेषां [1]नो विक्रयं चरेत्।

गालवः--

[2]काशीक्षेत्र-तटाकाऽऽदि-वननिर्म्माणमेव च।
स्नानादिनित्यकर्म्माणि इष्टापूर्त्तादिकानि च।
उपोषणव्रतादीनि श्रौतस्मार्त्तादिकानि च॥
एतेषां विक्रयं कृत्वा माघस्नानपुरःसरम्।
स विप्रोनरकं याति पुनरावृत्तिदुर्लभम्॥
[3]यदीच्छेदात्मनः शुद्धिं पश्चात्तापसमन्वितः।
चान्द्रायणत्रयं कृत्वा पुनः संस्कारकृत्तदा॥
पञ्चगव्यं ततः कृत्वा शुद्धिमाप्नोति नैष्ठिकीम्।

इति हेमाद्रौ धर्म्मविक्रयप्रायश्चित्तम्।

---

(१) योविक्रयं इति केषाञ्चित्पुस्तकपाठः।
(२) काशीयात्रा इति केषाञ्चित्पुस्तकपाठः।
(३) यदिच्छेत् इति कोलपुस्तकपाठः।

## अथ श्रुति-स्मृतिविक्रयप्रायश्चित्तमाह ।

वसिष्ठः—

श्रुति-[1]स्मृती धर्म्मशास्त्रं पुराणं ज्योतिषं तथा ।
वैद्यं काव्यं नाटकञ्च प्रबन्धं स्वकृतं द्विजः ॥
विक्रयेद्यदि पापात्मा पुस्तकं फलकञ्च वा ।
महान्तं नरकं भुक्त्वा जायते स निरन्तरः ॥

गौतमः—

वैद्यं काव्यं नाटकञ्च प्रबन्धं स्वकृतं द्विजः ।
[श्रुति-स्मृती धर्म्मशास्त्रं पुराणं ज्योतिषं तथा ॥
पुस्तकं फलकं वापि तत्साधनमथापि वा ।]
विक्रयेद्यदि लोभात्तोमहान्तं नरकं व्रजेत् ॥
पुनर्भुवमुपागम्य वेदशास्त्रविहीनवान्
[2]यदीच्छेदात्मनः शुद्धिं पश्चात्तापपरायणः ॥
चान्द्रायणं पराकञ्च कृत्वा शुद्धिमवाप्नुयात् ।

एतत् सकृदाचरणविषयम् । अभ्यासे द्विगुणम् ॥

इति हेमाद्रौ श्रुति-स्मृतिविक्रयप्रायश्चित्तम् ।

---

(१) श्रुति-स्मृति-धर्म्मशास्त्रं इति क्रीतपुस्तकपाठ ।
[ ] अयं पाठः क्रीतपुस्तके 'महान्तं नरकं व्रजेत्' इत्यतः परं दृश्यते ।
(२) यदिच्छेत् इति क्रीतपुस्तकपाठः ।

## अथ नामविक्रयप्रायश्चित्तमाह[1]।

जावालिः—

> आत्मनः स्वसुतस्याऽपि दाराणां भ्रातुरेव हि।
> मातुः पितुर्वा राजेन्द्र नामधेयं महत्तरम्॥
> विक्रयित्वा द्विजोमोहात् परस्मै धनदायिने।

धनशब्देन क्षेत्र-धान्य-पश्वारामाणामुपलक्षणम्। एतेषां मध्ये यद्वा तद्वा गृहीत्वा पूर्व्वोक्तानां सुतादीनां नामधेयं विक्रीय विप्रोजीवेद्यदि, स महापातकितुल्यइत्यर्थः।

तदेवाह।

कूर्म्मपुराणे—

> मातुः पितुः स्वसुर्वापि आत्मनश्च सुतस्य वा।
> दाराणां नामधेयञ्च विक्रयित्वा धनं बहु॥
> आदाय जीवेद्योविप्रः स सद्यः पतितोभवेत्।
> तेन यानीह कर्म्माणि कृतानि मनुजाधिप॥
> तानि सर्व्वाणि कर्म्माणि यदत्रं [2]प्रविशन्ति तम्।
> न तस्य निष्कृतिर्नास्ति कायकृच्छ्रशतादिह।
> पुनः संस्कारपूतात्मा शुद्धिमाप्नोति पूर्व्वजः॥

कायकृच्छ्रशतं कृत्वा पुनः संस्कारानन्तरं शुद्धोभवति।

इति हेमाद्रौ नामविक्रयप्रायश्चित्तम्।

---

(१) आहेति क्वापुस्तके नास्ति।

(२) प्रविशन्त्यहोइति ले[ि]खतपुस्तकपाठः।

## अथ नानावस्तुविक्रयप्रायश्चित्तमाह[1] ।

देवलः—

[2]कटकं भूषणं काचास्तुला[3]ख्याणुश्च वैणवम् ।
भाण्डानि कटकादीनि सिन्दूरं कज्जलं तथा ॥
[4]कञ्चुकं गन्धपत्राणि सुधा भूतिश्च चन्दनम् ।
एवमादीनि द्रव्याणि क्रीत्वा वा स्वकृतानि वै ॥
विक्रयेद्यदि लोभेन स विप्रोनरकं व्रजेत् ।

गालवः—

भूषणं कटकं काचं सिन्दूरं कज्जलं तथा ।
कन्दुकं गन्धपत्राणि [5]सुधां भूतिश्च चन्दनम् ।
भाण्डानि रज्जुदारूणि स्वगृहो[6]त्थानि वै द्विजः ॥
विक्रयित्वा ततोदोषमवाप्य च पुनर्भुवम् ।
पराकं यावकं कृच्छ्रं कृत्वा शुद्धिमाप्नुयात् ॥
संवत्सरादूर्ध्वं द्विगुणमुक्तं स्त्रीणां तदर्द्धम् ।

इति हेमाद्रौ नानावस्तुविक्रयप्रायश्चित्तम् ।

इति मलिनीकरणप्रायश्चित्तम् ।

---

(१) आहेति क्रीतपुस्तके नास्ति ।
(२) कण्ठकं इति क्रीतपुस्तकपाठः ।
(३) तुलाख्यानं इति क्रीतपुस्तकपाठः ।
(४) कन्दुकं इति क्रीतपुस्तकपाठः ।
(५) सुधाभूतिश्च इति क्रीतपुस्तकपाठः ।
(६) स्वगृहाणि पठेद्द्विजः इति क्रीतपुस्तकपाठः ।

## अथ [1]मलीकरणप्रायश्चित्तमाह ।

सुवर्णस्तेय-रजत-ताम्र-कांस्य-त्रपु-पित्तलहरणप्रायश्चित्तं स्वर्णस्तेय-प्रकरणेऽभिहितं तत्तथानघ ।

---

## अथ निक्षेपहरणप्रायश्चित्तमाह ।

गार्ग्यः—

निक्षेपं स्वगृहे क्षिप्तं परकीयं वनान्तरे ।
देवालये वह्निहेम्नि स्थापितं यत्र कुत्र वा ।
ब्राह्मणोद्रव्यलोभेन [2]दर्शनादिभिरौषधैः ॥
हृत्वा नरकमाप्नोति पापिनां पापकर्मवान् ।
तेन विप्रोयदा जीवेद् देवर्षिपितृकार्य्यजात् ।
[3]सर्व्वं निक्षेपदातुश्च भवत्येव न संशयः ॥

निक्षेपप्रमाणमाह—

---

(१) मलिनीकरणे प्रायश्चित्तं इति क्रीतपुस्तकपाठः ।
(२) अञ्जनादिभिरिति क्रीतपुस्तकपाठः ।
(३) तत्सर्व्वं क्षेपदातुश्च इति क्रीतपुस्तकपाठः ।

महाराजविजये—

देवालये वह्निहृहे स्थापितं यत्र कुत्र वा।
रूपकाणान्तु नवकं निष्कद्वयमुदाहृतम्॥
निष्कद्वयं वराहःस्यात् सुवर्णं तच्चतुष्टयम्।
पलं सुवर्णाश्चत्वारोभारः स्यात्तच्चतुष्टयम्॥
तच्चत्वारिंशत्तु भारः स्याद्वणिजां भावमुद्वहन्।
भारद्वयं महासूतिस्तद्द्वयं[1] शिथिलं स्मृतम्॥
तच्चत्वारि महाराज निक्षेपः परिकीर्त्तितः।
निक्षेपं तद्द्विजोहृत्वा तत्क्षणात्पतितोभवेत्॥
तत्पत्नी च तदात्मानोमातरः पितरस्तथा।
सर्व्वे तत्सन्ततिर्य्येया येन निक्षेपितः क्षितौ॥
पुनः प्रत्यर्पयेत्तस्मै न तेन स हि दोषभाक्।
सर्व्वाभावे तु राज्ञे वा दत्त्वा दोषैर्न लिप्यते॥
अग्नौ दग्धं जले मग्नं भूमौ निपतितञ्च यत्।
तत्सर्व्वं परलोकाय श्रुते नष्टं विनश्यति॥
निक्षेपहरणे विप्र! पतितोऽभून्न संशयः।
पुनर्दत्त्वा तथा तस्मै स विप्रश्चान्द्रमाचरेत्॥
अभावे तस्य हरणे चान्द्रायणचतुष्टयम्।
तस्योपनयनं भूयः पञ्चगव्यमनन्तरम्॥
एवं शुद्धोद्विजोभूयादन्यथा पातकी भवेत्।
तदर्द्धं रजतनिक्षेपे ताम्रे कांस्ये तदर्द्धकम्॥

---

(१) तद्द्वयं च शिलं तथा इति क्कीतपुस्तकपाठः।

त्रपु-पित्तलयोः पादं चरेत् कृच्छ्रं यथाक्रमम्।
राजा निक्षेपहारी स्याद् ब्राह्मणाद्दिगुणं चरेत्॥
वैश्यस्तु राजवत्कुर्य्यात् शूद्रोमौसल्यमर्हति॥
स्त्रीणां तदर्द्धप्रमाणेन प्रायश्चित्तं वेदितव्यं।
रजत-ताम्र-कांस्यहरणे निक्षेपहरणप्रायश्चित्तार्द्धम्॥

इति हेमाद्रौ निक्षेपहरणप्रायश्चित्तम्।

---

## अथ धेनुहरणप्रायश्चित्तमाह[1]।

गौतमः—

धेनुं द्विजोवा राजा वा परकीयां यदा हरेत्।
गोहन्ता स तु विज्ञेयोराजा गोसवमाचरेत्।

गालवः —

मुखजोबाहुजोवाऽपि ऊरुजः पादजस्तथा।
नारी वा यदि मोहात् पारक्यीं धेनुमाहरेत्॥

गारुड़पुराणे—

पारक्यीं ब्राह्मणो धेनुं हरेद्वाहुजएव वा।
गोहन्ता स हि वि ज्ञेयः सर्व्वकर्म्मबहिष्कृतः॥

नारदीये—

कपिलां सूयमानां गां होमधेनुमथाऽपि वा।
विप्रोवा राजतनयो वणिग्वा पादभूर्यदा॥
हृत्वा नरकमाप्नोति रोगी स्यात् पूर्व्ववत्तदा।
चान्द्रायणद्वयं प्रोक्तं कपिलाहरणे द्विज!॥
चान्द्रन्तु सूयमानायां होमधेनौ षडब्दकम्॥

---

(1) आहेति क्वीतपुस्तके नास्ति।

प्राजापत्यं कृच्छ्रं षडब्दमित्यर्थः।

रागस्तु द्विगुणं प्रोक्तमूरुजे तत्त्रयं स्मृतम्।

पादजे हस्तविच्छेदो नारीणामर्द्धमुच्यते॥

विप्राङ्गनाया विप्रस्यार्द्धं प्रायश्चित्तम्। इतरेषामङ्गनानां तदर्द्धं प्रायश्चित्तम्।

इति हेमाद्रौ धेनुहरणप्रायश्चित्तम्।

---

## अथ वस्त्रहरणप्रायश्चित्तमाह[1]।

देवलः—

पूर्व्वजोहरते वस्त्रं पारक्यं गोतनूद्भवम्।
मृत्वा नरकमासाद्य चाण्डालत्वमवाप्नुयात्[2]।

मरीचिः—

पारक्यं धेनुजं विप्रः पौगण्डकमथाऽपि वा।
महान्तं नरकं गत्वा जायते स जनङ्गमः॥
तद्दोषपरिहारार्थं प्राजापत्यं विशोधनम्।
पौगण्डे सूतिपर्य्यन्तं कुर्य्यात्तच्चान्द्रभक्षणम्॥
स्नात्वा शुद्धिमवाप्नोति नान्यथा वस्त्रहारिणि।
वस्त्रहरणे पूर्व्ववद् राज-वैश्य-स्त्री-शूद्राणां प्रायश्चित्तम्।

इति हेमाद्रौ वस्त्रहरणप्रायश्चित्तम्।

---

(१) आहेति इति कोतपुस्तके नास्ति।
(२) अवाप्यते इति कोतलेखितपुस्तकपाठः।

अथाऽनडुद्धरणप्रायश्चित्तमाह[1]।

कूर्म्मपुराणे—

योहरेत् पारकं विप्रोबलीवर्द्दं[2] कृषीबलम्।
स गत्वा नरकं घोरं जायते पूर्व्ववत्तथा॥

हारीतः—

योहरेत् पारकं विप्रोबलीवर्द्दं कृषीबलम्।
युवानं बालकं वापि मृत्वा नरकमश्नुते॥
चिरं तत्र च संविश्य [3]दिवाकर्त्योभवेद्भुवि।
न तस्य निष्कृतिर्नास्ति तप्तकृच्छ्रत्रयादितः॥

मरीचिः—

विप्रोयः पारकं राजन् बलीवर्द्दं तृषातुरः।
युवानं वनमध्ये वा राज्यक्षोभे[4] महापथे॥
हृत्वा च नरकं भुक्त्वा भुवि भूयाच्च पङ्गुमः।
तस्य पापविशुद्ध्यर्थं तप्तकृच्छ्रद्वयं स्मृतम्॥
पौगण्डे कृच्छ्रमात्रं स्यात् बालेऽर्द्धं मुनिभिः स्मृतम्।
तन्नारीणां तदर्द्धं स्यात् बाहुजोऽसौ द्विजातिवत्॥

ऊरुजस्य क्षत्रियवत् सर्व्वत्र। पादजस्य अनडुद्धरणे राज्ञा शिक्षा कारयितव्या। राज्ञा तद्विचार्य्य अनडुद्धरणजः करच्छेदः कर्त्तव्यः।

---

(१) आहेति क्रीतपुस्तके नास्ति।
(२) बलीवर्द्दकृषीबलं इति क्रीतकाशीपुस्तकयोः पाठः।
(३) दिवाकीर्त्तिर्भवेद् इति क्रीतपुस्तकपाठः।
(४) राजक्षोभे इति क्रीतपुस्तकपाठः।

पौगण्डे अङ्गुलिद्वयं बालवत्सहरणे अङ्गुलिमात्रं च्छेद्यम् । तद्दत्तु दापयित्वा दशरूपकेण दण्डः । तदाह मनुः—

बलीवर्दे करच्छेदं पौगण्डे चाङ्गुलिद्वयम् ।
अङ्गुलिं बालहरणे दापयित्वा पुनश्च तम् ॥
दशरूपकदण्डेन विप्रोदण्ड्यश्च तेन वै ।
राजानमूरजं वाऽपि दण्डयेन् विचारयन् ॥ इति ॥

इति हेमाद्रौ अनडुद्धरणप्रायश्चित्तम् ।

अथ महिषीहरणप्रायश्चित्तमाह ।

कण्वः—

महिषीमाख्यजो '(१)हत्वा पातकी पापवत्सलः ।
स गत्वा नरकं घोरं पुनश्चाण्डालवानिह ॥

देवस्वामी—

योविप्रोमहिषीं हत्वा परकाया धनातुरः ।
स गत्वा नरकं घोरं भुवि चाण्डालवान्भवेत् ॥
नतस्य निष्कृतिर्नास्ति गुरुचान्द्रायणादिह ।

चतुर्व्विंशतिमते—

योविप्रोमहिषीं हत्वा सवत्सां क्षीरवर्द्धिनीम् ।
अरण्ये वा गृहे वापि नरकं याति दारुणम् ॥
चाण्डालजन्म संप्राप्य तिष्ठत्याचन्द्रतारकम् ।
तस्यैव निष्कृतिर्नास्ति गुरुचान्द्रायणं स्मृतम् ॥
पुनर्भूत्वा स पापीयान् वपनं चान्द्रभक्षणम् ।
राजसम्बन्धिनीं हत्वा वणिक्पादजयोरपि ॥
पुनर्भूत्वा पिवेच्चान्द्रमन्यथा तत्समाचरेत् ।
जरजस्य पराकःस्यात् पादजोयावकं चरेत् ॥

सर्व्वत्र पुनर्दत्वा एकाहमुपोष्य पञ्चगव्यं पीत्वा शुद्धिमाप्नोति । तत्तत्स्त्रीणामर्द्धं योजनीयम् ।

इति हेमाद्रौ महिषीहरणप्रायश्चित्तम् ।

---

(१) लोभात् इति क्षीतपुस्तकपाठः ।

## अथ महिषहरणप्रायश्चित्तमाह[1]।

कूर्म्मपुराणे—

महिषं योहरेल्लोभात् पारक्यं कृषिकर्म्मवान्[2]।
स गत्वा नरकं घोरं पूर्व्ववज्जायते भुवि ॥

नागरखण्डे—

पारक्यं महिषं हृत्वा विप्रः कृष्यर्थमादरात्।
तस्यैव नरके वासस्तथा चाण्डालजन्मवान् ॥

[ काश्यपः—

कृष्यर्थं भारवाहार्थं योविप्रो महिषं हरेत्।
यमलोकमुपागम्य पश्चाच्चाण्डालजन्मवान् ॥ ]

वत्स-पौगण्ड-तरुणमहिषहरणे बलीवर्द्दहरणप्रायश्चित्तवत् सर्व्वं कुर्य्यात्। राजदण्डश्च सर्व्ववर्णाऽविवेकेन योजनीयः।

इति हेमाद्रौ महिषहरण प्रायश्चित्तम्।

---

(१) महिषीवत्सहरणप्रायश्चित्तमाह इति क्रीतपुस्तकपाठः।

(२) पारक्यं वत् कृषिर्भवान् इति क्रीतपुस्तकपाठः।

[ ] अयं पाठः क्रीतकाशीपुस्तकयोर्नास्ति।

## अथ गजहरणप्रायश्चित्तमाह ।

गौतमः—

विप्रोगजं हरेत् सङ्गदोषात् पारक्यमादरात् ।
नववर्षं भवेद्रक्षः पिशाचोनिर्ज्जने वने ॥
योविप्रोगजहारी स्यात् परवोधाम्मलिम्लुचैः ।
नववर्षं महारण्ये पिशाचोभवति ध्रुवम् ॥
राज्ञोवणिक्पतेर्वाऽपि सङ्गदोषाम्मलिम्लुचाम् ।
विप्रोयदि गजं हर्त्ता स पिशाचत्वमाप्नुयात्[1] ॥
बाले चान्द्रं महाचान्द्रं पौगण्डे मदशालिनि ।
चान्द्रायणत्रयं कुर्य्यात्मौञ्जीबन्धविधानतः ॥

पुनः संस्कारमित्यर्थः ।

तं गजं स्वामिने दत्त्वा ततश्चान्द्रायणञ्चरेत् ।
राज्ञा शिक्षा प्रकर्त्तव्या चौरेभ्यः पापभीरुणा ॥
बाल्ये पौगण्डके चैव यवनिष्केण दण्डयेत् ।
षण्मासे रूपकशतम् सहस्रं मदहस्तिने ॥
जीवनं तस्य गृह्णीयादत्यशक्तोद्विजोयदि ।

---

1 आप्यते इति क्रोतलेखितपुस्तकपाठः ।

विप्रप्रायश्चित्तवत् राज्ञामूरुजानां द्विगुणं दण्डञ्च [1]कुर्य्यात् । शूद्रस्य हस्तविच्छेदः पूर्व्ववत्कर्त्तव्यः ।

गजहरणं स्त्रीणामसम्भव[2]मिति तत्र[3] प्रायश्चित्तमपि नोक्तम् ।

इति हेमाद्रौ गजस्तेयप्रायश्चित्तम् ।

---

(१) कुर्य्यात् इति श्रीतर्केचितपुस्तकयोर्नास्ति ।

(२) असम्भवात् इति श्रीतपुस्तकपाठः ।

(३) तत्रेति काशीपुस्तकएव दृश्यते ।

[1]देवलः—

उत्तमाश्वं द्विजो हृत्वा पारक्यं तरुणं मुदा ।
यमलोकमुपागम्य पङ्गुर्भूयाद्भुवस्तले ॥

हारीतः—

उत्तमाश्वं जातिमाश्वं बड़वां बालिकामपि ।
विप्रो[2] वै सङ्गदोषेण हृत्वा नरकमश्नुते ॥
पुनर्भूयान्महापापी पङ्गुः सर्व्वाङ्गसन्धिषु ।
न तस्य निष्कृतिर्नास्ति द्विवारं चान्द्रभक्षणम् ॥

मार्कण्डेयः—

बड़वां जातिमाश्वं वा राज[3] योग्यं हयं द्विजः ।
भरण्ये राजशालायां चौर्य्यबुद्ध्या जनैः सह ।
हृत्वा नरकमासाद्य भवेत्पङ्गुर्भुवःस्थले ॥
तस्य देहविशुद्ध्यर्थं द्विवारं चान्द्रभक्षणम् ।

इति हेमाद्रिविरचिते धर्म्मशास्त्रे प्रायश्चित्ताध्याये
अश्वस्तेयप्रायश्चित्तम् ।

---

(१) देवल इति श्रीतपुस्तके नास्ति ।
(२) योऽविप्रः सङ्गदोषेण इति श्रीतमैथिलपुस्तकपाठः ।
(३) राजा योग्यं इति श्रीतपुस्तकपाठः ।

## अथ उष्ट्रस्तेयप्रायश्चित्तमाह[1]।

वामनः—

क्रमेलकं हरेद्यस्तु विप्रोराज्ञां धनातुरः।
स तु नारकमागम्य जायते वक्रजानुकः[4]॥

जावालिः—

राज्ञां परेषा[2]मुष्ट्रं वा [3]द्विजोहृत्वा धनातुरः।
सएव नरकं गत्वा वक्रजङ्घो[4] भवेद्भुवि॥
अरण्ये राजसदने विप्रोहृत्वा क्रमेलकम्।
न तस्य पुनरावृत्तिर्नरकाद् दीर्घजङ्घवान्॥
प्रायश्चित्तमिदं प्रोक्तं महापातकनाशनम्।
बाल्ये पौगण्डके तप्तं कौमारे चान्द्रमुच्यते॥
राज्ञा शिक्षा प्रकर्त्तव्या पूर्व्ववद्वर्णभेदतः।

प्रायश्चित्तमपि पूर्व्ववद्वेदितव्यम्।

इति हेमाद्रौ उष्ट्रहरणप्रायश्चित्तम्।

---

(१) आहेति क्रीतकाशीपुस्तकयोर्नास्ति।
(२) अश्वं इति केचित्पुस्तकपाठः।
(३) वः इति केचित्पुस्तकपाठः।
(४) वक्रजानुरिति काशीपुस्तकपाठः।

## अथ खरस्तेयप्रायश्चित्तमाह[1]।

देवलः—

योविप्रस्तु खरं हृत्वा पारक्यं धनकाम्यया।
सङ्गदोषादयं पापी मृगचाण्डालमाप्नुयात्॥
यमलोकमुपागम्य हीनजातिर्भवेद्भुवि।

मार्कण्डेयः—

खरं हृत्वा द्विजोमोहात् पारक्यं गृहमध्यतः।
वने वा सङ्गदोषेण नरकं याति दारुणम्॥
हीनजातिर्भवेत् पश्चान्निष्कृतिः कथितोत्तमैः।
बाल्ये पौगण्डके राजन् कायकृच्छ्रं समाचरेत्॥
तरुणे तप्तकृच्छ्रं स्यात् तस्य पापविशुद्धये।
राज्ञा दण्ड्यः स पापीयान् दापयित्वा पुनः खरम्॥
विप्रे तु 'दशरूप्यं स्यात् राज्ञि'[2][3] विंशतिरेव वा।
ऊरुजे च तथा प्रोक्तं पादजे हस्तच्छेदनम्॥

ततस्त्रीणामेवमर्द्धक्रमेण योजनीयम्।

इति हेमाद्रौ खरहरणप्रायश्चित्तम्।

---

(१) आहेति क्रीतपुस्तके नास्ति।

(२) दशरूपं स्यात् इति क्रीतलेखितपुस्तकपाठः।

(३) राज्ञां इति क्रीतपुस्तकपाठः।

## अथाऽज-वस्त्रहरणप्रायश्चित्तमाह[1]।

मार्कण्डेयः

अजं वस्त्रं द्विजोहृत्वा पारक्यं मदगर्व्वितः।
महतीं यातनां गत्वा भवेत् सूनुर्भुवस्तले॥

[2]जातूकर्ण्यः

ब्राह्मणोमदगर्व्वेण पारक्यमजवस्त्रकम्।
तीव्राश्च यातनां भुक्त्वा हिंसकोजायते भुवि॥

जावालिः—

अजं वस्त्रं गृहेऽरण्ये पारक्यं गर्व्वितोद्विजः।
मुषित्वा नरकं गत्वा हिंसकोजायते भुवि॥
तस्य निष्कृतिरुत्पन्ना प्राजापत्यं समाचरेत्।
स्त्रीणामर्द्धं ततोराज्ञां विप्रवत्सर्व्वमीरितम्॥

इति हेमाद्रौ अज-वस्त्रहरणप्रायश्चित्तम्।

---

(१) आहेति क्रीतपुस्तके नास्ति।
(२) जातूकर्ण्यरिति वेष्टितपुस्तकपाठः।

## अथाऽऽरण्यमृगहरणप्रायश्चित्तमाह[1] ।

देवलः—

व्याघ्रं वराहं भल्लूकमेणीं कृष्णमृगं तथा ।
राज्ञां[2] क्रीडार्थमानीतं हत्वा विप्रः कथं भवेत् ॥
प्राजापत्यं दुष्टमृगे हरिण्यां तप्तमुच्यते ।
चान्द्रं कृष्णमृगे प्रोक्तं प्रायश्चित्तं विशोधनम् ॥

बौधायनः—

राज्ञां[3] क्रीडार्थमानीतान् आरण्यान् दुष्टचारिणः ।
व्याघ्रं वराहं भल्लूकमेणीं कृष्णमृगं तथा ॥
हत्वा नरकमाप्नोति [4]प्रायश्चित्तेन शुध्यति ।
व्याघ्रे वराहे भल्लूके प्राजापत्यं विशोधनम् ॥
हरिण्यां तप्तकृच्छ्रं स्याच्चान्द्रं कृष्णमृगे द्विजः ।
कृत्वा शुद्धिमवाप्नोति नान्यथा शुद्धिरीरिता ॥
गवये शरभे चैव प्राजापत्यं हि पूर्ववत् ।
राज्ञां स्तेये प्रकर्त्तव्यमेवमेव विशुद्धये ॥

इति हेमाद्रौ आरण्यमृगहरणप्रायश्चित्तम् ।

---

(१) आहेति क्रीतपुस्तके नास्ति ।

(२) रामाक्रीडार्थमिति क्रीतपुस्तकपाठः ।

(३) राजइति लेखितपुस्तकपाठः ।

(४) प्राजापत्येन इति क्रीतपुस्तकपाठ ।

244 **अथ ग्राम्यमृगपक्ष्यादिहरणप्रायश्चित्तमाह[1]** ।

नारदीये—

मयूरं सारसं चैव कपोतं जालपादकम् ।
शुकं चाषं बलाकञ्च शिशुमारञ्च [2]काच्छपम् ॥
एतेष्वन्यतमं हत्वा द्वादशाहमभोजनम् ।

पराशरः—

टिट्टिभं चक्रवाकञ्च शिशुमारञ्च काच्छपम् ।
मयूरं सारसञ्चैव कपोतं जालपादकम् ॥
एतेष्वन्यतमं हत्वा द्वादशाहमभोजनम् ।

* मार्कण्डेयः—

[3]मकरं नकुलं काकं वराहं मूषकं तथा ।
मार्ज्जारं नकुलं सर्पं भारद्वाजं कपिं तथा ॥
सारिकां क्षसरं हत्वा हत्वा वा कुक्कुटं तथा ।
सौपर्णं [4]गृध्रश्येनांश्च शिवां कङ्कं सृगालकम् ॥
कृच्छ्रार्द्धमाचरेद्विद्वान् ज्ञात्वा तद्विगुणं चरेत् ।
वर्ह्णीं च नरपिं रक्तपुच्छकं बहुपादकम् ॥

---

(१) आहेति क्रीतपुस्तके नास्ति ।
(२) कच्छपं इति क्रीतपुस्तकपाठः ।
* क्रीतपुस्तके नास्ति ।
(३) मयूरं इति क्रीतपुस्तकपाठः ।
(४) गृध्रश्येनांश्च इति क्रीतपुस्तकपाठः ।

हृत्वा हत्वा[1] द्विजः कुर्य्याद् द्वादशाह[2]मभोजनम् ।
अश्मानाहिंसयन् हृत्वा षड्रात्रं स्यादभोजनम् ॥

इति हेमाद्रौ ग्राम्यमृग[3] पश्वादिहरणप्रायश्चित्तम् ।

---

(१) हृत्वा इति क्रीतकाशीपुस्तकपाठः ।

(२) विशोधनं इति क्रीतवेष्टितपुस्तकपाठः ।

(३) ग्राम्यमृगहरणप्रायश्चित्तमिति क्रीतवेष्टितपुस्तकपाठः ।

## अथ भूमिहरणप्रायश्चित्तमाह[1]।

देवलः—

स्वदत्तां परदत्ताञ्च योहरेच्च वसुन्धराम्।
षष्टिवर्षसहस्राणि विष्ठायां जायते क्रमिः॥
एकैकभागिनो लोके सर्व्वेषामेव भूभुजाम्।
न भोज्या [2]न करग्राह्या विप्रदत्ता वसुन्धरा॥

"करग्राह्ये"ति तस्यां भूम्यामुत्पन्नधनग्रहणम्।

देवस्वामी—

ग्रामं वा क्षेत्रमात्रं वा केदारं भूमिमेव वा।
विप्राधीनं हरन्[3] राजा यमलोकमवाप्नुयात्॥
पश्चाद्भुवमुपागम्य क्रमिराशिर्भवेन्मले।

नारदीये—

क्षेत्रं ग्रामं तटाकं वा धनं केदारमेव वा।
भूमिं वा विप्रदत्तां राजा वा [4]प्रभुरेव वा॥
हृत्वा नरकमाप्नोति कीटोऽभून्मलमध्यतः।
तस्यैव निष्कृतिर्दृष्टा महापातकशोधनी॥
क्षेत्रं हृत्वा षडब्दं स्याद्ग्रामे चान्द्रायणं स्मृतम्।
तटाके तद्द्वयं प्रोक्तं वने चैव तदाचरेत्॥

(१) आहेति क्रोतपुस्तके नास्ति।
(२) नच वै याह्या इति क्रोतपुस्तकपाठः।
(३) हरेद्राजा इति क्रोतलेखितपुस्तकपाठः।
(४) प्रभुमात्नवान् इति क्रोतपुस्तकपाठः।

केदारे तप्तकृच्छ्रं स्याद्भूम्यां चान्द्रत्रयं स्मृतम्।

तदेतदेकवारहरणविषयम्। बहुवारे तद्द्विगुणम्। प्रत्यब्दं फल-स्वीकारे च ब्रह्महत्याप्रायश्चित्तमर्हति।

इति हेमाद्रौ भूमिहरणप्रायश्चित्तम्।

---

## अथ [1]दत्ताऽपहरणप्रायश्चित्तमाह[2]।

देवलः—

भूमिं क्षेत्रं धनं धान्यं वस्त्रं [3]कन्यां विभूषणम्।
सालग्रामञ्च लिङ्गञ्च गृहं शय्यां महोन्नतिम्॥
पूर्व्वं दत्त्वा द्विजेभ्यश्च पश्चाल्लोभपरायणः।
स्वयं हृत्वा महाघोरं रौरवं नरकं व्रजेत्॥

मार्कण्डेयः—

सालग्रामञ्च लिङ्गञ्च धेनुं वत्सं विभूषणम्।
भूमिं क्षेत्रं धनं धान्यं वस्त्रं कन्याविभूषणम्॥
महिषीं वा गृहं शय्यामनड्वाहं द्विजातये।
पुण्यकाले स्वयं दत्त्वा पश्चाद्यदि समाहरेत्॥
रौरवं नरकं घोरं प्रयाति स महाभयम्।
तस्य निष्कृतिरत्यवा महापातकनाशिनी॥
पुनर्दत्त्वाऽथ तद्वस्तु पश्चात्तापपरायणः।
प्राजापत्यद्वयं कृत्वा शुद्धिमाप्नोति मानवः॥
अदत्त्वा तानि वस्तूनि भुङ्क्ते यदि स पापधीः।
चान्द्रायणद्वयं प्रोक्तमथवा भूपरिक्रमः॥
भूपतिर्विप्रवत्कुर्य्याद्द्विगुणं शुद्धिहेतवे।

इति हेमाद्रौ [4]दत्ताऽपहरणप्रायश्चित्तम्॥

---

(१) स्वदत्तेति चिह्नितपुस्तकपाठः।
(२) आहेति क्षीतपुस्तके नास्ति।
(३) कन्यां विभूषणं इति क्षीतपुस्तकपाठः।
(४) स्वदत्तेति क्षीतचिह्नितपुस्तकपाठः।

## अथ रत्नहरणप्रायश्चित्तमाह[1] ।

देवलः–

मुक्ताः प्रवालं वैदूर्य्यं वज्रं नीलं तथैव च ।
पद्मरागं मरतकं पुष्परागमतः परम् ॥
एतानि रत्नजातानि विप्रोऽहरति भूविलात् ।
प्रत्यक्षं वाऽथ[2] चौर्य्याद्वा स पापी नरकं व्रजेत् ॥
पश्चाद्भूमिं समागम्य कुरूपो[3] जायते भुवि ।

मार्कण्डेयः

मौक्तिकं पुष्परागञ्च वज्रं वैदूर्य्यमेव वा ।
प्रवालं पद्मरागञ्च गारुत्मतमतः परम् ॥
इन्द्रनीलं महावज्रं द्विजोयः पापमोहितः ।
पारक्यं यदि चौर्य्येण मुष्णाति[4] नरकं व्रजेत् ॥
पश्चाद् भूमिं समागम्य कुरूपोजायते भुवि ।

[भवेत् कुत्सितजन्मवान् इत्यर्थः]

---

(१) आहेति श्रीतपुस्तके नास्ति ।
(२) यदि चि इति श्रीतपुस्तकपाठः यदिच इति वेचितपुस्तकपाठः ।
(३) कुरूपी इति श्रीतपुस्तकपाठः ।
(४) हविता इति श्रीतवेचितपुस्तकपाठः ।
[ ] अयं पाठः श्रीतपुस्तके नोपलभ्यः ।

ऋतुद्वये पराकं स्यात् षण्मासे चान्द्रमुच्यते ।
प्रत्यब्दहरणे विप्रस्त्वब्दे[1] पातित्यमर्हति ॥

संवत्सरं प्रत्यहं रत्नस्तेये, पतितप्रायश्चित्तं संवत्सरान्ते वेदितव्यम् ।

इति हेमाद्रौ रत्नस्तेयप्रायश्चित्तम् ।

---

(१) त्र्यब्दे इति शोधितपुस्तकपाठः ।

## अथ बालहरणप्रायश्चित्तमाह[1]।

नारदः—

बालं [2]हरेद् द्विजोदेवात् पारक्यं द्रव्यलोभवान्।
स चाण्डालसमो ज्ञेयः सर्व्वकर्म्मसु गर्हितः॥

गौतमः—

ब्राह्मणं क्षत्रियं बालं वैश्यं शूद्रमथाऽपि वा।
अलङ्कारयुतं विप्रस्तं हृत्वा विक्रयेत्ततः॥
स चाण्डालत्वमासाद्य सर्व्ववर्णवहिष्कृतः।
न तस्य निष्कृतिर्दृष्टा मुनिभिः सत्यवादिभिः॥
कथञ्चिन्निष्कृतिर्दृष्टा मुनिभिर्बाल [3]मोषतः।

गालवः—

पूर्व्वजः क्षत्रियं बालं वैश्यं शूद्रमथाऽपि वा।
अलङ्कारयुतं विप्रः क्षत्रं पादजमेव वा॥
सर्व्वालङ्कारसंयुक्तं हृत्वा तत्र कथं भवेत्।
स विप्रो भ्रूणहन्ता स्यान्मृतश्चाण्डालजन्मवान्॥
तस्यैव निष्कृतिरियं सर्व्वाघौघनिकृन्तनी।
बालकं स्वामिने दत्वा पश्चात्तापसमन्वितः॥
ब्राह्मणे तप्तकृच्छ्रं स्यात् पराकं क्षत्रिये स्मृतम्।
वैश्ये तु यावकं प्रोक्तं पादजे वपनं स्मृतम्॥

---

(१) आहेति मौतपुस्तके नास्ति।
(२) हृत्वा इति मौतवेष्टितपुस्तकपाठः।
(३) बालमुष्णतः इति मौतवेष्टितपुस्तकपाठः।

एतत् [१]पुनर्दानविषयम् । अदत्त्वा चेद् विशेषमाह ।

आवालिः—

अदत्त्वा स्वामिने बालं चान्द्रं विप्रे प्रचोदितम् ।
क्षत्रिये तप्तकृच्छ्रं स्याद् वैश्ये [२]यावकमीरितम् ॥
पादजे पञ्चगव्यं च वपनं तु शिरोरुहाम् ।

क्षत्रिय-वैश्ययोः पारक्यबालहरणे विप्रोक्तप्रायश्चित्ताद्द्विगुणम् ।

शूद्रस्य हस्तच्छेदः भूपबालहरणे पादच्छेदश्च । स्त्रीणामेतेषामर्धमुक्तम् ।

इति हेमाद्रौ बालहरणप्रायश्चित्तम् ।

---

(१) पुनर्दानविषयं इति केचित्पुस्तकपाठः पुनर्दानार्थविषयं इति कोतपुस्तकपाठः ।

(२) पारक्यमीरितं इति केचित्पुस्तकपाठः ।

अथ [1]कन्यकाहरणप्रायश्चित्तमाह ।

मार्कण्डेयः—

कन्यां सुरूपिणीं विप्रोभूषणैर्भूषितां सतीम् ।
आरक्षया हरेद्यापि नरकं याति दारुणम् ॥
तदन्ते भुवमासाद्य [2]भिन्नयोनौ स जायते ।

गालवः—

विप्रीयः कन्यकारत्नं सर्व्वभूषणभूषणम् ॥
विप्रजं बाहुजा[3]ज्जातं पादजं वा विशेषतः ।
मुषित्वा दुष्टसङ्गेन [4]परवाक्यानुसारतः ॥
न तस्य नरकान्नूप पुनरावृत्ति[5]रस्ति हि ।
तदन्ते भुवमासाद्य जायते भिन्नजन्मवान् ॥

पराशरः—

पूर्व्वजः कुलजां कन्यां पित्रोर्गेहविवर्द्धिनीम् ।
हृत्वा कामातुरोनित्यं न तस्य पुनरुद्भवः ॥

---

(१) कन्याहरणे इति क्रीतपुस्तकपाठः ।

(२) भिन्नयोनौ इति क्रीतपुस्तकपाठः ।

(३) बाहुजाज्जातं इति क्रीतपुस्तकपाठः ।

(४) परं वाक्यानुसारतः इति क्रीतकाशीपुस्तकपाठः ।

(५) पुनरावृत्तिवर्ज्जितः इति क्रीतपुस्तकपाठः पुनरावृत्तिवर्जित इति कोलिकात-पुस्तकपाठः ।

चाण्डालजन्म संप्राप्य अत्रैव [1]ब्रसनृप ।
[2]दत्त्वा तां स्वामिने पश्चात् शुद्धिश्चान्द्रायणव्रतात् ॥
अदत्त्वा पुनरप्येनां न पश्चात्तापवान् द्विजः ।
महाचान्द्रायणं कृत्वा पञ्चगव्यमनन्तरम् ॥
ततः शुद्धिमवाप्नोति नान्यथा गतिरस्ति हि ।
राजकन्यां हरेत् [3]कायं तप्तं विट्शूद्रकन्ययोः ॥
[4]राज्ञोविप्रसुताऽऽदाने द्विगुणं विप्रचोदितात् ।
वैश्योविप्रसुतां हृत्वा राजवन्मुनिचोदितम् ॥
शूद्रो [5]हरन् विप्रकन्यां कारोषवधमर्हति ।
तत्तत् स्त्रीणामर्द्धमर्द्धं प्रायश्चित्तम् ॥

इति हेमाद्रौ कन्याहरणप्रायश्चित्तम् ।

---

(१) वसनृप इति कीतपुस्तकपाठः ।
(२) हृत्वा इति कीतपुस्तकपाठः ।
(३) कार्य्यं इति कीतपुस्तकपाठः ।
(४) राज्ञविप्रसुतादाने इति कीतवैश्चितपुस्तकपाठः ।
(५) हरेदिति कीतपुस्तकपाठः ।

## अथ नारीहरणप्रायश्चित्तमाह[1] ।

देवलः—

विप्रः सतीं स्वकुलजां विप्रपत्नीं हरेद्यदि ।
[2]तोषयित्वा सुवार्त्ताभिरथ वाऽपधिया खलः ॥
तस्यैव निष्कृतिर्नास्ति कारीषदहनादृते[3] ।

मार्कण्डेयः—

अनङ्गीकरणे साध्वीं विप्रपत्नीं द्विजः[4] खलः ॥
बोधयित्वा सुवार्त्ताभि[5]र्घोरबुद्ध्या हरेद्यदि ।
राजा तं दण्डयेत् पश्चात् कारीषदहनादितः ।

गालवः—

अनङ्गीकारिणीं विप्रपत्नीं साध्वीं द्विजोहरेत् ॥
संसर्गे [6]चार्थविच्छेदः स्वभावे तस्य वाऽर्पये ।
केश[7] संवपनं कृत्वा तप्तकृच्छ्रत्रयं चरेत् ॥
रहस्येनानुपाश्य चान्द्रायणमथाऽऽचरेत् ।

एतदज्ञानविषयं, अभ्यासे द्विगुणं, अत्यन्ताभ्यासे कारीषवध एव । नान्यत् ।

---

(१) चाहेति श्रीतत्पुस्तके पाठः ।
(२) "बोधयित्वा सुवार्त्ताभिर्घोरबुद्ध्या हरेद्यदि" इति श्रीतत्पाठी पुस्तकपाठः ।
(३) दहनादृतः इति श्रीतर्कचितपुस्तकपाठः ।
(४) चक्षलः इति श्रीतपुस्तकपाठः ।
(५) अज्ञानाद्विना खलः इति श्रीतपुस्तकपाठः ।
(६) चार्थच्छेद इति श्रीतपुस्तकपाठः ।
(७) केशस्य वपनं इति श्रीतपुस्तकपाठः ।

मनुः—

क्षत्रियोवैश्य [1]जातिं वा बलाद्ब्राह्मणसुन्दरीम् ।
मुषित्वा रौरवं याति वधः कारीषवह्निना ॥
एवं शुचिमवाप्नोति मौसल्यं पादजे स्मृतम् ।

[2]विप्रस्य क्षत्रिय-वैश्यकन्याहरणे चान्द्रद्वयं चान्द्रं च । शूद्राङ्गनाहरणे प्राजापत्यं विशोधनम् ।

इति हेमाद्रौ नारीहरणप्रायश्चित्तम् ।

---

(१) वैश्यजातीं इति श्रीतपुस्तकपाठः ।

(२) विप्रक्षत्रियवैश्यादि श्रीतशेषितपुस्तकपाठः ।

## अथ पुरुषहरणप्रायश्चित्तमाह[1]।

पराशरः —

विप्रोहरेत् प्रियं मर्त्त्यमुन्मत्तं मन्त्रभेषजैः।
देशाद् देशान्तरं गत्वा स विप्रोनरकं व्रजेत्॥

जावालिः—

विप्रः परं नरं हृत्वा भ्रामयित्वौषधादिभिः।
देशाद्देशगतः पश्चाद् दत्त्वा तं पुनरादरात्॥
कुर्य्याद्देहविशुद्ध्यर्थं तप्तकृच्छ्रं मनूदितम्।
अनर्पयित्वा तं मूढ़श्चान्द्रायणमथाऽऽचरेत्॥
विप्रस्य क्षत्रियं वैश्यं हृत्वा मन्त्रविधानतः।
पुनर्दत्त्वा पराकं स्याद् अन्यथा चान्द्रमीरितम्॥

क्षत्रियवैश्ययोर्ब्राह्मणं हृत्वा विप्राद्द्विगुणं व्रतम्। शूद्रे मौसल्यम्।
[2]तत्तत्स्त्रीणामर्द्धं वेदितव्यम्।

इति हेमाद्रौ पुरुषहरणप्रायश्चित्तम्।

---

(१) आहेति क्षोपुस्तके नास्ति।
(२) तत्स्त्रीणामित्येव क्षोतपुस्तकपाठः।

देवलः—

भोगासक्तस्तु योवेश्यां[2] विप्रः पापपरायणः।
रमेत्तां यदि दुष्टात्मा महान्तं नरकं व्रजेत्॥

गालवः—

वेश्यां विप्रः सतीं त्यक्त्वा स्वभार्यां मन्मथातुरः।
औषधैर्बहुभिर्मौख्यैर्वञ्चयित्वा हरेद्यदि॥
स महापापमासाद्य षण्ढोभूयाद्भुवः स्थले।
तस्यैव निष्कृतिर्नास्ति ज्ञात्वा यदि हरेदिमां॥

जाबालिः—

वेश्यां हरेद्यदा विप्रोवञ्चयित्वौषधैर्बलात्।
राज्ञा दण्ड्यः शतं रूप्यं सहस्रं वा नराधमः॥
तस्य देहविशुद्ध्यर्थं महासान्तपनं स्मृतम्।

एतत् प्रायश्चित्तं हरणमात्रे विवेचनीयम्। तत्र तस्यां रतिर्यदि [3]तदा तस्य विशेषमाह।

अङ्गिराः—

वेश्याया हरणे राजन् महासान्तपनं[4] विदुः।
तत्रैव रममाणस्य चान्द्रं शुद्धिप्रदं सदा॥

---

(१) आहेति क्रीतपुस्तके नास्ति।
(२) वेश्वां इति केचित्पुस्तकपाठः।
(३) तदेति क्रीतकेचित्पुस्तकयोर्नास्ति।
(४) महासान्तपने इति क्रीतपुस्तकपाठः।

'क्षत्रिये द्विगुणं प्रोक्तं वणिक् क्षत्रियवच्चरेत् ।
शूद्रे दण्डः शतं कार्य्यं [विप्रोऽभ्यासे पतिष्यति] ॥
विप्रोवेश्यां हृत्वा तत्र क्रीड़ासक्तश्चेत् संवत्सरादूर्ध्वं पतितोभवति ।

इति हेमाद्रौ वेश्याहरणप्रायश्चित्तम् ।

---

(१) क्षत्रियाद् इति केषुचित्पुस्तकपाठः ।
[ ] अयं पाठः केषुचित्पुस्तके न दृश्यते ।

## अथ दासीहरणप्रायश्चित्तमाह।

मार्कण्डेयः—

दासीं कामातुरो गच्छेत् पूर्व्वजो धर्म्ममुत्सृजन्।
स एव नरकस्थायी यावदाभूतसंप्लवम्॥

जातूकर्ण्यः—

पूर्व्वजो यदि यो[1] दासीं स्वधर्म्मं [2]संपरित्यजन्।
वञ्चयित्वौषधैर्वेश्यां हरेत् [3]स खलु पापधीः॥
मृत्वा नरकमासाद्य भुवि भूयान्निरिन्द्रियः।

चतुर्व्विंशतिमते[4]

यदि विप्रो हरेद्दासीं वञ्चयित्वौषधैर्बलात्।
स [5]गच्छेन्नरकं घोरं कालसूत्रं महद्भयम्॥

दासीहर्त्तुः वेश्याहर्त्तुर्विप्रस्य यत् प्रायश्चित्तमुदीरितं तत्सर्व्वं स्वहरणे भोगं विचार्य्य कुर्य्यात्। राजवैश्ययोः पूर्व्ववदुक्तम्। शूद्रस्य तदेव। तत्तत्स्त्रीणां दासीहरणे तत्तदर्द्धमानेन वेदितव्यम्।

इति हेमाद्रौ दासीहरणप्रायश्चित्तम्।

---

(१) यस्तु इति क्रीतवेश्चितपुस्तकपाठः।
(२) संपरित्यजेत् इति वेश्चितपुस्तकपाठः।
(३) यदि स पापधीः इति क्रीतवेश्चितपुस्तकपाठः।
(४) चतुर्विंशतिमतेऽपि इति क्रीतपुस्तकपाठः।
(५) गत्वा इति वेश्चिततपुस्तकपाठः।

## अथ शय्याहरणप्रायश्चित्तमाह[1] ।

गौतमः—

विप्रस्तु क्षत्रियोवैश्यः पारक्यं तल्पमाहरेत् ।
सोपस्करं महामूल्यं [2]सखट्ट भोगलोलुपः ॥
यमलोकमुपागम्य अङ्गारशयनं व्रजेत् ।
ततोभुवमुपागम्य पृष्ठदेशे व्रणोभवेत् ॥

देवलः—

ब्राह्मणः क्षत्रियोवैश्यस्तल्पं सोपस्करं हरेत् ॥
महाधनं सखट्टञ्च चौरवुद्या बलादपि ।
सोऽन्ते कृतान्तशरणे व्रजेदङ्गारतल्पताम् ॥
न तस्य पुनरावृत्तिः पृष्ठे [3]व्रणभयादिभिः ।

मार्कण्डेयः—

[4]त्रयोवर्णाः स्वधर्म्मादीन् त्यक्त्वा तल्पं महाधनम् ।
सोपस्करं हरेयुस्ते यमलोके सुदारुणम् ॥
अङ्गारशयनं [5]यान्ति पश्चात् [6]पृष्ठे व्रणोभवेत् ।
तेषां दोषविनाशाय प्रायश्चित्तं प्रजापतिः ॥

---

(१) आहेति क्रोतपुस्तके नास्ति ।
(२) स खट्टां इति वेष्टितपुस्तकपाठः ।
(३) व्रणाणवादिभिः इति क्रोतपुस्तकपाठः ।
(४) त्रयोवर्णान् इति वेष्टितपुस्तकपाठः ।
(५) गत्वा इति क्रोतवेष्टितपुस्तकपाठः ।
(६) पृष्ठव्रणो इति क्रोतवेष्टितपुस्तकपाठः ।

प्राह्न चान्द्रं पराकञ्च तप्तश्चैव यथाक्रमम् ।
तत्तत्स्त्रीणां तदर्द्धं स्यात् शूद्रं दण्डयाच्च पूर्व्ववत् ॥

इति हेमाद्रौ शय्याहरणप्रायश्चित्तम् ।

---

[ अथ यानहरणप्रायश्चित्तमाह । 

गौतमः—

आन्दोलिकां यदाविप्रश्चतुरन्तां विशेषतः ।
मनुष्यवाह्यं यानं स्याद् दारुचित्रैर्विभूषितम् ॥
हृत्वा पापधिया पापी नरकं याति दारुणम् ।
स वै भुवमुपागम्य व्रणवान् पृष्ठदेशतः ॥

पराशरः—

यानमान्दोलिकादीन्यः पारक्यं भोगतृष्णया ।
विप्रोहरेत्महादुःखमनुभूय भुवः स्थले ॥
पृष्ठदेशे यदा व्रणी जायते वर्णगर्हितः ।
तस्य दोषविनाशाय प्राजापत्यं समाचरेत् ॥

एतत् पुनर्दानविषयम् । अदत्त्वा प्राजापत्यद्वयं वेदितव्यम् । क्षत्रियवैश्ययोरेवं वेदितव्यम् । शूद्रे तद्द्रव्यं स्वामिने पुनर्दापयित्वा शतरूप्येण दण्डः । तत्तत्स्त्रीणां तदर्धं यथाक्रमं वेदितव्यम् ।

इति हेमाद्रौ यानहरणप्रायश्चित्तम् । ]

---

[ ] अथ यानहरणप्रायश्चित्तमाहेत्यादिः इति हेमाद्रौ यानहरणप्रायश्चित्तमित्यन्तः क्रोतवासीपुस्तकयोर्नोपलभ्यते ।

 [ अथ उपानद्धरणप्रायश्चित्तमाह ।

देवल:—

उपानत्पादुके राजन् पारक्यं योद्विजोहरेत् ।
स चाण्डालसमोभूयात् कण्टकास्तरणं व्रजेत् ॥

यम:—

उपानत्पादुके यस्तु पारक्यं वै द्विजोहरेत् ।
कण्टकास्तरणं गत्वा पादशूलीभवेद्भुवि ॥

मरीचि:—

योविप्र: पापमज्ञात्वा उपानत्पादुके हरेत् ।
यमलोकमुपागम्य शयनं कण्टकोपरि ॥
तस्य देहविशुद्ध्यर्थं प्राजापत्यं समाचरेत् ।

एतत् पुनरदानविषयम् । दत्त्वा पञ्चगव्यभक्षणम् । क्षत्रिया-दीनामेवम् । तत्तत् स्त्रीणां पूर्व्ववत् तदर्द्धं यथाक्रमं वेदितव्यम् ।

इति हेमाद्रौ उपानद्धरणप्रायश्चित्तम् । ]

---

[ ] अयं पर्य्यायः श्रीतकाशीपुस्तकयोर्न दृष्टः ।

## अथ छत्रहरणप्रायश्चित्तमाह[1] ।

देवलः—

छत्रं हरेत द्विजोनैव[2] महातपनिवारणम् ।
यमप्रीतिकरं पुण्यं सर्व्वसौख्यप्रदायकम् ॥

मार्कण्डेयः—

पावनं पुण्यदं सर्व्वसौख्यदायि महाधनम् ।
तद्विप्रो यदि गृह्णाति धनाधारोभवेद्भुवि ॥

शिवरहस्ये—

महामूल्यं महासौख्यप्रदं नृणां द्विजोहरेत् ।
छत्रमुख्यहरं पुण्यं नरकं याति दारुणम् ॥
धनाधारो भवेद्भूमौ सर्व्वदा[3] भुवि गर्हितः ।
तस्य निष्कृतिरत्यन्ता भारते लोकपावनी ॥
वस्त्रावृते पराकं स्यात् केतकी[4]पर्णसंहते ।
यावकं तालपत्रैश्च [5]निर्म्मिते राजवल्लभ ॥

---

(१) आहेति श्रीतपुस्तके नास्ति ।
(२) क्वचु इति वेष्टितपुस्तकपाठः ।
(३) सर्व्वदं इति श्रीतपुस्तकपाठः ।
(४) केतकीपर्णे इति श्रीतवेष्टितपुस्तकपाठः ।
(५) निर्म्मितं इति श्रीतपुस्तकपाठः ।

पञ्चगव्यं पिबेत्पश्चात् पुनर्दत्त्वा तु तद्धनम् ।
अभ्यासे[1] द्विगुणं प्रोक्तं क्षत्रियाणामिदं व्रतम् ॥
तत्तत्स्त्रीणामिदं ज्ञेयं प्रायश्चित्तं विशोधनम् ।

इति हेमाद्रौ स्वर्णहरणप्रायश्चित्तम् ।

---

(१) अभावे इति केषुचित्पुस्तकपाठः ।

## अथ चामरहरणप्रायश्चित्तमाह[1]।

गौतमः—

चामरं सर्व्वभूतानां देवानामपि प्रीतिदम्।
राजयोग्यं [2]हरन्विप्रः सद्योगच्छेद्यमालयम्॥

देवलः—

चामरं सर्व्वदेवानां भूतानां भूपतेरपि।
राजचिह्नं हरेद्यस्तु सद्योभवति पातकी॥

मार्कण्डेयः—

भूपतीनाञ्च देवानां नृणां तापाऽपहारियत्।
चामरं हरते विप्रः सद्योयमपुरं व्रजेत्॥
देवानां हरणे चान्द्रं प्राजापत्यञ्च भूपतेः।
भूतानां हरणे वालव्यजने[3] यावकं चरेत्॥

एतत्पुनरर्पणविषयम्। अन्यथा द्विगुणम्। सर्व्वेषां वर्णानां स्त्रीणामपि चित्रसंगतव्यजनहरणेऽपि प्रायश्चित्तमेवं करणीयम्।

इति हेमाद्रौ चामरहरणप्रायश्चित्तम्।

---

(१) आहेति मीतपुस्तके नास्ति।
(२) हरेद्विप्र इति केचित्पुस्तकपाठः।
(३) वालव्यजनं इति मीतपुस्तकपाठः।

## अथ पुष्पहरणप्रायश्चित्तमाह[1] ।

वसिष्ठः—

आरामे पुष्पहर्त्ता योदेवपूजार्थकल्पिते ।
[2]यावत् तत्रैव पुष्पाणि सुगन्धीनि महान्त्यपि ॥
तावद् वर्षसहस्राणि यमलोकं समश्नुते ।
पुनर्भूमिगतः पापी जायते वक्रनासिकः ॥

[ हारीतः—

पारक्याणि प्रसूनानि यो हरेद्विप्रवल्लभः ।
महान्तं नरकं गत्वा जायते रुग्णनासिकः ॥]

महाराजविजये—

[3]पुष्पजालं हि पारक्यं देवपूजार्थमादरात् ।
सुगन्धिकरवीरादि हृत्वा विप्रः स पापभाक् ॥
प्रायश्चित्तमिदं प्रोक्तं [4]सुविचार्य मनीषिभिः ।
देवद्रव्यापहरणे चान्द्रं वत्सरसेवनात् ॥

---

(१) आहेति इति मोतपुस्तके नास्ति ।
(२) यावन्त्यत्रैव इति मोतपुस्तकपाठः ।
[ ] एवं पाठः मोतचामीपुस्तकयोर्नोपलभ्यः ।
(३) पुष्पजातं इति मोतपुस्तकपाठः ।
(४) संविचार्य इति मोतपुस्तकपाठः ।

पराकं ब्रह्मनिर्म्माणे कायः क्षत्रियवैश्ययोः।
[क्षत्रियवैश्यनिर्म्माणे चारामे इति योजनीयम्]॥
स्त्रीणामपि पूर्व्ववद् योजनीयम्।

इति हेमाद्रौ पुष्पहरणप्रायश्चित्तम्।

---

[ ] अयं पाठोऽवेक्षितपुस्तके नास्ति।

अथ फलहरणप्रायश्चित्तमाह[1]।

देवलः—

कदलीं मातुलिङ्गञ्च नारिकेलञ्च[2] पानसम्।
द्राक्षा-कर्पूर-जम्बीर-चूत-जम्बूफलानि च॥
हृत्वा विप्रस्तु पारक्यं भुक्त्वा नरकमश्नुते।
पुनर्भुवमुपागम्य फलहीनोऽपि जायते॥

जावालिः—

फलानि विविधानीह देवप्रीतिकराणि वै।
मुषित्वा वै[3] द्विजोलोभान् नरके वासमश्नुते।
भुवः स्थलमुपागम्य फलहीनोद्भवा भवेत्॥

महाराजविजये—

नानाविधं फलं विप्रः परकीयं मनोहरम्।
[4]हृत्वा लोभान् महापापी नरके वासमश्नुते॥
फलहीनोभवेल्लोके तस्मात् स्तेयं न कारयेत्।
ऋतुत्रये पराकः स्याद् वत्सरे चान्द्रमुच्यते॥
पञ्चगव्यं पुनर्दत्त्वा नान्यथा ऋषिचोदितम्॥

क्षत्रियवैश्ययोरेतद्द्विगुणम्। तत्तत् स्त्रीणां पूर्व्ववद्विज्ञेयम्।

इति हेमाद्रौ फलहरणप्रायश्चित्तम्।

---

(१) आहेति क्वीतपुस्तके नास्ति।

(२) नारिकेरञ्च इति क्वीतपुस्तकपाठः।

(३) वः इति क्वीतलेखितपुस्तकपाठः।

(४) विप्रोहृत्वा इति क्वीतलेखितपुस्तकपाठः।

## अथ कन्दाऽऽदिहरणप्रायश्चित्तमाह[1]।

देवलः —

सूरणं शृङ्गिवेरञ्च हरिद्रामूलकं तथा :
अन्यानि मूलवस्तूनि देवयोग्यानि यानि च ॥
विप्रोमुषित्वा लोभेन तेन यद्यत्समाचरेत्।
तत्सर्व्वं स्वामिनः प्रोक्तं [1]दोषवानिह जायते ॥

हारीतः—

सूरणं शृङ्गिवेरञ्च हरिद्रा मूलकं तथा।
अन्यानि मूलवस्तूनि पारक्याणि द्विजोयदि ॥
[2]हरेन्नरकमाप्नोति पापयोनिषु जायते।

मार्कण्डेयः—

सूरणं [3]शृङ्गिवेरञ्च हरिद्रा मूलकं तथा।
वस्त्वन्यानि मूलानि विप्रोमुष्णाति कामतः ॥
अल्पद्रव्ये द्विजःस्तेयी दोषबाहुल्यमाप्नुयात्।
पलद्वयं यदि हरेत् पारक्यं मूलवस्तु यत् ॥
तत्पुनः स्वामिने दत्त्वा जपेदष्टोत्तरं शतम्।
[4]दशादिशतपर्य्यन्तं मूलद्रव्याऽपहारवान् ॥

---

(१) आहेति कोतपुस्तके नास्ति।
(१) दोषवान् इति क्रोतपुस्तकपाठः।
(२) हृत्वा इति क्रोतलेखितपुस्तकयोः पाठः।
(३) शृङ्गबेरं इति क्रोतपुस्तकपाठः।
(४) दशादिशतपर्य्यन्तं इति क्रोतपुस्तकपाठः।

अदत्त्वा स्वामिने स्तेयी अयुतं जपमाचरेत् ।
ततः शुद्धो द्विजोलोके अन्यथा दोषभाग्भवेत् ॥

तदाह्वाऽऽपस्तम्बः—

"एधोदके मूले पुष्पफले गन्धग्रासे शाके इति वचनमेकवारमल्पस्तेयविषयं ततोऽधिके उक्तप्रायश्चित्तमेव ।"

क्षत्रियवैश्ययोः पूर्व्ववद् वेदितव्यम् । तत्तत्स्त्रीणामर्द्धन्यायेन योजनीयम् ।

इति हेमाद्रौ मूलहरणप्रायश्चित्तम् ।

---

## अथ कोषहरणप्रायश्चित्तमाह[1] ।

देवल:—

[2]अलाबु घृतकोषञ्च तुन्नाकं त्रिपुषं तथा ।
तथैव तिन्तिडीकोषं[3] कपित्थं कदलीं तथा ॥
एवमादीनि [4]कोषाणि हृत्वा पापमवाप्नुयात् ।
उपोष्य रजनीमेकां सम्यग्घोमविधानतः ॥
महाव्याहृतिभिर्होमः पञ्चगव्यं पिबेत्ततः ।
[5]एतेन शुद्धिमाप्नोति अभ्यासे द्विगुणं चरेत् ॥

एतदल्पकोषहरणविषयम् । बहुकोषहरणे द्विगुणं प्रायश्चित्तम् । कोषार्थम् ।

इति हेमाद्रौ [6]कोषहरणप्रायश्चित्तम् ।

---

(१) कोषहरणे प्रायश्चित्तमित्येव मीतपुस्तकपाठः ।
(२) अलाब्बुघृतकोषञ्च इति मीतपुस्तकपाठः ।
(३) कोषं इति मीतपुस्तकपाठः ।
(४) कोषाणि इति मीतपुस्तकपाठः ।
(५) एतेन इति मीत-वेंघितपुस्तकपाठः ।
(६) कोष इति मीतपुस्तकपाठः ।

# अथ शाकहरणप्रायश्चित्तमाह ।

देवलः—

शाकान्यरण्यजातानि तथैव ग्रामजान्यपि ।
नानानामानि शाकानि नानावर्णानि पूर्व्वजः ॥
अपहृत्य यदा [1]लोभान्महाशोकमवाप्नुयात् ।
भारमात्रे महापापं [2]इतरेष्वल्पपापभाक् ॥

गौतमः—

शाकानि बहुरूपाणि नानानामानि वर्णशः ।
नानाविधानि यो हृत्वा [3]महाशोकमवाप्नुयात् ॥
भारमात्रे महापापमितरे शोकभाग्भवेत् ।
प्राजापत्यं भारमात्रे पञ्चगव्यमथाऽल्पके ॥
बहुवारे तु चान्द्रं स्याद् वत्सरेण [4]विरुग्भवेत् ।

स्त्रीणां राजवैश्ययोश्च सर्व्वत्र पूर्व्वोक्तं वेदितव्यम् ।

इति हेमाद्रौ शाकहरणप्रायश्चित्तम् ।

---

(१) लोकात् इति शौतपुस्तके पाठः ।
(२) इतरे स्वल्पपापभाक् इति शौतपुस्तकपाठः ।
(३) महच्छोकमवाप्नुते इति शौत-वैश्विकपुस्तकपाठः ।
(४) विहीभवेत् इति शौतपुस्तकपाठः ।

## अथ पर्णहरणप्रायश्चित्तमाह[1]।

मार्कण्डेयः—

कदलीमधुवर्णानि ताम्बूलीनामथापिवा[2]।
[3]परकीयाणि पर्णानि पालाशानि विशेषतः ॥
ग्राम्यारण्यजातानीह विप्रोहृत्वा[4] स पातकी।

महाराजविजये—

परकीयाणि पर्णानि ग्राम्यारण्यजान्यपि।
कदलीमधुपर्णानि ताम्बूलीनां विशेषतः ॥
अन्यानि पर्णजातानि विप्रोहृत्वा महाबलः।
भारमात्रे पराकं स्याद् वत्सरं स्तेयसम्भवे ॥
इतरे पञ्चगव्यं स्यात् प्राजापत्यं तु वत्सरे।

[5]स्नवादीनां पूर्व्ववत् प्रायश्चित्तम्।

इति हेमाद्रौ पर्णहरणप्रायश्चित्तम्।

---

(१) आहेति क्रीतपुस्तके नास्ति।
(२) यथेऽपिवा इति क्रीतपुस्तकपाठः।
(३) पारकीयाणि इति लेखितपुस्तकपाठः।
(४) हत्वा इति क्रीतपुस्तकपाठः।
(५) स्तेयादीनां इति क्रीत-लेखितपुस्तकपाठः।

अथेन्धनहरणप्रायश्चित्तमाह[1] ।

देवलः—

इन्धनं दारुकाष्ठं वा समिधोदर्भसञ्चयान्[2] ।
स्रुक्स्रुवादीनि पात्राणि यज्ञसाधनहेतवे ॥
अरणीं यूपस्तम्भं वा परकीयं द्विजोहरेत् ।
स गत्वा नरकं घोरं क्रमिः समिधपूरितः ॥

जाबालिः—

स्रुक्स्रुवादीनि पात्राणि समिधोदर्भसञ्चयान् ।
[ अरणीं यूपस्तम्भं वा परकीयं द्विजोहरेत् ॥
स गत्वा नरकं घोरं क्रमिः समिधपूरितः । ]
तस्य निष्कृतिरुत्पन्ना महापापप्रणाशिनी ॥
इध्मसंग्रहणे राजन् शतमष्टोत्तरं जपेत् ।
स्रुक्स्रुवादिषु पराक [3]मरण्यां तप्तमीरितम् ॥
यूपस्तम्भे च चान्द्रं स्याद् इन्धने गव्यभक्षणम् ।
दर्भेषु भारमात्रेषु प्राजापत्यं विधीयते ॥

शेषं पूर्ववत् ।

इति हेमाद्रौ इन्धनाऽऽदिहरणप्रायश्चित्तम् ।

---

(१) आहेति श्रीतपुस्तके नास्ति ।
(२) दर्भसञ्चये इति लेखितपुस्तकपाठः ।
[ ] अयं श्लोकः श्रीत-काशीपुस्तकयोर्नोपलभ्यते ।
(३) आरण्यां इति लेखितपुस्तकपाठः ।

## अथ जलहरणप्रायश्चित्तमाह[1]।

मनुः—

[2]परकीयं जलं हृत्वा केदारार्थं द्विजोयदि।
आरामपोषणार्थाय अथवा प्राणाह्वये।
सएव नरकं गत्वा मण्डूकोजायते भुवि।

गालवः—

आरामपोषणार्थं वा केदारार्थं जलं हरेत्।
[3]परकीयं द्विजोयस्तु तस्यैव नरके स्थितिः॥
तदन्ते भुवमासाद्य मण्डूकोजायते महान्[4]।
तस्य दोषोपशान्त्यर्थं प्रायश्चित्तमुदीरितम्॥
एकेऽह्नि शतगायत्री मासे तद्दशधा स्मृतम्।
वत्सरे त्वयुतं प्रोक्तमतऊर्द्ध्वं न निष्कृतिः॥
तृषार्त्तोयदि योविप्रस्तावन्मात्रं हरेद्यदि।
पीत्वा पश्चाद्द्विजाचान्तोऽथ शतं नामत्रयं जपेत्॥
स्नानादीनां पूर्व्ववत्।

इति हेमाद्रौ जलहरणप्रायश्चित्तम्।

---

(१) आहेति श्रीतपुस्तके नास्ति।
(२) पारकीयं इति केषाञ्चित्पुस्तकपाठः।
(३) पारकीयं इति केषाञ्चित्पुस्तकपाठः।
(४) भुवि इति श्रीतकाशीपुस्तकपाठः।

## अथ भक्ष्य-भोज्यहरणप्रायश्चित्तमाह[1] ।

देवलः—

अपूपं माषसम्भूतं तथा मुद्गसमुद्भवम् ।
गोधूमानां विकाराणि भक्ष्याणि विविधानि वै[2] ॥
संयावं परमान्नं च चित्रान्नानि कृशराणि च ।
चोष्यं लेह्यञ्च पेयञ्च [3]चित्रशाकानि यानि च ।
[4]परकीयं द्विजो मोहाज्जिह्वाचापल्यतो हरेत् ॥
तस्यैव जिह्वा पतति यमलोके सुदारुणे ।
स पश्चाद्भुवमासाद्य वायसोऽभून्न संशयः ॥

जावालिः—

गोधूमसम्भवं चैव तथा माषोद्भवं हवि ।
मुद्गसम्भवमन्यच्च तथा क्षीरसमुद्भवम् ॥
संयावं परमान्नञ्च चित्रान्नानि [5]कृशराणि च ।
पिष्टरूपाणि यावन्ति तथाफलसमुद्भवम् ॥
तैलपक्वं क्षीरपक्वं [6]गुड़पक्वं तथैव च ।
चोष्यं लेह्यञ्च पेयञ्च [7]चित्रशाकानि यानि च ॥

---

(१) आहेति श्रीतपुस्तके नास्ति ।
(२) विविधानि च इति श्रीतपुस्तकपाठः ।
(३) चित्राशाकानि इति श्रीतपुस्तकपाठः ।
(४) परकीयां इति लेखितपुस्तकपाठः ।
(५) कुशराणि च इति लेखितपुस्तकपाठः ।
(६) गुड़पाकं इति श्रीतपुस्तकपाठः ।
(७) चित्राशाकानि इति श्रीतपुस्तकपाठः ।

[1]परकीयाणि योविप्रोजिह्वाचापल्यवान् हरेत् ।
तस्यैव जिह्वां[2]छिद्येत यमदूतैर्भयङ्करैः ॥
तदन्ते भुवमासाद्य वायसत्वं हि विन्दति[3] ।
[4]तस्यैवं निष्कृतिः[5]स्तेये कथिता मुनिपुङ्गवैः ॥
भक्ष्याऽपहरणे पश्चात् सम्पूर्णं वेदमातरम् ।
भक्ष्ये शतं सहस्रञ्च [6]जपेन्नियमपूर्व्वकम् ॥
चमस्तेयी च विज्ञाने सम्पूर्णं तप्तमाचरेत् ।
एतैः शुद्धिमवाप्नोति पुनर्दत्त्वा स्मृतिं हरेत् ॥

स्त्र्यादीनां पूर्व्ववत् ।

इति हेमाद्रौ भक्ष्य-भोज्यहरणप्रायश्चित्तम् ।

---

(१) पारकीयाणि इति ग्रौतपुस्तकपाठः ।
(२) छिन्द्यात् इति ग्रौतपुस्तकपाठः ।
(३) जायते इति ग्रौत-वेङ्कितपुस्तकपाठः ।
(४) तस्यैव इति वेङ्कितपुस्तकपाठः ।
(५) निष्कृतिरियं इति ग्रौतपुस्तकपाठः ।
(६) जपं इति वेङ्कितपुस्तकपाठः ।

## [1]अथ क्रमुक-रुद्राक्षहरणप्रायश्चित्तमाह ।

देवलः—

रुद्राक्षान् क्रमुकान् पूगान् परकीयान् द्विजोहरेत् ।
सद्यएव द्विजश्चाऽसौ शिवद्रोही प्रजायते ॥
महान्तं नरकं गत्वा जायते भुवि कीटकः ।

मार्कण्डेयः—

क्रमुकान् यस्तु रुद्राक्षान् [2]परकीयान् द्विजाऽधमः ।
क्रयविक्रयलोभेन हरेद्यदि भुवःस्थले ॥
सद्यएव महापापी यमलोकं समश्नुते ।
भुवि पश्चात् स पापीयान् जायते पिट[3]काकृतिः ॥
प्रायश्चित्तमिदं ब्रह्मन् पाराशर्य्येण भाषितम् ।
शतादूर्द्धं तु रुद्राक्षं हृत्वा चान्द्रद्वयं [4]स्मृतम् ॥
शते पराकमल्पे तु गायत्रीजपमाचरेत् ।
शतादूर्द्धं सहस्रं तु क्रमुकं [5]वा हरेद्द्विजः ॥

---

(१) अथ क्रमुकहरणप्रायश्चित्तमिति क्रीतपुस्तकपाठः ।
(२) पारकीयान् इति क्रीतपुस्तकपाठः ।
(३) कीटकाकृतिरिति क्रीत-काशीपुस्तकपाठः ।
(४) चान्द्रायणं स्मृतं इति क्रीतपुस्तकपाठः ।
(५) चः इति वेङ्कि [illegible] पुस्तकपाठः ।

प्राजापत्यञ्च चान्द्रञ्च योजयित्वा यथाक्रमम् ।
मतजङ्घं महापापी निष्कृतिर्नैव विद्यते ॥

स्नानादीनां पूर्व्ववत् ।

इति हेमाद्रौ क्रमुक-वद्राश्वहरणप्रायश्चित्तम् ।

---

## अथ गुड़हरणप्रायश्चित्तमाह[1] ।

मार्कण्डेयः—

गुड़मल्पञ्च[2] भारं वा पारक्यं योद्विजोहरेत् ।
न तस्य पुनरावृत्तिर्यमलोकात् कदाचन ॥
तदन्ते भुवमासाद्य जायते मधुरच्छकः ।

पराशरः—

योविप्रोलोभमोहेन परकीयं गुड़ं हरेत् ॥
अल्पं वा भारमात्रं वा स द्विजो[3] नरकं व्रजेत् ।
भुवि स्थावरतामेत्य तिष्ठत्याचन्द्रतारकम् ॥

भारप्रमाणं पूर्व्वोक्तम् ।

अल्पगुड़े पराकःस्याद् भारे चान्द्रमुदाहृतम् ।
[4]एवं संवत्सरादूर्द्धं पतितोऽभून्न संशयः ॥

बलादीनां पूर्व्ववत् ।

इति हेमाद्रौ गुड़हरणप्रायश्चित्तम् ।

---

(१) आहेति श्रौतपुस्तके नास्ति ।
(२) अल्पन्तु इति श्रौतपुस्तकपाठः ।
(३) विप्रः इति श्रौतपुस्तकपाठः ः
(४) एवं वै वत्सरात् इति श्रौत-काशीपुस्तकपाठः ।

## अथ क्षीरहरणप्रायश्चित्तमाह[1]।



देवलः—

पारक्यमग्निहोत्रार्थमानीतं क्षीरमुत्तमम्।
द्विजोगोद्रव्यलोभेन मुषित्वा पापमाप्नुयात्॥

गौतमः—

पारक्यमग्निहोत्रार्थमानीतं योद्विजोहरेत्।
मुषित्वा पापबाहुल्यमनुभूय भुवः स्थले॥
पशुहीनोभवेत् पापी ज्ञातं कर्म्म [2]स्मरन् विभो।
प्रायश्चित्तमिदं ज्ञात्वा शुद्धो[3] भवति निश्चयः॥
उपोष्य रजनीमेकां परेद्युर्गोजलं पिबेत्।

एतदेकदैव हरणे प्रायश्चित्तम्। अभ्यासे द्विगुणम्। वत्सरान्ते चान्द्रायणम्। दध्यादीनामेवम्।

इति हेमाद्रौ क्षीरहरणप्रायश्चित्तम्।

---

(१) आहेति कोषपुस्तके नास्ति।

(२) अनुस्मरन् इति लिखितपुस्तकपाठः।

(३) शुभोभवति इति कोषपुस्तकपाठः।

अथ दध्याऽऽदिहरणप्रायश्चित्तमाह[1] ।

गौतमः—

दधि तक्रं मधु द्रव्यं[2] पारक्यं घृतमेव च ।
नवनीतं द्विजो हृत्वा नरकं याति दारुणम् ॥
पुनर्भवमुपागम्य पापात्मत्वमवा[3]प्नुयात् ।

जाबालिः—

पारक्यं दधि तक्रं वा नवनीतं घृतं मधु ।
देवतार्थं द्विजार्थं वा विप्रार्थं वा स्वहस्थितम् ॥
द्विजो लोभातुरो यस्तु हरेत् तन्नारमानतः ।
महान्तं नरकं गत्वा भुवि पापात्मतां व्रजेत्[4] ॥
एकवारे दश जपेत् तक्रे दध्नि द्विजोत्तमः ।
नवनीते मधुद्रव्ये ह्यष्टोत्तरशतं जपेत् ॥
द्विवारे तु सहस्रं स्यात् बहुवारेऽयुतं स्मृतम् ।

[5]नवनीतमधुनोर्द्विगुणम् । बहुवारं संवत्सरं चान्द्रायणम् । [6]नवनीते मधुनि च महाचान्द्रायणम् । एतद्वर्षादूर्ध्वम् । घृते विशेषमाह—

---

(१) आहेति श्रीतपुस्तके नास्ति ।

(२) द्रव्यं इति श्रीतपुस्तकपाठः ।

(३) अवाप्यते इति श्रीत-वेंकितपुस्तकपाठः ।

(४) पापात्मवद्भूतं इति श्रीतपुस्तक पाठः ।

(५) नवनीते मधुनोर्द्विगुणं इति वेंकितपुस्तकपाठः ।

(६) नवनीतमधुनो इति श्रीतपुस्तकपाठः ।

पलद्वये सहस्रं स्यात् अयुतं दशसंख्यया ।
शतादूर्द्ध्वं महादेव्याः 'लक्षेणान्तं' विशुध्यति ॥
संवत्सरादूर्द्ध्वं पतितप्रायश्चित्तम् ।

इति हेमाद्रौ दध्याऽऽदिहरणप्रायश्चित्तम् ।

---

(१) लक्षणाल्पेन इति मीतकाचीपुस्तकपाठः ।

## अथ त्रिकटुकहरणप्रायश्चित्तमाह[1]।

देवलः --

मरीचं पिप्पलीं शुण्ठिं सर्व्वरोगहरं वरम्।
सर्व्वपापहरं दिव्यं पारक्यं यो हरेद्द्विजः॥
न तस्य पुनरावृत्तिर्यमलोकात् कदाचन।

जावालिः—

मरीचीं पिप्पलीं शुण्ठिं सर्व्वपापहरं महत्।
सर्व्वरोगहरं पुण्यमपवर्गफलप्रदम्॥
[2]लोभेन योऽहरेत् पापी महान्तं नरकं व्रजेत्।
पलद्वये पराकः स्यात् प्राजापत्यं दशात्मके॥
[3]शते पलेषु चान्द्रं स्यात् सहस्रे स्तेयभाग्भवेत्।

त्रिकटुकस्य पलसहस्रस्तेये [4]स्तेयप्रायश्चित्तं कृत्वा शुद्धिमाप्नोति। स्नानादीनां पूर्व्ववत्।

इति हेमाद्रौ त्रिकटुकहरणप्रायश्चित्तम्।

---

(१) आहेति क्रीतपुस्तके नास्ति।

(२) लुभित्वा इति क्रीत-वेङ्कितपुस्तकपाठः।

(३) शतं फलं तु चान्द्रं स्यात् इति क्रीत वेङ्कितपुस्तकपाठः।

(४) प्राजापत्यं कृत्वा इति क्रीतपुस्तकपाठः।

## अथ रसौषधिहरणप्रायश्चित्तमाह[1] ।

मार्कण्डेयः—

पूर्णचन्द्रोदयं चैव [2]वसन्तकुसुमाकरम् ।
आनन्दभैरवञ्चैव मृगाङ्कं राजपूर्व्वकम् ।
भूपतिं चाग्निपुत्रञ्च स्वर्णभस्म तथैवच ॥
ज्वराङ्कुशं विदाहञ्च तथा ग्रहकवाटकम् ।
अन्यान्यौषधजालानि शम्भुवीजोद्भवानि च ॥
गन्धकं पार्व्वतीवीजं सिन्दूरं हरितालकम् ।
अभ्रकं तालकञ्चैव कुसुमं वाऽऽम्रसम्भवम ॥
लाक्षातैलं हस्तिगन्धं कुष्माण्डं सघृतं तथा ।
एतेष्वन्यतमं हृत्वा द्विजश्चाण्डालतां [3]भजेत् ॥

तेषु च औषधेषु मध्ये एकं वा विप्रोहरेत् तस्य प्रायश्चित्तमाह

गौतमः—

रसौषधानि योहृत्वा द्विजः पापं विदन्नपि ।
स्तेयदोषोपशान्त्यर्थं प्रायश्चित्तं स[4] आचरेत् ॥
प्राजापत्यं निष्कमात्रे स्वर्णमात्रे विधुं चरेत् ।
पलमात्रे भुवः क्रान्तिं द्विपले पतितोभवेत् ॥

---

(१) आहेति क्रोतपुस्तके नास्ति ।
(२) वसन्तं कुसुमाकरं इति क्रोतपुस्तकपाठः ।
(३) व्रजेत् इति क्रोतपुस्तकपाठः ।
(४) प्रायश्चित्तमुदीरितं इति क्रोत-वेदितपुस्तकपाठः ।

भुवः क्रान्तिं भूप्रदक्षिणम् । ¹एवमादिषु व्रतादीनामेवं वेदितव्यम् ।

इति हेमाद्रौ रसोर्वीविक्रयणप्रायश्चित्तम् ।

---

(१) एवं व्रतादिषु इति केचित्पुस्तकपाठः ।

अथ गृहोपकरणाऽऽदिहरणप्रायश्चित्तमाह[1]।

गौतमः—

[2]मुसलं दृषदञ्चैव उलूखलमनन्तरम्।
वरठं वेणुपात्रञ्च शूर्पं दाम तथैवच॥
[3]हृड्हिलञ्च निश्रेणीं [4]मृन्मयं भाण्डमेवच।
दारुपात्रं कुण्डलिनीं योहरेद्द्विजनायकः॥
न तस्य निष्कृतिर्नास्ति पुनः संस्कारमर्हति।

पुनः संस्कारइति पटगर्भसंस्कारः[5]॥

यज्ञोपवीतद्वितयं गायत्रीदानमेव च।
ब्रह्मोपदेशोविहितः पञ्चगव्यमनन्तरम्॥
उपासनं प्रकर्त्तव्यं पुनः कर्म्मणिप्रवर्त्तते।

यत्र यत्र पुनः कर्म्मपातः तदाह--

देवलः—

यत्र यत्र पुनः कर्म्म मुनिभिः परिकीर्त्तितम्।
तत्रैव पटगर्भश्च विरजाहोमएव च॥
ब्रह्मोपदेशोगायत्री पञ्चगव्यमतः परम्।
पाणिग्रयोदग्रश्चैव पुनः संस्कारउच्यते॥

तदाह

---

(१) आहेति क्रीतपुस्तके नास्ति।
(२) मुषलं इति वेंकितपुस्तकपाठः।
(३) हृड्हिकाञ्च इति क्रीतपुस्तकपाठः।
(४) मृण्मयं इति क्रीतपुस्तकपाठः।
(५) पटगर्भप्रकार इति वेंकितपुस्तकपाठः।

मनुः—

मुनिभिर्यत्र '(१)चोक्तं स्यात् पुनः संस्कारमादरात् ।
पटगर्भविधानेन तत्र तत्रैव कारयेत् ॥

षोड़शमहादानेषु तत्तद्दान'(२)प्रतिग्रहे पटगर्भविधानेन सर्व्वं कुर्य्यात् ।

इति हेमाद्रौ गृहोपकरणाऽऽदिहरणप्रायश्चित्तम् ।

---

(१) यत्र चोक्तं इति क्रीतपुस्तकपाठः।

(२) तत्तद्दाना प्रतिग्रहे इति क्रीतपुस्तकपाठः ।

## अथ शस्त्राऽऽदिहरणप्रायश्चित्तमाह[1] ।

देवलः—

कुन्तं खड्गञ्च परशुं भिन्दिपालं[2] धनुस्तथा ।
शस्त्रं खनित्रं मुसलं चक्रं खेटकसंज्ञितम् ॥
तूणीरं भिन्दिपालञ्च [3]गदादण्डं तथैवच ।
एतानि शस्त्रजालानि हरेद्विप्रः सकृद्यदा ॥
महापातकमासाद्य नरके वासमश्नुते ।

[4]भारद्वाजः—

शस्त्रं खनित्रं मुसलं खेटकं लाङ्गलं तथा ।
[ तूणीरं भिन्दिपालञ्च गदादण्डं तथैवच ॥ ]
कुन्तं खड्गञ्च परशुं शङ्कु शल्यं धनुस्तथा ।
एतानि शस्त्रजालानि हिंसाहेतूनि योद्विजः ॥
हरेन्नरकमाप्नोति कारुकोभुविजायते ।
एतद्दोषोपशान्त्यर्थं प्रायश्चित्तं समाचरेत् ॥
प्राजापत्यं विदित्वा तु अज्ञानात् यावकं चरेत् ।
पश्चाद्धि पञ्चगव्यस्य प्राशनं विधिपूर्व्वकम् ॥

---

(१) आहेति क्रोतपुस्तके नास्ति ।
(२) भिन्दिपालं इति क्रोतपुस्तकपाठः ।
(३) गदां इति क्रोतपुस्तकपाठः ।
(४) भरद्वाज इति क्रोत-काशीपुस्तकपाठः ।
[ ] इदं श्लोकार्द्धं क्रोत-काशीपुस्तकयोर्नोपलभ्यते ।

तत्तत् ज्ञात्वा द्विजः शूद्रःक्षत्रियोऽपि यदा हरेत् ।
[1]विप्राच्च द्विगुणं कुर्य्यात् सर्व्वतः पापशान्तये ॥

स्त्रीणामर्द्धं वेदितव्यम्--

इति हेमाद्रौ यज्ञाऽऽदिहरणप्रायश्चित्तम् ।

(१) विप्रवत् इति ग्रीतङ्गपुस्तकपाठः ।

## अथ मार्गनिरोधप्रायश्चित्तमाह[1] ।

देवलः—

योविप्रः पतितैः सार्धमरण्ये[2] मार्गमध्यतः ।
वस्त्रं धान्यं धनं ताम्रं पात्राऽऽदिकमुपाहरेत् ॥
स विप्रोनरकं गत्वा कालसूत्रमवा [3]प्नुयात् ।
तदन्ते भुवमासाद्य [4]भिन्नजातित्वमाप्नुयात् ॥

मार्कण्डेयः—

विप्रोमलिम्लुचैः सार्धमरण्ये मार्गरोधकृत् ।
वस्त्रं धान्यं धनं ताम्रं पात्राऽऽदिकमुपाहरेत् ॥
स विप्रोयमलोकेऽथ महद्भयमवाप्य च ।
भुवमासाद्य पापात्मा भिन्नवान् जायते भुवि ॥
तस्य दोषोपशान्त्यर्थं प्रायश्चित्तमिदं स्मृतम् ।
[ एकाह्न दिवसे राजन् प्राजापत्यमुपाश्रितम् ॥ ]
मासे चान्द्रव्रती प्रोक्तं महाचान्द्रमुदीरितम् ।
वत्सरान्ते मुनिश्रेष्ठ सुवर्णस्तेयमाप्नुयात् ॥

---

(१) आहेति श्रौतपुस्तके नास्ति ।
(२) अरण्ये इति वेंकितपुस्तकपाठः ।
(३) समाप्यते इति श्रौतवेंकितपुस्तकपाठः ।
(४) जायते भुवि रोगवान् इति श्रौतपुस्तकपाठः ।
[ ] इदं श्लोकार्धं वेंकितपुस्तके नास्ति ।

वत्सरान्तं सुवर्णस्तेयप्रायश्चित्तं कृत्वा शुद्धिमाप्नोति । क्षत्रियादीनां पूर्व्ववत् ।

इति हेमाद्रौ मार्गनिरोधप्रायश्चित्तम् ।



## अथ तटाकाऽऽदिहरणप्रायश्चित्तमाह[1]।

देवलः—

[2]तटाकं कूपकासारौ वनं क्षेत्रं द्विजोऽहरेत्।
बलाद्वा चौर्य्यरूपेण हीनमूल्येन वा नृप॥
तस्य वै निष्कृति र्नास्ति यमलोकात्कदाचन।
तदन्ते भुवमासाद्य जायते [3]कुक्षिरोगवान्॥

मात्स्ये—

वनं तटाकं कूपं वा कासारं क्षेत्रमेव वा।
पारक्यं यो द्विजोमोहात् मुष्णाति द्रव्यलोभतः॥
हीनमूल्येन चौर्य्येण बलाद्वा [4]ग्रामणीयतः।
न तस्य पुनरावृत्तिर्यमलोकाद् भयङ्करात्॥
ततोभुवमुपागम्य कुक्षिरोगीह जायते।
तस्यैव निष्कृतिरियं मुनिभिः परिकीर्त्तिता॥
तप्तं सत्वत् द्विजोऽत्वा पराकं वत्सरे स्मृतम्।
पतजर्हं शृणुष्वेदं स्वर्णस्तेयीति कथ्यते॥

---

(१) तड़ागाऽऽदिहरणप्रायश्चित्तमिति क्रीतपुस्तकपाठः।

(२) तड़ागं इति क्रीतपुस्तकपाठः।

(३) भुवि रोगवान् इति क्रीत-लेखितपुस्तकपाठः।

(४) ग्रामणो यतः इति क्रीतपुस्तकपाठः।

संवत्सरादूर्द्धं [1]स्वर्णस्तेयप्रायश्चित्तं कृत्वा शुध्यतीति तात्पर्य्यम्। क्षत्रियादीनां पूर्व्ववत् ।

इति हेमाद्रौ [2]तटाकादिहरणप्रायश्चित्तम् ।

---

(१) स्तेयप्रायश्चित्तमित्येव वेचितपुस्तकपाठः ।

(२) तडागादीनि क्रीतपुस्तकपाठः ।

## अथ परिधानप्रतिग्रहप्रायश्चित्तमाह[1] ।

देवलः—

ग्रामणीः प्राड्विवाकश्च राजद्वारे पुरोहितः ।
मन्त्री राजगृहे राजन् स वा यजनमार्गतः[2] ॥
प्रजाभ्यः कार्य्यसिद्ध्यर्थं मूल्यं भागार्हतः क्रमात् ।
योऽहरेत् सततं पापी स वै नरकमश्नुते ॥

मार्कण्डेयः—

[3]मन्त्री राजगृहे तात राजद्वारे पुरोहितः ।
ग्रामणीः प्राड्विवाकश्च गृहक्षेत्रादिषु क्रमात् ॥
प्रजाभ्योमूलहारी[4] यस्तासां कार्य्याऽभिहत्तये ।
सएव नरकस्थायी यावदाभूतसंप्लवम् ॥
तदन्ते भुवमासाद्य मार्ज्जारत्वमवाप्नुयात् ।

गौतमः—

[5]राजा भारमनुद्दाहे ? प्राड्विवाकः पुरोहितः ।
ग्रामणीर्ग्राममध्ये यः चत्वारः पापभागिनः ॥
प्रजाभ्योधनमादाय दद्याद् दानादिकं द्विजः ।
नरकस्थानमासाद्य मार्ज्जारोजायते भुवि ॥

---

(१) आहेति क्रोतपुस्तके नास्ति ।
(२) सर्व्वाजननमार्गतः इति लेखितपुस्तकपाठः ।
(३) मन्त्रिराजगृहे इति लेखितपुस्तकपाठः ।
(४) मूल्यहारिवे इति लेखितपुस्तकपाठः ।
(५) राज्ञा इति क्रोतलेखितपुस्तकपाठः ।

पापं प्रतिग्रहीतुभ्यस्तदर्द्धं तत्पुरोहितः ।
ग्रामणीः सकलं पापं मन्त्री कार्य्याऽनुसाधने ॥
तत्पापं सकलं प्राप्य यमकूपे निमज्जति ।
गृहक्षेत्रादिषु स्थित्वा दर्शनार्थं धनं हरेत् ॥
दातुः सर्व्वाणि पापानि तत्क्षणादाप्नुयात्स वै ।
एकवारे तु चान्द्रं स्यात् राजद्वारे पुरोहिते ॥
महाचान्द्रं द्विवारे तु त्रिवारे (१)स्वर्णहार्य्यसौ ।
प्राड्विवाकस्य कथिता निष्कृतिः (२)पापहारिणी ॥
रूपके पञ्चगव्यं स्यात् प्राजापत्यं तु निष्कके ।
स्वर्णमात्रे तु चान्द्रं स्यात् (३)ततो नास्तीति निष्कृतिः ॥

पूर्व्वोक्ताश्चत्वारः [ स्वेतत्प्रायश्चित्तं परिशोध्य ] तत्तत्प्रायश्चित्तं कृत्वा शुद्धिमाप्नुयुः । वर्षादूर्द्धं पतिताएव, प्रायश्चित्तं कृत्वा शुद्धिमाप्नुयुः । नोचेन्न शुद्धाः । धान्यवस्त्रादिहरणेऽप्येवमेव पर्द्धपादक्रमेण योजनीयम् । क्षत्रियादीनां पूर्व्ववत् ।

इति हेमाद्रौ परिधानप्रतिग्रहप्रायश्चित्तम् ।

(१) स्वर्णं इति क्वचित्पुस्तकपाठः ।
(२) पापहारिणि इति क्वचित्पुस्तकपाठः ।
(३) ततो नास्ति च निष्कृतिः इति क्वचित्पुस्तकपाठः ।
[ ] चिह्नान्तर्गतः पाठः क्वचित्काशीपुस्तकयोर्नोपलभ्यः ।

## अथ कूटसाक्षिप्रायश्चित्तमाह[1]।

देवलः—

व्यवहारे च कलहे प्रायश्चित्तादिकर्म्मसु।
कूटसाक्ष्यं द्रव्यलोभाद् यो विप्रोवदतेऽनृतम्॥
तस्य पुत्राश्च पौत्राश्च तदा नष्टत्वमाप्नुयुः।
यमलोकमुपागम्य अनुभूय महद्भयम्।
पुनर्भुवमुपागम्य पुत्रहीनोहि जायते॥

मार्कण्डेयः—

व्यवहारेषु कलहे प्रायश्चित्तादिकर्म्मसु।
धनं गृहीत्वा योविप्रः कूटसाक्ष्यं[1] वदेत चेत्॥
तस्यैव [2]पुत्रपौत्राश्च तदा नष्टत्वमाप्नुयुः।
यमलोकादुपागम्य निष्पुत्रत्वमवाप्नुयात्॥
तस्य देहविशुद्ध्यर्थं महाचान्द्रमदीरितम्।

धर्म्मशास्त्रेष्वनृतमुक्त्वा द्विजवादे[3] महाचान्द्रं प्रायश्चित्तम्। धर्म्मशास्त्रेष्वनृते प्राजापत्यम्। इतरत्र कायकृच्छ्रम्। तदाह

मनुः—

द्विजवादे महाचान्द्रं धर्म्मशास्त्रे तदर्द्धतः।
इतरेषु विवादेषु कायकृच्छ्रं समाचरेत्॥

---

(२) आहेति क्वॉतपुस्तके नास्ति।
(१) कूटसाक्षि इति लेखितपुस्तकपाठः।
(२) पुत्राः पौत्राश्च इति क्वातपुस्तकपाठः।
(३) द्विजनादे इति क्वॉतपुस्तकपाठः।

अनृते तप्तकृच्छ्रं स्यात् मौल्यं धृत्वा द्विजाधमे[1] ।
अनृते रूपकं शतं राजा तं दण्डयेत् सुधीः ॥

इति हेमाद्रौ कूटसाक्षिप्रायश्चित्तम् ।

---

(१) द्विजातय इति श्रीतपुस्तकपाठः ।

## अथ पुस्तकाऽऽदिहरणप्रायश्चित्तमाह[1] ।

देवलः—

पुस्तकं फलकं सूत्रं [2]लेख्यं बन्धनमेव च ।
अपहर्त्ता द्विजो यस्तु स महापापमाप्नुयात् ॥
भूलोकं समुपागम्य [3]महामूकोभवेदिह ।

महानारदीये—

लेख्यं सूत्रं बन्धनं वा पुस्तकं फलकं तथा ।
हृत्वा वै ब्राह्मणो [4]लोभान् नरकं याति दारुणम् ॥
भूलोकं समुपागम्य महामूकोभवेदिह ।
तत्तद् द्रव्यं पुनर्दत्त्वा पश्चात्तापसमन्वितः ॥
प्राजापत्यं चरेत् कृच्छ्रं तदा देहविशुद्धये ।
एतेन शुद्धिमाप्नोति नान्यथा शुद्धिरिष्यते ॥

इति हेमाद्रौ पुस्तकाऽऽदिहरणप्रायश्चित्तम् ।

---

(१) आहेति क्रीतपुस्तके नास्ति ।
(२) लेखनबन्धनमिति लेखितपुस्तकपाठः ।
(३) मूकोभवितुमर्हति इति लेखितपुस्तकपाठः ।
(४) यस्तु द्विजोलोभात् इति लेखितक्रीतपुस्तकपाठः ।

302 अथ [1]शालग्रामाऽऽदिहरणप्रायश्चित्तमाह ।

देवलः—

[2]शालग्रामं [3]शिवलिङ्गं प्रतिमां चक्रपाणिनः[4] ।
घण्टामुपस्करं विप्रायो हरेत् पातकोत्तमः ॥
देवद्रोही स विज्ञेयः सर्व्वधर्म्मबहिष्कृतः ।
मृत्वा नरकमाप्नोति जायते भुवि चौरयान्[5] ॥

मार्कण्डेयः—

[6]शालग्रामं [7]शिवलिङ्गं प्रतिमां चक्रपाणिनः[8] ।
घण्टामुपस्करं विप्रोयोहरेत् पापबुद्धिमान् ॥
नरकं दारुणं गत्वा जायते भुवि जारजान् ।
तस्यैव निष्कृतिरियं कथिता मुनिपुङ्गवैः ॥
[9]शालग्रामं तु चान्द्रं स्यात् शिवलिङ्गे तथैवच ।
[ रत्नलिङ्गे महाचान्द्रं प्रतिमायां तथैवच ॥ ]

---

(१) मालग्राम इति लेखितपुस्तकपाठः ।
(२) साच इति लेखितपुस्तकपाठः ।
(३) बाणपाषाणशिलां इति क्रीतपुस्तकपाठः ।
(४) चक्रपाणिनं इति लेखितपुस्तकपाठः ।
(५) रौरवान् इति क्रीतपुस्तकपाठः ।
(६) साच इति क्रीतपुस्तकपाठः ।
(७) बाणपाषाणशिलां विष्णुं इति क्रीतपुस्तकपाठः ।
(८) चक्रपाणिनं इति लेखितपुस्तकपाठः ।
(९) साच इति लेखितपुस्तकपाठः ।
☐ पर्व पाठः क्रीत-वाणीपुस्तकयोर्नास्ति ।

प्राजापत्यं चक्रपाणौ इतरेषु तथैवच ।
एतेन शुद्धिमाप्नोति नान्यथा गतिरस्तिहि ॥

स्त्रीणामर्द्धं क्षत्रियादीनां पूर्व्ववत् ।

इति हेमाद्रौ शालग्रामाऽऽदिहरणप्रायश्चित्तम् ।



इति मलिनीकरणप्रायश्चित्तम् ।



## अथाऽपात्रीकरणप्रायश्चित्तम् ।



## अथ चाण्डालीगमनप्रायश्चित्तमाह[1] ।

देवलः—

चाण्डालीं ब्राह्मणोगत्वा पञ्चबाणातुरः सकृत् ।
तस्यैव निष्कृतिर्नास्ति [2]कारीषाग्निवधादृते[3] ॥

एतदज्ञानात् सकृद्गमनविषयम् ।

मार्कण्डेयः—

ब्राह्मणोयस्तु चाण्डालीमज्ञानाद् रन्तुमुत्मनाः ।
गत्वा तत्र महत् पापं कृत्वा तत्र वधोऽग्नितः ॥

अग्निवधइति कारीषवधः । चाण्डालीगमने हेतुमाह [4]कामातुराणाम् ।

कुचौ मुखविलासश्च दृष्टि [5]र्भाषाः शिरोरुहाः ।
एतान् विलासान् चाण्डाल्या दृष्ट्वा तत्र प्रवर्त्तते ॥
मातृतः पितृतश्चैव कुलमेकोत्तरं शतम् ।
नरके निवसत्येव यावदाभूतसंप्लवम् ॥

---

(१) आहेति क्रीतपुस्तके नास्ति ।

(२) कारीषात्मवधादिति केशितपुस्तकपाठः ।

(३) इति इह क्रीतपुस्तकपाठः ।

(४) कामकामातुराणां इति क्रीतपुस्तकपाठः ।

(५) भाषा इति क्रीतपुस्तकपाठः ।

अतस्तद्दर्शनं भाषां वर्ज्जयन्ति महौजसः।

मत्स्यपुराणे—

द्विजोयः प्रत्यहं पापी चाण्डालीं मनसा स्मरन्।
रमिष्यामीति [1]मोहेन स्मृत्वा पूर्व्वं तदुद्भवान्॥

विलासानित्यर्थः।

सकृत् स्मरणमात्रेण महान्तं नरकं व्रजेत्।

गमने विशेषमाह।

भारद्वाजः—

चाण्डाल्या[2] गमनं कुर्य्यां गमिष्यामि तदालयम्।
इति योमनसि स्थाप्य गमनाय[3] उपक्रमेत्॥
पदे पदे ब्रह्महत्यापापमेव समश्नुते।
यमलोके महत्कष्टं [4]प्राप्नोति महदद्भुतम्॥

यमदण्डप्रकारमाह।

महाराजविजये—

छिनत्ति पादौ गमने जिह्वाच्छेदं वचस्यपि।
आलिङ्गने हृदि च्छेदः कुचयोः पीड़ने करौ॥
चुम्बने [5]दन्तघातः स्यात् तत्सङ्गे शिश्नमोचनम्।
एवं परोक्षे कुरुते यमोनास्त्यत्र संशयः॥

---

(१) यो बुद्ध्या इति क्रीतपुस्तकपाठः।
(२) चाण्डालीगमनं इति क्रीतपुस्तकपाठः।
(३) गमनायोपचक्रमे इति लेखितपुस्तकपाठः।
(४) अवाप्य इति क्रीत-लेखितपुस्तकपाठः।
(५) दण्डघातः इति क्रीतपुस्तकपाठः।

गौतमः—

दिनमेकन्तु चाण्डालीं गत्वा विप्रः स्वमालयम् ।
सर्व्वेषां स्पर्शनं कृत्वा पापं मनसि [1]गूहयन् ॥
ते सर्व्वे समतां यान्ति दिनमेकमिदं ततः[2] ।
तेनैव सहसंसर्गमवाप्य गृहवासिनः ॥
कृत्वा [3]तत्साम्यमापुस्ते विचार्य्यैव प्रवर्त्तयेत् ।
मासमेकं महापापी गृहे सङ्करकृत् सदा ॥
[4]एतैर्जनैर्बहिष्कार्य्योयथा ज्ञातोमहाजनैः ।
तद्गृहस्था यदा ग्रामे ज्ञात्वा संसर्गमाप्नुयुः॥
ग्रामस्थास्ते जनाः सर्व्वे यथा[5] ज्ञाता जनैस्तथा ।
ग्रामं दग्ध्वा तु निःशेषं कृत्वा प्रायोपवेशनम् ॥
मतिर्वामरणं तेषां [6]तद्गृहस्थैर्विना सदा ।

देवीपुराणे—

तीर्थे [7]महाजनामत्ते ह्यग्निदाहे महाभये ।
द्विजोगत्वा तु चाण्डालीं सहहत्वा तु शङ्खिनीम् ॥
चाण्डालीं तु [8]पुनर्मत्वा देहशुद्धिं यदीच्छति ।

---

(१) गूहयान् इति लेखितपुस्तकपाठः ।
(२) यतः इति लेखितपुस्तकपाठः ।
(३) तत्साम्यमापुस्ते इति क्रीतपुस्तकपाठः ।
(४) पुते इति लेखितपुस्तकपाठः ।
(५) यथा ज्ञातोजनैरिति लेखितपुस्तकपाठः ।
(६) तद्गृहस्थे विनाकृता इति लेखितपुस्तकपाठः ।
(७) महाजनामत्तेऽग्निदाहे इति लेखितपुस्तकपाठः ।
(८) पुनर्गत्वा इति क्रीतपुस्तकपाठः ।

तदा मनः समाधाय चापाग्रे प्रत्यहं मुदा।
स्नानेन वासमात्रेण शुद्धिमाप्नोति पूर्व्वजः॥

नारदः—

[1]चाण्डालीति द्विजः पूर्व्वमज्ञात्वा कामपीड़ितः।
पश्चाज् ज्ञात्वा तु चाण्डालीं शुद्धिमिच्छन् मनस्यतः॥
गामर्भतुमुपागम्य चापाग्रे प्रत्यहं शुचिः।
प्रातः स्नात्वा मासमात्रं पूर्व्वजः शुद्धिमाप्नुयात्॥

गौतमः—

द्विजः कामातुरो गच्छेदविचार्य्य जनङ्गमाम्।
पश्चाच [2]चाण्डालजायेति ज्ञात्वा शुद्धिपरायणः॥
[3]मखर-अनुष्कादयां प्रातः स्नानाद्विशुध्यति।
मासमात्रेण राजेन्द्र नान्यथा शुद्धिरिष्यते॥

जावालिः—

[3]चाण्डालीं रूपसम्पन्नां दृष्ट्वा विप्रः सकृद्व्रजन्।
स [4]चाण्डालसम्भोक्त्रेयः कारीषवधमर्हति॥
एकस्मिन् दिवसे राजन् द्विवारं रमते द्विजः।

---

(१) चण्डालीति लेखितपुस्तकपाठः।
(२) चण्डालजाया इति लेखितपुस्तकपाठः।
(३) चण्डालीं इति लेखितपुस्तकपाठः।
(४) चण्डालसङ्गः इति लेखितपुस्तकपाठः।

मातृगामी स विज्ञेयः राजा तं दण्डयेन्मुदा ।
शिश्नं सवृषणं च्छित्त्वा [1]निर्वास्योविषयाद्बहिः ॥

आतुर्य्यः—

द्विजश्चाण्डालसंसर्गं ज्ञात्वा[2] कृत्वा विचारयन् ।
मासं वा बहुमासं वा पक्षं वापि दिनत्रयम् ॥
प्रत्यहं [3]स्वाऽऽस्थिते ग्रामे गृहे वा मेलनं चरेत् ।
ज्ञात्वा तथैव ग्रामस्थास्ते सर्व्वे गृहवासिनः ॥
ग्रामं गृहं तदा दग्ध्वा अर्पयेयुर्नृपाय तम्[4] ।
राजा सम्यग्विचार्य्याऽऽथ दण्डयेत् पूर्व्ववत् क्रमात् ॥
निर्व्वास्योविषयाद्राज्ञा यावत् प्राणावधारणम्[5] ।
तेन शुद्धिमवाप्नोति नान्यथा गतिरस्ति हि ॥
दिनत्रये तु संसर्गं ग्रामे वा स्वगृहेऽपि वा ।
क्षालयित्वा [6]ततोऽश्भिर्मृन्मयानि परित्यजेत् ॥
सर्व्वं सचेलं स्नात्वा तु चक्रधातार[7]मुत्तमम् ? ।
दशरात्रेण संसर्गं शोधयित्वा गृहादिकान् ॥

---

(१) निर्व्वास्यः इति केचितपुस्तकपाठः ।
(२) स्मृत्वा इति क्रीत-केचितपुस्तकपाठः ।
(३) स्वास्थितं इति केचितपुस्तकपाठः ।
(४) राज्ञे तं विनिवेदयेत् इति क्रीतपुस्तकपाठः विनिवेदयेदित्यत्र प्रत्यवेदयत् इति केचितपुस्तकपाठः ।
(५) प्राणावधारणः इति केचितपुस्तकपाठः ।
(६) ततोविप्रइति केचितपुस्तकपाठः ।
(७) चक्रधारं तमुत्तमं इति क्रीतपुस्तकपाठः ।

ते सर्व्वे पूर्व्ववत् स्नात्वा षड़ब्दं कृच्छ्रमाचरेत्।
मासमात्रेण संसर्गे निवासान् शोधयेत्तदा॥
स्नात्वा तु विधिवत्तत्था तत्र [1]कृच्छ्रशतं चरेत्।
वर्षमात्रेण संसर्गे सहशय्याऽऽसनादिभिः॥
दग्ध्वा गृहांश्च निःशेषान् ते सर्व्वे पतितास्तदा।
यदा शुद्धिमभीप्सन्तस्तदा ते विप्रपुङ्गवाः॥
पतितस्य यथाप्रोक्तं मुनिभिः सत्यवादिभिः।
[2]तद्वै कुर्य्युस्तदा सर्व्वं नान्यथा शुद्धिमाप्नुयुः॥

नागरखण्डे—

यदा यदा द्विजोराजन् पञ्चवाणातुरः सदा[3]।
चाण्डालीं यदि पापात्मा रन्तुकामोगृहं व्रजेत्॥
तया सह यदा कुर्य्यात् संसर्गं [4]लोकगर्हितम्।
दिनत्रये स पापीयान् कारीषवधमर्हति॥
दशरात्रं रन्तुकामः चाण्डालीं पापरूपिणीम्।
[5]स्वमुष्कं सहसाच्छित्त्वा दक्षिणां दिशमन्वियात्॥
स्मृतः शुद्धिमवाप्नोति नाऽन्यथा कुरुनन्दन।
तद्गर्भधारणे विप्रोवर्षादूर्द्ध्वं स पापभाक्॥
चाण्डालसदृशः साक्षात् पितृभिः सह मज्जति।

---

(१) शतं इति क्रीतपुस्तकपाठः।
(२) तत्कर्त्तव्यं इति क्रीत-लेखितपुस्तकपाठः।
(३) तदा इति लेखितपुस्तकपाठः।
(४) लोकविद्विषं इति क्रीतलेखितपुस्तकपाठः।
(५) स्वमुष्कं इति लेखितपुस्तकपाठः।

मनुः —

अज्ञानात् मुखजः पूर्व्वं चाण्डालीति न संस्मरन् ।
रमयामास कामार्त्तः पश्चाज् ज्ञाते तु तत्कथम् ॥
रेतःसेकात् द्विजः पूर्व्वं ज्ञात्वा [1]चाण्डालचेष्टया ।
सचैलं स्नानमासाद्य विप्रेभ्यो [2]ज्ञापयेन्मुदा ॥
तदनुज्ञामवाप्याऽथ चापायं वेगतोव्रजेत् ।
प्रातः स्नात्वा मासमात्रं शुद्धिमाप्नोति पूर्व्वजः ॥
तस्योपनयनं प्रोक्तं पटगर्भविधानतः ।
ज्ञात्वा द्विजस्तु चाण्डालीं सकृद्गच्छेद्दिनं मुदा ॥
[3]घृतेनाऽऽलिप्तदेहः सन् कारीषवधमाचरेत् ।
दिनत्रयं यदा गच्छेत् व्रीहीणां रज्जुभिस्तया ॥
सर्व्वाङ्गं वेष्टयित्वा च राजा तं दाहयेत्तदा ।
मासमात्रं द्विजोगच्छेद् ग्रामे संसृष्टिमाचरन् ॥
राजा तन्मुष्कमाच्छिद्य निधायाऽथ तदञ्जलौ ।
[4]प्रेषयेद्दक्षिणामाशां [5]तदा शुद्धिमवाप्नुयात् ॥
ग्रामस्थाः पूर्व्ववद् गेहान् दग्ध्वा सर्व्वं हि पूर्व्ववत् ।
तद्गर्भधारणाद्विप्रो रक्तुकामोजनक्रमाम् ॥

---

(१) चाण्डालचेष्टया इति लेखितपुस्तकपाठः ।

(२) ज्ञापयेत् मुदा इति लेखितपुस्तकपाठः ।

(३) घृतेन लिप्तदेहः इति क्रीतपुस्तकपाठः ।

(४) प्रेषयेत् इति लेखितपुस्तकपाठः ।

(५) ततः शुद्धिमवाप्नुयात् इति क्रीतपुस्तकपाठः ।

राजा भृत्यैः समानीय विचार्य्य बहुवासरैः।
शकटं तं समारोप्य [1]चाण्डालैरसिपाणिभिः॥
[2]तन्मांसं तैस्त्वथ शिछत्वा मुदा तं भक्षयेत्पुरे।
अटित्वा घोषयन् वाद्यं पुरद्वारे विसर्ज्जयेत्॥
मृत्वा शुद्धिमवाप्नोति न दाहोनोदकक्रिया।

गौतमः—

विप्राङ्गना यदा दैवाद् रन्तुकामा जनङ्गमम्।
तस्या अपि प्रकर्त्तव्यं प्रायश्चित्तमिदं द्विजैः।
क्षत्रियशौद्रजोगच्छेत् विप्रस्यार्द्धं प्रकल्पयेत्॥

द्विजाङ्गनायाः शङ्कायां तदा समस्तं गर्भधारणाऽऽदिकं विचार्य्य राजा कर्णनासिके च्छेदयित्वा प्रवासयेत्। तस्या [3]न वधः स्त्रीत्वात्। तदेवाह।

जाबालिः—

[4]विप्रा गत्वा यदा राजन् [5]चाण्डालं जनशङ्किता।
तदा विचार्य्याऽऽगर्भान्तं राजा तां दण्डयेन्मुदा॥

---

(१) चण्डालैरिति लेखितपुस्तकपाठः।
(२) मासान्तः सप्ततः स्थित्वा इति क्रीतपुस्तकपाठः।
(३) अवध्याः इति क्रीत लेखितपुस्तकपाठः।
(४) विप्रः इति क्रीत लेखितपुस्तकपाठः।
(५) जनैश्चाण्डालशङ्किनी इति लेखितपुस्तकपाठः।

नासाकर्णौ वापयित्वा निर्व्वास्या [1]पट्टनाद्वहिः।
त्यागएव वरोराज्ञा न बधः स्त्रीषु धर्म्मतः॥

क्षत्रियवैश्याङ्गनानां चण्डालसंसर्गश्चेत् तदा सम्यक् विचार्य्य [दण्डः कर्त्तव्यः] विप्रस्त्रीषु न कारीषवधएव।

मनुः—

द्वयोर्नारी यदा पापे [2]चाण्डालैर्यदि सङ्गिनी।
तदा सम्यग्विचार्य्याऽस्य कारीषवधमाचरेत्॥
गर्भे गर्भं तदाच्छित्वा शिशुं तं भुवि निक्षिपेत्।
पूर्व्ववद्दाहयेत् [3]पापां न त्याज्या जनवल्लभैः॥ इति

तस्मिन् ग्रामे राजाऽभावे तं पापिष्ठं निगलैर्वद्धा राजान्तिकं प्रेषयेयुः। विप्रैर्विप्राज्ञा कर्त्तव्या। न हिंसादिः। यज्ञोपवीतादिकं त्रुटित्वा वहिष्कार्य्यः।

इति हेमाद्रौ चाण्डालीगमनप्रायश्चित्तम्।

---

(१) पत्तनात् इति क्रीतपुस्तकपाठः।
[ ] क्रीत-लेखितपुस्तकयोर्नास्ति।
(२) चण्डालैरिति लेखितपुस्तकपाठः।
(३) पापी इति लेखितपुस्तकपाठः।

अथ तुरुष्कीगमनप्रायश्चित्तमाह[1]।

देवलः

[2]चाण्डालश्च तुरुष्कश्च द्वावेतौ तुल्यपापिनौ।
तदङ्गना तथा ज्ञेया विप्रैः पापभयातुरैः॥
चाण्डालस्पर्शने राजन् सवस्त्रं स्नानमाचरेत्।
सम्भाषणे [3]द्विजैर्भाषा दर्शने भानुदर्शनम्॥
तच्छायास्पर्शनेनैव पूर्ववत् स्नानमाचरेत्।
तदुच्छिष्टेन संस्पृष्टः प्रायश्चित्तमिदं चरेत्।
शिखाशिकायां लालायां श्लेष्मसङ्गे विशेषतः॥
मृद्भिः [4]प्रक्षालयेद्यत्नात् तं देशं द्वित्रिसंख्यया।

शिखाशिकास्पर्शने मृदा एकवारं क्षालयेत्। लालास्पर्शे द्विवारम्। श्लेष्मस्पर्शे त्रिवारम्। वदनस्पर्शने मृदेकविंशत्या क्षालयित्वा द्वादश-गण्डूषैः पूतात्मा तद्दिनं समुपोष्य परेद्युः पञ्चगव्यं पीत्वा शुद्धिमाप्नोति। अतो दूरतएव त्याज्यः[5]। तदेवाऽऽह।

मनुः—

युगं युगद्वयञ्चैव त्रियुगञ्च चतुर्युगम्।
चाण्डालपतितोदक्यासूतिकानामधः[6]क्रमात्॥ इति

तदेवाह—

---

(१) आहेति क्रोतपुस्तके नास्ति। (२) चण्डालश्च इति वेङ्कितपुस्तकपाठः।
(३) द्विजं भाषा इति क्रोतपुस्तकपाठः।
(४) प्रक्षालयित्वा तु इति क्रोत-वेङ्कितपुस्तकपाठः।
(५) त्याज्य इति क्रोतपुस्तकपाठः।
(६) अथ क्रमात् इति क्रोतपुस्तकपाठः।

देवलः—

¹शिखाशिखायामेकाहमालायां तु त्र्यहं स्मृतम् ।
शेषसङ्गे त्रयः प्रोक्तास्तदेष चालनाक्रमः² ॥
चाण्डालस्पर्शे महत्पापं ³कृच्छ्रयेत्त्वेकविंशतिम् ।
तद्देशं चालयित्वा तु ⁴गव्यूतान् द्वादशाऽऽचरेत् ॥
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ।

मार्कण्डेयः—

तुरुष्कींयोद्विजोगच्छेत् पञ्चबाणातुरःसकृत् ।
अज्ञानाज् ज्ञानतोवापि पूर्ववत् शुद्धिरीरिता ॥

मनुरपि—

ज्ञात्वाऽज्ञात्वा तुरुष्कीं योद्विजः कामातुरः सकृत् ।
गच्छेत् स शुद्धिमाप्नोति ⁵चाण्डाल्यागमने यथा ॥ इति विप्रस्य तुरुष्कीगमने प्राप्ते भामि स्पर्शादिसंमेलने सकृद्दिन-⁶पक्ष-मास-संवत्सरगतादीन् विचार्य ⁷चाण्डालीगमनोक्तप्रायश्चित्तं कृत्वा शुद्धिमाप्नोति नान्यथा ।

---

(१) शिखाशिखा त्र्यहैका स्यात् इति श्रीतपुस्तकपाठः ।
(२) चालने चमः इति श्रीतपुस्तकपाठः ।
(३) कृच्छ्रमेकेन विंशतिः इति श्रीत वेंकितपुस्तकपाठः ।
(४) गव्यूतान् द्वादशाऽऽचरेत् इति वेंकित-श्रीतपुस्तकपाठः ।
(५) चाण्डाल्याः इति वेंकितपुस्तके पाठः ।
(६) मम इति वेंकितपुस्तकपाठः ।
(७) चण्डाली इति वेंकितपुस्तकपाठः ।

नारदः—

पापं प्रकाशयेद्धीमान् पुण्यं सम्यग्विगूहयेत्।

पापं यातीह नष्टत्वं तस्मात् पापं न गोपयेत्॥

चाण्डालतुरुष्कयोरीषद्भेदोनास्ति। तस्मात् पूर्व्वोक्तं प्रायश्चित्तं कृत्वा शुद्धोभवति।

इति हेमाद्रौ तुरुष्कीगमनप्रायश्चित्तम्।

---

अथ [1]षोडशविधचाण्डालस्त्रीगमनप्रायश्चित्तमाह ।

पराशरः

रजकश्चर्मकारश्च नटो[2]बुरुड़एवच ।
कैवर्त्तमेदभिल्लाश्च स्वर्णकारस्तु सौचिकः[3] ॥
तक्षकस्तैलयन्त्री च सूनुचक्री तथा ध्वजी ।
नापितः कारुकश्चैव षोड़शैते जनङ्गमाः ॥

[4]ग्रामचाण्डाला इत्यर्थः । तत्पत्न्यश्च तद्वच ताज्याः । विप्रैः षोड़श-विधानां पत्नीगमने पृथक् पृथक् प्रायश्चित्तमाह ।

देवलः—

रजकीं युवतीं ग्राम[5]चाण्डालीं योद्विजोरमेत् ।
सकृदज्ञानतो राजन् ज्ञात्वा शुद्धिमथाऽचरेत् ॥

जावालिः—

रजकीं ग्रामचाण्डालीं अज्ञानाद्ब्राह्मणोरमेत् ।
पञ्चवाणातुरः पश्चात् प्रायश्चित्ती भवेद्द्विजः ॥

लिङ्गपुराणे—

द्विजः कामातुरोग्राम[6]चाण्डालीं रजकाऽऽह्वयाम् ।
अज्ञानाद्रमयित्वाऽपि प्रायश्चित्तं समाचरेत् ॥

---

(१) षोड़शविधचाण्डालगमने प्रायश्चित्तमित्येव क्रीतपुस्तकपाठः ।

(२) बुरुड़ इति क्रीतपुस्तकपाठः ।

(३) सौचिक इति वेंचितपुस्तकपाठः :

(४) ग्रामे चाण्डाल इति वेंचितपुस्तकपाठः ।

(५) चण्डालीं इति वेंचितपुस्तकपाठः ।

(६) चण्डालीं इति वेंचितपुस्तकपाठः ।

उभयोरेकमत्या चेत् तत्र चान्द्रं विदुर्बुधाः।
बलात्कारेण द्वैगुण्यं सकृदाचरणे स्मृतम्॥
रेतःसेकात् पूर्व्वमेव प्राजापत्यं विशोधनम्।

महाराजविजये—

एकस्मिन् दिवसे विप्रः सकृद्रजकनायकीं।
[1]चेटीं सेवेत यदि वा तदर्द्धं मुनिभिः स्मृतम्॥
पतिव्रता यदा सा तु तत्तत्कृच्छ्रयतं स्मृतम्।

नारदः—

चेटी चेद्रजकी भूप पञ्चाशत्तत्समीरितम्।
पतिव्रता यदि भवेत् तत्तत्कृच्छ्रयतं विदुः॥
त्रिदिनं मासमाचश्च द्विजोगत्वा पतिव्रताम्।
चान्द्रायणत्रयं प्रोक्तं दिनत्रयगमे द्विजे॥
[2]षण्मासे चान्द्रषट्कं स्याद् वर्षादूर्द्धं पतत्यसौ।

वर्षादूर्द्धं पतितप्रायश्चित्तं रजकीगमने वेदितव्यम्॥ नाऽन्यथा [3]शुद्धोभवति। एवं सर्व्वत्र षोड़शचाण्डालस्त्रीगमनेषु [4]योजनीयमुक्तमनुक्तं वा। सर्व्वत्र गर्भधारणे कारीषवधएव। विप्राङ्गनानां रजकादिषोड़शचाण्डालसंसर्गे प्रायश्चित्तं गर्भे त्यागएव इति

(१) सेवेच्चेटीं यदितिचेत् इति क्रीतपुस्तकपाठः।
(२) मासे षट्कं तु चान्द्रायणमिति वेङ्कितपुस्तकपाठः। मासषट्केन चान्द्रायणमिति क्रीतपुस्तकपाठः।
(३) शुद्धोऽभूत् इति वेङ्कितपुस्तकपाठः।
(४) योजनीयानि इति क्रीत-वेङ्कितपुस्तकपाठः।

सर्व्वत्र सम्बन्धः। एवं क्षत्रियवैश्ययोर्दिनादिक्रमेण प्रायश्चित्तं वेदितव्यम्। ब्राह्मणोवर्षमात्रं मासमात्रं वा रजकीं गत्वा यदि गृहे मेलनं कुर्य्यात् तदा तत्र गृह[१]दाहादिकं कृत्वा कुड्यस्य क्षालनं मृण्मयानां त्यागएव। घृतोपदेशादीनां [२]प्रकारः आचाराध्याये द्रव्यशुद्धिप्रकरणेऽभिहितः[३]। तदाह—

मनुः—

ब्राह्मणो मासमात्रं वा वर्षमात्रमथापिवा।
[४]कामादुरहसि गत्वा तां कुर्य्याद्वा गृहमेलनम्॥
कुड्येषु क्षालनं कृत्वा मृण्मयानि विसर्ज्जयेत्।
वर्षादूर्द्धं तु तं त्यक्त्वा[५]कर्त्तव्यं यथदीरितम्॥
[६]गृहस्थानां तदादेयं प्राजापत्यं विशोधनम्।
वर्षादूर्द्धं ततोज्ञात्वा पृथक्चान्द्रायणं स्मृतम्॥
पञ्चगव्येन शुद्धाः स्युर्यामस्था यदि सङ्गताः।
गृहे यानीह द्रव्याणि मृण्मयानीह विसर्ज्जयेत्॥
अधिकेषु तदाशुद्धिर्विनिमय्य[७] स्थलान्तरम्।

---

(१) भाण्डादिकं इति क्रीतपुस्तकपाठः।
(२) प्रकार इति क्रीत-वेङ्कितपुस्तकयोर्नास्ति।
(३) अभिहित इति क्रीत-वेङ्कितपुस्तकपाठः।
(४) द्विजः इति क्रीत-वेङ्कितपुस्तकपाठः।
(५) पूर्व्वोक्तं इति क्रीतपुस्तकपाठः।
(६) अहस्ता देहशुद्ध्यर्थं इति वेङ्कितपुस्तकपाठः। अहस्तैर्देहशुद्ध्यर्थं इति क्रीतपुस्तकपाठः।
(७) विनिमय्य इति क्रीतपुस्तकपाठः।

स्थलान्तरमिति पाठान्तरमित्यर्थः। सर्व्वत्र षोडशविधचाण्डाल-स्त्रीगमने रहः प्रायश्चित्तमेव गृहभाण्डादीनां (१)त्यागश्च। तत्तत् स्त्रीगमने प्रायश्चित्तं पृथक् पृथक् विभिनष्टि।

इति हेमाद्रौ रजकीगमनप्रायश्चित्तम्।

---

(१) त्यागश्चेति श्रीत-काशीपुस्तकयोर्नास्ति।

अथ चर्म्मकारस्त्रीगमनप्रायश्चित्तमाह[1] ।

देवलः—

पूर्व्वेण वयसा राजन् विद्याधनविवर्ज्जितः ।
द्विजोयश्चर्म्मकारस्य पत्नीं यदि [2]व्रजेदिह ॥
स [3]चाण्डालसमोज्ञेयोनालपेत्तं कदाचन ।
सकृदज्ञानतोगत्वा मृत्वा नरकमश्नुते ॥

भारद्वाजः—

चर्म्मकारसतीं रम्यां विद्याधनमदान्वितः ।
ब्राह्मणश्च यदा गच्छेत् स [4]चाण्डालोभवेदिह ॥
मृत्वा नरकमाप्नोति कालसूत्रं महाभयम् ।
विप्रैः सह न सन्तिष्ठेत् सज्जनैर्वानरेश्वर ॥
स्वगृहे ग्राममध्ये वा विप्रैः सह न संवदेत्[5] ।

देवस्वामी—

चर्म्मकारस्त्रियं गत्वा स्वाचारञ्च समुत्सृजन् ।
विप्रः पापरतोभूत्वा नरकानेकविंशतिम् ॥
गत्वा भुवमुपागम्य चर्म्मकारोभवेत् पुनः ।
तस्यैवं निष्कृतिरियं कथिता जनवल्लभ ॥

---

(१) आहेति शीतपुस्तके नास्ति ।
(२) गच्छेदिह इति लिखितपुस्तकपाठः ।
(३) चण्डाल इति लिखितपुस्तकपाठः ।
(४) चण्डाल इति लिखितपुस्तकपाठः ।
(५) संवसेत् इति लिखितपुस्तकपाठः ।

एकस्मिन् दिवसे राजन्ने[1]कवारं रमेत यः ।
तमसकृच्छ्रं विशुद्ध्यर्थं पराकं दिनमात्रतः ॥
दिनत्रये तु चान्द्रं स्यात् षण्मासे त्रिंशदाचरेत् ।
वत्सरे पतितं विद्यात् कुर्य्यात् पतितवत्तदा ॥
गर्भे वा निष्कृतिर्नास्ति कारीषमरणादृते ।

स्त्रीणां [2]बाहुजादीनां च पूर्व्ववद् योजनीयम् ।

इति हेमाद्रौ चर्म्मकारस्त्रीगमनप्रायश्चित्तम् ।

---

(१) सैकवारं इति क्वचित्पुस्तकपाठः ।

(२) बाहुजानां इति क्वचित्पुस्तकपाठः ।

## अथ नटिनीगमनप्रायश्चित्तमाह[1]।

देवलः—

नटिनीं ब्राह्मणो गच्छेत् पञ्चवाणातुरः सकृत्।
तस्यैव पितरोयान्ति रेतःकुण्डं मन्वन्तरम्॥

गारुड़पुराणे-

देवालये राजगृहे गृहीत्वा भृतिमादरात्।
मासि मासि च वर्षे वा जीवमृत्यति सर्व्वदा॥
सोऽयं नटइति ख्यातः सर्व्वधर्म्मवहिष्कृतः।
तस्य सम्बन्धिनी नारी नटिनीति स्मृता जनैः॥

देवलः- –

कारागृहे दिनमात्रं सकृद् गत्वा दिनत्रयम्।
[ अष्टौ वा वेशनं कृत्वा नाद्यं कृत्वा दिनत्रयम्।]
भृतिमादाय विप्रोऽसौ सद्यः पातित्यमर्हति॥
तस्माद् भृतिं परित्यज्य द्विजोवर्त्तयतेऽन्यतः।
चान्द्रायणद्वयं कुर्य्यात् पुनः संस्कारपूर्व्वकम्॥
विप्रोगत्वा प्रमादाद्वा ज्ञात्वा वा बहुवार्षिकम्।

मार्कण्डेयः—

नटिनीं यो द्विजोगच्छेत् सकृद्वाबहुवारतः।
केशसंवपनं कृत्वा कुर्य्याच्चान्द्रायणद्वयम्॥

---

(१) चाद्देति क्षीतपुस्तके नास्ति।

(२) गत्वा इति क्षीत-केचितपुस्तकपाठः।

तस्योपनयनं भूयः षटगर्भविधानतः ।

वर्षादूर्द्धं तथा राजन् पतितोऽभूज् जनेश्वर ॥

पतितप्रायश्चित्तं कृत्वा शुद्धिमाप्नोति गर्भं त्याज्य[1] एव । विप्राङ्ग-नानां नटसंसर्गादिसम्भवे एवमेव योजनीयम् । राजादीनां पूर्व्ववत् ।

इति हैमाद्रौ नटिनीगमनप्रायश्चित्तम् ।

---

(१) त्याग एव इति क्वचित्पुस्तकपाठः ।

## अथ कुरुण्डीगमनप्रायश्चित्तमाह[1]।

देवलः—

कुरुण्डीं यो द्विजो [2]गच्छेत्सकृत्कामातुरः क्षितौ ।
सएव नरकं गत्वा हीनजातिमवाप्नुयात् ॥

नागरखण्डे—

ये [3]वै कटकुटीरस्था भाषावर्णाऽऽदिभेदतः ।
[4]मद्यं मांसञ्च सेवन्ते कुरुण्डास्ते समीरिताः ॥
तदङ्गनेयं कुरुण्डी सर्व्वपापालया सदा ।
तां गत्वा विप्रवर्य्योऽसौ नरकं याति दारुणम् ॥
एकवारं द्विवारं वा दिनत्रयमथापि वा ।
मासं ऋतुत्रयं वापि वत्सरञ्च विशेषतः ॥
यावकं तप्तकृच्छ्रञ्च प्राजापत्यं तथैन्दवम् ।
वत्सरे पतितो भूयात् गर्भे तद्वर्णता[5]भवेत् ॥

विप्रस्त्रीणां पूर्व्ववत् । प्रायश्चित्तं कृत्वा पुनरुपनयनं सर्व्वत्र । यदुक्तं मनुना वा तत् षोड़शचाण्डालस्त्रीगमने [यदुक्तं तद्वद् वेदितव्यम्]।

इति हेमाद्रौ कुरुण्डीगमनप्रायश्चित्तम् ।

---

(१) आहेति कौतपुस्तके नास्ति ।
(२) गत्वा इति कौतपुस्तकपाठः ।
(३) वेलककुटीरस्था इति कौत-काशीपुस्तकपाठः ।
(४) मद्य-मांसनिषेविणश्च इति केम्ब्रिजपुस्तकपाठः ।
(५) तद्वर्णतां भजेत् इति कौतपुस्तकपाठः ।
[ ] चिह्नितः पाठः कौत-केम्ब्रिजपुस्तकयोर्नास्ति ।

## अथ कैवर्त्तगमनप्रायश्चित्तमाह[1]।

देवलः —

कैवर्त्तस्य सतीं विप्रः सकृद्गत्वा विचारयन्।
महान्तं नरकं गत्वा तज्जातिषु भवेद्भुवि॥

मार्कण्डेयः —

[2]कैवर्त्तीनाम लोकेऽस्मिन् हीनजातिसमुद्भवः।
तदङ्गनां द्विजोगच्छे[3]त्पञ्चबाणातुरः सकृत्॥
तस्योपनयनं भूयः पटगर्भविधानतः।
प्रायश्चित्तं तदाप्युक्तं वृषलीगमनोदितम्॥

एकवारं [4]वा दिनत्रयादिकं [5]वा विचार्य्य प्रतिपदोक्तं प्रायश्चित्तं कृत्वा शुचिमाप्नोति। विप्रस्त्रीणां तत्सङ्गमादौ पूर्व्ववत्। [6]एवं क्षत्रियादीनामपि।

इति हेमाद्रौ कैवर्त्तस्त्रीगमनप्रायश्चित्तम्।

---

(१) आहेति क्रीतपुस्तके नास्ति।
(२) कैवर्त्तनाम्ना इति वेंकितपुस्तकपाठः।
(३) गत्वा इति क्रीत-वेंकितपुस्तकपाठः।
(४) वा इति क्रीत-वेंकितपुस्तकयोर्नास्ति।
(५) वा इति क्रीत-वेंकितपुस्तकयोर्नास्ति।
(६) शेषमवाक्यमर्नास्ति वेंकितपुस्तके पाठः।

## अथ मेदस्त्रीगमनप्रायश्चित्तमाह[1]।

गौतमः—

मेदस्त्रियं द्विजोयस्तु बलात्काराद्[2]रमेद् यदि।
[3]कालकूटविषं नाम नरकं याति दारुणम्।

देवलः—

वेणुकारसतीं गत्वा द्विजः कामातुरः सकृत्।
नरकं कालकूटाख्यं याति पापी सदा श्वसन्॥

महाभारते—

वेणवीं ब्राह्मणोदृष्ट्वा मनस्तत्र निवेश्य च।
रन्तुकामोयदि भवेत् तत्रैव नरके स्थितिः॥
तद्दोषपरिहारार्थं पूर्व्ववन्मुनिचोदितम्।

एकवारद्विवाराऽऽदिकं यथापि विचार्य्य पूर्व्ववत् पुनः संस्कारादिकं सर्व्वं कुर्य्यात्। विप्रक्षत्रादीनां पूर्व्ववत्।

इति हेमाद्रौ मेदस्त्रीगमनप्रायश्चित्तम्।

---

(१) आहेति गौतपुस्तके नास्ति।
(२) बलात्काराद्रमेद् यदि इति गौतपुस्तकपाठः।
(३) कालकूटं इति देवलपुस्तकपाठः।

## अथ सौचिकस्त्रीगमनप्रायश्चित्तमाह[1] ।

देवलः—

[2]सौचिकोवस्त्रसन्धाने जनेभ्योभृतिमुद्वहन् ।
जीवन् [3]तथा वस्त्रहारी सौचिकोऽयमुदीरितः ॥
तदङ्गना महापापकारिणी लोकनाशिनी ।
तां रमेद् ब्राह्मणो यस्तु पञ्चवाणातुरः सकृत् ॥
[ तस्य वै निष्कृतिर्नास्ति सूचिकारस्य जन्मनः ।

नारदः—

सूचिकारस्य यः पत्नीं द्विजः कामातुरः सकृत् । ]
महान्तं नरकं गत्वा होनयोनिषु जायते ॥
दिनं दिनत्रयं मासं वर्षं वा गर्भधारणात् ।
यावकञ्च पराकञ्च तप्तमैन्दवमेव च ॥
यथाक्रमं प्रकुर्व्वीत पतितोगर्भधारणे ।

पतितप्रायश्चित्तं उपनयनादिकं पूर्व्ववत् । विप्रस्त्रीणां क्षत्रिया-दीनां च पूर्व्ववत् ।

इति हेमाद्रौ धर्म्मशास्त्रे प्रायश्चित्ताध्याये
सौचिकस्त्रीगमनप्रायश्चित्तम् ।

---

(१) आहेति ओतपुस्तके नास्ति ।
(२) सौचिके इति ओतपुस्तकपाठः ।
(३) तथा इति ओतपुस्तकपाठः ।
[ ] अयं पाठः ओतकाशीपुस्तकयोर्नास्ति ।

अथ तक्षक-तिलयन्त्रिस्त्रीगमनप्रायश्चित्तमाह[1]।

कुमारः—

तक्षकोदारुकर्त्ता च तिलयन्त्री महान् खलः।

तिलघातक इत्यर्थः।

तिलयन्त्री तिलद्रोही दारुकोदारुघातकः।
न कर्म्मार्हौ भवेतां तौ न सम्भाष्यौ कदाचन॥
तावेतौ ग्रामचाण्डालौ दूरस्थौ तु परित्यजेत्।
[2]तयोर्नितम्बिनी पापा तां रमेत्पुरुषः सकृत्॥
महापापमवाप्याशु भुवि होनेषु जायते।
तयोरप्यङ्गनागामी[2] कारीषवधमर्हति॥

जावालिः—

तयोर्यदा रमेन्नारीं ब्राह्मणः कामपीड़ितः।
अज्ञानाच्चापकोप्यास्तु ज्ञात्वा [3]मासेन शुध्यति॥
ज्ञानात् सकृद् द्विजोगत्वा कारीषेण त्वमुं दहेत्।
अथवा देहशुद्ध्यर्थं ह्ययुतं जपमाचरेत्॥
शुद्धिमाप्नोति राजेन्द्र न शुद्धिर्मुनिभिः पुरा।

---

(१) आहेति क्रीतपुस्तके नास्ति।
(२) अङ्गनागामी इति क्रीतपुस्तकपाठः।
(३) मासेनै शुध्यति इति वेदिकपुस्तकपाठः।

अन्यथा[1]वेदित्यर्थः। विप्राङ्गनानां प्रमादाद्[2]गमने गर्भधारणे त्याग एव। क्षत्रियविप्रां तत्स्त्रीगमने पूर्व्ववत् वेदितव्यम्।

इति हेमाद्रौ तक्षक-तिलघातकस्त्रीगमनप्रायश्चित्तम्।

---

(१) चरेदिति वेङ्कितपुस्तकपाठः।

(२) प्रमादाद्गमने इति वेङ्कितपुस्तकपाठ।

### अथ [1]मांसविक्रयिकस्त्रीगमनप्रायश्चित्तमाह ।

देवलः—

सूनोः परिग्रहं गत्वा विप्रः पापपरायणः ।
कुम्भीपाके महाघोरे वसत्याचन्द्रतारकम् ॥

[2]मनुः—

मांसविक्रयिणः पत्नीं पुत्रीं वा भगिनीमपि ।
स्नुषां वा मुखजः पापी रमेत्कामातुरः सकृत् ॥
न तस्य पुनरावृत्तिः कुम्भीपाकाद् भयङ्करात् ।
पुनर्भवमुपागम्य जायते हीनजातिमान् ॥

मार्कण्डेयः—

सूनोर्नारीं द्विजोगत्वा पापीयान् पापरूपिणीम् ।
कुम्भीपाकमुपागम्य जायते भुवि हीनवान् ॥
प्राजापत्यं मासमात्रे चान्द्रं प्रोक्तमृतुत्रये ।
अतः पतितवज्ज्ञेयः सर्व्वधर्म्मबहिष्कृतः ॥
अभ्यासे दाहयेत् सम्यक् कारीषेण पुनः पुनः ।
अन्यथा निष्कृतिर्नास्ति यावद् [3]गर्भविधारणम् ॥

विप्रस्त्रीणां पूर्व्ववत् क्षत्रियादीनामपि ।

इति हेमाद्रौ [4]मांसविक्रयिकस्त्रीगमनप्रायश्चित्तम् ।

---

(१) मांसविक्रयस्त्रीगमनप्रायश्चित्तमित्येव मौतपुस्तकपाठः ।
(२) मौत-चेश्चितपुस्तकयोर्नास्ति ।
(३) भवति वारणं इति मौतपुस्तकपाठः ।
(४) मांसविक्रयस्त्रीगमन इति मौतपुस्तकपाठः ।

## अथ कुलालस्त्रीगमनप्रायश्चित्तमाह[1] ।

देवलः—

कुलालकस्य योनारीं विप्रः कामातुरः सकृत् ।
अङ्गीकारेण वा राजन् बलात्कारेण वा पुनः ।
रमेद्दिनं तदर्द्धं वा मासं ऋतुमथाऽपि वा ॥
तस्यैव निष्कृतिर्नास्ति पुनः संस्कारकर्म्मणः ।

मरीचिः—

इष्ट[2]कास्तु विभाण्डानि ज्ञात्वा योदाहयेन्मुदा ।
स चाण्डालसमोज्ञेयः सर्व्ववर्णबहिष्कृतः ॥
तदङ्गना तत्समाना दर्शनात् पापकारिणी ।
एनां द्विजोरह्योगच्छेत् स महापातकी स्मृतः ॥
तस्यैवं निष्कृतिर्दृष्टा पूर्व्ववन्मुनिभिः सकृत् ।

मास-षण्मास-वत्सरतारतम्येन प्रायश्चित्तं योजनीयम् । गर्भे वा वत्सरान्ते वा[3] पतितप्रायश्चित्तमर्हति । विप्रस्त्रीणां पूर्व्ववत् । क्षत्रियादीनामपि ।

इति हेमाद्रिविरचिते धर्म्मशास्त्रे प्रायश्चित्ताध्याये
कुलालस्त्रीगमनप्रायश्चित्तम् ।

---

(१) आहेति क्रीतपुस्तके नास्ति ।
(२) इष्टका तु इति वेंकितपुस्तकपाठः ।
(३) वा इति क्रीतवेंकितपुस्तकयोर्नास्ति ।

 अथ मद्यविक्रयिणः स्त्रीगमनप्रायश्चित्तमाह[1] ।

देवीपुराणे—

मद्यविक्रयिणीं गत्वा नारीं ग्रामे वनान्तरे ।
द्विजः पापमवाप्नोति स्त्रक्षीयात् काममोहितः ॥
न तस्य पुनरावृत्तिर्यमलोकात् कदाचन ।

नारदः—

प्रत्यहं मद्यविक्रेता मांसस्यापि महामुने ।
उभयोर्निष्कृतिर्नास्ति भुवि चाण्डालजन्मनः ॥
तस्योपनयनं [2]भूयः प्राजापत्यं दिनद्वये ।
मासि चान्द्रव्रती तद्वद् द्विगुणं व्रतमुच्यते ॥
ततःपरं न शुद्धिःस्यात् कारीषदहनादृते ।
चयन्नो[3] गोसहस्रन्तु वर्षमात्रं चरेद्बुधः ॥

विप्रस्त्रीणां पूर्व्ववत् क्षत्रियादीनामपि ।

इति हेमाद्रौ[4] मद्यविक्रयिणः स्त्रीगमनप्रायश्चित्तम् ।

---

(१) आहेति मौनपुस्तके नास्ति ।
(२) भूप इति वैदिकपुस्तकपाठः ।
(३) चयन्नौ इति मौतपुस्तकपाठः ।
(४) मद्यविक्रयस्त्रीगमन इत्यादि मौतपुस्तकपाठः ।

अथ कारुक-नापितयोः स्त्रीगमनप्रायश्चित्तमाह[1]।

देवलः—

नापितस्य स्त्रियं गत्वा कारुकस्य द्विजाधमः।
कामातुरो महापापी न पुनर्भुवि जायते॥

नापितः क्षौरकः कारुकस्तयःपिण्डकारी।

जावालिः—

तयोर्विप्रः सतीं दृष्ट्वा ग्रामे वा खण्डेऽपिवा।
गच्छेत् कामातुरः पश्चाद् देहशुद्धिं समाचरेत्॥

मार्कण्डेयः—

क्षौरकस्य द्विजोगत्वा कारुकस्य स्त्रियं मुदा।
तदा पतति दुष्टात्मा न तस्य पुनरुद्भवः।
तस्य देहविशुद्ध्यर्थं प्रायश्चित्तमुदीरितम्॥
पराकं यावकं चैव तप्तं चान्द्रमनन्तरम्।

एकदिन-त्रिदिन-मास-संवत्सरक्रमेण योजनीयम्। अतजर्द्ध्वं पतितप्रायश्चित्तम्। कारुकस्त्रीगमने प्रायश्चित्तमेवं वेदितव्यम्। विप्रस्त्रीणामपि एवम्। पूर्व्ववत् क्षत्रियादीनामपि।

इति हेमाद्रौ नापित-कारुकस्त्रीगमनप्रायश्चित्तम्।

---

(१) आहेति मौलपुस्तके नास्ति।

 अथ [1]ब्रह्मचाण्डालस्त्रीगमनप्रायश्चित्तमाह।

देवलः—

परार्थं काशिकायायी दत्ताग्निः कीकसानुगः।
तएव ब्रह्मचा[2]ण्डाला वाग्मात्रेणाऽपि[3]नालभेत्॥

तत्र "काशिकायां स्वकृतपुण्यराशिं दास्यामी"ति भृतकं गृहीत्वा यः काशीं गतः स [4]परार्थं काशिकायायी। "अहमेतस्य कुणपस्याऽग्निदाहादिकं करिष्यामी"ति मौल्यं [5]गृहीत्वा यस्तत् कृतवान् स दत्ताग्निः। कीकसानि परकीयास्थीनि, "अहं धृत्वा गङ्गाम्भसि स्थापयामी"ति पूर्व्ववद्धनादिकं गृहीत्वा यः करोति स कीकसाऽनुगः। तदाह

[6]वृद्धमनुः—

कीकसानि द्विजोधृत्वा परकीयाणि [7]लोभतः।
एकप्रस्थानमात्रेण स [8]चाण्डालसमोभवेत्॥
प्रेतकृत्यमहं कुर्य्याम् मृतस्यास्य विधिवतः।
इति यः कुरुते बुद्धिं स [9]चाण्डालइतीरितः॥

---

(१) ब्रह्मेति केचित्पुस्तके नास्ति।
(२) ब्रह्मचण्डाला इति केचित्पुस्तकपाठः।
(३) नार्हयेत् इति मीतपुस्तकपाठः।
(४) परार्थं वा इति मीतपुस्तकपाठः।
(५) गृहीत्वा कृतवान् इति मीत-केचित्पुस्तकपाठः।
(६) बहुरित्येव मीत-केचित्पुस्तकपाठः।
(७) पार्थिवं इति मीत-केचित्पुस्तकपाठः।
(८) चण्डाल इति केचित्पुस्तकपाठः।
(९) चण्डाल इति केचित्पुस्तकपाठः।

परार्थं मौल्यमादाय काशीं यास्याम्यहं व्रत ।
इति यो मनसि स्थाप्य स [1]चाण्डालत्वमर्हति ॥
एतेषामेकतः पत्नीं द्विजो यः संगृहीतवान् ।
[2]एकरात्रं त्रिरात्रं वा मासं वा वत्सरं तु वा ॥
[3]जभेत् कामातुरो यस्तु तस्य निष्कृतिरीरिता ।
चाण्डालगमने राजन् निष्कृतिः कथितोत्तमैः ॥
सा चैवात्र प्रयोक्तव्या कारीषवधवर्ज्जिता[4] ।
पुनः संस्कारविधानं कर्त्तव्यं विधिचोदनात् ॥

विप्रस्त्रीणां ब्रह्मचाण्डालसंसर्गप्राप्तौ विप्रस्याऽर्द्धम् । गर्भे त्यागः । क्षत्रियादीनां पूर्व्ववत् ।

इति हेमाद्रौ ब्रह्मचाण्डालस्त्रीगमनप्रायश्चित्तम् ।

---

(१) चण्डालत्वमिति लेखितपुस्तकपाठः ।
(२) एकरात्रिं इति लेखितपुस्तकपाठः ।
(३) वस्रेत् इति लेखितपुस्तकपाठः वसेत् इति मीतपुस्तकपाठः ।
(४) वर्ज्जितं इति लेखितपुस्तकपाठः ।

## अथ रजस्वलागमनप्रायश्चित्तमाह[1]।

देवलः—

राजन् पुष्पवतीं भार्य्यां द्विजः कामातुरो[2]व्रजेत्।
महान्तं नरकं गत्वा रक्तस्राविशुद्धोभवेत् ॥

मार्कण्डेयः—

विप्रोरजस्वलां पत्नीं गच्छेत् कामातुरः सकृत्।
मेहवान् भविता राजन् रक्तस्रावी भवेद्भुवि ॥

गालवः—

यो विप्रः पञ्चबाणार्त्तो अभेत्[3] पत्नीं रजस्वलाम्।
न तस्य पुनरावृत्तिर्यमलोकाद् भयङ्करात्।
प्रथमेऽहनि यो गच्छेत् [1]चाण्डालीगमने च यत् ॥
तत् कृत्वा शुद्धिमाप्नोति अन्यथा दोषभाग्भवेत्।
द्वितीयेऽहनि ब्रह्मघ्नीगमने [2]यदुदाहृतम् ॥
[तदर्द्धाऽपिप्रयोक्तव्यं नाऽन्यथाशुद्धिमाप्नुयात्]।
तृतीये रजकीसङ्गे प्रायश्चित्तं तदर्द्ध हि।
कृत्वा शुद्धिमवाप्नोति इहलोके परत्र च ॥

---

(१) माहेति श्रीतपुस्तके नास्ति।
(२) भवेत् इति श्रीत वेष्टितपुस्तकपाठः।
(३) अभेत् इति श्रीतपुस्तकपाठः।
(१) चण्डालगमने इति वेष्टितपुस्तकपाठः।
(२) गमनं तदुदाहृतम् इति वेष्टितपुस्तकपाठः।
[ ] अयं पाठः श्रीतकाशीपुस्तकयोर्नोपलभ्यः।

भविष्योत्तरे—

प्रथमेऽहनि चाण्डाली द्वितीये [1]ब्रह्मघातिनी।
तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यति॥

दिनत्रयेषु गमने यद्यत् पापमुदीरितं तत्तत् प्रायश्चित्तं कृत्वा विशुध्यति पुनः संस्कारश्च। विप्रस्त्रीणां रजस्वलानां परपुरुषसंसर्गे विप्रस्याऽर्द्धं प्रायश्चित्तम्। क्षत्रियादीनां पूर्व्ववत्।

इति हेमाद्रौ रजस्वलागमनप्रायश्चित्तम्।

---

(1) ब्रह्मघातकी इति क्रीतपुस्तकपाठः।

## अथ विधवागमनप्रायश्चित्तमाह[1] ।

देवलः—

ब्राह्मणोमदलोभेन विधवां विप्रनन्दिनीम् ।
गच्छेत् कामातुरः पश्चाज्ज्ञात्वाऽसौ पतिवर्ज्जिताम् ।
इति मत्वा व्रजेद् गन्धमादनं पर्व्वतोत्तमम् ॥
तत्र चापायमासाद्य प्रातः स्नायाद् दिने दिने ।
मासमात्रेण शुचिः स्याद् यच्छ्रोऽभूत्तदन्यथा[2] ॥

मार्कण्डेयः—

पूर्व्वजोविधवां विप्रनन्दिनीं विषयातुरः ।
अज्ञानात् सकृदागत्य पश्चात्तापपरायणः ॥
[3]यदीच्छेदात्मनः शुद्धिं चापाये[4] स्नानमाचरेत् ।
मासमात्रेण शुद्धिः स्यात् पुनः संस्कारमार्गतः ॥

एतदज्ञानविषयम् ।

पराशरः—

ज्ञात्वा विप्रः सकृदगच्छेद् विधवां कामपीड़ितः ।
तस्यैव निष्कृतिर्नास्ति ऋते कारीषवह्निना ॥

---

(१) आहेति श्रीतपुस्तके नास्ति ।
(२) न चान्यथा इति श्रीत-वेङ्कितपुस्तकपाठः ।
(३) यदिच्छेत् इति श्रीतपुस्तकपाठः ।
(४) चापापस्नानं इति वेङ्कितपुस्तकपाठः ।

जावालिः—

उभयोर्यदि सम्मत्या द्विजः पापमनुस्मरन्।
[1]गच्छेत् पश्चात् शुद्धिकामो मृतः कारीषवह्निना॥
शुद्धिमाप्नोति राजेन्द्र [2]अथवा भूपरिक्रमः।
त्रिवारं क्ष्मां परिक्रम्य पुनः संस्कारपूर्व्वकम्॥
पञ्चगव्यं पिबेत्पश्चात् शुद्धिमाप्नोति पौर्व्विकीम्।

एतद् गर्भधारणविषयम्।

शिवरहस्ये—

योविप्रोविधवां साध्वीमागच्छेद् गर्भधारणात्।
स [3]चाण्डालसमोज्ञेयस्तस्यास्त्यागोविधीयते॥

गर्भधारणे विप्रः पतितप्रायश्चित्तं कृत्वा शुद्धिमाप्नोति। गर्भधारणे [4]पुनर्विशेषमाह।

नागरखण्डे—

वर्णत्रयाद् वा विधवा सवर्णा यदि गर्भिणी।
विप्रैस्तस्याः परित्यागः कार्य्योधर्म्मपरायणैः॥
तद्दर्शने महापापमवाप्नोति हि पूर्व्वजः।

विष्णुधर्म्मे—वर्णत्रयात् सवर्णाद्वा विधवा गर्भिणी यदि।
तस्या दर्शनमात्रेण ब्रह्महत्यामवाप्नुयात्॥

---

(१) व्रजेत् इति क्रीत-लेखितपुस्तकपाठः।
(२) अथवा इति लेखितपुस्तकपाठः।
(३) चण्डाल इति लेखितपुस्तकपाठः।
(४) पुनरिति क्रीत-काशीपुस्तकयोर्नास्ति।

अतस्त्यागोमुनिश्रेष्ठा अनया किं प्रयोजनम् ।
"गर्भे त्यागोविधीयत" इति मनुवचनं सर्व्वत्राऽनुसन्धेयम् ।
विधवाया विप्रस्याऽर्द्धं प्रायश्चित्तम् । क्षत्रिय-वैश्यपुरुषगमने द्विगुणं प्रायश्चित्तम् । क्षत्रियादीनां प्रायश्चित्तं द्विगुणम् ।

इति हेमाद्रौ विधवागमनप्रायश्चित्तम् ।

---

अथ वेश्यागमनप्रायश्चित्तमाह[1] ।

देवलः—

द्विजः कामातुरो वेश्यां [2]यभेदेकदिनं मुदा ।
न तस्य सन्ति पुण्यानि तिष्ठन्त्यत्र न संशयः ॥
द्विजः कामातुरो नित्यं वेश्यां यदि [3]यभेद्भुवि ।
तस्य नित्यविधिर्नष्टः सद्य एव न संशयः ॥
नित्यकर्मपरित्यागात् पतितः स्यान्न संशयः ।
यदीच्छेत् शुद्धिमतुलां षडब्दं कृच्छ्रमाचरेत् ॥
पुनस्तत्रैव संस्कारं कृत्वा शुद्धिमवाप्नुयात् ।
क्षत्रियादीनामेवम् ।

इति हेमाद्रौ वेश्यागमनप्रायश्चित्तम् ।

---

(१) आहेति मौलपुस्तके नास्ति ।

(२) व्रजेदिति मौलवेष्टितपुस्तकपाठः ।

(३) व्रजेदिति मौलवेष्टितपुस्तकपाठः ।

## अथ दासीगमनप्रायश्चित्तमाह[1] ।

देवलः—

दासीं द्विजोयदा [2]गत्वा स्वधर्मं नाऽवलोकयन् ।
महापापमवाप्नोति मानहानिश्च जायते ॥

मार्कण्डेयः—दासी मानधर्मं हन्ति वेश्या हन्ति तपोयशः ।
विधवाऽऽयुः श्रियं हन्ति सर्वं हन्ति पराङ्गना ॥
ततोदासी न गन्तव्या कर्मणा मनसा गिरा ।
एकश्चिन्नह्नि यो दासीं [3]अभेत् कामातुरः सकृत् ॥
यावकं तत्र कर्त्तव्यं पराकं तु दिनत्रये ।
प्राजापत्यं तथा मासे वर्षे चान्द्रं पृथक् पृथक् ॥

[ सर्व्वतः] अतःपरमवाप्नोति [4]चाण्डालत्वं विगर्हितः ।
शूद्रान्नं शूद्रसम्पर्कं मासमेकं निरन्तरम् ।
इह जन्मनि शूद्रत्वं [5]चाण्डालः कोटिजन्मसु ॥

वर्षात्परं पतितप्रायश्चित्तं कृत्वा दासीगमनात् पूतोभवति पुनः संस्कारश्च ।

इति हेमाद्रौ दासीगमनप्रायश्चित्तम् ।

---

(१) आहेति श्रौतपुस्तके नास्ति ।
(२) मत्वा इति श्रौतवेश्चितपुस्तकपाठः ।
(३) अभेत् इति श्रौतवेश्चितपुस्तकपाठः ।
(४) चण्डालत्वमिति वेश्चितपुस्तकपाठः ।
[ ] अयं पाठः श्रौत कामीपुस्तकयोर्नास्ति ।
(५) चण्डाल इति वेश्चितपुस्तकपाठः ।

[1][अथ पतित-पाषण्ड-बौद्ध-शूद्रस्त्रीगमनप्रायश्चित्तमाह।]

देवल:—

बौद्ध-पाषण्ड-पतित-शूद्रस्त्रीणां सकृद्द्विज:।
रतिं कृत्वा दिनाऽभ्यासे चान्द्रायणमथाऽऽचरेत्॥
दिनत्रये यावकन्तु तप्तं मासे प्रकल्पितम्।
अतऊर्द्ध्वं न संभाष्य: पतित: सर्व्वकर्म्मसु॥

मार्कण्डेय:—

पाषण्ड-बौद्ध-पतित-शूद्रस्त्री[2]र्लभते द्विज:।
दिनत्रये यावकं स्यात् तप्तं मासे प्रकीर्त्तितम्॥
षण्मासे चान्द्रमित्येतदूवर्षे पतति स द्विज:।

पतितप्रायश्चित्तं वर्षादूर्द्धं कृत्वा शुध्यति। गर्भे न प्रायश्चित्तम्। मृते तु न संस्कार:। पुत्रजनने तस्य त्यागएव।

तदेवाऽऽह मनु:—

एतेषां स्त्रीषु योविप्रोरमते प्रत्यहं खल:।
गर्भे वा पुत्रजनने वहिष्कारो विधीयते॥
यदि चेत् [3]पुत्रवान् स स्यात् पिता नरकमश्नुते।
संसर्गात् तस्य राजेन्द्र पातित्यं [4]भवति ध्रुवम्॥

---

(१) अयमपि पाठः क्रीतपुस्तके न दृष्टः।

(२) लभते इति वेङ्कितपुस्तकपाठः रमते इति क्रीतपुस्तकपाठः।

(३) पुत्रवात्तस्यात् इति क्रीत-वेङ्कितपुस्तकपाठः।

(४) हि भवेद्ध्रुवं इति क्रीतपुस्तकपाठः।

पापकारी भवेत् पुत्रः सदा तं नहि कीर्त्तयेत् ।
तस्मात् पुत्रः परित्याज्यः पित्रा सुखपरेण ह ॥

तथाच श्रुतिः—

"स शूद्रयोनिसंक्लिन्नरेतसा सिञ्चते[1] पितॄन् पितृद्रोहीति" ।

[2]शूद्रादिस्त्रीषु पुत्रमुत्पादयन् पुनस्त्याज्यएव "औरसं दोषकारिणं त्यजेत्" इति वचनात् ।

इति हेमाद्रौ पतित-पाषण्ड-बौद्ध-शूद्रस्त्रीगमनप्रायश्चित्तम् ।

---

(१) सिञ्चयेत् इति मौलपुस्तकपाठः ।
(२) शूद्रादि इति पाठः मौल-वेष्टितपुस्तकयोर्नास्ति ।

## अथ मद्यपस्त्रीगमनप्रायश्चित्तमाह[1] ।

देवलः —

मद्यपानरतां नारीं द्विजः कामातुरःसव्रजेत् ।
[2]गच्छेद्यदिह पापात्मा चाण्डालत्वमवाप्नुयात् ॥

गौतमः—

द्विजः कामातुरोगच्छेत् स्त्रियं मद्यपरायणाम् ।
महान्तं नरकं गत्वा चाण्डालत्वं भजेदिह ॥

मार्कण्डेयः—

मद्यपानरतां नारीं द्विजः कामातुरो[3]व्रजेत् ।
नरकं चानुभूयाऽथ चाण्डालत्वमवाप्नुयात् ॥
[4]यावकं मासमात्रे तु षण्मासे चान्द्रभक्षणम् ।
वत्सरे पतितोभूयाज्ज्ञाते निष्कृतिमाचरेत् ॥

पतितनिष्कृतिमाचरेद् इत्यर्थः—

तस्यापनयनं भूयः पञ्चगव्यमतःपरम् ।

विप्रस्त्रीणां मद्यपपुरुषसंसर्गे विप्रप्रायश्चित्ताऽर्द्धं क्षत्रियादीनां पूर्व्ववत् ।

इति हेमाद्रौ मद्यपस्त्रीगमनप्रायश्चित्तम् ।

---

(१) आहेति श्रीतपुस्तके नास्ति ।

(२) व्रजेत् इति वेष्कितपुस्तकपाठः ।

(३) व्रजेत् इति वेष्कितपुस्तकपाठः ।

(४) षड्ब्दं इति श्रीत-वेष्कितपुस्तकपाठः ।

## अथ ऋतुकालपरित्यागप्रायश्चित्तमाह[1] ।

देवल:—

[2]ऋतुस्नातां तु योभार्य्यां स्वस्थः सन्नोपगच्छति ।

भ्रूणहत्यामवाप्नोति नरकं[3]चाधिगच्छति ॥

ऋतुकालाऽतिक्रमे हेतुमाह

व्रतादिश्राद्धकालेषु पञ्चपर्व्वसु योद्विजः ।

भार्य्यामृतुमतीं स्नातां यो [4]गच्छेत् स तु पापभाक् ।

मरीचि:—

ऋतुकाले समायाते श्राद्धकाल [5]उपस्थितः ।

[6]व्रतकालस्तथा राजन् उभयं तु परित्यजेत् ॥

तयोर्द्वयोर्बलीयान्स श्राद्धकालोमहत्तरः ।

ऋतोर्दिनानि सन्त्येव श्राद्धादिषु न सन्ति हि ॥

अतः श्राद्धादिकालश्च न त्याज्योविप्रपुङ्गवैः ।

श्राद्ध-व्रतपरित्यागे दोषबाहुल्यात् कालस्याऽसम्भवाच्च श्राद्धादि-कालो बलवान् । ऋतुकालस्तु[7] षोडशदिनानि सन्ति । [8]रोगादि-

---

(१) आहेति क्रोतपुस्तके नास्ति ।

(२) ऋतुस्नातां इति वेङ्कितपुस्तकपाठः ।

(३) नरकं वा इति वेङ्कितपुस्तकपाठः ।

(४) गत्वा इति क्रोत वेङ्कितपुस्तकपाठः ।

(५) उपस्थिते इति क्रोत-वेङ्कितपुस्तकपाठः ।

(६) व्रतकाले तथा इति क्रोत वेङ्कितपुस्तकपाठः ।

(७) ऋतुकालस्य तु इति वेङ्कितपुस्तकपाठः ।

(८) रोगादि वर्ज्जितः इति वेङ्कितपुस्तकपाठः ।

रहितोभर्त्ता पुत्रकामी समदिनेषु आद्यन्तदिनरहितेषु संसर्गं कुर्य्यात्। तदेवाह कात्यायनः—

ऋतुस्नातां [1]नरोभार्य्यां व्रतस्थाद्यविवर्जिते।
स्वयं वै रोगरहितोयभेत् सन्तानकाम्यया॥
अन्यथा दोषमाप्नोति प्रायश्चित्तमिहार्हति।

महाराजविजये--

अनिमित्ततया विप्रः पत्नीमृतुमतीं त्यजेत्।
भ्रुणहत्यामवाप्नोति प्राजापत्यं समाचरेत्॥

पूर्व्वोक्तनिमित्तैर्विना ऋतुमतीं [2]संत्यजन् प्राजापत्यं कृत्वा दोषोन्मुक्तो भूयात्।

इति हेमाद्रौ ऋतुकालपरित्यागप्रायश्चित्तम्।

---

(१) तु योभार्य्यां इति कोतलेखितपुस्तकपाठः।
(२) सन्त्यज इति कोतपुस्तकपाठः।

## अथ कन्यकागमनप्रायश्चित्तमाह।

देवलः –

अप्रौढ़ां कन्यकां विप्रोयभेत् कामातुरोऽन्वहम्।
तस्यैव नरके वासः कानीनः स्यात्तदुद्भवः॥

मार्कण्डेयः—

असंस्कृतां पुष्पहीनां कन्यकां[1] योद्विजाधमः।
गन्तुमिच्छति पापात्मा नरकं याति दारुणम्॥

पराशरः—

सुखजोसुखजाज्जातां कन्यां यः [2]संपरिग्रहेत्।
स एव नरकस्थायी यावदाभूतसंप्लवम्॥
प्राजापत्यं तदा मासे वर्षे चान्द्रं प्रकीर्त्तितम्।
अतःपरमशुद्धोऽभूत् सुरापूरितभाण्डवान्॥

वर्षादूर्द्ध्वं पतितप्रायश्चित्तं पूर्व्वोक्तं कृत्वा शुद्धिमाप्नोति। विप्रस्तु क्षत्रियवैश्यकन्यासु संसर्गं कृत्वा पादहीनं प्रायश्चित्तं कृत्वा शुध्यति शूद्रकन्यागमने पूर्व्ववत्।

इति हेमाद्रौ कन्यागमनप्रायश्चित्तम्।

---

(१) कन्यांवा यो द्विजाधमः इति क्रीतपुस्तकपाठः।

(२) न परिग्रहे इति क्रीतपुस्तकपाठः।

## अथ कन्यकादूषणप्रायश्चित्तमाह ।

देवलः –

द्विजो योदक्षिणां[1] कन्यां सभामध्ये विनिन्दयेत् ।
सएव पापकर्म्मा स्यात् मृत्वा नरकमश्नुते ॥

गौतमः—

योविप्रोदक्षिणां कन्यां विनिन्दयति सर्व्वदा ।
स गत्वा नरकं घोरं भुवि भूयात् मृतप्रजः ॥

कन्यादूषणमितिमध्यमानामिकाभ्यां योनिप्रवेशं कृत्वा यत् शोधयति तदेव कन्यादूषणम् ।

जावालिः—

मध्यमानामिकाभ्याञ्च कन्यामूत्रप्रवेशने ।
[2]कुर्य्यात् प्रवेशं यद्व विप्रास्तत्कन्यादूषणं विदुः ॥
न विवाह्या द्विजैः सा तु योनिदेशविशोधनात् ।
प्रायश्चित्तमिदं कुर्य्यात् कन्यादूषणपापभाक् ॥
चान्द्रायणत्रयं कृत्वा शुद्धिमाप्नोति पौर्व्विकीम् ।

क्षत्रियादिदूषणेऽप्येवम् ।

इति हेमाद्रौ कन्यकादूषणप्रायश्चित्तम् ।

---

(१) दक्षितां इति क्रीत-काशीपुस्तकपाठः ।

(२) कृत्वा प्रवेशं योविप्र इति क्रीत-शोभितपुस्तकपाठः ।

## अथ पुंसि मैथुनप्रायश्चित्तमाह[1]।

देवलः—

योविप्रः पुरुषं गच्छेत् पञ्चवाणातुरः खलः।
स्वदारेषु मुखे वापि यभेत् पापपरायणः॥
तस्य वीर्य्यं क्षयं याति मृतोनरकमश्नुते।

मार्कण्डेयः—

यो विप्रः पुंसि संसर्गं[2] स्वदारेषु रतिं मुखे।
कुर्य्याद् यदिह पापात्मा तद्रेतः क्लीवतामगात्॥
यमलोकमुपागम्य तत्र वासः सदा भवेत्।
तस्यैव निष्कृतिर्नास्ति पुनः संस्कारणं विना॥

नारदः— स्वदारेषु मुखे राजन् योविप्रः पुरुषं यभेत्।
तस्य वीर्य्यं क्षयं याति स वै नरकमश्नुते॥

जावालिः—पश्चात्तापमवाप्याथ यदीच्छेत् शुद्धिमात्मनः।
एकस्मिन् दिवसे तप्तं मासे चान्द्रं ततः परम्॥
अब्दात् परं मुनिश्रेष्ठ षडब्दं कृच्छ्रमाचरेत्।
तस्योपनयनं भूयः पटगर्भविधानतः॥
पञ्चगव्यं पिवेत् पश्चात् पूतोभवति सर्व्वदा।

इति हेमाद्रौ पुंसि मैथुनप्रायश्चित्तम्।

---

(१) आहेति क्रीतपुस्तके नास्ति।
(२) संसर्गे इति क्रीतपुस्तकपाठः।

## अथ उष्ट्र-खर-वड़वामैथुनप्रायश्चित्तमाह[1] ।

देवलः—

[2]खरीमुष्ट्रीञ्च वड़वां विप्रो [3]मोहमदान्धवान् ।
यभेद्यदि स पापात्मा रौरवं नरकं व्रजेत् ॥

वशिष्ठः—[4]खरीमुष्ट्रीञ्च वड़वां विप्रः कामातुरः सन्नत् ।
यभेन्नज्ञां विहयाऽऽशु स वै नरकमश्नुते ॥

जावालिः—

खरीमुष्ट्रीञ्च वड़वां यभेद्विप्रोमदातुरः ।
रौरवं नरकं याति यावदाभूतसंप्लवम् ॥
तस्य दोषविनाशार्थं प्रायश्चित्तमुदीरितम् ।
खरे चाब्दं तथोष्ट्रे च पराकं वड़वागमे ॥
एतेन शुद्धिमाप्नोति पुनः संस्कारपूर्व्वकम् ।
पञ्चगव्यं पिवेत् पश्चात् शुद्धोभवति निश्चयः ॥ इति

क्षत्रिय-वश्ययोर्विप्रोक्ताद् द्विगुणं प्रायश्चित्तं विशोधनम् ।

इति हेमाद्रौ खरोष्ट्रवड़वामैथुनप्रायश्चित्तम् ।

---

(१) आहेति क्रीतपुस्तके नास्ति ।
(२) खरमुष्ट्रञ्च वड़वां इति लेखितपुस्तकपाठः ।
(३) यदि इति क्रीत-लेखितपुस्तकपाठः ।
(४) वड़वां खरमुष्ट्रं च इति लेखितपुस्तकपाठः ।

## अथ महिषीवत्साजागमनप्रायश्चित्तमाह[1] ।

देवलः—

वत्सं वा महिषीं वत्सां अजमेषादिकं तथा ।
[2]गच्छेद् द्विजो महापापी सद्यः पतितुमर्हति ॥

पराशरः—

वत्सं मेषं तथा वत्सां महिषीं मदनातुरः ।
विप्रो यदि रमेत् पापी यमलोकमवाप्नुयात् ॥

नागरखण्डे—

वत्सं वत्सां तथा मेषां महिषीं मुखसम्भवः ।
रमेत् कामातुरः पापी मृत्वा नरकमश्नुते ॥
[3]वत्सायां वत्सके मेषे तप्तकृच्छ्रं विशोधनम् ॥
महिष्याञ्च हरिण्याञ्च प्राजापत्यं समाचरेत् ।
पुनः संस्कारमन्त्रैश्च कृत्वा शुद्धिमवाप्नुयात् ॥
पञ्चगव्यं पिबेद् पश्चाद् चाभ्यासे चान्द्रमुच्यते ।

क्षत्रियवैश्ययोरेवं द्विगुणम् ।

इति हेमाद्रौ महिषीवत्साजागमनप्रायश्चित्तम् ।

---

(१) आहेति श्रौतपुस्तके नास्ति ।
(२) गर्भेदिति श्रौतपुस्तकपाठः ।
(३) वत्से वत्से तथाजेष इति श्रौत-चैम्बितपुस्तकपाठः ।

## अथ [1]करादौ [2]शुक्रोत्सर्गप्रायश्चित्तमाह ।

मार्कण्डेयः—

अयोनौ च वियोनौ च पशुयोनौच भारत ।
समुत्सृजन्ते ये शुक्रं ते वै निरयगामिनः॥

अयोनिर्हस्तादिः पशुयोनिर्गोवत्सादिः ।

नारदः—

[3]कटे वा पशुपक्ष्यादौ जले वा वह्निमध्यतः ।
विप्रः कामातुरः पापी [4]शुक्रोत्सर्गं यदाऽऽचरेत् ॥
तदा यमपुरं गत्वा तिष्ठत्याचन्द्रतारकम् ।

मनुः—

पशुपक्षिजले मार्गे कटायां वीजमुत्सृजन् ।
स गच्छेन्नरकं घोरं पुनरावृत्तिदुर्लभम् ॥
परेद्युर्वा तदानीं वा सचैलं स्नानमाचरेत् ।
जपेत् सहस्रं गायत्रीं ततः शुद्धिरवाप्यते ॥
नान्यथा शुद्धिरेतस्य [5]कृत्वा पापापनुत्तये ।

क्षत्रियवैश्ययोर्विप्रप्रायश्चित्ताद् द्विगुणम् ।

इति हेमाद्रौ करादौ शुक्रोत्सर्गप्रायश्चित्तम् ।

---

(१) कटादौ इति क्वचित्पुस्तकपाठः ।
(२) रेतोत्सर्ग इति क्वचित्पुस्तकपाठः ।
(३) करावामिति श्रौतपुस्तकपाठः ।
(४) रेतोत्सर्गं इति श्रौत क्वचित्पुस्तकपाठः ।
(५) कृत्वा इति क्वचित्पुस्तकपाठः ।

## अथाऽवकीर्णिप्रायश्चित्तमाह[1] ।

देवलः— आश्रमाणां पुरोवर्त्ती ब्रह्मचारीह दैवतः ।
रेतोत्सर्गं यदा कुर्य्यात् स्वप्ने वा मुष्टिमैथुने ॥
अवकीर्णी स विज्ञेयः सर्व्वधर्म्मबहिष्कृतः ।
महापापमवाप्नोति [2]जपः चरति तत्क्षणात् ॥

मार्कण्डेयः—

[3]उपनायदिनाद् वर्णी ब्रह्मचर्य्यपरायणः ।
प्रमादादिह लोभाद्वा यभेन्नारीमकल्मषः ॥
अवकीर्णी स विज्ञेयः सर्व्वधर्म्मबहिष्कृतः ।

गालवः— मौञ्जीव्रतदिनाद् राजन् ब्रह्मचर्य्यमकल्मषम् ।
चरन् [4]व्रतीह दुःसङ्गात् योषो रेतः समुत्सृजन् ॥
अवकीर्णी सविज्ञेयः सर्व्वदा तं परित्यजेत् ।
तस्य देहविशुद्ध्यर्थं पराकं त्वकृमीरितम् ॥
तथा गर्द्दभ [5]मालभ्य शुद्धिमाप्नोति पौर्व्विकीम् ।
पुनः संस्कारपूतात्मा पञ्चगव्यं पिबेत्ततः ॥
एतेन शुद्धिमाप्नोति ब्रह्मचारी नचाऽन्यथा ।

इति हेमाद्रौ अवकीर्णिप्रायश्चित्तम् ।

---

(१) अवकीर्णप्रायश्चित्तमिति श्रीतपुस्तकपाठः ।
(२) तपः इति श्रीतपुस्तकपाठः ।
(३) उपनयनदिनात् इति श्रीत-वेष्टितपुस्तकपाठः ।
(४) वर्णीह दुःसङ्गात् इति श्रीत-कामीपुस्तकपाठः ।
(५) आलभ्य इति श्रीतपुस्तकपाठः ।

## अथ [1]मिथ्यावादिप्रायश्चित्तमाह ।

देवलः—

योविप्रः साधुवृत्तेषु पुण्यवत्सु द्विजेषु च ।
[2]मिथ्यारोपी महादोषःश्रस्तिः [3]विप्रवदन्मृषा ॥

महाभारते—

साधुवृत्तेषु विप्रेषु योविप्रस्तु मृषा वदन् ।
स्तेयं वा व्यभिचारो वा हत्या वाऽप्यस्ति सर्व्वदा ॥
इति यो वदते साधुं स मिथ्यावादवान् द्विजः ।
देवकार्य्येषु पित्रेषु [4]श्रनर्हस्तु मृषा वदन् ।

मार्कण्डेयः—

पापिनां पापगणनां[5] न वदेद् वै कदाचन ।
श्रस्ति चेत् तुल्यपापीस्यान् मिथ्या चेद्द्विगुणं भवेत् ॥

मरीचिः—

[6]मिथ्या यः साधुवृत्तेषु दोषारोपो[7] गुणिष्वपि ।
विप्रेषु कलुषं वाचा वदन् ग्रामे सभास्थले ॥

---

(१) मिथ्यावादप्रायश्चित्तमित्येव क्रीतपुस्तकपाठः ।
(२) "मिथ्यादोषो महादोष· श्रस्ति विप्रोवदेन्मृषा इति क्रीतपुस्तकपाठः ।
(३) विप्रोमिथ्ययावदन् इति लेखितपुस्तकपाठः ।
(४) श्रनर्होमिथ्ययावदन् इति लेखितपुस्तकपाठः ।
(५) गणनादिति लेखितपुस्तकपाठः ।
(६) मिथ्यायां इति लेखितपुस्तकपाठः ।
(७) दोषारोपे इति लेखितपुस्तकपाठः ।

सएव नरकं गत्वा [1]श्वनोयोनिषु जायते ।
तस्य पापविनाशाय प्रायश्चित्तं महत्तरम्[2] ॥
विप्रेषु तप्तकृच्छ्रं स्याद् अङ्गनास्विह यावकम्[3] ।
बालवृद्धातुरेष्वेषु वदन् पराक[4] माचरेत् ॥
क्षत्रियादिषु सर्व्वेषु प्राजापत्यमुदीरितम् ।
न मिथ्याभाषणं कुर्य्याद् दोषारोपं परित्यजेत् ॥

इति हेमाद्रौ [5]मिथ्यावादिप्रायश्चित्तम् ।

---

(१) श्वानयोनिषु इति लेखितपुस्तकपाठः ।
(२) महत्तरं इति क्रीतपुस्तकपाठः ।
(३) कारकं इति क्रीत-लेखितपुस्तकपाठः ।
(४) यावकमाचरेत् इति क्रीतपुस्तकपाठः ।
(५) मिथ्यावादप्रायश्चित्तमिति क्रीतपुस्तकपाठः ।

## अथाऽभिशस्तप्रायश्चित्तमाह।

देवलः—

पूर्व्वंवन्निन्द्याऽऽ[1]वेशे अभिशस्तः सउच्यते।
अयोग्योहव्यकव्येषु निन्दितः सर्व्वदा जनैः॥
नास्त्यकीर्त्तिसमोमृत्युरिह लोके परत्र च।
अस्ति वा नास्ति वा दोषः अयशः परिवर्त्तते॥
तस्मादेतद्विशुद्ध्यर्थं [2]प्राजापत्यद्वयं चरेत्।
अभिशस्तोमहादोषान्मुच्यते नाऽत्र संशयः॥

गालवः—

[3]मिथ्यावादिकया बद्धः अभिशस्तइतीरितः।
पापमस्ति सदालोके वार्त्ता सर्व्वत्र गच्छति॥
तद्दोषपरिहारार्थं प्राजापत्यद्वयं चरेत्।
ततः शुद्धोभवत्येव मिथ्यात्वे विप्रपुङ्गवः॥
सदोषोविद्यते यत्र तत्र शान्तिं समाचरेत्।
अन्यथा दोषमाप्नोति पाप[4]स्येतस्य गूहनात्॥

---

(१) वंशे इति क्रीतपुस्तकपाठः।

(२) प्राजापत्यं समाचरेत् इति क्रीतपुस्तकपाठः।

(३) मिथ्यया वादया इति वेष्टितपुस्तकपाठ.।

(४) पापास्ते तस्य गूहनात् इति क्रीतपुस्तकपाठः।

मिथ्यात्वे प्राजापत्यद्वयं विशोधनम् । अस्तित्वे प्रतिपदोक्तं प्रायश्चित्तं कृत्वा शुद्धिमाप्नोतीत्यर्थः विप्रस्त्रीणां प्रायश्चित्ताऽर्द्धं क्षत्रियादीनां पूर्व्ववत् ।

इति हेमाद्रौ अभिशस्तप्रायश्चित्तम् ।

---

## अथ कुग्रामवासिनां प्रायश्चित्तमाह।

देवलः—

कुग्रामवासिनां पुंसां ह्यावनर्थौ प्रकीर्त्तितौ।
अपूर्व्वस्याऽऽगमोनास्ति पूर्व्वविद्या विनश्यति॥

[1]कुग्रामलक्षणमाह—

मरीचिः—

[2]श्रोत्रियश्च तटाकादिस्तृणपर्णं तथेन्धनम्।
बान्धवाश्च कुलीनाश्च विद्वान् वैद्योमहाधनो॥
न सन्ति यत्र ग्रामे च स कुग्रामइतीरितः।

अपिच—

यत्र विद्यागमोनास्ति न तत्र दिवसं वसेत्।
तत्र ग्रामे द्विजोयस्तु हव्यकव्यपराङ्मुखः॥
[3]एकं वै दिवसं तिष्ठन् महापापमवाप्नुयात्।
तस्यैव निष्कृतिर्दृष्टा वर्षे [4]चान्द्रायणव्रतात्।
मासि पराकं षण्मासे प्राजापत्यं समाचरेत्।
[5]तस्मादमुं परित्यज्य बन्धुमध्ये वसेत्सदा॥

इति हेमाद्रौ कुग्रामवासिनः प्रायश्चित्तम्।

---

(१) कुग्राम वासिनां लक्षणमाह इति क्रीतपुस्तकपाठः।
(२) श्रोत्रियाश्च तड़ागादि तृणपर्णं इति क्रीतपुस्तकपाठः।
(३) ये तत्र इति लेखितपुस्तकपाठः। यस्तत्र इति लेखितपुस्तकपाठः।
(४) चान्द्रायणाद्व्रतात् इति क्रीत-काशीपुस्तकपाठः।
(५) तस्मादेनं इति क्रीतपुस्तकपाठः।

## अथ कुत्सितसेवाप्रायश्चित्तमाह ।

देवल:—

मूर्खश्च पिशुनश्चैव मद्यपो दुर्ज्जनस्तथा ।
स्तेयी च कितवश्चैव तएते दुर्ज्जनाः स्मृताः ॥
एतेषां योद्विजः सेवां प्रत्यहं समुपाचरेत् ।
तस्यैव निष्कृतिर्नास्ति तप्तकृच्छ्रत्रयाद्विना[1] ॥

सेवाप्रकारमाह—

गौतम:—

शौचार्थं मृत्तिकां तोयं प्रत्यहं पचनक्रियाम् ।
तद्वाक्यमनुसृत्यैव हस्तपादविमर्द्दनम् ॥
उच्छिष्टमार्ज्जनं तेषां पात्रचेलादिधारणम् ।
एवं द्विजः प्रतिदिनं सेवां कुर्व्वन् प्रवर्त्तते ॥
सएव नरकस्थायी ब्रह्मकल्पत्रयादिह ।
तद्दोषपरिहारार्थं पक्ष-मास-दिनक्रमात् ॥
दिनैकस्मिन् पराकः स्यात् पक्षे तप्तमुदीरितम् ।
प्राजापत्यं तथा मासे वर्षे चान्द्रस्य भक्षणम् ॥
कृत्वा शुद्धिमवाप्नोति वर्षादूर्द्धं पतत्यधः ।

वर्षादूर्द्धं पतितप्रायश्चित्तं कृत्वा शुद्धिमाप्नोति नान्यथा ।

इति हेमाद्रौ कुत्सितसेवाप्रायश्चित्तम् ।

---

(१) त्रयाद्विना इति शीतलेश्वितपुस्तकपाठः ।

[1]अथ खरोष्ट्रबलीवर्द्दमहिषवस्ताआरोहणप्रायश्चित्तमाह ।

देवलः—

खरमुष्ट्रञ्च महिषं चानडुाहमजं तथा ।
वस्तमारुह्य मुख्यजः क्रोशमात्रं प्रवर्त्तयेत् ॥
महान्तं दोषमासाद्य भुवि भूयात् स वानरः ।
खरमुष्ट्रमनडुाहं वस्तं महिषमेवच ॥
अजमारुह्य सहसा विप्रः क्रोशं गतोयदि ।
महान्तं नरकं गत्वा वानरोभुवि जायते ॥

क्रोशप्रमाणमाह—

लौगाक्षिः—

तिर्य्यग्यवोदराण्यष्टौ ऊर्द्धं वा व्रीहयस्त्रये ।
प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वादशाङ्गुला ॥
वितस्तिद्विगुणाऽरत्नि [2]स्ते द्वे किष्कुस्ततोधनुः ।
[3]धनुःसहस्रं क्रोशश्च चतुष्क्रोशश्च योजनम् ॥
सार्द्धक्रोशप्रदेशश्च योजनं परिचक्षते ।

[4]विप्रस्यैतेषामारोहणे पृथक् पृथक् प्रायश्चित्तमाह मार्कण्डेयः—

खरमारुह्य विप्रोऽसौ योजनं यदि गच्छति ।
सप्तकृच्छ्रत्रयं प्रोक्तं शुद्धिमाप्नोति वै द्विजः ॥

(१) अथोष्ट्रानडुन्महिषेत्यादिः क्वचित् कोषितपुस्तकपाठः ।

(२) तद्द्वौ इति कोषितपुस्तकपाठः ।

(३) स्वधनुः सहस्रं इति कोषितपुस्तकपाठः ।

(४) द्विजस्यैतेषामिति कोषितपुस्तकपाठः ।

उष्ट्रं महिषमेवं चानडुहं द्विजः सकृत् ।
आरुह्य पूर्व्ववद् गच्छेत् प्राजापत्यमुदीरितम् ॥
अजं वस्तं तथाऽऽरुह्य पूर्व्ववद् यदि गच्छति ।
तत्र सान्तपनं प्रोक्तं शरीरस्य विशोधनम् ॥
पुनः कर्म्म प्रकुर्व्वीत पटगर्भविधानतः ।
एतेन शुद्धिमाप्नोति द्विजोनान्यथ शुध्यति ॥

एकस्मिन् दिवसे एकयोजने उक्तप्रायश्चित्तं, द्वितीये तृतीये वा, अभ्यासाद् द्विगुणं त्रिगुणं चतुर्गुणं वा वेदितव्यम्। सर्व्वत्र पुनरुपनयनम् ।

इति हेमाद्रौ खरोष्ट्रबलीवर्द्दमहिषवस्ताजारोहणप्रायश्चित्तम् ।

---

अथोद्वाहितायाः पुनरुद्वाहप्रायश्चित्तमाह ।

देवलः—

समुद्रयात्रास्वीकारः कमण्डलुविधारणम् ।
दत्ताऽक्षतायाः कन्यायाः पुनर्दानं वरस्य च ॥
दीर्घकालं ब्रह्मचर्य्यं [1]वर्ज्जनीयं कलौयुगे ।
एतान् धर्म्मान् परित्यज्य योविप्रोदोषभाग्भवेत्[2] ॥
तस्यैव निष्कृतिर्नास्ति तप्तकृच्छ्रव्रतादिह ।

गौतमः— पूर्व्वमुद्वाहितां कन्यामन्यस्मै धनकाङ्क्षया ।
सक्षराद्वापि राजेन्द्र दद्याद्विप्रोधनातुरः ॥
भ्रूणहत्यासमं पापमवाप्नोतीह तत्क्षणात् ।
दातुः शुद्धिः करोत्यस्मैः परिवित्तुस्तथैन्दवैः ॥
सा कन्या हरितो प्रोक्ता तत्पुत्राः कुण्डसंज्ञिताः ।
अनेकदोषबाहुल्यात् तस्य मार्गं परित्यजेत् ॥

जावालिः—

पूर्व्वमुद्वाहितां कन्यां पिता भ्राता धनेच्छया ।
[3]तथा यदिह रोषाद्वा अन्याधीनां करोति चेत् ॥
[4]महादोषमवाप्नोति पितरोयान्त्यधोगतिम् ।
दातुः शुद्धिः करोत्यस्मैर्वोढुश्चान्द्रायणत्रयैः ॥

---

(१) वर्ज्जयित्वा इति क्रीत-कोषितपुस्तकपाठः ।
(२) भवेदिह इति क्रीतपुस्तकपाठः ।
(३) तयोरिति क्रीतपुस्तकपाठः ।
(४) बहुदोषमिति क्रीत-कोषितपुस्तकपाठः ।

सा कन्या पांसुला ज्ञेया तत्पुत्रः कुण्डसंज्ञितः ।
एतद्दोषविशुद्ध्यर्थं प्रायश्चित्तं समाचरेत् ॥
कन्यादाता तु पापार्थे प्रत्यहं स्नानमाचरेत् ।
[1]वर्षमात्रेण संशुद्धोऽन्यथा शुद्धिरिष्यते ॥
तद्भर्त्ता तां परित्यज्य कुर्य्याच्चान्द्रायणत्रयम् ।
तस्योपनयनं भूयः शुद्धिमाप्नोत्यनुत्तमाम् ॥
सा कन्या पूर्व्ववर्ज्जं चान्यं त्यक्त्वा चान्द्रायणं चरेत् ।

शिशुचान्द्रायणमित्यर्थः । अन्यथा नरकं व्रजेदिति । उभयोस्त्यागे पुत्राभावे कन्यकायाश्चान्द्रायणात् शुद्धिः । पुत्रोत्पत्तौ तु तस्यास्तत्पुत्राणां च गतिर्नास्ति । अतस्तूभयोस्त्याग एव वरः ।

इति हेमाद्रौ उद्वाहितायाः कन्यायाः पुनरुद्वाहप्रायश्चित्तम् ।

---

(1) वर्षमात्रेण इति श्रीत-वैदिकपुस्तकपाठः ।

## अथ मातृसम्बन्ध[1]परिणयनप्रायश्चित्तमाह ।

देवलः —

[2]मातुः स्वसृकुले कन्या परिणीय स्वबन्धुतः ।
पश्चाज्ज्ञात्वा परित्याज्या स्वसा माता तु धर्मतः ॥

गौतमः—सम्बन्धं शोधयित्वा तु मातृतः पितृतस्तथा ।
सगोत्रप्रवरां कन्यां [3]मातुश्च भगिनीं [4]त्यजेत् ॥
यदि कामाद्विवाहेत महादोषमवाप्नुयात् ।
तयोः संसर्गतोविप्रोमातृगामीति गद्यते ॥
सगोत्रजां प्रवरजां त्यक्त्वा सुखमवाप्यते ।

मार्कण्डेयः—

सगोत्रप्रवरामेनां [5]मातुश्च भगिनीं तथा ।
अज्ञात्वा पूर्व्वमुद्वाह्य[6] ज्ञात्वा पश्चात् परित्यजेत् ॥
यदि पुष्पवतीं गच्छेत् लोभात् कामातुरः सकृत् ।
मातृगामीति विज्ञेयः सर्व्वकर्म्म[7] बहिष्कृतः ॥
पुत्रोत्पत्तौ तयोः पुत्रा [8]अन्त्यजत्वमवाप्नुयुः ।
तद्दोषपरिहारार्थं देहशुद्धिं समाचरेत् ॥

---

(१) परिभाषण इति लेखितपुस्तकपाठः ।
(२) स्वसारं मातरं यस्तु अविचार्य स्वबन्धुतः । इति क्रीत-लेखितपुस्तकपाठः ।
(३) मातरं इति क्रीत-लेखितपुस्तकपाठः ।
(४) चरेत् इति क्रीत-लेखितपुस्तकपाठः ।
(५) मातरं इति क्रीत-लेखितपुस्तकपाठः ।
(६) पूर्व्वमुद्वाह्यां इति लेखितपुस्तकपाठः ।
(७) सर्व्वधर्म्म इति क्रीतपुस्तकपाठः ।
(८) ह्यान्त्यजत्व मिति क्रीतपुस्तकपाठः ।

अगत्वा यत्र चोद्वाहस्तत्रचान्द्रमुदीरितम् ।
[1]यदा पुष्पवतीं गच्छेत् [2]तदा दोषमवाप्नुयात्[3] ।
गुरुतल्पसमं प्रोक्तं मुष्कच्छेदविवर्जितम् ।
पुत्रोत्पत्तौ वरीयान्वौ दारुण एव विधीयते ॥

सगोत्रजायाः प्रवरजायाः परिणयादौ प्रायश्चित्तं पुनः संस्कार-एव। अन्यजायाः पुत्रपक्षार्थं प्रायश्चित्तं क्षत्रियवैश्ययोर्द्विगुणम्।

इति हेमाद्रौ मातृपक्षसम्बन्धपरिणयनप्रायश्चित्तम् ।

---

(१) तथा इति क्रोत-वेष्टितपुस्तकपाठः ।
(२) तथा इति क्रोत-वेष्टितपुस्तकपाठः ।
(३) अवाप्यते इति क्रोत-वेष्टितपुस्तकपाठः ।

## अथ स्वदारपरित्यागप्रायश्चित्तमाह ।

देवलः—

निष्कारणतया पत्नीं यस्त्यजेत् पूर्वजीवया ।
'गतस्तेह परत्रापि, निन्दित'स्तच्यते जनैः ॥

गौतमः— अप्रजां दशमे वर्षे स्त्रीप्रजां द्वादशे तथा ।
मृतप्रजां पञ्चदशे सद्यस्त्वप्रियवादिनीम् ॥

अप्रियवादीनाम कलौयुगे साक्षाद्व्यभिचारः । यद्यपि अप्रियाणि भर्तृविषये कलौ युगे 'बहूनि सन्ति, तथापि साक्षाद् व्यभिचार एवाप्रियवादः तदा त्याज्या । अन्यथा दोषमाह—

गौतमः—

व्यभिचाराहते पत्नीं योविप्रः संपरित्यजेत् ।
भ्रूणहत्यामवाप्नोति ऋतुकालव्यतिक्रमात् ॥
खराजिनं बहिर्लोम परिधाय 'स यत्नतः ।
शरावपात्रमादाय भिक्षार्थं ग्राममाविशेत् ॥
'स्वदारव्यतिक्रमिणे भिक्षां देहीति याचयेत् ।
सप्तागाराण्यटित्वाथ भोजयेत् सायमादरात् ॥
षण्मासमेवं कृत्वा तु शुद्धिमाप्नोति पौर्विकीम् ।

---

(१) गतस्नेहेति केचित्पुस्तकपाठः।
(२) पूज्यते इति केचित्पुस्तकपाठः ।
(३) बहूनि इत्यत्र माषापितानि इति कौतपुस्तकपाठः ।
(४) कौत पुस्तके नास्ति ।
(५) सञ्जतः इति कौत-केचित्पुस्तकपाठः ।
(६) दार व्यतिक्रमणेन इति केचित्पुस्तकपाठः ।

तदाह आपस्तम्बः—

"दारव्यतिक्रमी खराजिनं बहिर्लोम परिधाय दारव्यतिक्रमिणे भिक्षां देहीति सप्तागाराणि चरेत्। सा वृत्तिः। षण्मासात्।" स्त्रीणां भर्तृत्यागे निष्कारणतयाप्येवमेव प्रायश्चित्तं [1]महापातकि-सङ्गास्ति चेत् [3]त्यागएव विहितः। कारणं स एव। नोचेत् स्वभर्तृप्रायश्चित्तवत् सर्व्वं कुर्य्यात् खरचर्म्मविना भिक्षार्थं पर्य्यटेत् [2]पूर्व्ववदाषण्मासात्।

इति हेमाद्रौ स्वदारपरित्यागप्रायश्चित्तम्।

---

(१) महापातक सङ्गा इति क्रीतपुस्तकपाठः।

(२) पूर्व्ववत् सदा षण्मासात् इति क्रीतपुस्तकपाठः।

(३) पत्नीत्याग इति क्रीत-लेखितपुस्तकपाठः।

## अथ पितृगृहे असंस्कृतकन्यारजो[1] दर्शनप्रायश्चित्तमाह ।

देवलः—

पितृगृहे तु या कन्या रजः पश्यत्यसंस्कृता ।
सा कन्या वृषली ज्ञेया तद्भर्त्ता वृषली पतिः ॥

वृषलः शूद्रः ।

मार्कण्डेयः—

[2]कन्यका पितृवेश्मस्था यदि पुष्पवती भवेत् ।
असंस्कृता परित्याज्या न पश्येत्तां कदाचन ॥
विवाहे नच योग्या सा लोकद्वयविगर्हिता ।
एतां परिणयन् विप्रोन योग्योहव्य-कव्ययोः ॥
न तस्यां जनयेत् पुत्रं कानीनइति कथ्यते ।
माता पिता च पुत्रश्च त्रयस्ते वृषलाः स्मृताः ॥
यथा पुष्पवती कन्या तथैव त्यक्तुमर्हति ।
न तत्र दोषस्तस्याऽस्ति गृहे स्थित्वा स दोषभाक् ॥
[3][यदिच्छेदात्मनः शुद्धिं तदा चान्द्रायणं चरेत् ] ।

गौतमः—

यदा[4] कन्या पुष्पवती द्विजस्तामुद्वहेत् यदि ।
कालान्तरे यदा श्रुत्वा तदा तां परिवर्ज्जयेत् ॥

---

(१) रजस्वला प्रायश्चित्तमिति क्रोत वेङ्कितपुस्तकपाठः ।
(२) या कन्या इति क्रोत-वेङ्कितपुस्तकपाठः ।
(३) अयं पाठः वेङ्कितपुस्तके नास्ति ।
(४) यदारजः पुष्पवती इति क्रोत-वेङ्कितपुस्तकपाठः ।

यदिच्छेद् ब्राह्मणः शुद्धिं तदा चान्द्रायणं चरेत् ।
कामातुरस्तदा गच्छेत् स चाण्डालसमोभवेत् ॥
पुत्रोत्पत्तिर्यदा भूयात् तदा पतितएव सः ।

इति हेमाद्रौ पितृगृहस्थितकन्या(१)रजोदर्शनप्रायश्चित्तम् ।

---

(१) रजस्वलाप्रायश्चित्त मिति [illegible] पुस्तकपाठः ।

## अथ कारागृहवासप्रायश्चित्तमाह ।

देवलः—

कारागृहे बलात्कारात् स्थित्वा मासमतन्द्रितः ।
न स्नानञ्च न सन्ध्यादि न देवपितृतर्पणम् ॥
न स्वाध्यायोन वा होमः शूद्र एव न संशयः ।

मरीचिः ।

मासं कारागृहे वाऽपि नौभिर्यातोदिनत्रयम् ।
[म्लेच्छावासस्तथापक्षं योवर्त्तेत् स तु पातकी ॥]

[1]गौतमः ।

बलाद्दासीकृता ये तु म्लेच्छचाण्डालदस्युभिः ।
अशुभं कारिताः कर्म्म गवादिप्राणिहिंसनम् ।
उच्छिष्टमार्ज्जनं तेषां तथा तस्यैव भक्षणम् ॥
तत्स्त्रीणाञ्च तथा [2]सङ्गस्ताभिश्च सह भोजनम् ।
मासेऽपि तद्विजातौ तु प्राजापत्यं विशोधनम् ॥
प्राजापत्यञ्च चान्द्रञ्च चरेत् संवत्सरोषितः ।
आहिताग्निस्त्रयं कुर्य्यात् यदि कारागृहे वसेत्[3] ॥
चौषामेतस्मिन् सम्भवे विप्रस्य प्रायश्चित्तार्थं मनूदितम् ।

---

[ ] अयं पाठः श्रीत-काशीपुस्तकयो र्न दृष्टः ।

(१) मरीचिरिति श्रीतपुस्तकपाठः ।

(२) तथाचान्न इति श्रीतपुस्तकपाठः ।

(३) वसन इति श्रीत ०चितपुस्तकपाठः ।

यमः—

कारागृहाद् विनिर्गत्य प्रायश्चित्तं यथोदितम्[1] ।
स्नात्वा विप्रः पुनः कर्म कुर्य्यात् शुद्धिमवाप्नुयात् ॥
नाऽन्यथा शुद्धिमाप्नोति यथा भुवि [2]सुराघटः ।

इति हेमाद्रौ कारागृहनिवासप्रायश्चित्तम् ।

---

(१) यथोचितं इति क्रीतपुस्तकपाठः ।
(२) विप्रसुराघटा इति क्रीतपुस्तकपाठः ।

अथ बन्दीगृहीतानां नारीणां प्रायश्चित्तमाह।

मार्कण्डेयः—

बन्दीकृता यदा नार्य्यो निवसेयुस्तदालये[1]।
पक्षं मासं ऋतुं वापि संवत्सरमथाऽपि वा॥
[2]एतासां निष्कृतिर्नास्ति व्यभिचारो यदा भवेत्।
तत्रापि गर्भसम्पत्तौ परित्यागो विधीयते॥

"गर्भे त्यागो विधीयत" इति मनुस्मरणाच्च। तदाह—

गौतमः—बलात् बन्दीकृता नारी तत्रैव निवसेद् यदि।
पक्षं मासं ऋतुं चाब्दं न तस्या निष्कृतिर्भवेत्॥
तथैव व्यभिचारः स्याद् यदि गर्भमधात् तदा।
दैवात् तैः पुनरुत्सृष्टा तत्र शुद्धिः कथञ्चन॥
तां पतिः पुनरादातुं विश्येद्[3] वै जारवार्त्तया।
पृच्छन् सभामुपानीय वदेत् पापं हृदि स्थितम्॥
इति भर्त्तुरनुज्ञाता सा वदेत्तत्समादरात्।
उक्ते सत्ये तया [4]तां तु सभा सम्यग्विचार्य्य च॥
षष्टिभिर्मृत्तिकाभिश्च [5]घृतप्राशनमनन्तरम्।
कारयित्वा विधानेन स्नापयित्वा नदीजलैः॥

---

(१) तथाश्रये इति क्रीतपुस्तकपाठः।

(२) न तासां इति लेखितपुस्तकपाठः।

(३) भवेत् इति क्रीतपुस्तकपाठः।

(४) याचेत् इति क्रीत-लेखितपुस्तकपाठः।

(५) घृताशीचामनन्तरं इति क्रीतपुस्तकपाठः।

कारयेत् पूर्व्ववद् विप्राः प्रायश्चित्तमनुक्रमात् ।
षड्भिमुक्तं ततस्त्रीणां प्रायश्चित्तं विशोधनम् ॥
कृत्वा शुद्धिमवाप्नोति प्राजापत्येन सर्व्वथा ।
तस्या दोषनिवृत्तिः स्याज्जनवादाच्च हीयते ॥
ततस्तु पोषणं तस्याः संसर्गादि न कारयेत् ।

इति हेमाद्रौ बन्दीग्रहतस्त्रीप्रायश्चित्तम् ।

अथ रोगनिवृत्त्यर्थं मद्यपान-स्तन्यपानप्रायश्चित्तमाह ।

देवलः—

[1]यदि रोगनिवृत्त्यर्थं द्विजो वाऽपि तदङ्गना ।
सन्निपाते महाघोरे तन्निवृत्त्यर्थमञ्जसा ॥
औषधार्थं पिबेत्स्तन्यं[2] मद्यं वा वैद्यचोदितम् ।
तदारोग [3]निवृत्तिश्चेत् मरणं वा भवेदुत ॥
तस्य देहविशुद्ध्यर्थं तप्तकृच्छ्रं समाचरेत् ।
[4]शवाभावे पुनः कर्म कर्त्तव्यं देहशुद्धये ॥
तप्तकृच्छ्रं द्विजैःकार्य्यं दत्त्वा वा बहुदक्षिणाम् ।
एतेन शुद्धिमाप्नोति मृतोजीवन्नुभौ तथा ॥
'रोगोल्बणे सन्निपाते स्तन्यं वा मद्यमेव वा ।
पीत्वा चरेत् तप्तकृच्छ्रं [ पुनः संस्कारमादरात् ] ॥

प्रायश्चित्तं कृत्वा पुनः संस्कारं कृत्वा शुध्यति। मृतश्चेत् तप्तकृच्छ्र-प्रत्याम्नायं ब्राह्मणैः कारयित्वा तत्पुत्रादिः परलोकसाधनार्थं शवमनारभ्य ? पटगर्भं विधिना विधाय कृत्वा-मन्त्राहुतिं कुर्य्यात्

(१) अथ इति क्रीतपुस्तकपाठः ।

(२) स्तन्यमिति क्रीतपुस्तकपाठः ।

(३) निवृत्त इति वेष्टितपुस्तकपाठः ।

(४) शवभावे इति वेष्टितपुस्तकपाठः ।

[ ] अयं पाठः क्रीत-वेष्टितपुस्तकयोर्नास्ति ।

एवमेतस्मिन् कृते सति मद्यपानस्तन्यपानदोषान्मुक्तः स परलोके सुखमवाप्नोति । नान्यथा पापकर्म्मैव ।

इति हैमाद्रौ रोगनिवृत्त्यर्थं मद्यपानस्तन्यपानप्रायश्चित्तम् ।

---

## अथ जातिभ्रंशकरप्रायश्चित्तम् ।

देवलः—

व्यतीपाते च याने च महापुरुषभोजने ।
भूत-प्रेत-पिशाचानां यदन्नं बलिकल्पितम् ॥
कुटुम्बभोजनं चैव ब्रह्मराक्षसभोजनम् ।

एतानि दुरन्नानि ।

एतेष्वन्नेषु योविप्रोधनलोभपरायणः ।
भुङ्क्ते तस्य गतिर्नास्ति तस्मादेतत्परित्यजेत् ॥

मार्कण्डेयः—

दुरन्नं भुक्तजोभुक्त्वा वस्त्रद्रव्यपरायणः ।
तदानीं मृत्युमाप्नोति जीवेद्वा पापकार्य्यसौ ॥
न तस्य पुनरावृत्तिर्यमलोकात् कदाचन ।

गौतमः— दुष्टान्नं योद्विजोभुङ्क्ते[1] पूर्व्वोक्तं पापकृपि यत् ।
सद्य एव परं मृत्युमुपविश्य ज्वरादिभिः ।
मृत्वा नरकमासाद्य कालेयः स भवेत्तदा ॥
तस्य दोषोपशान्त्यर्थं प्रायश्चित्तमिदं स्मृतम् ।
प्राजापत्यद्वयं कृत्वा पुनः संस्कारपूर्व्वकम् ॥
पञ्चगव्यं पिबेत्पश्चात् शुद्धोभवति भूतले ।

इति हेमाद्रौ दुरन्नभोजनप्रायश्चित्तम् ।

---

(१) भोजनं इति क्रीत-वेष्टितपुस्तकपाठः ।
(२) अन्यथा इति क्रीतवेष्टितपुस्तकपाठः ।

## अथायुतसहस्रब्राह्मणभोजनप्रायश्चित्तमाह ।

देवलः—

अयुते वा सहस्रे वा नानावर्णसमागमे ।
पतित-क्लीव-वैड़ाल-व्रात्य-तस्करपूरिते ॥
कुण्ड-गोलक-सम्पात[1] नट-नर्त्तक[2]सङ्कुले ।
पाषण्डजनसंसर्गे सर्व्वपातकसङ्कुले ॥
भाण्डोच्छिष्टस्वयंपाके स्त्रीजनैरुपशोभिते ।
योविप्रोलोकमन्विच्छेन् न[3] भुञ्जीत कदाचन ॥
यमोजिह्वां दहत्याशु सर्व्वैर्भृत्यैदारुणैः ।
तदन्ते भुवमासाद्य विड्वराहत्वमाप्नुयात् ॥

मार्कण्डेयः—

अयुते वा सहस्रे वा द्विजोब्राह्मणभोजने ।
जिह्वाचापल्यतः विप्रं भुङ्क्ते यदि कथञ्चन[4] ॥
तस्य जिह्वां यमश्छित्त्वा नरके स्थापयत्यधः ।
तत्रैव नरकं भुक्त्वा सूकरत्वमवाप्स्यति ॥
एकस्मिन् दिवसे भुक्त्वा पञ्चगव्यं पिबेत्ततः ।
पक्षं वा मासमात्रं वा भुक्त्वा विप्रोनिरन्तरम् ॥

---

(१) सम्पाते इति श्रीत-कामीपुस्तकपाठः ।
(२) नायकसंकुले इति श्रीतपुस्तकपाठः ।
(३) भुञ्जीयाच्च कदाचन इति श्रीतपुस्तकपाठः ।
(४) द्विजाधमः इति श्रीत-वैषिनपुस्तकपाठः ।

तप्तं पराकं चान्द्रञ्च कृत्वा शुद्धिमवाप्नुयात्।
वर्णोपरीह शूद्रत्वं [1]प्राप्नोति बहुवत्सरान्॥

इति हेमाद्रौ अयुतसहस्रब्राह्मणभोजनप्रायश्चित्तम्।

(१) अवाप्य इति लेखितपुस्तकपाठः।

## अथ दीर्घसत्रभोजनप्रायश्चित्तमाह ।

देवल:—

वर्षद्वयं वा[1] वर्षं वा तदूर्द्ध्वं वा जनाधिप ।
संकल्प्य भोजयेद् विप्रान् तद्दीर्घं सत्रमुच्यते ॥
विप्रस्तत्र न भुञ्जीयात् पूर्व्ववत् दुष्टसङ्गमात् ।
महादोषमवाप्नोति नरकं चाधिगच्छति ॥

गालव:--

दीर्घसत्रे तु भुञ्जीयाद् एकस्मिन् दिवसे नृप ।
महादोषमवाप्नोति तत्र नानाजनागमे ॥
कर्त्तारं स्वकृतं पुण्यं संवत्सरमुपार्ज्जितम् ।
सद्यो [2]गच्छति तत्सर्व्वं यत्नमात्रपरिग्रहात् ॥
प्रायश्चित्ती भवेद् तस्मात् अन्यथा दोषकार्य्यसौ ।

माससंवत्सरादिकमालोच्य पूर्व्वप्रायश्चित्तवत्सर्व्वं कुर्य्यात् शुद्धोभवति । नान्यथा ।

इति हेमाद्रौ दीर्घसत्रभोजनप्रायश्चित्तम् ।

---

(१) योवा कोवा इति क्वीत वेस्चित पुस्तकपाठः ।

(२) प्रविष्य इति क्वीतपुस्तकपाठः ।

## अथ शूद्रसन्नभोजनप्रायश्चित्तमाह ।

देवलः— शूद्रसन्ने न भुञ्जीयात् प्राणैः कण्ठगतैरपि ।

इत्थं विप्रोमहालोके दुःसङ्गाद् वा महाभयात् ।

महान्तं नरकं गत्वा भुवि भूयाच्च वायसः ॥

चाण्डालो वा ।

मार्कण्डेयः—

शूद्रान्नं शूद्रसम्पर्कं मासमेकं निरन्तरम् ।

कृत्वा शूद्रत्वमासाद्य चाण्डालः कोटिजन्मसु ॥

मनुः — तदन्नं तद्गृहे भुङ्क्ते तदनुज्ञानिरीक्षणम् ।

तदनुज्ञामवाप्याथ स्वयं वापि निरीक्षणम् ॥

भुक्त्वा विप्रःस पापीयान् षड्विधं शूद्रभोजनम् ।

एतेषामेवमन्नं वा विप्रोभुक्त्वा तु चापलात् ॥

महान्तं नरकं गत्वा वायसत्वमवाप्नुयात् ।

पक्षे मासे ऋतौ वाऽब्दे भोजने[1] तु यथाक्रमम् ॥

यावकं तप्तकृच्छ्रञ्च प्राजापत्यमथैन्दवम् ।

क्रमशः शुद्धिमाप्नोति कृत्वा पापान्य[2] नुक्रमात् ॥

विप्रस्त्रीणां भोजने प्राप्ते पक्ष-मास-क्रमेण तत्प्रतिपदोक्तं विप्रस्यार्द्धं वेदितव्यम् ।

इति हेमाद्रौ शूद्रान्नभोजनप्रायश्चित्तम् ।

---

(१) शुद्धिरिति केचित्पुस्तकपाठः ।

(२) कृत्वा पापान्यथाक्रमात् इति कीतपुस्तकपाठः ।

## अथ शूद्रवैश्यगृहे स्वयं पाकादि कृत्वा भोजने-प्रायश्चित्तमाह ।

जातूकर्ण्यः—

शूद्र-वैश्यगृहे विप्रस्तदामान्नं पचन् मुदा ।
तत्रैव भोजनं कृत्वा सप्तचाण्डालतां व्रजेत् ॥

देवलः—

शूद्रवैश्याऽऽलये राजन् तद्द्रव्यं पाचयेद्द्विजः ।
तत्रैव भोजनं कृत्वा तदनुज्ञापुरःसरः ॥
न तस्य निष्कृतिर्वाऽस्ति [1]प्रायश्चित्तायुतैरपि ।

जाबालिः—

वैश्य[2] शूद्रगृहे राजन् गृहीत्वाऽऽमं सकृद् द्विजः ।
तत्रैव भुक्त्वा तद्द्रव्यं भोजयेदविचारयन् ।
स महान्तं गिरिं गत्वा तत्रैव पतनं चरेत् ॥
तेन शुद्धिमवाप्नोति नान्यथा गतिरस्ति हि ।

पराशरः—

वैश्यालये वा शूद्रस्य चामं धृत्वा तदर्पितम् ।
भुक्त्वा विप्रः स पापीयान् महान्तं नरकं व्रजेत् ॥
पुनर्भूतलमागम्य चाण्डालत्वमवाप्नुयात् ।
तद्दोषपरिहारार्थं प्रायश्चित्तमिदं स्मृतम् ॥

---

(१) प्रायश्चित्तशतैरपि इति काशीपुस्तकपाठः ।
(२) वैश्यान्त्यजगृहे इति कैश्चितपुस्तकपाठः ।

परेद्युर्वा तदानीं वा वापयित्वा शिरोरुहान्।
स्नानं कृत्वा ततः पश्चात् शुद्धोभवति निश्चितम्॥

इति हेमाद्रौ शूद्रवैश्यगृहभोजनप्रायश्चित्तम्।

---

## [1]अथ प्रेतैकोद्दिष्टभोजनप्रायश्चित्तमाह ।

देवलः—

मृताहैकादशे विप्रो भुङ्क्ते कवलसंख्यया ।
तावद्युगसहस्राणि रौरवं नरकं व्रजेत् ॥
तदन्ते भुवमासाद्य रजःपायुर्भवेञ्जले ।
यावन्त्यन्नपुलाकानि कवले कवले नृप ॥
तावन्तः क्रमयः सर्व्वे भक्षितास्तेन पार्थिव ।

महानारदीये—

एकाहदिवसे राजन् द्वाविंशत्कवलसंख्यया ।
महीत्वा मूल्यमश्नाति तावन्तः क्रमिराशयः ॥
भक्षितास्तेन राजेन्द्र ! ततस्तं तत्परित्यजेत् ।
कवले कवले चान्द्रं कृत्वा शुद्धिमवाप्नुयात् ॥
पुनः कर्म्मविधानेन पटगर्भं च शुध्यति ।
अन्यथा दोषमाप्नोति प्रेतभूतश्चरन् भुवि ॥
महापातकयुक्तो वा युक्तोवा सर्व्वपातकैः ।
पटगर्भविधानेन पुनः संस्कारतत्परः ॥
शुद्धिमाप्नोति राजेन्द्र पटगर्भो महत्तरः ।

इति हेमाद्रौ एकादशाहश्राद्धभोजनप्रायश्चित्तम् ।

---

(१) अन्नो पुत्रो।द्दिष्ट इति क्रीत वेश्चितपुस्तकपाठः ।

## अथ [1]नग्नश्राद्धे प्रतिग्रहप्रायश्चित्तमाह ।

देवलः— नग्नश्राद्धे नवश्राद्धे गृहीत्वाऽऽमं द्विजोत्तमः ।
न तस्य पुनरावृत्तिर्यमलोकात् कदाचन ॥
जायते भुवि दुष्टात्मा स्थावरत्वमवाप्नुयात् ।

मरीचिः—नग्नश्राद्धं नवश्राद्धं दशाहाभ्यन्तरे [2]द्वयम् ।
[ प्रतिग्रहवतां नृणां महतां गर्हितं द्वयम् ॥ ]
तद्द्वयं प्रतिगृह्याऽऽशु महारौरवमश्नुते ।

[3]पराशरः—नवश्राद्धं च नग्नस्य सूतकाभ्यन्तरे द्वयम् ।
तद्द्वयं प्रतिगृह्याऽऽशु महारौरवमश्नुते ॥

मरीचिः—नग्नश्राद्धे तु चान्द्रं स्यात् प्राजापत्यं नवाब्दिके ।
आद्यस्थाने तदर्द्धं स्यात् तदर्द्धं स्यात् सपिण्डने ॥
प्रायश्चित्तमिदं कृत्वा शुद्धोभवति पूर्व्वजः ।

विप्रप्रतिग्रहे यथाशास्त्रम् । क्षत्रियवैश्यप्रतिग्रहे तु द्विगुणम् ।

इति हेमाद्रौ नग्नश्राद्धप्रतिग्रहप्रायश्चित्तम् ।

---

(१) नग्न प्राच्छादन इति पुनरधिकः पाठः क्रीत-वेष्टितपुस्तकयोर्दृष्ट. प्रतिग्रह-पश्चात्ताक् ।

(२) तथा इति लेखितपुस्तकपाठः ।

[ ] इदमर्द्धं क्रीत-काशीपुस्तकयोर्नदृष्टम् ।

(३) मरीचिरिति क्रीतपुस्तकपाठः ।

## अथ सूतकद्वयभोजनप्रायश्चित्तमाह ।

देवलः— सूतकद्वितये राजन् जाते तस्य द्विजोयदि ।
अज्ञानाद् भोजनं कुर्य्यात् सद्यः संस्कारमर्हति ॥
ज्ञात्वा तदन्नं [1]संच्छर्द्य पञ्चगव्यं पिबेत्ततः ।
छर्द्यभावे तदा स्नात्वा पुनः कर्म्माऽपरेऽहनि ॥
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ।
अन्यथा नरकं घोरं यात्यमैव न संशयः ॥

मार्कण्डेयः—

सूतकद्वितये ज्ञानात् विप्रोभोजनमादरात् ।
कृत्वा सद्यः पतत्येव पुनः संस्कारमाचरेत् ॥
छर्दयित्वा तदन्नं वा पञ्चगव्येन शुध्यति ।
छर्द्यभावे तदा स्नात्वा पुनः कर्म्म [2]विधानतः ॥
कृत्वा शुद्धिमवाप्नोति नान्यथा शुद्धिरीरिता ।

इति हेमाद्रौ सूतकद्वितयभोजनप्रायश्चित्तम् ।

---

(१) संत्यज्य इति कोतपुस्तकपाठः ।

(२) परेऽहनि इति कोतपुस्तकपाठः ।

## अथ श्राद्धान्नशिष्टभोजनप्रायश्चित्तमाह ।

देवलः—

अमायां पैतृके श्राद्धे सर्व्वश्राद्धे महालये ।
श्राद्धे वै यज्ञवत्याख्ये सपिण्डीकरणे तथा ॥
मासिकेषु तथा विप्रो न कुर्य्यात् शेषभोजनम् ।

महाभारते—

श्राद्धकर्म्मणि भोक्तारो भोक्तारो यज्ञकर्म्मणि ।
श्राद्धशिष्टान्नभोक्तारस्ते वै निरयगामिनः ॥
सगोत्राणां सकुल्यानां ज्ञातीनाञ्च न दोषभाक् ।
पुत्रीणामन्यगोत्राणां विधवानां न दूष्यते ॥
यतीनां कर्म्मनिष्ठानां महतां ब्रह्मचारिणाम् ।
न भोक्तव्यं पैतृकादौ पितृशेषं महात्मनाम् ॥

जावालिः—

श्वशुरस्य गुरोर्वापि मातुलस्य महात्मनः ।
ज्येष्ठभ्रातुश्च पुत्रस्य ब्रह्मनिष्ठस्य [1]ज्ञानिनः ।
एतेषां श्राद्धशिष्टान्नं भुक्त्वा दोषो न विद्यते ॥
इति केचित् प्रशंसन्ति इह यत्तदसाम्प्रतम् ।

लिङ्गपुराणे—

मातुलस्य गुरोर्वापि श्वशुरस्य महात्मनः ।
पितृव्यस्य ब्रह्मनिष्ठस्य ज्येष्ठभ्रातुश्च [2]ज्ञानिनः ॥

---

(१) ज्ञातिनः इति केचित्पुस्तकपाठः ।

(२) ज्ञातिनः इति केचित्पुस्तकपाठः ।

पैतृकेषु न भोक्तव्यं विधवानां महामुने ।

विधवानामन्यगोत्राणां श्राद्धेष्वेतेषु न भोक्तव्यं श्राद्धशिष्टान्नं अन्यगोत्रिणां ब्रह्मचारिणामपि ।

मार्कण्डेयः-पित्रादीनामथाऽन्येषां श्राद्धशिष्टान्नभोजनम् ।

व्रतिनां विधवानाञ्च यतीनाञ्च विगर्हितम् ॥

विधवानामन्यगोत्राणामित्यर्थः ।

जावालिः—

विप्रस्त्वन्यगृहे श्राद्धे [1]शिष्टान्नभोजनं चरेत् ।

प्राजापत्यं विशुद्धिः स्यात् [2]ज्ञातिगोत्री न दोषभाक् ॥

अन्यगोत्री श्राद्धशिष्टान्नभुग्यदि—

केशानां वपनं कृत्वा तप्तकृच्छ्रं समाचरेत् ।

उपविश्य शुची भूत्वा प्रणवं लक्षमाचरेत् ॥

सर्व्वत्र पञ्चगव्यप्राशनं सन्न्यासिभिर्विना ब्रह्मचारिणां स्वपित्रादेरन्नशिष्टभोजने न दोषः व्रतिनामपि । विधवानां अन्यगोत्राणां तत्रापि न भोक्तव्यं सन्न्यासिभिर्न कुत्रापि ।

इति हेमाद्रौ श्राद्धान्नशिष्टभोजनप्रायश्चित्तम् ।

---

(१) शिष्टान्नं इति लेखितपुस्तकपाठः ।

(२) ज्ञाती गोत्री इति क्रीत-लेखितपुस्तकपाठः ।

## अथ क्रीतान्नभोजनप्रायश्चित्तमाह।

देवलः—

देवालयेषु मार्गेषु ग्रामेषु नगरेषु च।
विप्रः क्रीतान्नभोक्ता चेत् तदा नरकमाप्नुयात्॥

महाभारते—

क्रीतान्नं देवतागारे ग्रामे वा पत्तने पथि।
यो भुङ्क्ते पूर्व्वजो ज्ञानात् नरकं[1] स समाप्नुयात्॥

देवीपुराणे—

विप्रः कण्ठागतप्राणः क्रीतान्नं यदि चाश्नुते।
ग्रामे वा नगरे तीर्थे महादेवालयेऽपि वा॥
स गत्वा नरकं घोरं नानायोनिषु जायते।
तस्मात्तस्य विशुद्ध्यर्थं प्रायश्चित्तमुदीरितम्॥
त्रिरात्रं भोजने कार्य्यं पक्षे तप्तं निरन्तरम्।
महातप्तं तु मासे च वत्सरे चान्द्रमुच्यते॥
अतः परं शूद्रतुल्यो विद्वानपि च दोषभाक्।

विप्रस्त्रीणामेतदर्द्धं यति-ब्रह्मचारि-विधवानां तद्द्विगुणम्। महा-क्लेशमिति जनसाहस्यात् क्रीत्वा भोजने विशेषमाह—

(१) नरकं समवाप्नुते इति क्रीत-लेखितपुस्तकपाठः।

जावालिः —

विप्रस्त्वेतद्व्रताचेमं महातीर्थं जनाहृतम् ।
क्रीत्वाऽन्नं जनसाहस्रात् इति [1]भुङ्क्ते सकृद् यदि ॥
केशानां वपनं प्रोक्तं तप्तकृच्छ्रं समाचरेत् ।

इति हेमाद्रौ क्रीतान्नभोजनप्रायश्चित्तम् ।

---

(१) अश्नुा इति क्रीत-लेखितपुस्तकपाठः ।

अथ संघातान्नभोजनप्रायश्चित्तमाह ।

देवलः—

संघीभूता यदा विप्राः क्षियोवा राजवल्लभ ।
स्वैः स्वैर्द्रव्यैरेकभाण्डे पाचयेयुः पृथक् पृथक् ॥

पृथक् पृथगिति भिन्नपात्रे वा ।

भुक्त्वा दोषमाप्नुवन्ति शूद्रतुल्या भवन्त्यतः ।

जावालिः—

विप्राश्चेदेकग्रामस्थास्तीर्थयात्रादिकर्मसु ।
संघीभूय स्वकैर्द्रव्यैः पाचयित्वाऽपि भुञ्जते ॥
शूद्रतुल्या भवन्त्येते नरकं यान्ति ते जनाः[1] ।

"एकग्रामस्था" इति पदं यत्र यत्र सम्भावितं तत्र तत्र योजनीयम् ।

गौतमः—

सङ्घीभूय द्विजाः सर्व्वे मार्गे तीर्थागमे[2]ऽपि वा ।
स्वद्रव्य[3] मेलनं कृत्वा पक्त्वा भुञ्जन्त्यदेशतः ॥
ते सर्व्वे नरकं यान्ति शूद्रतुल्या न संशयः ।
तेषामिदं मुनिप्रोक्तं प्रायश्चित्तं विशुद्धिदम् ॥

---

(१) द्विजा इति श्रीतपुस्तकपाठः ।

(२) तीर्थे गमे इति श्रीतपुस्तकपाठः ।

(३) स्वद्रव्यं इति वेष्टितपुस्तकपाठः ।

एकरात्रे पञ्चगव्यं द्विरात्रे यावकं चरेत् ।
प्राजापत्यं त्रिरात्रे च पक्षे चान्द्रायणं स्मृतम् ॥
मासे तु शूद्रतुल्याः स्युः स्त्रीणामर्द्धं [1]मुनीरितम् ।

इति हेमाद्रौ संघातान्न[2]भोजनप्रायश्चित्तम् ।

---

(१) मनीषिभिः इति लेखितपुस्तकपाठः ।
(२) संघाय इति क्रीतपुस्तकपाठः ।

## अथ यागान्नभोजनप्रायश्चित्तमाह।

देवलः—

यज्ञेषु पशुबन्धे वा यागार्थं पचनं[1] यदि।
तदा विप्रैर्नभोक्तव्यं लोकेप्सुभिरकल्मषैः॥

"पचनं [2]यदि इति" यज्ञशालायां दीक्षितगृहे वा सम्पादित-मन्नमित्यर्थः।

महाभारते—

पशुबन्धेषु यज्ञेषु अन्नमत्ति यदा द्विजः।
स वै नरकमाप्नोति स विलङ्गसमो ? द्विजः॥

कण्वः— योविप्रोयागशालासु वपायागादधोयदि।
भुङ्क्तेऽन्नं तत्र संघातं[3] महापातकमग्रतः॥
पुनस्तस्योपनयनं प्राजापत्येन शुध्यति।

एतत्प्रायश्चित्तं वपायागात् पूर्वं भोजने वेदितव्यम्।

ततः परं भोजने विशेषमाह—

गौतमः—

[4]वपायागात्परं विप्रोभोजने दीक्षितालये।
प्राजापत्यं [5]चरेच्छुद्धं मुनिभिः परिकीर्त्तितम्॥

ऋत्विजां विप्रस्त्रीणाञ्चैवं वेदितव्यम्।

---

(१) हविः इति क्रीत लेखितपुस्तकपाठः।
(२) वार्पीति क्रीत-लेखितपुस्तकपाठः।
(३) संघातं इति क्रीत-लेखितपुस्तकपाठः।
(४) तस्या इति क्रीत-लेखितपुस्तकपाठः।
(५) विप्रुद्धयर्थमिति क्रीत-लेखितपुस्तकपाठः।

तदेवाह कात्यायनः—

ऋत्विजाञ्च [1]परस्त्रीणां भोक्तृणां यागसद्मनि ।

उपोष्य रजनीमेकां पञ्चगव्येन [2]शोधनम् ।

सुवासिनीनां तद्भर्त्तुः पादोदकम् । विधवानां केशवापनं ब्रह्मकूर्च्च-विधानञ्च । यति-ब्रह्मचारिणां वपायागात्पूर्व्वं मन्नभक्षणे चान्द्रम् । ततः परं प्राजापत्यम् ।

इति हेमाद्रौ यागान्नभोजनप्रायश्चित्तम् ।

---

(१) परस्त्रीणामिति लेखितपुस्तकपाठः ।

(२) शुध्यति इति क्रीत-लेखितपुस्तकपाठः ।

## अथ चौलसीमन्तान्नभोजनप्रायश्चित्तमाह ।

देवल:—

'चौलकर्म्मणि[1] सीमन्ते मुहूर्त्ताद् भोजने'[2] परम् ।
सुरापानसमं प्रोक्तं यतो नेच्छन्ति सूरय: ॥
सीमन्ते पुंसवे चैव चौलकर्म्मणि यो द्विज: ।
असगोत्रस्तदन्नाद: सुरापीत्युच्यते बुधै: ॥

मार्कण्डेय:—

चौलकर्म्मणि सीमन्ते पुंसवे योऽन्यगोत्रज: ।
मुहूर्त्तादूर्द्ध्वभुक् पापी सुरापानमवाप्नुयात् ॥
प्रायश्चित्तं द्विजै: प्रोक्तं दुष्टान्नादिविभोजने ।
समुहूर्त्तात् परं तप्तं तत्पूर्व्वं वेदमातरम् ॥
जप्त्वा शुद्धिमवाप्नोति सहस्रं विधिपूर्व्वकम् ।
स्त्रीणामर्द्धं यतीनां च व्रतिनां चान्द्रमुच्यते ॥

पूर्व्वत्र परत्र च समम् ।

इति हेमाद्रौ चौलसीमन्तान्नभोक्तॄणां[3] प्रायश्चित्तम् ।

---

(१) चौले इति मुद्रितपुस्तकपाठ: ।
(२) भोजनं इति मुद्रित-काशीपुस्तकपाठ: ।
(३) सीमन्तभोक्तॄणामिति मुद्रित-बेङ्गालपुस्तकपाठ: ।

396 अथ गणकान्नदेवलकान्नभोजनप्रायश्चित्तमाह ।

देवलः—

देवलान्नन्तु योभुङ्क्ते गणकान्नं तथा [1]द्विजः ।
[2]मद्यपौ तौ विजानीयात् सर्व्वकर्म्मबहिष्कृतौ ॥

विष्णुरहस्ये—

देवलकान्नं यो भुङ्क्ते [3]तथा ऽन्नं गणकस्य च ।
तावुभौ पापकर्म्माणौ न सम्भाष्यौ कदाचन ॥

गारुड़पुराणे—

देवार्च्चकस्य यो भुंक्ते [1]तथा गणकवेश्मनि ।
उभौ तौ पापिनौ प्रोक्तौ प्रायश्चित्तमथाऽर्हतः ॥
एकरात्रे पञ्चगव्यं त्रिरात्रे यावकं स्मृतम् ।
मासमात्रे पराकः स्याद् षण्डे चान्द्रमुदीरितम् ॥
ततः परं तत्समः स्यात् त्रीणामर्द्धमुदीरितम् ।

यति-ब्रह्मचारि-विधवानां एतद्द्विगुणम् ।

इति हेमाद्रौ गणकदेवलकान्नभोजनप्रायश्चित्तम् ।

---

(१) देवलकान्नं भुक्त्वापि तथा गणकान्नभोजनं इति क्रीत-लेखितपुस्तकपाठः ।

(२) मद्यपौतौ इति क्रीत-लेखितपुस्तकपाठः ।

(३) तथा गणक भोजनम । इति क्रीत-लेखितपुस्तकपाठः ।

अथास्नानभोजनप्रायश्चित्तमाह ।

देवलः— अस्नाताशी मलं भुंक्ते ह्यजपी पूयशोणितम् ।
अहुत्वाशी कृमिं भुंक्ते [1]अदाता विषमश्नुते ॥

महाभारते—
अरोगी स्नानहीनःस्यात् [2]कुर्य्याद्भोजनमादरात् ।
यावन्त्यन्नपुलाकानि तावन्मलमुदीरितम् ॥

गौतमः— अस्नात्वा भोजनं विप्रो निरोगी कुरुते यदि ।
स मलाशी सदा ज्ञेयः सर्व्वकर्म्मसु गर्हितः ॥

विष्णुधर्म्मोत्तरे—
स्वस्थो विप्रो यदाऽस्नात्वा [3]भुङ्क्ते भोगपरायणः ।
विष्ठां तदन्नमिच्छन्ति मुनयस्तत्त्वदर्शिनः ॥
[4]श्राद्धकालेषु चान्द्रं स्याद् ग्रहणे तद्द्वयं स्मृतम् ।
पञ्चपर्व्वसु तप्तं स्यात् इतरत्र तु यावकम् ॥

विधवानां ब्रह्मचारिणां यतीनां च प्रायश्चित्तं[5] द्वैगुण्यम् ।

इति हेमाद्रौ अस्नानभोजनप्रायश्चित्तम् ।

---

(१) अदाताविषमश्नुते इति श्रौतपुस्तकपाठः ।
(२) स्नात्वा भोजनमिति श्रौत-लेखितपुस्तकपाठः ।
(३) भुक्त्वा इति श्रौत-लेखितपुस्तकपाठः ।
(४) श्राद्धकालेषु इति श्रौतपुस्तकपाठः ।
(५) प्रायश्चित्ताद् द्वैगुण्यमिति लेखितपुस्तकपाठः ।

## अथ पर्य्युषितान्नभोजनप्रायश्चित्तमाह ।

देवलः—

जले निधाय पूर्व्वेद्युर्यदन्नं जलसेचनम् ।
तत्तु[1] पर्य्युषितं भुक्त्वा महत् पापमवाप्नुयात् ॥

गौतमः—

दुर्गन्धि जलसिक्तञ्च रूपहीनं यदस्ति हि ।
पर्य्युषितं तु तत्त्याज्यं भुक्त्वा चान्द्रायणं चरेत् ॥

गालवः—

दिग्धं घृतेन तैलेन यदन्नं संस्कृतं च यत् ।
[2]दुर्गन्धरहितं भोज्यमन्यथा चान्द्रमुच्यते ॥

गौतमः—

हिङ्गु-जीरकसंमिश्रं तिन्तिणीरसवेष्टितम् ।
दुर्गन्धरहितं चान्नं भोक्तव्यं द्विजपुङ्गवैः ।
एतैर्द्रव्यैः परिष्कृत्य दुर्गन्धरहितं यदि ॥
कृत्वा तत् पूर्व्वदिवसे भोक्तव्यं स्याद् द्विजन्मभिः ।
दुर्गन्धिजलसंमिश्रं पूर्व्वेद्युरुदके धृतम्[3] ॥
तत्पर्य्युषितसंज्ञं स्यात् भुक्त्वा चान्द्रायणं चरेत् ।
त्रिरात्रं पञ्चरात्रं चेद्[4] भुङ्क्ते पर्य्युषितं द्विजः ॥

---

(१) तत्र इति क्रीत-लेखितपुस्तकपाठः ।
(२) दुर्गन्धरहितमिति क्रीतपुस्तकपाठः ।
(३) ध्रुवं इति क्रीत-लेखितपुस्तकपाठः ।
(४) भुक्त्वा इति क्रीत-लेखितपुस्तकपाठः ।

तस्योपनयनं भूयश्चान्द्रायणमथाचरेत्।

ब्रह्मचारि-विधवा-यतीनां द्विगुणं प्रायश्चित्तम्। ब्रह्मचारिणां संवत्सरभोजने पुनरुपनयनं चान्द्रायणद्वयञ्च।

इति हेमाद्रौ पर्य्युषितान्नभोजनप्रायश्चित्तम्।

---

## अथ दुर्भक्ष्यभक्षणप्रायश्चित्तमाह।

देवलः—

दुर्गन्धसहितं[1] भक्ष्यं तथा पर्य्युषितञ्च यत्।
[2]शष्कुलीमाषनिर्म्माणं [3]विपणिस्थञ्च यद्भवेत्॥
तैलपक्वविहीनञ्च न भोज्यं स्याद् द्विजातिभिः।

पराशरः—

भक्ष्यं वै माषसम्भूतं [4]विपणिस्थमतैलजम्।
दुर्गन्धं पूतिगन्धञ्च पितृदेवविवर्ज्जितम्॥
*[शष्कुलीफाणिकाराजन् वटका माषसम्भवाः।
निष्कारणतया विप्रो न भुञ्जीयात्कदाचन॥

गालवः -

अन्ननिर्म्मितवस्तूनि शुष्कीभूतानि शष्कुलीः।
माषका माषसम्भूता हिङ्गुजीरपरिष्कृताः॥
दुर्गन्धिपूतिगन्धीनि विपणिस्थानि यानि च।
अनर्पितानि देवानां शुभपर्पटकवर्ज्जितम्॥

---

(१) दुर्गन्धरहितं इति वेंखितपुस्तकपाठः।
(२) शुष्कुलीं इति मौत-वेंखितपुस्तकपाठः।
(३) विपाचस्थं च इति मौत-वेंखितपुस्तकपाठः।
(४) विपाचस्थमिति मौतपुस्तकपाठः।
[चिह्नात् चिह्नादारभ्य उभयत्र प्रदर्शितैतत्श्लोकद्वयचिह्नपर्य्यन्तं मुद्रितपाठः—मौतपुस्तके न दृष्टः।

न भुञ्जीयादिमानीह विप्रोदुष्टान्नभुक् तदा ।
तस्येह[1] निष्कृतिर्नोक्ता[2]विप्रैर्धर्म्मपरायणैः ॥
पित्रर्थं देवकार्य्यार्थं पक्का भुक्का न दोषभाक् ।
जिह्वाचापल्यमागम्य भक्षयेद्यदि पूर्व्वजः ॥
वृथा तानि [3]भक्षयित्वा, यावकं कृच्छ्रमाचरेत् ।
शोभते पितृकार्य्येषु देवकार्य्येषु येषु च ॥
श्रद्धान्तेषु यदा विप्रस्तदा दोषैर्न लिप्यते ।
स्त्रीणामेतदर्द्धम् । विधवा-ब्रह्मचारि-यतीनां [4]विप्राद् द्विगुणम् ।

इति हेमाद्रौ दुर्भिक्षभक्षणप्रायश्चित्तम् ।

---

(१) तस्यैव इति केचित्पुस्तकपाठः ।
(२) निष्कृतिर्नास्ति इति केचित्पुस्तकपाठः ।
(३) तु भक्षित्वा इति केचित्पुस्तकपाठः ।
(४) विप्रे इति केचित्पुस्तकपाठः ।

## अथ दुष्टशाकभक्षणप्रायश्चित्तमाह ।

देवलः—

कर्णिकारस्य यच्छाकं यच्छाकं दुश्चरीकृतम्[1] ।
[2]वेश्मोपवेशे शाकञ्च शाकं [3]मुखस्रवं तथा ॥
[4]गुर्गरो-चश्चरीशाकं शाकं वर्षोद्भवञ्च यत् ।
करञ्जशाकं दुर्भक्ष्यं देवता-पितृवर्ज्जितम् ॥
अत्यम्लयुक्तं दुर्गन्धि तच्छाकं परिवर्ज्जयेत् ।
[5]उच्छिष्टितञ्च यच्छाकं यच्छाकं पादताड़ितम् ॥
पलाण्डु-लशुनाक्रान्तं भावदुष्टं परित्यजेत् ।
एतानि विप्रो नाश्नीयात् तथैतानि न भक्षयेत् ॥
ज्ञात्वा भवेत् तदा पापी उपोष्य रजनीमिमाम् ।
परेद्युर्भक्षयेत् पञ्च-गव्यं होमपुरःसरम् ॥
एतेन शुद्धिमाप्नोति दुष्टशाकान्नभुग्द्विजः ।
स्त्रीणां विधवानां ब्रह्मचारि-यतीनां च पूर्व्ववत् ॥

इति हेमाद्रौ दुष्टशाकभक्षणप्रायश्चित्तम् ।

---

(१) दुश्चलीकृतमिति काशीपुस्तकपाठः ।
(२) वेश्मोपवेश इति केचित्पुस्तकपाठः ।
(३) मुखस्रवं इति केचित्पुस्तकपाठः ।
(४) गर्गरो इति काशीपुस्तकपाठः ।
(५) उच्छृङ्गे च इति केचित्पुस्तकपाठः ।

अथ कारणं विना परमान्न-कृसरान्नभोजने प्रायश्चित्तमाह।

देवलः—

परमान्नञ्च कृसरं तथा पक्वा द्विजोत्तमः।

भुञ्जीयात् केवलं तेन[1] नरके वासमश्नुते।

मार्कण्डेयः—

रवौ धनुःसमायाते गृहे कन्या रजस्वला।

पित्रर्थं देवकार्य्यार्थं परमान्नं प्रशस्यते॥

धनुर्मासे तु कृसरं प्रशस्तं[2] यदि दुहिता स्वसा स्नुषा वा प्रथमरजस्वला स्यात्तत्र कृसरान्नभोजने, तीर्थयात्रासु च, न दोषः। तदाह।

गौतमः--

धनुर्मासे गृहे कन्या यदि स्यात् प्रथमार्त्तवा।

देवयात्रासु सर्व्वासु कृसरान्नं न दोषकृत्।

पैतृकादिषु देवकार्य्ये बन्धुसमागमे च परमान्नभुक् न दोषभाक्[3] तदाह।

मनुः---

पितृकार्य्येषु सर्व्वेषु देवे बन्धुसमागमे।

[4]परमान्नं पचन्नद्यात् प्रभूतक्षीरसम्भवं॥

---

(१) तस्य इति लेखितपुस्तकपाठः।

(२) लेखितपुस्तके नास्ति।

(३) न दोषभाक् इति लेखितपुस्तकपाठः।

(४) दोषकारी इति लेखितपुस्तकपाठः।

(५) पक्वा [illegible] तदन्नस्य इति लेखितपुस्तकपाठः।

द्विजो विना निमित्तैस्तद् भुक्ता पापं समश्नुते।
छर्दयित्वा तदन्नञ्च उपोष्य रजनीमिमाम्॥
पञ्चगव्यं पिबेत् पश्चात् शुद्धोभवति नान्यथा।
स्त्र्यादीनां पूर्ब्बवत्।

इति हेमाद्रौ वृथा परमान्न-कृसरान्नभोजनप्रायश्चित्तम्।

---

## अथ एकादश्यामन्नभोजनप्रायश्चित्तमाह।

देवलः—एकादश्यां न भुञ्जीयात् पक्षयोरुभयोरपि।

यदि भुंक्ते स पापी स्याद्रौरवं याति दारुणम्॥

मार्कण्डेयः—

हरिवासरभुग्वापि यजत्यघविमर्दनः।

शुक्ले कृष्णे तथा राजन् महान्तं नरकं व्रजेत्॥

गालवः—

यानि कानि च पापानि ब्रह्महत्यायुतानि च।

अन्नमाश्रित्य तिष्ठन्ति तस्मादन्नं परित्यजेत्॥

"शुक्लामेव सदाऽश्नी"तिवचनं पाक्षिकं काम्यविषयम्। [1]वस्तुतो न नित्यत्वेन भोक्तव्यम्। केचिदत्र भुञ्जते तदसमीचीनम्।

मार्कण्डेयः—

[2]ब्रह्मनिष्ठश्रयोविप्रः सर्व्वद्रव्यसमस्तु यः।

कृष्णपक्षेऽन्नभुक् [3]चेत् स्यात् न पापफलभाक् तदा॥

गौतमः—

कृष्णपक्षे हरिदिने द्विजो ब्रह्मपरायणः।

भुक्त्वा सर्व्वसमः सोऽपि उपवासफलं लभेत्॥

अन्यथा विप्र[4]मात्रश्चेद् भुक्त्वा चान्द्रायणं चरेत्।

---

(१) वस्तुतो नेतिभागो लेखितपुस्तके नास्ति।

(२) ब्रह्मनिष्ठस्य विप्रस्य सर्व्वद्रव्यसमस्य च। इति लेखितपुस्तकपाठः।

(३) तत्र स इति लेखितपुस्तकपाठः।

(४) विप्रमात्रेण इति लेखितपुस्तकपाठः।

गालवः—

एकादश्यन्नभुक् पापी शुद्ध्यर्थं चान्द्रमाचरेत् ।
विप्रः सर्व्वसमस्तच भुक्ता दोषैर्न लिप्यते ॥
विधवानां व्रतिनां सन्न्यासिनां च द्विगुणं प्रायश्चित्तम् ।

इति हेमाद्रौ एकादश्यामन्नभोक्तॄणां प्रायश्चित्तम् ।

---

देवलः—

व्रात्यान्नं यदि कुष्ठान्नं भुंक्ते विप्रः क्षुधातुरः ।
कवले कवले चान्द्रं कृत्वा शुद्धिमवाप्नुयात् ॥

मरीचिः—

नग्नोवेदपरित्यागी व्रात्यो गायत्रिनाशकः ।
कुष्ठी तत्र च विज्ञेयो दुश्चर्म्मा मातृघातकः ॥
तयोरन्नं द्विजोभुक्त्वा [1]शुद्धैर चान्द्रायणञ्चरेत् ।

पराशरः—

दुश्चर्म्मणाञ्च व्रात्यस्य चान्नं भुङ्क्ते द्विजः सकृत् ।
तस्य देहविशुद्ध्यर्थं चान्द्रमुक्तं मुनीश्वरैः ॥

विधवा-ब्रह्मचारि-यतीनां पूर्व्ववत् ।

इति हेमाद्रौ व्रात्यान्न-कुष्ठान्नभोजनप्रायश्चित्तम् ।

---

(१) शुद्धिश्चान्द्रायणादिह इति लेखितपुस्तकपाठ ।

## 408 अथ कुण्डगोलकयोः परिवित्तिपरिवेत्त्रोश्चान्न-भोजनप्रायश्चित्तमाह ।

देवलः—

परिवित्तिः परिवेत्ता कुण्डश्च गोलकस्तथा[1] ।
तेषामन्नं न भोक्तव्यं विप्रैः पापपराङ्मुखैः ॥
कुण्ड-गोलक-परिवित्ति-परिवेत्तॄणां लक्षणमाह ।

मरीचिः—

स्वस्थे भर्त्तरि या नारी जारासक्ता भवेद् यदा ।
तदुत्पन्नस्तु कुण्डः स्यात् सर्व्वकर्म्मबहिष्कृतः ॥
मृते भर्त्तरि या नारी जारात् सुतमुपानयेत् ।
[2]तत्सुतोगोलसंज्ञःस्यात् सर्व्वकर्म्मबहिष्कृतः ॥
स्वस्थे ज्येष्ठे तमुल्लङ्घ्य कनीयानुद्वहेत् स्त्रियम् ।
स ज्येष्ठः परिवित्तिः स्यात् परिवेत्ता स ह्यानुजः ॥
तत्पुत्रः परिविन्नः स्यात् परिविन्दोद्वितीयजः ।

यमलयोः व्युत्क्रमसंस्कारे राज्यपालने आन्दोलिकारोहणे चैवं वेदितव्यम् ।

गालवः –

कुण्डगोलकयोरन्नं परिवित्तेस्तथैव च ।
परिवेत्तुर्यदन्नञ्च तत्पुत्राणाञ्च यद्भवेत् ॥

---

(१) कुण्डश्च गोलकश्चैव परिविवित्तिः परिवेत्ता इत्येवं पाठः लेखितपुस्तके दृष्टः ।
(२) मृते गोलकसंज्ञः इति लेखितपुस्तकपाठः ।

तयोर्व्युत्क्रमसंस्कारे यदन्नं मृष्टसंश्रितम्।
तदन्नं संपरित्याज्यं पूर्व्वजैर्धर्म्मवत्सलैः॥

पराशरः—

परिविन्तिः परिवेत्ता च तथा तौ कुण्डगोलकौ।
तेषां पुत्राश्च पौत्राश्च यमजौ व्युत्क्रमौ यदि॥
तेषामन्नं न भोक्तव्यं मुखजैर्धर्म्मलिप्सुभिः।
तत्र भुक्त्वा द्विजोऽज्ञानात् [1]दशवारं विधुं चरेत्॥

चान्द्रायणमित्यर्थः।

मासि चान्द्रं पराकञ्च चरेत् संवत्सरे भृशम्।]*
चान्द्रायणं पराकञ्च प्राजापत्यं समाचरेत्॥
अतःपरं तत्समःस्यात् अपांक्तेयः सदाऽशुचिः।

यति-विधवादीनां पूर्व्ववत्।

इति हेमाद्रौ कुण्डगोलकाद्यन्नभोक्तॄणां प्रायश्चित्तम्।

---

(१) चान्द्रं दशगुणं चरेत् इति कायोपुस्तकपाठः।

अथ यत्यन्न-दम्पतिभुक्तशिष्टान्नभोजनप्रायश्चित्तमाह।

देवलः—

यत्यन्नं यतिपात्रस्थं यतिना प्रेरितं तथा।
दम्पत्योर्भुक्तशेषं यत् तद्भुक्त्वा चान्द्रमाचरेत्॥

[1]यतिर्द्रव्यमर्ज्जयित्वा [2]यत्समाराधनादिकं करोति तद्यत्यन्नम्। यतिर्भिक्षामटित्वा स्वभोजनोपरि यच्छिष्टं [3]त्यजति तद्यतिपात्रस्थम्। स्त्रीपुरुषयो[4]र्भुक्त्यनन्तरं यदन्नं परिवेषितं तत् दम्पतिशिष्टम्। तदाह

[5]वृद्धमनुः—

धर्म्मार्थकामान् संत्यज्य प्रथमं ममतां त्यजेत्।
इमं धर्म्मं परित्यज्य यतिः पापकरो भवेत्॥
बालाश्च कुलवृद्धाश्च गर्भिण्यातुर-कन्यकाः
संभोज्याऽतिथि-भृत्यांश्च दम्पत्योः शेषभोजनम्॥
इमं [6]धर्म्मं परित्यज्य विपरीतं तयोर्यदि।
तत्र [7]भोक्ता द्विजो यस्तु स एवैत्र चान्द्रमाचरेत्॥

---

(१) यदि इति क्रीतपुस्तकपाठः।

(२) यत् इति पदं क्रीत-लेखितपुस्तकयोर्नास्ति।

(३) त्यजतीतिपदं लेखितपुस्तके नास्ति।

(४) पुरुषभुक्त्यनन्तरं इति क्रीतपुस्तकपाठः।

(५) मनुरित्येव पाठः क्रीत-लेखितपुस्तकयोर्दृष्टः।

(६) इति धर्म्मं इति क्रीत-लेखितपुस्तकपाठः।

(७) भुक्त्वा इति क्रीत-लेखितपुस्तकपाठः।

गौतमः—

यतेराराधने भुक्ता [1]यत्यन्नं भोजनोपरि।
दम्पत्योर्भुक्तशेषं यद् भुक्ता चान्द्रायणं चरेत्॥

विधवादीनां पूर्व्ववत् परिकल्पनीयम्।

इति हेमाद्रौ यत्यन्न-दम्पतिमिष्टान्नभोजनप्रायश्चित्तम्।

---

(१) यद्भुक्तं इति लेखितपुस्तकपाठः।

अथ उच्छिष्टान्नभोजनप्रायश्चित्तमाह ।

देवलः—

उल्लङ्घितं[1] पादघातं विड़ालाखुविमर्द्दितम् ।
पूर्व्वोक्तशाकसंयुक्तं पलाण्डु-लशुनाहृतम् ॥
देवपूजाविहीनं यद् वैश्वदेवविवर्ज्जितम् ।
[एकपंक्त्युपविष्टेन ब्राह्मणेन विघातितम् ॥
पुनः चालनभाण्डेषु तथा मौनविवर्ज्जितम् ।]
पुत्रैः पौत्रैरनुजैर्वा पुत्रीपुत्रैरथापि वा ॥
भार्य्याविलोकने चैव यद्यदन्नमसाक्षिकम् ।
देवालये च यद्भुक्तं यदन्नं मूल्यसम्भवम् ॥
[2]छिन्नातैलेन शूर्पेण वदनेनानिलेन च ।
शान्तं पिण्डीकृतं चान्नं यदन्नं जीवतण्डुलम् ॥
तुष-पाषाणसंयुक्तं खलीकरणमिश्रितम् ।
एतद्दुष्टं विजानीयात् पूर्व्वोक्तं गालवादिभिः ॥
एतद्भुक्त्वा [3]द्विजः सद्योमहापापं समश्नुते ।

भोक्तुरागमनात् पूर्व्वं यद् भोजनपात्रपरिवेषितं तदसाक्षिकम् । शेषं स्पष्टम् ।

---

(१) उल्लङ्घनम् इति केषाञ्चित्पुस्तकपाठः ।
[ ] एष श्लोकः क्रीतपुस्तके नास्ति ।
(२) छिन्नातैलेनेति क्रीतपुस्तकपाठः ।
(३) द्विजो यस्तु इति क्रीत केषाञ्चित्पुस्तकपाठः ।

गौतमः,—

दुष्टान्नं यो द्विजो भुङ्क्ते[1] पूर्व्वमुक्तं मनीषिभिः ।

[2]पश्चात्स देहशुद्ध्यर्थं पराकं कृच्छ्रमाचरेत् ॥

एतत्सगोत्रबालभोजनविषयमपि, भगिनीपुत्रादिसहभोजने पुत्री-पुत्रादिसह[3]भोजनाद् द्विगुणं, विधवा-ब्रह्मचारि-यतीनां पूर्व्ववत् ।

इति हेमाद्रौ उच्छिष्टान्नभोजन प्रायश्चित्तम् ।

---

(१) भुक्त्वा इति कीत-केम्ब्रिजपुस्तकपाठः ।

(२) पश्चाद्देहविशुद्ध्यर्थं इति कीत-केम्ब्रिजपुस्तकपाठः ।

(३) सहेति केम्ब्रिजपुस्तके नास्ति ।

## अथ पत्नीसहभोजनप्रायश्चित्तमाह ।

देवलः—द्विजः कामातुरोयस्तु पत्न्या सहयदान्नभुक् ।
[1]स विधाय तदा चान्द्रं शुद्धिमाप्नोति पौर्व्विकीम् ॥

पत्न्या सह भोजनकालमाह—

वृद्धमनुः—

महारण्ये च यात्रायां पथि चौराकुले सति ।
असहायो भवेद्विप्रस्तदा कार्य्यं द्विजन्मभिः ॥
एकत्र [2]यानमारोहेत् एकपात्रे तु भोजनम् ।
[3]पत्नीसह सदा भुक्त्वा विप्रस्तत्र न दोषभाक् ॥
अन्यत्र भोजने स्थाने महान्तं नरकं व्रजेत् ।
तद्दोषपरिहारार्थं पश्चाच्चान्द्रायणं चरेत् ॥

पराशरः—

एकत्र यान [4]स्यारोहमेकपात्रे तु भोजनम् ।
विवाहे पथि यात्रायां कृत्वा विप्रो न दोषभाक् ॥
अन्यथा दोषमाप्नोति पश्चाच्चान्द्रायणं चरेत् ।
अभ्यासे द्विगुणञ्चैव कृत्वा शुद्धिमवाप्नुयात् ॥

इति हेमाद्रौ पत्नीसहभोजनप्रायश्चित्तम् ।

---

(१) पश्चात् चान्द्रायणं कृत्वा इति क्रीत लेखितपुस्तकपाठः ।
(२) पात्रमारोहेदिति क्रीत पुस्तकपाठः ।
(३) भार्य्यासह इति क्रीत लेखितपुस्तकपाठः ।
(४) यानमारोहेदिति क्रीत-लेखितपुस्तकपाठः ।

## अथ शूद्रभाण्डे भोजनप्रायश्चित्तमाह ।

देवलः—

अतीव तृषितोविप्रो न शूद्रस्योदकं पिबेत् ।
तद्भाण्डभोजनं[1] चैव अज्ञानाद्यदि मार्गतः ॥
तस्योपनयनं भूयस्तप्तकृच्छ्रेण शुध्यति ।

पराशरः—

शूद्रभाण्डोदकं पीत्वा प्रपायामुदकं[2] तथा ।
शूद्रभाण्डस्थमन्नञ्च भुक्त्वाऽशुद्धः सदा द्विजः ॥
तस्योपनयनं भूयस्तप्तकृच्छ्रं समाचरेत् ।

शङ्खः—

प्रपायां शूद्रभाण्डे वा स्थितं तोयं द्विजः[3] सक्कत् ॥
अन्नं वा ज्ञानतो भुक्त्वा पुनः संस्कारमाचरेत् ॥
विधवा-ब्रह्मचारि-यतीनां पूर्व्ववत् ।

इति हेमाद्रौ शूद्रभाण्डे भोजनप्रायश्चित्तम् ।

---

(१) भोजने इति श्रौत वेष्टितपुस्तकपाठः ।
(२) उदकसेवनात् इति श्रौत-वेष्टितपुस्तकपाठः ।
(३) द्विजो यदि इति श्रौत-वेष्टितपुस्तकपाठः ।

अथ पतित-दुर्मार्गदुष्टाक्रान्तपङ्क्तौ भोजनप्रायश्चित्तमाह।

देवलः—

पतितश्च खलश्चैव दुर्ज्जनः पिशुनस्तथा।
आरश्च गायकश्चैव नित्ययाच्ञा[1] परस्तथा॥
भिषक् चोरस्तथा मर्म्मी आततायी भयप्रदः।
एते वै दुर्ज्जनाः प्रोक्ता अपांक्तेयाः सदैव हि[2]॥
कुण्डश्च गोलकश्चैव अयाज्यानाञ्च याजकः।
चक्राङ्किततनूराजन् तथा लिङ्गाङ्कितोऽपि वा॥
चार्व्वाको दूष[3]कश्चैव उन्मत्तः कितवस्तथा।
एतैरावेष्टिता पंक्तिः पापदा सर्व्वदा नृणाम्॥
एतस्यामन्नभुग् विप्रः पापमेव समाश्रयेत्।
एकत्र भोजने राजन् चान्द्रायणमथाचरेत्॥
[ मासभोजी महापापी चान्द्रं पाराकमाचरेत् ]।
वर्षभोजी महाचान्द्रं कृत्वा शुद्धिमवाप्नुयात्॥
विधवा-ब्रह्मचारि-सन्न्यासिनां पूर्व्ववद्द्विगुणम्।

इति हेमाद्रौ पतितादि दुष्टाक्रान्तपङ्क्तौ भोजनप्रायश्चित्तम्।

---

(१) याच्ञापर इति श्रौत-पुस्तकपाठः।
(२) सदाचन इति श्रौत-वर्ज्जितपुस्तकपाठः।
(३) दूषण इति क्षतपुस्तकपाठ।
[ ] इदमर्द्धं श्रौत-काशीपुस्तकयोर्नदृष्टम्।

## अथ करमथिततक्रपान[1]-पलाण्डु-लशुन-गृञ्जनादि- 417
## भक्षणप्रायश्चित्तमाह।

लशुनं गृञ्जनं तक्रं [2]पाकं विलयनं तथा।
[3]नैव भोज्यं ब्राह्मणेन जग्ध्वा पापं समश्नुते॥

गृञ्जनं कामहृद्धार्थं पर्णचूर्णं करमथितं तक्रम्। विलयनं घृतमलम्। पाकं कारीषोपरिजातं छत्रम्। एतानि विप्रैर्नभोक्तव्यानि। तदेवाह

मार्कण्डेयः—

छत्राकं विड्वराहञ्च पलाण्डुं ग्रामकुक्कुटम्।
लशुनं गृञ्जनञ्चैव मत्स्यान् जग्ध्वा पतेद्द्विजः॥
ज्ञात्वा भुक्त्वा तु चान्द्रं स्यादज्ञानात्तप्तमीरितम्।
सकृदेव द्विजो [4]ऽश्याच्चेद् बहुवारे द्विराहृतम्॥
अब्दादूर्द्ध्वं महापापी पतितः स्यान्नसंशयः।

विधवा-ब्रह्मचारिणां पूर्व्ववत्।

इति हेमाद्रौ करमथिततक्रपानादिभक्षणप्रायश्चित्तम्।

---

(१) पानेतिपदं कौत-पुस्तके नास्ति।
(२) पलाण्डुं इति कौत-केम्ब्रिजपुस्तकपाठः।
(३) पाकाभ्याज्या इति केम्ब्रिजपुस्तकपाठः।
(४) अश्नीयात् इति कौत-केम्ब्रिजपुस्तकपाठः।

418 अथ श्वेतहन्ताक-रक्तशिग्रु-हन्तालालावु-कतक-कालिङ्ग

बिल्वौदुम्बरादिभक्षणप्रायश्चित्तमाह ।

देवल:—

वार्त्ताकु कतक-कालिङ्गबिल्वौदुम्बरभि:सटा: ?

यस्य कुक्षौ प्रवर्त्तन्ते तस्य दूरतरो हरि: ॥

हन्तालालावुरक्तशिग्रु-श्वेतहन्ताकमेव च ।

[1]भक्षयेद् ब्राह्मणो यस्तु स तु चान्द्रायणं चरेत् ॥

यति-ब्रह्मचार्य्यादीनां पूर्व्ववत् ।

इति हेमाद्रौ श्वेतहन्ताक-रक्तशिग्रुहन्तालालावु-कतककालिङ्ग-

बिल्वौदुम्बरादिभक्षणप्रायश्चित्तम् ।

---

(१) भक्षयित्वा द्विजोयस्तु इति केचितपुस्तकपाठः ।

अथ ताम्रपात्रस्थितगव्यभक्षणे प्रायश्चित्तमाह ।

देवलः—

ताम्रपात्रस्थितं दुग्धं गोमूत्रं तक्रमेव वा ।
दधि वा ताम्रपात्रस्थं नारिकेलोदकं तथा ॥
द्विजः पीत्वा सुरापानं कृतवानात्र संशयः ।
अज्ञानाज्[1] ज्ञानतो वापि सुरापानसमं विदुः ॥

मार्कण्डेयः—

गव्यं मूत्रं तथा तक्रं नारिकेलोदकं तथा ।
ताम्रपात्रस्थितं [2]पीत्वा पयोलवणसंयुतम् ॥
द्विजः कामात् [3]सुरापी स्याद् अज्ञानाच् चान्द्रमचरम् ।
कृत्वा शुद्धिमवाप्नोति मद्याऽऽघ्राणे तथैन्दवम् [4] ॥

पराशरः—

नालिकेरोदकं कांस्यपात्रस्थं गव्यमेव च ।
लवणाक्तं पयश्चैव [5]पीत्वाऽऽघ्राय सुरां तथा ॥
द्विजो [6]ज्ञानाच् [7]चरेच्चान्द्रं पीत्वाऽज्ञानात्प्रजापतिम् ।
अन्यथा दोषमाप्नोति नरकञ्चाधिगच्छति ॥

---

(१) अज्ञानेज्ञानतो वा इति क्रीतपुस्तकपाठः ।
(२) कृत्वा इति लेखितपुस्तकपाठः ।
(३) सुरापानं इति क्रीत-लेखितपुस्तकपाठः ।
(४) मद्याघ्राणं तथैवच इति क्रीत-लेखितपुस्तकपाठः ।
(५) ज्ञात्वा इति लेखितपुस्तकपाठः ।
(६) पिबेत् इति क्रीतपुस्तकपाठः ।

यमः—

तास्रपात्रस्थितं गव्यं नालिकेरोदकं तथा ।
लवणाक्तं पयश्चैव मद्यगन्धं तथैवच ॥
पीत्वा द्विजवरैश्चान्द्रं प्राजापत्यमकामतः ।

तथा घ्राणे विशेषमाह—

देवलः—

हिन्ताल-तालखर्ज्जूर-नारिकेलवने चरन् ।
दैवाद् वायुवशात् प्राप्तं घ्रात्वा विप्रस्य दक्षिणम् ॥
हस्तमाघ्राय सहसा शुद्धिमाप्नोति तत्क्षणात् ।
अभावे भास्करं पश्येत् स्पृष्ट्वा कर्णं जपेद्धरिम् ॥

दैवात् (१)मद्यगन्धं वायुवशात् प्राप्तं घ्रात्वा पश्चात् विप्रस्य दक्षिण-हस्तमाघ्राय शुध्यति ।

अभावे मार्त्तण्डं पश्यन् स्वस्य दक्षिणश्रवणं स्पृष्ट्वा हरिं मनसि स्मरन् शुध्यति । ततः परं नासिकां पिधाय गच्छेत् । विप्रस्याद्यभावे नामेवम् ।

इति हेमाद्रौ ताम्रपात्रस्थगव्यादिभक्षणप्रायश्चित्तम् ।

(१) मद्यगन्धशाकपरिप्लुतगन्धं इति लेखितपुस्तकपाठः-मद्यगन्धं शाक परिप्लुतवायुवशात् इति मुद्रितपुस्तकपाठः ।

## अथ पीतोदकशेषपानप्रायश्चित्तमाह ।

देवल:—

विप्रस्य पीतशेषं यत् तोयमन्यः पिबेद् यदि ।
मद्यपानसमं प्राहुस्तत्तोयं [1]मुनिपुङ्गवाः ॥

व्यास:—

पीतशेषं द्विजः पीत्वा सुरापानसमं जलम् ।
[2]तथा स्नानाद्द्विजः कुर्य्यात् प्राजापत्यं विशुद्धये ॥

गौतम: —

एकपंक्त्युपविष्टानां विप्राणां पात्रसंस्थितम् ।
पीतशेषजलं पीत्वा विप्रः कुर्य्यात् प्रजापतिम् ॥
एतेन शुद्धिमाप्नोति न शुध्यत्यन्यथा द्विजः ।[3]

पीतशेषमपि तोयं किञ्चिद्भूमौ निक्षिप्य पाने न दोषः तदाह—

मार्कण्डेय:—

पात्राभावे जलाभावे पीतशेषं द्विजः पिबेत् ।
भूमौ किञ्चिन्नि[4]पात्यादौ पीत्वाविप्रोन दोषभाक् ॥

गौतम:—

पीतशेषं विषं विप्रः पातुमिच्छंस्तृषातुरः ।
भुवि किञ्चिज्जलं क्षिप्त्वा पीत्वा तत्र विशुध्यति ॥

---

(१) मुनिपुङ्गवैरिति केचित्पुस्तकपाठः ।
(२) पीत्वा इति क्वचित् केचित्पुस्तकपाठः ।
(३) पीत्वा इति क्वचित्पुस्तकपाठः ।
(४) निक्षिप्यादौ इति क्वचित् केचित्पुस्तकपाठः ।

एतत् पृथक्पात्राभावविषयम्। पात्रे विद्यमाने सति स्वपात्र-स्थोदकमेव पिबेत्। नान्यत्।

यमः—

आसनं शयनं वस्त्रं जायाऽपत्यं कमण्डलुः ।
आत्मनः [1]शुचिरेतानि परेषामशुचिर्भवेत् ॥

अतः स्वपात्रस्थोदकमेव समीचीनम्। अभावे पूर्व्वोक्तं कृत्वा शुध्यतीत्यर्थः।

इति हेमाद्रौ पीतशिष्टोदकपानप्रायश्चित्तम्।

---

(१) शुचिरिति क्रीतपुस्तकपाठः।

## अथ खरोष्ट्रहरिणीमृतवत्सगवीक्षीरपानादि प्रायश्चित्तमाह ।

उष्ट्रक्षीरं मृगक्षीरं साम्धिन्यं यामलं तथा ।
मुखेनोदकपानञ्च मृतवत्सापयस्तथा ॥
[1]पिबेद् द्विजः सकृन्मोहाद् [2]यदि वा महिषीपयः ।
तस्योपनयनं भूयस्तप्तकृच्छ्रं विशोधनम् ॥

मृतवत्सापयः (मृतवत्सायागोः पयः) मुखेनोदकपानं [3]हस्तेन विनेत्यर्थः ।

मार्कण्डेयः—

मृतवत्सापयः पीत्वा मुखे पीत्वा जलं द्विजः ।
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ॥

गौतमः —

मृतवत्सापयः पीत्वा मुखे पीत्वा जलं द्विजः ।
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ॥

गौतमः—

साम्धिन्यं यामलं दुग्धमुष्ट्रक्षीरञ्च मार्गजम् ।
खरोष्ट्रयोः पयः पीत्वा पुनः संस्कारमर्हति ॥
पश्चाद्देहविशुद्ध्यर्थं तप्तकृच्छ्रं समाचरेत् ।
एतेन शुद्धिमाप्नोति नान्यथा शुद्धिरिष्यते ॥

---

(१) पीत्वा इति क्वचित् लेखितपुस्तकपाठः ।
(२) केवलं इति लेखितपुस्तकपाठः ।
(३) हस्तेन इति क्वचित्-लेखितपुस्तके नास्ति ।

प्रजापतिः —

> खरोष्ट्रयोश्च सान्धिन्यं यामलं मार्गजं तथा ।
> [1]केवलं माहिषीदुग्धं द्विजः पीत्वा पतत्यधः ॥
> तस्योपनयनं भूयस्तप्तकृच्छ्रेण शुध्यति ।

विधवानां [2]ब्रह्मचारिणां सन्न्यासिनाञ्च पूर्व्ववद्द्विगुणं प्रायश्चित्तं वेदितव्यम् । औषधार्थं खरोष्ट्रयोः क्षीरपाने तप्तकृच्छ्रमात्रं न पुनः संस्कारः ।

तदाह ।

गौतमः—

> औषधार्थं द्विजः पीत्वा दुग्धं खर-क्रमेलयोः ।
> तप्तकृच्छ्रं चरेत् पश्चात् पुनःकर्म्म न गौरवात् ॥

इति हेमाद्रौ उष्ट्रक्षीरादिपानप्रायश्चित्तम् ।

---

(१) केवली इति केचितपुस्तकपाठः ।

(२) ब्रह्मचारि सन्न्यासिनां इति केचितपुस्तकपाठः ।

अथ मनुष्य-मृग-पश्वादिमल-मूत्रभक्षणप्रायश्चित्तमाह ।

देवलः—

मनुष्यस्य खरस्याऽपि सूकरस्य द्विजन्मनः ।
मलमूत्रं पिबेद्यस्तु रेतोवा रोगपीड़ितः ॥
[1]स तु पश्चात् पुनःकर्म [2]कृत्वा तप्तकृच्छ्रेण शुध्यति ।
अज्ञानात् शुद्धिमाप्नोति ज्ञात्वा चान्द्रायणं चरेत् ॥

एतदनातुरविषयम् । आतुरविषये विशेषमाह ।

गौतमः—

आतुरोरोगमुक्त्यर्थं खरमानुषसूकराः ।
एतेषां मलमूत्रञ्च पीत्वा दोषमवाप्य[3] च ॥
रोगान्ते देहशुद्ध्यर्थं तप्तकृच्छ्रं चरेत् सुधी ।
अनातुरः पुनःकर्म कृत्वा शुद्धिमवाप्नुयात् ॥

जावालिः—

द्विजः पीत्वा मलं मूत्रं खरमानुषयोः किटेः[4] ।
[5]अगदोदेहशुद्ध्यर्थं पुनःकर्मपुरःसरम् ॥
तप्तकृच्छ्रं चरेत् सम्यक् रोगी तत्तं समाचरेत् ।
एतेन शुद्धिमाप्नोति न चान्यैः कर्मभिर्द्विजः ॥

---

(१) द्विज इति श्रौत-केचित्पुस्तकपाठः ।
(२) तप्तकृच्छ्रे च इति केचित्पुस्तकपाठः ।
(३) अवाप्येते इति श्रौत-केचित्पुस्तकपाठः ।
(४) किच इति काशी-पुस्तकपाठः ।
(५) अगदे इति केचित्पुस्तकपाठः ।

यमः—

द्विजोऽशानान्मलं मूत्रं खरमानुषयोः किटेः ।
मयूरहंसगृध्राणां सकृद्भुक्त्वा तु पातकी ॥
पुनःकर्म्म प्रकुर्व्वीत तप्तकृच्छ्रं विशोधनम् ।
रोगिणोऽन्न पुनःकर्म्म कृच्छ्रमात्रमुदीरितम् ॥
सुखी भूत्वा पिवेद्गव्यं नारीणामर्द्धमीरितम् ।
यतीनां ब्रह्मचारिणां विधवानां दिराहृतम्[1] ॥

इति हेमाद्रौ मानुषखरसूकरादिमलमूत्रभक्षणप्रायश्चित्तम् ।

---

(१) द्विराहृते इति श्रौतपुस्तकपाठः ।

[ अथ अस्थिचर्म्मपक्षिलोमकेशमलोपहतशाकान्न-
भोजनप्रायश्चित्तमाह । ]

देवलः— शाकमध्येऽन्नमध्ये वा दन्तकेशनखा मलम् ।
अस्थिचर्म्म द्विजस्याङ्गरोमकीटनखायदा ॥
बहुत्वं न परित्याज्यं स्वपाकस्थं परित्यजेत् ।

अन्नप्रमाणमाचाराध्याये द्रव्यशुद्धिप्रकरणेऽभिहितम् ।

[[1]अतोऽल्पे विशेषमाह]

गौतमः— अल्पेऽन्ने शाकमध्ये वा दधिक्षीरादिषु द्विजाः ।
दन्तकेशनखाविष्ठा मलोलोमास्थि चर्म्म च ॥
कीटाद्भिन्नमयस्तत्र पचनं संपरित्यजेत् ।
स्वपात्रस्थं गृहेचाल्पमुभयं संपरित्यजेत् ।

भुक्त्यनन्तरं शाकोदकपात्रयोर्विद्यमाने तदन्नं छर्दयित्वा उपोष्य शुध्यति । छर्द्यभावे घटिकासप्तप्रमाणादौ रात्रिभोजनाद्विरम्य[2] गायत्र्यष्टशतं जप्त्वा पञ्चगव्यं पीत्वा शुध्यति । तदेवाह

मनुः—
ज्ञात्वा तैर्दूषितं भक्तं भुक्त्वा विप्रः प्रमादतः ।
द्विमुहूर्त्तं मुहूर्त्तं वा तदन्नं जीर्णतामगात् ॥
तदन्ते वमनं कृत्वा शुद्धोभवितुमर्हति ।
मोषेत् परेद्युरुषसि स्नात्वा जप्त्वा विधानतः ॥

---

[ ] अयं पाठः क्रीतपुस्तकेनोपलब्धः ।

[1] अयमपि पाठः क्रीत-काशीपुस्तकयोर्नोपलब्धः ।

(2) रात्रिभोजनं विरम्य इति क्रीत-लेखितपुस्तकपाठः ।

अष्टोत्तरशतं पश्चात् पञ्चगव्यं पिबेत्ततः ।
शुचिमाप्नोति [1]तत्पापान् न शुध्यत्यन्यथा द्विजः ॥

जाबालिः—पक्व[2]मन्नं त्यजेच्छाकं पर्य्युषितमन्नं त्यजेत्तथा ।
एतैरुपहृतं भुक्त्वा तदानीं शुद्धिमाचरेत् ॥
जीर्णे पर्य्युषिते स्नात्वा देवीं जपेच्छतम् ।
ब्रह्मकूर्चविधानेन पञ्चगव्यं पिबेत्ततः ॥
एतेन शुचिमाप्नोति मृण्मयं तत् परित्यजेत् ।

बहुकेशेषु शाकान्नयोर्मध्येस्थितेषु पूर्व्ववत् प्रायश्चित्तम् ।

एकस्मिन् स्थिते विशेषमाह गौतमः—

अन्ने वा [2]पक्वशाके वा केशमात्रे व्यवस्थिते ।
कवले वापि राजेन्द्र कवलं तत्परित्यजेत् ॥
गण्डूषमेकं कृत्वा तु शेषान्नं प्रोक्षयेज्जलैः ।
[3]मृद्भस्म वा क्षिपेत् तत्र पश्चाद् भुक्त्वा न दोषभाक् ॥

मृदं वा भस्म वा इत्यर्थः । अन्यैर्वा नारीभिर्वा स्वपात्रस्थमन्नं प्रोक्षणादिभिः [4]शुद्धं कारयित्वा स गण्डूषमेकं कृत्वा भुक्त्वा न दोषभाक् इत्यर्थः ।

इति हेमाद्रौ चर्मादि-नख-मलादिदूषितान्नभोजनप्रायश्चित्तम् ॥

---

(१) राजेन्द्र इति वेङ्कितपुस्तकपाठः ।
(२) पक्वं चान्नं इति कौतपुस्तकपाठः ।
(३) मृद्भस्म इति कौत-वेङ्कितपुस्तकपाठः ।
(४) शुद्धिमिति कौत-वेङ्कितपुस्तकपाठः ।

अथ भोजनकाले दीपनिर्व्वाणप्रायश्चित्तमाह । 429

देवल:—

'वात्यया दीपनिर्व्वाणे भोजने ग्रासमाप्नुयात् ।
धृत्वा पात्रं तदा दोर्भ्यां संस्मरन् भानुमव्ययम् ॥
पुनर्दीपागमे तात गायत्र्यार्घं जलैः क्षिपेत् ।
तदन्नमत्यजन् भुक्त्वा शुद्धिमाप्नोति दीपतः ॥
अन्यदन्नं पुनर्भुक्त्वा पञ्चगव्यं पिबेत्तदा ।

पूर्व्वं परिष्कृतमन्नमेव भोक्तव्यं न पुनर्दातव्यम् । भुक्त्वा च शुद्धि-मवाप्नुयात् । विधवा-ब्रह्मचारि-यतीनामिदं वेदितव्यम् ।

इति हेमाद्रौ भोजनसमये दीपनाशप्रायश्चित्तम् ।

---

(१) दीपं प्रज्वालयन् वाऽन्नं इति क्वचित्-पुस्तकपाठः ।

 अथ सूर्य्यसोमोपरागभोजनप्रायश्चित्तमाह ।

देवलः —

सूर्य्यसोमोपरागे च उक्तकालं विना द्विजाः[1] ।
तदन्नं मांसमित्याहुः तद्भुक्त्वा मांसभुग्भवेत् ॥

मरीचिः,—

सूर्य्यग्रहे तु नाश्नीयात् पूर्व्वं यामचतुष्टयम् ।
चन्द्रग्रहे तु यामांस्त्रीन् भुक्त्वा पापं समश्नुते ॥
[2]इमं धर्म्मं परित्यज्य योविप्रस्त्वन्यथाचरेत् ।
तस्योपनयनं भूयस्तप्तं सान्तपनं स्मृतम् ॥

सूर्य्यग्रहभोजने तप्तं चन्द्रग्रहणे सान्तपनम् ।

तदेवाह मनुः—

सूर्य्योपरागे यो भुंक्ते तस्य पापं महत्तरम् ।
तस्य पापविशुद्धयर्थं तप्तकृच्छ्रमुदीरितम् ॥
चन्द्रोपरागकाले तु भुक्त्वा कायं समाचरेत् ।
उभयोर्भोजने विप्रः पुनः संस्कारमर्हति ॥

विधवानां स्त्रीणां सन्न्यासिनाञ्च पुनः संस्कारवर्ज्जं ब्रह्मचारिणामेवम् ।

इति हेमाद्रौ सूर्य्यसोमोपरागकाले भोजनप्रायश्चित्तम् ।

---

(१) द्विज इति क्रीत-लेखितपुस्तकपाठः ।
(२) इति धर्म्मं इति क्रीत-लेखितपुस्तकपाठः ।

### अथ भिन्नपात्रभोजनप्रायश्चित्तमाह ।

[1]देवलः— स्वर्णे वा राजते कांस्ये प्रत्यहं भोजनं चरेत् ।

तद्भिन्नं यदि राजेन्द्र न कुर्य्यात्तत्र[2] भोजनम् ॥

जावालिः —

स्वर्ण-राजत-कांस्येषु पलाश कदलीषु च ।

विप्रो भुञ्जन् महापुण्यमवाप्नोति न संशयः ॥

यदि भिन्नं परित्याज्यं तत्र भुक्त्वैन्दवं चरेत् ।

एतानि स्वर्णराजतकांस्यानीयपात्रं विप्रकलितानि चेत् सर्व्वथै-तेषां [3]त्याग एव । तदेवाह—

गालवः— स्वर्णं कांस्यं तथा राजन् राजतं भिन्नमेव यत् ।

तत्र भुक्त्वा चरेत् कायमन्यथा दोषमाप्नुयात् ॥

पलाश-कदलीपर्णादिषु [4]यद् भोजनं चरेत् तान्येवाहरणीयानि न पात्रान्तराणि । अन्यथा पूर्व्ववत् प्रायश्चित्तं कृत्वा शुध्यति तदेवाह ।

पराशरः—

एषु पर्णेषु या भुक्तिस्तेषु तां समाचरेत् ।

अन्यपात्रं [5]यदा भिन्नं तत्र भुक्त्वैन्दवं चरेत् ॥

---

(१) अयं पाठः क्रीत-वेङ्कितपुस्तकयोर्न दृष्टः ।

(२) तत्रभोजनमिति वेङ्कितपुस्तकपाठः ।

(३) त्याज्यमेव इति क्रीत-वेङ्कितपुस्तकपाठः ।

(४) चः इति क्रीतवेङ्कितपुस्तकपाठः ।

(५) तदा इति क्रीतवेङ्कितपुस्तकपाठः ।

भिन्नभाण्डे एकपात्रभोजने विप्राणां धर्मोवर्द्धते अन्यथा चौरतामाप्नोति ।

गौतमः—

अभिन्नपात्रे यो भुङ्क्ते[1] पर्व्वस्वेतेषु जातितः[2] ।
भोजनं कुरुते यस्तु स पूर्णायुर्भवेदिह ॥

सर्व्वेषामेतदेव वेदितव्यं नान्यत्[3] ।

इति हेमाद्रौ भिन्नपात्रभोजनप्रायश्चित्तम् ।

---

(१) भुङ्क्ता इति केषाञ्चित्पुस्तकपाठः ।
(२) जायते इति क्रीतपुस्तकपाठः ।
(३) नान्यतः इति केषाञ्चित्पुस्तकपाठः अन्यत इति क्रीतपुस्तकपाठः ।

अथ सन्ध्यादि[1]कालेषु चाण्डालध्वनिश्रवणप्रायश्चित्तमाह।

देवलः —

स्नाने भोजनवेलायां जपहोमेषु पैतृके।
सन्ध्यादिनित्यकार्य्येषु देवपूजासु सर्व्वदा॥
चाण्डालास्त्रिविधाः प्रोक्तास्तेषां सम्भाषणादिकम्।
कृत्वा कर्म्म परित्यज्य [2]दृष्ट्वा तत्पुनराचरेत्॥
अन्यथा दोषमाप्नोति कर्म्मभ्रष्टोऽभिजायते।
चाण्डालस्यैव यत्कर्म्म तत्तु दृष्ट्वा परित्यजेत्॥

ग्रामचाण्डालानां तत्तत्साधनध्वनिश्रवणं [3]कृत्वा भोजनादिकं परित्यजेत्। तत्तत्साधनानि, यथा[4] "रजकस्य वस्त्र [5]संहननं चर्म्मकारस्य चर्म्मताड़नं, स्वर्णकारस्य सुवर्णादिताड़नं, तक्षकस्य दारुसौष्ठवार्थं तक्षणं, तिलघातस्य तिलयन्त्रध्वनिः कुलालस्य चार्द्र-भाण्डताड़नं एतेषां तत्तत्साधनभूतानां ध्वनिश्रवणे चतद्दर्शने च त्याज्यं [6]भोजनं पुनं करणीयं वा तदेवाह।

मार्कण्डेयः—

एतेषां साधनानाञ्च ध्वनिं श्रुत्वा स्वकर्म्मसु।
कर्म्म तत् संपरित्यज्य श्रोत्रं स्पृष्ट्वा च दक्षिणम्॥

---

(१) सन्ध्यादिभोजनकालेषु इति लेखितपुस्तकपाठः।
(२) दृष्ट्वा इति लेखितपुस्तकपाठः।
(३) कृत्वा इति क्रीतलेखितपुस्तकपाठः।
(४) क्रीतलेखितपुस्तकयो र्न दृष्टं यथेतिपदम्।
(५) संघात ध्वनिरिति क्रीतपुस्तकपाठः।
(६) भोजनमिति पदं क्रीत-लेखितपुस्तकयोर्न दृष्टम्।

अक्षिणी पयसा स्पृष्ट्वा [1]दृष्ट्वा सूर्य्यं विशुध्यति ।
दर्शनं संपरित्यज्य पुनःकर्म्म समारभेत् ॥
अन्यथा भोजयेद् विप्रः कर्म्म कुर्य्यात् तथा यदि ।
अष्टोत्तरशतं जप्त्वा गायत्रीं वेद[2]मातरम् ॥
एतेन शुद्धिमाप्नोति तद्विना नात्र कर्म्मणा ।
यति ब्रह्मचारिणामेवं प्रायश्चित्तम् ॥

इति हेमाद्रौ चाण्डालादिध्वनिश्रवण[3] प्रायश्चित्तम् ।

---

(१) पुनःकृत्वा इति क्रीत-लेखितपुस्तकपाठः ।
(२) वेदमाचरेत् इति क्रीतपुस्तकपाठः ।
(३) सूकरादिदर्शने प्रायश्चित्तमिति क्रीत-लेखितपुस्तकपाठः ।

## अथ रजस्वलाऽन्नभोजनप्रायश्चित्तमाह।

देवलः—

रजस्वलान्नं यो भुंक्ते[1] द्विजो ज्ञानात् सकृद् यदि।
रौरवं नरकं याति [2]स भवेत् सद्‌विगर्हितः॥

ऋतुमत्यज्ञानात् पचनादिकं कृत्वा भुक्त्यनन्तरं ईषत् [3]शुष्कं रजो दृष्ट्वा अहो रजस्वला भवामीति ज्ञात्वा अपसरति। तदपसरणे[4] सर्व्वे भुक्तवन्तो रजस्वलान्नभोक्तारः। तेषां भोक्तॄणां[5] पुनरुपनयन चान्द्रायणाभ्यां विना शुद्धिर्नास्ति। तदेवाह

मार्कण्डेयः[6]—

अज्ञात्वा पुष्पिणी नारी कृत्वा वै पचनक्रियाम्।
पश्चात् शुष्कं रजोदृष्ट्वा तस्माद्देशादपक्रमेत्॥
तां दृष्ट्वा भापणं श्रुत्वा [7]भोजनं द्विजनायकाः।
कृत्वा शुद्धिमवापुस्ते [8]व्रतचान्द्रे विधाय च।
पञ्चगव्येन शुद्धाः स्युरन्यथा पापिनोऽभवन्।

श्रुति-ब्रह्मचारिणां स्त्रीणामप्येवम्।

इति हेमाद्रौ रजस्वलान्नभोजनप्रायश्चित्तम्।

---

(१) भुक्त्वा इति क्रीत-लेखितपुस्तकपाठः।
(२) भवेत् पश्चात् इति क्रीत-लेखितपुस्तकपाठः।
(३) शुक्लं इति क्रीतपुस्तकपाठः।
(४) तदपसारे इति लेखितपुस्तकपाठः।
(५) भोक्तारः इति लेखितपुस्तकपाठः।
(६) मार्कण्डेयमनुकथात् इति क्रीत-लेखितपुस्तकपाठः

## अथ दुष्टान्नभोजनप्रायश्चित्तमाह ।

देवलः—

शूद्रैर्नानाविधैर्वर्णैश्चाण्डालादिभिरोक्षितम् ।
पुष्पवत्या सूतिकया दृष्टं वा पतितादिभिः ॥
अन्नं भक्ष्यं तथा शाकं [1]भुंक्ते विप्रः सकृद्यदि ।
प्रायश्चित्ती भवेत् पापी न कर्म्मार्हो भवेदिह ॥

गालवः—

चाण्डाल-पतित-व्रात्य [2]चाटुकाराऽजितेन्द्रियैः ।
श्मशानवर्त्तजारैश्च [3]श्वकाकैः परिदूषितम् ॥
मलमूत्रसमीपस्थं तुषाङ्गारकपालवत् ।
तत् स्पृष्टोच्छिष्टसंसृष्टं भक्ष्यमन्यच्चयद्भवेत् ॥
द्विजैस्तत्र न भोक्तव्यं शाकं वा भोज्यमेव वा ।
यदि मोहवशात् [4]भुंक्ते प्रायश्चित्ती भवेदिह ॥

लौगाक्षिः—

पूर्व्वोक्तैश्च निमित्तैर्व्वा स्पृष्टमुच्छिष्टमेव यत् ।
तदन्नं यो द्विजो भुंक्ते पश्चात्तापमवाप्यसः[5] ॥

---

(१) भुक्त्वा इति क्रोत लेखितपुस्तकपाठः ।
(२) चाटुशाकाजितेन्द्रियैः इति क्रोत-पुस्तकपाठः ।
(३) श्वकाक परिदूषितं इति लेखितपुस्तकपाठः ।
(४) भुक्त्वा इति क्रोत-लेखितपुस्तकपाठः ।
(५) अताप्यते इति क्रोत-लेखितपुस्तकपाठः ।

स्वशरीरविशुद्ध्यर्थं कायकृच्छ्रं समाचरेत्।
पञ्चगव्येन शुद्धिः स्याद् व्रतिनां यतिनामिह॥
[विधवानाञ्च नारीणां नान्यथा शुद्धिरिष्यते।]

इति हेमाद्रौ दुष्टान्नभोजनप्रायश्चित्तम्।

---

[ ] इदमर्द्धं लेखितपुस्तकपाठद्वयम्।

## अथ निषिद्धदिवसेषु द्विर्भोजनप्रायश्चित्तमाह ।

देवलः— पित्रो[1]र्मृताहे पूर्व्वेद्युर्भानुवारे च संक्रमे ।
तथा चतुर्द्दश्यष्टम्यो[2]र्व्रतेषु च महोत्सवे ॥
श्रोत्रिये मरणं प्राप्ते गुरूणां दुःखसम्भवे ।
पितरौ व्याधिना ग्रस्तौ महाराजनिपातने ॥
उक्तेष्वेतेषु सर्व्वेषु अन्येषु व्रतपर्व्वसु ।
न द्विवारं समश्नीयाद् विप्रो धर्म्मपरायणः ॥

मार्कण्डेयः—अर्कद्विपर्व्वरात्रौ च मृताहात् पूर्व्ववासरे ।
तथा चतुर्द्दश्यष्टम्योर्व्रतेषु च महोतसवे ॥
[ श्रोत्रिये मरणं प्राप्ते गुरूणां दुःखसम्भवे ।
पितरौ व्याधिना ग्रस्तौ महाराजनिपातने ॥
उक्तेष्वन्येषु सर्व्वेषु अन्येषु व्रतपर्व्वसु ।
न द्विवारं समश्नीयाद् विप्रो धर्म्ममनुस्मरन् ॥ ]
तस्य पापविशुद्ध्यर्थं सहसा निष्कृतिं चरेत् ।
अज्ञानात् कायकृच्छ्रं स्यात् ज्ञात्वा तप्तं समाचरेत् ॥
पञ्चगव्येन शुद्धोऽभूद् विप्रो द्विवारभोजने ।

इति हेमाद्रौ निषिद्धदिवसेषु [3]द्विर्भोजनप्रायश्चित्तम् ।

---

(१) मृताच इति क्रीतपुस्तकपाठः ।
(२) चतुर्द्दश्याष्टम्योरिति क्रीतलेखितपुस्तकपाठः ।
[ ] एतच्चिह्नान्तर्गतः पाठः क्रीतपुस्तके नोपलब्धः ।
(३) द्विवार इति क्रीतलेखितपुस्तकपाठः ।

## अथ देवपूजा-वैश्वदेवपरित्यागप्रायश्चित्तमाह। 

देवलः—

देवताराधनं त्यक्त्वा वैश्वदेवं तथाऽतिथिम्।
यो विप्रो भोजनं [1]कुर्य्यात् नित्यहोमं तथा त्यजन्॥
सुरापी स हि विज्ञेयः सर्व्वधर्म्म बहिष्कृतः।

मार्कण्डेयः—

वैश्वदेवं नित्यहोमं तथैवातिथिभोजनम्।
वैश्वदेवं देवतार्च्चां त्यक्त्वा विप्रो महामुनिः॥
भुक्त्वाऽज्ञानात् महादोषं[2] सुरापीत्युच्यते बुधैः।

जावालिः—

वैश्वदेवं देवतार्च्चां नित्यहोमं तथाऽतिथिम्।
ब्रह्मयज्ञं पितॄणाञ्च तर्पणं पितृवल्लभम्[3]॥
त्यक्त्वा भुक्त्वा तथा विप्रः सुरापीत्युच्यते बुधैः।
तप्तकृच्छ्रं चरेत्पापी तस्माद्दोषात् प्रमुच्यते॥
पञ्चगव्येन पूतात्मा नान्यथा शुद्धिरस्ति हि।

इति हेमाद्रौ देवपूजा-वैश्वदेव-ब्रह्मयज्ञाऽतिथि
परित्यागप्रायश्चित्तम्।

---

(१) कृत्वा इति लेखितपुस्तकपाठः।
(२) महादोषम् इति लेखितपुस्तकपाठः।
(३) पितृवल्लभः इति क्रीत-लेखितपुस्तकपाठः।

अथ उष्णोदकस्नान-मृत्तिकारहितशौचप्रायश्चित्तमाह।

उष्णोदकेन सम्प्राप्ते तथा कूपोदकेन च।

मृत्तिकाभिर्विनाशौचं [1]कृत्वासम्प्राप्तमादरात्॥

[चतुर्वेदविदोविप्राः[2] शूद्रा एव न संशयः।

गौतमः—

मृत्तिकाभिर्विनाशौचं स्नानमुष्णोदकेन वै।]

कूपोदकेन सम्प्राप्ते कृत्वा विप्रः सशूद्रवान्॥

जाबालिः—

उष्णोदकेन सम्प्राप्ते तथा कूपोदकेन च[3]।

मृत्तिकाभिर्विनाशौचं तथा कूपोदकेन च।

कृत्वाशौचादिकं विप्रः शूद्र एव न संशयः।

प्रायश्चित्तमिदं प्रोक्तं ऋषिभिर्लोकसम्मतम्॥

प्राजापत्यं विशुद्ध्यर्थं चरेत् पूतोभवेदिह।

पञ्चगव्यं पिबेत् पश्चात् तेन शुद्धिर्नचान्यथा॥

विधवा ब्रह्मचारि-यतीनां द्विगुणम्।

इति हेमाद्रौ उष्णोदक-कूपोदकस्नान-मृत्तिका
रहितशौचप्रायश्चित्तम्।

---

(१) स्नानमुष्णोदकेनार्यं इति क्रीतपुस्तकपाठः।

(२) विप्र इति काशीपुस्तकपाठः।

[ ] अयं पाठः क्रीतपुस्तके न दृष्टम्।

(३) तथाकूपोदकं महत् इति लेखितपुस्तकपाठः।

## अथ उपवीतं विना भोजने प्रायश्चित्तमाह ।

देवलः—विना यज्ञोपवीतेन शिखया च द्विजोत्तमः ।

उच्छिष्टो यदि [1]मोहात्मा पापकारी भवेद्द्विजः ॥

मार्कण्डेयः—

शिखया ब्रह्मसूत्रेण विना[2]ऽश्नीयात् तु यो द्विजः ।

उपोष्य रजनीमेकां [3]पञ्चगव्यैः स शुद्ध्यति ॥

गौतमः—

शिखा च ब्रह्मसूत्रञ्च नष्टं भ्रष्टं यदा भवेत् ।

धृत्वा नवं पुनर्मन्त्राद् भ्रष्टं तत्तु जले क्षिपेत् ॥

शिखां विना द्विजश्रेष्ठः कर्णेनोबालसोमभिः ? ।

दृष्ट्वा तद्दोषशान्त्यर्थं कायकृच्छ्रं समाचरेत् ॥

यावत् शिखा[4] पुनर्जाता तावत् कर्णेन धारयेत् ।

ब्रह्मविष्णुमहेशाख्या ब्रह्मसूत्रस्य तन्तवः ॥

एतस्मिन् त्रुटिते विप्रः पुनर्धृत्वा नवं मुदा ।

नित्यकर्म्म प्रकुर्व्वीत त्रुटितं निक्षिपेज्जले ॥

ब्रह्मसूत्रं दक्षिणांसे भ्रष्टं स्याच्चतुरङ्गुलम् ।

प्राणायामत्रयं कृत्वा पुनस्तत्स्थानमानयेत्[5] ॥

---

(१) मद्दात्मा इति क्रीत-पुस्तकपाठः ।

(२) विनाश्नाति तु यो द्विज इति क्रीतपुस्तकपाठः ।

(३) पञ्चगव्येन शुद्ध्यति इति क्रीत-वेष्टितपुस्तकपाठः ।

(४) यावच्छिखा इति क्रीत-पुस्तकपाठः ।

(५) आचरेत् इति क्रीत वेष्टितपुस्तकपाठ ।

कूर्परे ब्रह्मसूत्रं चेद् भ्रष्टं यदिह दैवतः ।
प्राणायामशतं कृत्वा स्वस्थाने पूर्ववत्क्षिपेत् ॥
मणिबन्धस्थितं सूत्रं भ्रष्टं यदिह पूर्ववत् ।
तद्दोषपरिहारार्थं प्राणायामसहस्रकम् ॥
कृत्वा शुद्धिमवाप्नोति नाऽन्यथा शुद्धिरीरिता ।
[ कृत्वा शुद्धिमवाप्नोति वामहस्तादधोयदि ।
तत्सूत्रं सहसा त्यक्त्वा दृष्ट्वा सूर्यं मुदा द्विजः ॥
जले भ्रष्टं परित्यज्य सहस्रं वेदमातरम् ।
जप्त्वा शुद्धिमवाप्नोति नाऽन्यथा शुद्धिरिष्यते ॥]

इति हेमाद्रौ उपवीतशिखां विना भोजने नित्यकर्मकरणे च प्रायश्चित्तम् ।

[ ] अयं पाठः क्वचित्पुस्तके नास्ति।

## अथ भोजनकाले क्षुताऽपानवायूत्सर्गजृम्भणानां प्रायश्चित्तमाह ।

देवलः— विप्रोभोजनकाले तु क्षुतं वा जृम्भणं तथा ।

अपानवायोरुत्सर्गं कृत्वा [1]सद्यः स पापभाक् ॥

अपानवायुमोक्षञ्चेत् कृत्वा भुञ्जीत पापभाक् ॥

विष्णुः— द्विजोभोजनकाले तु जृम्भणं क्षुतमेव वा ।

अपानवायुमोक्षं वा [2]कुर्व्वन् पापी भवेत्तदा ॥

अन्योदोर्भ्यां जलं धृत्वा तस्य मूर्द्धनि विन्यसेत् ।

पृच्छकस्तं जपमसटनं दिवा वा यदि वाऽदिवा ॥

क्षुतं तु तस्य मस्त्रातं एवं कृत्वा विशुध्यति ।

जृम्भणेऽप्येवम् ।

अपानवायोरुत्सर्गे जाते तत्तु[3] विवर्ज्जयेत् ।

भुक्त्वा पापमवाप्नोति पापं यत शौचवर्ज्जनं ॥

लोभेन भुक्त्वा तद्भुक्तं स्नात्वा कार्यं समाचरेत् ।

एतेन शुद्धिमाप्नोति द्विजो नाऽन्यत कर्म्मणि ।

इति स्त्रीणां यति-ब्रह्मचारिणामप्येवम् ।

इति हेमाद्रौ भोजनकाले क्षुत जृम्भणाऽपानवायूत्सर्गप्रायश्चित्तम् ।

(१) विप्रः इति क्वचित् लेखितपुस्तकपाठः ।

(२) प्रायश्चित्ती इति क्वचित् लेखितपुस्तकपाठः ।

(३) नान्न इति क्वचित् लेखितपुस्तकपाठः ।

## अथ सूतकद्वितयभोजनप्रायश्चित्तमाह।

देवलः— अशौचद्वितये राजन् असगोत्रोऽथवा व्रती।
विधवा वाऽन्यगोत्रा वा यतिर्वा नियमस्थितः॥
सूतकद्वितये भुञ्जन् महान्तं नरकं व्रजेत्।

गालवः— [1]यतिर्वा ब्रह्मचारी वा विधवा [2]वाऽन्यगोत्रजा।
असगोत्रोऽथवा विप्रस्त्वशौचद्वयनिर्म्मितम्॥
अन्नं भुक्त्वा महापापी नरकं याति दारुणम्।
भुवमासाद्य तत्पश्चाज्जायते रोगबाधितः॥

गौतमः—विप्रस्त्वाहारमन्विच्छन् यतिर्वा प्रथमाश्रमः।
सूतकद्वितये भुक्त्वा नारी वा [3]पतिवर्ज्जिता॥
पुनः संस्कार [4]मृतात्मा तप्तकृच्छ्रं समाचरेत्।
पञ्चगव्यं पिबेत् पश्चात् शुद्धिमाप्नोति नान्यथा॥

यति-विधवयोः पुनः संस्कारवर्ज्जं प्रायश्चित्तं वेदितव्यम्।

इति हेमाद्रौ सूतकद्वितयभोजनप्रायश्चित्तम्।

---

(१) पतिर्वा इति केचित्पुस्तकपाठः।
(२) वाऽन्यगोत्रजा इति केचित्पुस्तकपाठः।
(३) यतिवर्ज्जिता इति कोचित्पुस्तकपाठः।
(४) भूतात्मा इति केचित्पुस्तकपाठः।

## अथाऽन्योन्यसंस्पृष्टान्नभोजनप्रायश्चित्तम् ।

देवलः—एकपंक्त्युपविष्टौ यौ भुञ्जानौ तौ परस्परम् ।
स्पृष्टान्नमत्यजन्तौ चेज् ज्ञेयौ तौ मांसभोजिनौ ॥
एकपंक्त्युपविष्टा ये भुञ्जते मुखजाः सकृत् ।
अन्योन्यस्पर्शनं कृत्वा मत्या जग्ध्वा स्वपात्रजम् ॥
मांसतुल्यं तदन्नं स्याद् भोक्तारो मांसभोजिनः ।
एकपंक्त्युपविष्टश्च ब्राह्मणो ब्राह्मणं स्पृशेत् ॥
तदन्नमत्यजन् भुक्त्वा प्रायश्चित्ती भवेत्तथा ।
अन्यगोत्रं द्विजः स्पृष्ट्वा भुक्त्वा चान्द्रायणं चरेत् ॥
सगोत्रस्पर्शने भुक्त्वा तप्तकृच्छ्रं समाचरेत् ।
पिता पुत्रं भ्रातरं वा स्पृष्ट्वा भुक्त्वा तु कायकम् ॥
पुत्रस्य वा कनिष्ठस्य पितुरुच्छिष्टभोजने ।
न दोषः पुत्रयोस्तत्र पिता कायकमाचरेत् ॥

उच्छिष्टमित्यत्र कवलमात्रप्राशनं न पात्रस्थान्नभोजनम्[2] ।

गौतमः—
पिताऽनुजस्य पुत्रस्य तयोः प्रीतिमनूदृजन् ।
निक्षिपेत् कवलं तत्र न दोषस्तत्र भोजने ॥

पिता ताभ्यां सह न भुञ्जीयात् कवलदाने न दोषः । तदाह

(१) अत्यजन् भुक्त्वा इति कोतलेखितपुस्तकपाठः ।
(२) भोजने इति कोत-लेखितपुस्तकपाठः ।

आपस्तम्बः—

'प्रीतिर्ह्युपलभ्यते पितुर्ज्येष्ठस्य च भ्रातुरुच्छिष्टं भोक्तव्यं धर्म्मविप्रतिपत्तावभोज्य"मिति। यति-ब्रह्मचारिणामप्येवम्।

इति हेमाद्रौ परस्परोच्छिष्ट[1]भोजनप्रायश्चित्तम्।

(१) परस्परोच्छिष्टभोजन इति क्रीतपुस्तकपाठः।



# अथ शिवनिर्माल्यभोजनप्रायश्चित्तमाह ।

देवलः—

> शम्भोर्निवेदितं भक्तं [1]तत्तोयं शाकमेव वा ।
> विप्रः कदा न भुञ्जीयाद् भुक्त्वा तप्तं समाचरेत् ॥

मार्कण्डेयः—

> शिवे निवेदितं भक्तं प्रत्येकं देवतां विना ।
> द्विजो भुक्त्वा चरेत्तप्तं तथा तत्तोयसेवनात् ।

सालग्रामादि देवतासमूहे विशेषमाह ।

जावालिः—

> शिवविष्ण्वादिभिर्देवैर्वेष्टिते[2] यत्समर्पितम् ।
> तद्भुक्त्वा विप्रवर्य्योऽसौ न भवेद् दोषभाक्[3] ततः ॥

हारीतः—

> सालग्रामादिभिः शम्भोर्वेष्टितस्य यदर्पितम् ।
> तद् भोक्तव्यं द्विजैर्नित्यं तत्तोयं परिवर्ज्जयेत् ॥

सालग्रामादिदेवतासमीपे शिवेऽर्पितं नैवेद्यं चान्द्रायणसमं तद्विना शिवनिर्माल्यं तत्तोयञ्च मांसतुल्यम् ।

---

(१) तत्तोयं इति वैखितपुस्तकपाठः । तोयं वा शाकमेव वा इति कोलपुस्तक पाठः।

(२) वेष्टितैरिति कोलपुस्तकपाठः ।

(३) कृत इति वैखितपुस्तकपाठः।

याज्ञवल्क्यः--

शिवे निवेदितं भक्तं शालग्रामादिवेष्टितम् ।

तद्भक्तभोजने चान्द्रायणकृत् नात्र संशयः ॥

अन्यथा मांसतुल्यं स्यात् तत्तोयमसृजा समम् ॥ इति ।

ब्रह्मचार्य्यादीनामेवं वेदितव्यम् ।

इति हेमाद्रौ शिवनिर्म्माल्यभोजनप्रायश्चित्तम् ।

---

## अथ नीलवस्त्रं धृत्वा [1]कर्म्मकरणे भोजने वा प्रायश्चित्तमाह।

देवलः—नीलीवस्त्रञ्च तच्चिह्नं धृत्वा स्नानादृद्विजश्चरेत्।
स विप्रस्त्वशुचिर्नित्यं न कर्म्मार्हो भवेदिह॥

तच्चिह्नमिति नीलतन्तुभिर्वस्त्रान्ते वस्त्रमध्ये वा निर्म्मितं वस्त्रं तद्धारणे विप्रस्त्वशुचिः। तदाह—

गौतमः—नीलीमयं पटं धृत्वा विप्रस्तच्चिह्नसूत्रकम्।
कृत्वा कर्म्माणि भुक्त्वा वा न तत्कर्म्मफलं लभेत॥
भोजने मांसभुग्विप्रः सर्व्वथा तत्परित्यजेत्।

गालवः—नीलीवस्त्रं तु तच्चिह्नं धृत्वा कर्म्म करोति यः।
स विप्रस्तु न कर्म्मार्हस्तत्कर्म्म विफलं भवेत्॥
एकत्र दिवसे भुक्त्वा धृत्वा नीलीमयं पटम्।
कुर्य्याद्द्विजविशुद्ध्यर्थं यावकं मनुचोदितम्॥
अभ्यासे तु [2]पराकः स्याद् वत्सरे चान्द्रमुच्यते।

यति-ब्रह्मचारि-विधवानां प्रायश्चित्तमिदं प्रयोक्तव्यम्।

इति हेमाद्रौ नीलीवस्त्रं [3]धृत्वा कर्म्मकरणे भोजने वा प्रायश्चित्तम्।

इति हेमाद्रौ जातिभ्रंशकरप्रायश्चित्तम्।

---

(१) कर्म्म कृत्वा इति क्रीत-लेखितपुस्तकपाठः।

(२) पराकं स्यादिति क्रीतपुस्तकपाठः।

(३) धृत्वा भोजने प्रायश्चित्तमित्येव क्रीत-लेखितपुस्तकपाठः।

## अथ प्रकीर्णकप्रायश्चित्तमाह ।

### तत्र दुर्मृतिप्रायश्चित्तम् ।

देवलः—पापेभ्यः पूर्व्वमुक्तेभ्यो [1]यदन्यत् खलु विद्यते ।
तत्प्रकीर्णकमित्याहुर्दुर्मृतेश्च विशोधनम् ॥
विद्युदग्निपयःपाशचाण्डालैर्ब्राह्मणोहतः ।
एक-[2]द्वि-त्रि-चतुः पञ्च षड़ब्दं कृच्छ्रमाचरेत् ॥

विद्युदशनिः । अग्निर्दावानलः स्वकृतोवा । पयस्तटाक-नदीस्थं । चाण्डालो जनङ्गमः । एतैर्निमित्तैर्व्विप्रः प्रमादात् ज्ञात्वा वा यदि म्रियते । तदा तस्य सद्योदहनपक्षे तद्वचनोक्तानि कृच्छ्राणि कृत्वा दहेत् । अशक्तविषये कालमाह ।

मासत्रये तु षण्मासे वत्सरे वा विचक्षणः ।
पुत्रादिर्दुर्मृतस्याऽस्य कुर्य्यात् संस्कारमादरात् ॥

देशकालवैपरीत्यशङ्कायां दुर्मृतस्य लोकमाकाङ्क्षन् तत्तन्निमित्तोक्त-कृच्छ्रानुसरणं कृत्वा दहेत् ।

देवलः[3]—

विद्युता वह्निना तोयैः पाशैर्वाऽथ जनङ्गमैः ।
विप्रः प्राणान् [4]त्यजेद्‌यस्तु तस्य शुद्धिरुदीरिता ॥
सद्योदहनपक्षे तु कुर्य्यात् पूर्व्वोक्तमादरात् ।

---

(१) अन्येभ्यः खलु विद्यते इति क्रीत लेखितपुस्तकपाठः ।
(२) तत्र इति लेखितपुस्तकपाठः ।
(३) क्रीत लेखितपुस्तकयोर्नास्ति ।
(४) परित्यजेत् इति क्रीत-लेखितपुस्तकपाठः ।

तस्य एकं षडब्दं तदानीं विशोधनं, अग्निदग्धस्य षडब्दद्वयं विशोधनम्। जले मृतस्य त्रिगुणितषडब्दम्। चाण्डालेन मृतस्य[1] तानि कृच्छ्राणि तत्तत्संख्यापरिमितानि कृत्वा दग्ध्वा मृतिदोषात् पूतो भवति।

तदाह—

गौतमः—[2]दुर्मृतानां सदा पुत्रः कृत्वा कृच्छ्राणि धर्मतः।
दहेत् पापविमुक्तोऽभूद् अन्यथा दोषभाग्भवेत्॥

अन्याकरे

दुर्मृतस्य तदानीं यः संस्कारं कर्त्तुमिच्छति।
एक-द्वि-त्रि-चतुः-पञ्च षडब्दं कृच्छ्रमाचरेत्॥
एतेन शुद्धिमाप्नोति न कालस्य प्रतीक्षणम्।
पिशाचता न तस्याऽस्ति पुत्रोऽभूदनृणस्तथा॥

मासत्रयप्रमाणवत्सरमृतानां दुर्मृतिप्रायश्चित्तं नारतस्थेन विशि ष्ट।

गोभिलः—

एकमासे दुर्मृतानामब्दमासे विशोधनम्।
ऋतुत्रये तु द्व्यब्द स्यात् तदूर्ध्वं संस्कारे स्मृतम्॥
नारायणबलिं कृत्वा कुर्य्यात् कर्मौर्द्ध्वदेहिकम्।
एतेन शुद्धिमाप्नोति परलोकं स गच्छति॥

---

(१) तत्रत्यैतानि इति श्रीतद्पुस्तकपाठः।
(२) दुर्मृतानां इति श्रीतद्पुस्तकपाठः।
(३) मासे दुर्मृतानां इति श्रीत-वैदिकपुस्तकपाठः।

व्याघ्रादिभिर्हतस्य विशेषमाह—

व्याघ्र-भल्लूक वाराह-सर्प-वृश्चिक-कुञ्जरैः ।
शृङ्गिभिर्विष[1]पानाद्यैर्वृक्ष-शैलनिपातनैः ॥
विप्रोयदा मृतिं प्राप्तः खड्गदन्तादिभिः खरैः ।
गृहभित्त्यश्मभिर्वाऽपि स्तम्भ-कण्टक-शङ्कुभिः ॥
तं तदा दाहयेत् पुत्त्रः सद्यः कृत्वा षड़ब्दकम् ।
मासत्रयेऽब्दमात्रं स्यात् त्र्यब्दकं ऋतुदर्शनात् ॥
वत्सरे तु षड़ब्दं स्यात् सर्व्वेषां दुर्म्मृतौ स्मृतम् ।

विद्युदग्निभिर्हतैर्विना ।

गालवः—देशान्तरे वा युद्धे वा हतं व्याघ्रेण वा यदि ।
मधुना सर्पिषा सिक्ता दाहयेद् विधिना च तम् ॥

विधिवदित्युक्त[2] प्रायश्चित्तं [3]कर्त्तव्यमित्यर्थः ।

प्रायश्चित्तविहीनस्य दुर्मृतस्य पिशाचता ।
सद्यः शतगुणं प्रोक्तं प्रायश्चित्तं मनीषिभिः ।

इति हेमाद्रौ दुर्मृतस्य विप्रस्य प्रायश्चित्तम् ।

---

(१) विषबाणाद्यैरिति लेखितपुस्तकपाठः ।
(२) इत्युक्तं प्रायश्चित्तमिति क्रीतपुस्तकपाठः ।
(३) कर्त्तव्यमितिपदं क्रीत-लेखितपुस्तकयोर्नास्ति ।

## अथ क्षत्रियवैश्ययोर्दुर्मृतयोःप्रायश्चित्तमाह ।

[1]देवलः—

बाहुजस्तूरुजो वापि निमित्तैर्यदि [2]वा हतः ।
प्रायश्चित्तं मुनिप्रोक्तं विप्रस्यार्द्धं समाचरेत् ॥

[3]( तत्तत्स्त्रीणां तत्तत्प्रायश्चित्तम् )—

[ वैश्यस्य क्षत्रियस्यार्द्धं पादजे पादमाचरेत् ।
तत्तत्स्त्रीणां तत्तदर्द्धं प्रायश्चित्तं विशोधनम् ॥ ]

राज्ञां [4]गजाश्व-शस्त्र-पाषाण-लगुडादिभिः युद्धकाले मृतानां [5]न प्रायश्चित्तं । अन्यत्र मरणे तु पूर्व्वोक्तं प्रायश्चित्तम् । विप्रस्त्रीणां पूर्व्वोक्तनिमित्तैर्मरणसम्भवे विप्रस्यार्द्धं वेदितव्यम् ।

कन्यकाना बालानां दुर्म्मरणे प्रायश्चित्तं प्राजापत्यकृच्छ्रमात्रं कृत्वा दहनं [6]प्रोथनं वा कुर्य्यात् ।

इति हेमाद्रौ क्षत्रियादीनां दुर्मृतिप्रायश्चित्तम् ।

---

(१) क्रीतपुस्तके नास्ति ।
(२) यो हत इति क्रीत लेखित-पुस्तकपाठः ।
(३) लेखितपुस्तके नास्ति ।
[ ] अयं श्लोकः क्रीतपुस्तके नास्ति ।
(४) राजाश्व इति क्रीतपुस्तकपाठः ।
(५) नेति पदं क्रीत-लेखितपुस्तकयोर्नास्ति ।
(६) खननं इति क्रीत-लेखितपुस्तकपाठः ।

454 अथ दुर्मृतानां रज्ज्वादिभेत्तॄणां प्रायश्चित्तमाह ।

देवलः—

कण्ठपाशं दुर्मृतस्य यो विप्रश्छेत्तुमिच्छति ।
तस्य तस्याऽपवार्त्तौ च तप्तकृच्छ्रं [1]चरेत्सदा ॥
अन्यथा दोषमाप्नोति तत्र [2]नार्थफलं लभेत् ।

इति हेमाद्रौ दुर्मृतानां रज्ज्वादिभेत्तॄणां प्रायश्चित्तम् ।

---

(१) समाचरेत् इति क्रीतपुस्तकपाठः ।

(२) पार्थं इति क्रीत लेखितपुस्तकपाठः ।

## अथ दुर्म्मृतिवाहकानां प्रायश्चित्तमाह ।

देवलः--

दुर्मृतं यो वहेत् स्कन्धे दहेद्वापि तदेव वा ।
पराकमुभयोः प्रोक्तं देहशुद्धार्थमादरात् ॥

पराशरः—

यो विप्रो दुर्मृतं [1]ज्ञात्वा दहेद्धृत्वा स दोषभाक् ।
प्रायश्चित्तं तदा कुर्य्यात् पराकं मुनिचोदितम् ॥
तदस्थीनि परित्यज्य दुर्मृतस्य खलस्य च ।
पतितस्य प्रजारस्य [2]तस्मात्तत् सूतकं [3]व्रजेत् ॥
यदि मोहात्तदस्थीनि धृत्वा विप्रः स दोषभाक्
कालान्तरे गतिर्मृग्या सद्यस्तद्ग्राह्यमादरात ॥
दुर्मृतं पतितं दृष्ट्वा सचेलं स्नानमाचरेत् ।
दृष्ट्वा पश्येत्तदाभानुमन्यथा रौरवं व्रजेत् ॥

इति हेमाद्रौ दुर्मृतवाहनप्रायश्चित्तम् ।

---

(१) श्राद्धे धृत्वा दग्ध्वा इति क्रीत-लेखितपुस्तकपाठः ।
(२) सम्प्राप्तं इति क्रीतपुस्तकपाठः ।
(३) भवेत् इति क्रीत-लेखितपुस्तकपाठः ।

## अथ मूल्यं गृहीत्वा शववाहकप्रायश्चित्तमाह।

देवलः—

विप्रः सर्व्वत्र मूल्यं वै गृहीत्वा कुणपं वहेत्।
दग्ध्वा वापि महद् घोरं नरकं याति सर्व्वदा॥

गालवः—मूल्यं[1] धृत्वा द्विजोयस्तु विप्रः कुणपमुद्वहेत्।
दग्ध्वा पापमवाप्नोति नरके नियतिः[2] सदा॥

मरीचिः—

अनाथं वा सनाथं वा यो विप्रः कुणपं वहेत्।
गृहीत्वा मूल्य[3] मन्यत्र तत्र वा पापभाग्भवेत्॥
तस्य निष्कृतिरत्यत्र प्राजापत्यादिरु प्रभो।
अन्यथा दोषमाप्नोति भारवाहोभवेद्भुवि॥
उदासीनतया विप्रः कुणपं यत् समुद्वहेत्।
पदे पदेऽश्वमेधस्य सम्पूर्णं फलमश्नुते॥

इति हेमाद्रौ मूल्यं गृहीत्वा वाहकानांमृताऽहरणप्रायश्चित्तम्।

---

(१) मूल्यम् इति क्रीतपुस्तकपाठः।
(२) नियतः सदा इति क्रीतपुस्तकपाठः।
(३) मूल्यमन्याह्या इति क्रीत-लेखितपुस्तकपाठः।

## अथ धनिष्ठापञ्चकमरणे प्रायश्चित्तमाह ।

देवलः— धनिष्ठापञ्चके [1]वापि विप्रोयदि विपद्यते ।
तदा कर्त्तृविनाशः स्याद् गृहे वाऽरिष्टमश्नुते ॥

जावालिः —मरणं यदि विप्राणामन्येषां वसुपञ्चके ।
तदा गृहपतेर्नाशो[2] गृहे वाऽरिष्टमश्नुते ॥

मार्कण्डेयः—यस्य कस्य मृतिस्तत्र धनिष्ठापञ्चके [3]यदि ।
[4]तदा कर्त्तरि शङ्का स्याद् गृहे वा पापमश्नुते ।
तद्दोषपरिहारार्थं अत्र दानं समाचरेत् ॥
एकाशीतिपलं कांस्यं तदर्धं वा तदर्धकम् ।
नवषष्टिपलं वापि दद्याद् विप्राय शक्तितः ॥

पश्चान्तरमाह—

गौतमः—"धनिष्ठापञ्चकमृते हिरण्यशकलं मुखे न्यस्याहुऽऽतित्रयं तत्र [5]अतोवहवपामिति हुत्वा दहेत् । तदा दोषोनाशमाप्नोति सर्व्वदा कर्त्ता [6]गृहे सुखी भूयात् अन्यथा दोषमश्नुते ।" सर्व्व-वर्णसममेतत् होमं विना ।

इति हेमाद्रौ धनिष्ठापञ्चकमरणप्रायश्चित्तम् ।

---

(१) वसु इति श्रौत-लेखितपुस्तकपाठः ।
(२) भित्तिरिति लेखितपुस्तकपाठः ।
(३) तदा इति श्रौतपुस्तकपाठः ।
(४) तथा इति श्रौत-लेखितपुस्तकपाठः ।
(५) अतो व इविषां इति श्रौतपुस्तकपाठ ।
(६) गृहं इति श्रौत-लेखितपुस्तकपाठः ।

## अथ नन्दाभद्रातिथौमरणप्रायश्चित्तमाह ।

देवलः— उभयोः पक्षयोः प्रतिपत् षष्ठी चैव हरेर्दिनम् ।
एता नन्दा महाराज भद्राश्चापि तथा शृणु ॥
द्वितीया सप्तमी चैव द्वादशी पक्षयोर्द्वयोः ।
एता[1] भद्राश्च तिथयो मरणे पापदायिकाः[2] ॥

कात्यायनः—
नन्दासु भद्रतिथिषु यो विप्रो निधनं गतः ।
तद्गृहे सर्व्वदाऽऽरिष्टं भवत्येव महात्मनाम् ॥

गौतमः—नन्दायान्तु तथा[3] भद्रे यदा स्यान्मरणं भुवि ।
न तत्र द्विजकल्याणं दत्तैर्दानशतैरपि ॥

तत्परिहारमाह—

यमः— नन्दायां गौः प्रदातव्या भद्रे भूमिरनन्तरम् ।
विप्रेभ्योदीयते येन न दोषस्तत्र विद्यते ॥
कर्त्ता सुखमवाप्नोति मृतः सन्ततिमाप्नुयात् ।

क्षत्रियादीनामेवं विवेचनीयम् ।

इति हेमाद्रौ नन्दाभद्रा [4]तिथि मरणप्रायश्चित्तमाह ।

---

(१) प्रेते इति लेखितपुस्तकपाठः ।
(२) पापदायिन इति लेखितपुस्तकपाठः ।
(३) यदा इति क्रीतलेखितपुस्तकपाठः ।
(४) नन्दाभद्रायां इति क्रीत-लेखितपुस्तकपाठः ।

## अथ दुष्टवारेषु [1]मृतिप्रायश्चित्तमाह ।

देवलः—

भानुः कुजो भृगुर्मन्दवारो दुष्टो नृणां मृतौ ।
आयुर्हानिर्यशोहानिः कुल[2]कीर्त्तिविनाशनम् ॥
मरणे तु क्रमाद्राजन् योजनीयं शनैः शनैः ।
[3][भानौ कुजे शनौ वस्त्रं तत्तद्वर्णं प्रदापयेत् ॥
भृगौ हिरण्यसहितं वस्त्रदानं विशोधनम् ।]

[4][ गालवः —

भानुवारः कुजोवारो भृगुर्मन्दो यथाक्रमम् ।]

[5][ तत् प्रायश्चित्तमाह,

मार्कण्डेयः—

भानौ कुजे शनौ वस्त्रं तत्तद्वर्णं प्रदापयेत् ।
भृगौ हिरण्यसहितं वस्त्रदानं विशोधनम् ॥ ]

तदाह—

मरीचिः—भद्रे भूमिप्रदानं स्यात् विपदर्थे हिरण्यदः ।
वारे[6] वाराऽधिदैवत्यं वासोदानं विशोधनम्[7] ॥

---

(१) मृतप्रायश्चित्तमिति लेखितपुस्तकपाठः ।
(२) कीर्त्तिकुलविनाशनमिति क्रीत-लेखितपुस्तकपाठः ।
(३) [ ] अयं श्लोकोऽधिकोत्र क्रीतपुस्तकेदृष्टः ।
(४) [ ] अयमंशः क्रीत पुस्तकेनास्ति ।
(५) [ ] क्रीतपुस्तके अयं पाठस्तु अत्र नोपलब्धः ।
(६) वाराधिदैवत्यमिति क्रीतपुस्तकपाठः ।
(७) विधीयते इतिक्रीत पुस्तकपाठः ।

रक्तवस्त्रं कुजे भानौ श्वेतं शुक्रे प्रदर्शितम् ।
शनैश्चरे तु नीलं स्यादेतद्दोषोपशान्तये ॥
दत्त्वा[१] शुद्धिमवाप्नोति अज्ञात्वा दोषमाप्नुयात् ।

क्षत्रियाणामप्येवम् ।

इति हेमाद्रौ दुष्टवारमरणे प्रायश्चित्तम् ।

---

(१) दद्यात् इति कोल-ब्रुक्सितपुस्तके पाठः ।

देवलः— उर्द्ध्वोच्छिष्टमधोच्छिष्टमन्तरामरणं तथा ।
कर्णमन्त्रेण राहित्यमस्नानमरणं तथा ॥
तथा पर्य्युषितश्चैव षण्निमित्तमितीरितम् ।
एतैर्निमित्तैर्मरणे नरकं सम्प्रपद्यते ॥

मरीचिः—षण्निमित्तैर्द्विजोमृत्वा त्वयेण द्वितयेन वा ।
[1]क्षिप्रं नरकमाप्नोति कर्त्तुरायुःक्षयो भवेत् ॥

कण्वः— द्विजो वै[2] षण्निमित्तेन सह मृत्वा तु दैवतः ।
त्वयेण द्वितयेनाऽपि सहितोयदि पूर्व्ववत् ॥
[3]क्षिप्रं नरकमाप्नोति तत्कर्त्तुरशुभं भवेत् ।
तद्दोषपरिहारार्थं प्राजापत्यं पृथक् चरेत् ॥

एकैकस्य निमित्तस्य प्रत्येकं प्राजापत्यकृच्छ्रं कृत्वा शुद्धिमाप्नोति ।
तदेवाह

जावालिः—एकैकस्य निमित्तस्य प्रत्येकं कृच्छ्रमीरितम् ।
कृत्वा शुद्धिमवाप्नोति कर्त्तुरायुर्व्विवर्द्धनम् ॥

इति हेमाद्रौ षण्निमित्तमरणप्रायश्चित्तम् ।

---

(१) वोमृत्वा इति क्रीत-लेखितपुस्तकपाठः ।
(२) तदा इति क्रीत-लेखितपुस्तकपाठः ।
(३) य इति क्रीतपुस्तकपाठः ।
(४) तथा इति लेखितपुस्तकपाठः ।

## अथ शवोपरि [1]उच्छिष्टादिपतनप्रायश्चित्तमाह ।

देवलः—श्लेष्म-शृंखाणिकाऽश्रूणि रुदतां सम्पतन्ति हि ।
कुणपोऽशुचिमाप्नोति उच्छिष्टः कर्म्मकार्य्यसौ ॥

महाराजविजये—
पिपीलिका कृमिश्चैव उच्छिष्टं रोदनोद्भवम् ।
श्लेष्मशृङ्खाणिकाऽश्रूणि पतन्ति कुणपोपरि ॥
तदा शुचि[2]त्वमाप्नोति कर्त्ता नरकमश्नुते ।

गौतमः—
पिपीलिकाभिः कृमिभिः श्लेष्म-शृङ्खाणिका-श्रुभिः ।
कुणपोऽस्पृश्यतां याति कर्त्ता च कश्मली भवेत् ॥
तद्दोषपरिहारार्थं स्पृष्टोच्छिष्टं स्वपाणिभिः ।
मार्ज्जयेन्नूतनैस्तोयैरापोहिष्ठादिमन्त्रितैः ॥
एतैः शुद्धिमवाप्नोति दाहयोग्योभविष्यति[3] ।
क्षत्रियादीनामेवं स्त्रीणामपि ।

इति हेमाद्रौ शवोच्छिष्टादिपतनप्रायश्चित्तम् ।

---

(१) उच्छिष्टपतन इति क्रीत-लेखितपुस्तकपाठः ।
(२) अशुचिमवाप्नोति इति लेखितपुस्तकपाठः ।
(३) भवेत्तदा इति काशीपुस्तकपाठः ।

## अथ शवस्य शूद्रादिस्पर्शनप्रायश्चित्तमाह । 463

देवलः— शूद्र-मार्ज्जार-काकाद्यैः स्पृष्टश्चेद्रजकादिभिः ।

रजस्वलाभिः स्त्रीभिश्च श्वभिः पतितकुण्डजैः[1] ॥

न शवस्य परोलोकस्तत्कर्त्ता पापभाग्भवेत् ।

मरीचिः—

रजस्वलाभिः स्त्रीभिर्वा श्वभिः पतित-कुण्डजैः ।

शूद्र-मार्ज्जार-काकाद्यैः स्पृष्टश्चेद्रजकादिभिः ॥

न शवस्य गतिर्वाऽस्ति कर्त्तुरायुःक्षयोभवेत् ।

तद्दोषपरिहारार्थं स्नापयित्वा शवं तदा ॥

नूतनेनैव वस्त्रेण पिधाय कुणपं तथा ।

[2]रजस्वलादिभिः स्पर्शे प्राजापत्यं समाचरेत् ॥

कार्यं शुना च शूद्रेण इति तेषां हिरण्यतः ।

स्नात्वा शुद्धिमवाप्नोति पश्चाद् दाहादिकं चरेत् ॥

क्षत्रियादीनामेवम् ।

इति हेमाद्रौ [3]शवस्य शूद्रादिस्पर्शनप्रायश्चित्तम् ।

---

(१) कुण्डगैरिति लेखितपुस्तकपाठः ।

(२) रजस्वलाभिः स्पर्शे च इति लेखितपुस्तकपाठः ।

(३) शव शूद्रादि इति लेखितपुस्तकपाठः ।

## अथ त्रिपान्नक्षत्रमरणप्रायश्चित्तमाह।

देवलः— वह्निभे दितिभे चैव नक्षत्रे भगदैवते।
इन्द्राऽग्निभे वैश्वभे च उत्तराषाढ़एवच॥
पूर्व्वभाद्रे तथा राजन् नक्षत्राणि महान्ति च।
त्रिपदेष्वेषु [1]यन्मृत्युर्ग्रामेऽरिष्टं भवेत्तदा॥
वारे त्रिपादिनक्षत्रे मृतिश्चेद् वाटिकाभयम्।
तिथौ वारे त्रिपदभे मृतौ[2] गृहपतेर्भयम्॥

तदाह—

गौतमः—"तिथ्युडुयोगे ग्रामे गृहपतेर्गृहनाशश्च त्रिपान्नक्षत्रे मृतौ[3] हिरण्यदान माचरेत्"।

वारे त्रिपाद्भे [4]मृत्यौ च हिरण्यं वस्त्रमेवच।
तिथौ वारे त्रिपदभे [5]मृतिश्चेद्वाटिकाभयम्।
भृगौ विशेषतो [6]वर्ष्ये त्रिपुष्करसमोभृगुः॥
[7]तत्रैव दुष्टनक्षत्रे तिथौ दुष्टमृति र्यदा[8]।
तदा गृहपतेर्दोषः [9]मृत्यौ भाति महत्तरः॥

---

(१) योमृत्वा इति क्रीतलेखितपुस्तकपाठः।
(२) मृत्वा इति क्रीतलेखितपुस्तकपाठः।
(३) मृत्वा इति क्रीतलेखितपुस्तकपाठः।
(४) मृत्वा इति क्रीतलेखितपुस्तकपाठः।
(५) मृत्वाचेत् इति लेखितपुस्तकपाठः—मृत्वा गृहपतेर्भयमिति क्रीतपुस्तकपाठः।
(६) वापि इति क्रीतपुस्तकपाठः।
(७) स एव इति क्रीतलेखितपुस्तकपाठः।
(८) यथा इति लेखितपुस्तकपाठः। (९) मृत्योरिति क्रीतपुस्तकपाठः।

तद्दोषपरिहारार्थं गोत्रयं सम्यगाचरेत् ।

ग्रन्थान्तरे—

नक्षत्रे मरणे' स्वर्णं द्वयोर्योगे द्वयं चरेत् ।
[ त्रयाणां योगभावे च गामेकां तत्र सञ्चरेत् ]
कृत्वैतद्दोषमुक्तः स्याद् अन्यथा हानिमादिशेत् ॥
क्षत्रियादीनामेवं कन्यकास्त्रीमरणेप्येवम् ।

इति हेमाद्रौ त्रिपादनक्षत्रमरणप्रायश्चित्तम् ।

---

(१) नक्षत्रं इति लेखितपुस्तकपाठः नक्षत्रेण इति क्रीतपुस्तकपाठः ।
[ ] इदं श्लोकार्द्धं क्रीतपुस्तक एव दृष्टम् ।

## अथाऽऽसंदीभञ्जनप्रायश्चित्तमाह ।

देवलः—

ग्रामश्मशानयोर्मध्ये यदाऽऽसंद्यवभञ्जनम् ।
ग्रामारिष्टं कर्त्तृहानि[1] र्भवत्येव हि सर्व्वदा ॥

याज्ञवल्क्यः—

गृहादारभ्य दहनपर्य्यन्तं यदि भज्यते[2] ।
कर्त्तृनाशो गृहपतेर्मृहदरिष्टमञ्जसा ॥

शालिहोत्रः—

[3]आसन्दीं यदि राजेन्द्र भञ्जयेत् खलु दैवतः ।
आदाहदग्धपर्य्यन्तं कर्त्तुर्दुःखं विनाशनम्[4] ॥
तद्दोषपरिहारार्थं प्रायश्चित्तं विशोधनम् ।
प्राजापत्यं तदा [5]कुर्य्यात् कर्त्ताऽऽत्ममलमोचने ॥
तदाऽसौ सुखमाप्नोति तस्य दोषः प्रणश्यति ।

सर्व्ववर्णसममिदम्[6] ।

इति हेमाद्रौ आसन्दीभञ्जनप्रायश्चित्तम् ।

---

(१) कर्त्तृहानिर्ग्रामारिष्टमिति क्रीत-लेखितपुस्तकपाठः ।
(२) भज्यते इति क्रीत-लेखितपुस्तकपाठः ।
(३) आसन्दी इति लेखितपुस्तकपाठः ।
(४) दुःखविनाशनं इति लेखितपुस्तकपाठः ।
(५) कार्य्यमिति क्रीत-लेखितपुस्तकपाठः ।
(६) सर्वं इति क्रीत-लेखितपुस्तकपाठः ।

देवलः—आसन्द्याः[1] शकटाद्वापि कुणपोभुवि यत् [2]पतेत्।

[3]तदाऽरिष्टं गृहे भूयात् व्याधि तस्कर-राजभिः॥

महाभारते—

ग्राम-श्मशानयोर्मध्ये कुणपोयदि दैवतः।

आसन्देरनसोवेगात् भूमौ पतनमृच्छति[4]॥

तत्कर्त्तुरतिवेगेन मृत्युर्हानिर्यशःक्षयः।

गौतमः—

शकटादनसोवापि कुणपोयत्[5] पतेद्भुवि।

श्मशान-ग्राममध्ये वा तत्कर्त्तुरतिवेगतः॥

हानिर्मृत्युर्यशःखेदः सम्भवत्येव सर्व्वदा।

तद्दोषपरिहारार्थं प्राजापत्यद्वयं चरेत्॥

तत्कर्त्तुः सम्भवेद् हानिरन्यथाऽशुभमादिशेत्।

कन्यका-बाल-क्षत्रियादीनामेवं वेदितव्यम्।

इति हेमाद्रौ शवस्य भूपतनप्रायश्चित्तम्।

---

(१) आसन्दितः शकटाद्वापि इति क्रीतपुस्तकपाठः।

(२) यः पतेदिति लेखितपुस्तकपाठः।

(३) तस्यारिष्टमिति क्रीत-लेखितपुस्तकपाठः।

(४) पतितुमिच्छति इति क्रीत-लेखितपुस्तकपाठः।

(५) यः पतेदिति लेखितपुस्तकपाठः।

# अथाऽग्निपतनप्रायश्चित्तमाह ।

देवलः — श्मशान-गृहयोर्मध्ये यदि वह्निः पतेद्भुवि ।
तत्प्रेतस्य गतिर्नास्ति कर्त्तुरायुर्विनश्यति ॥

गालवः—
ग्राम-श्मशानयोर्मध्ये पात्रं भित्त्वा पतत्यसौ ।
कर्त्तुरायुर्विनाशः स्यात् प्रेतो नरकमश्नुते ॥

गार्ग्यः— श्मशान-गृहमध्ये च यदि वह्निः पतेद्भुवि ।
तदाकर्त्तुरभद्रं[1] स्यात् निर्जीवो याति नारकम् ॥
तद्दोषोपशमायाऽलं तस्मिन् वह्नौ घृताहुतिः[2] ।
अग्निमीलेति मन्त्रेण अग्निमूर्द्धेति मन्त्रतः ॥
हुत्वाऽऽहुतिद्वयं तत्र तमग्निं न त्यजे[3] त्तदा ।
पुनः पात्रान्तरे न्यस्य[4] शेषं कर्म्म समापयेत् ॥
अन्यथा दोषमाप्नोति पूर्ववत्पापभाग्भवेत् ।
बाल कन्यका-क्षत्रियादीनामेवम् ।

इति हेमाद्रौ अग्निपतनप्रायश्चित्तम् ।

---

(१) अभद्रःस्यात् इति क्रीत-पुस्तकपाठः ।
(२) तस्मिन् वह्नुहुताहुतिः इति क्रीतपुस्तकपाठः ।
(३) नत्यजेत् इति क्रीतपुस्तकपाठः ।
(४) स्थाप्य इति क्रीत-लेखितपुस्तकपाठः ।

## अथ दहनयोग्यस्य [1]प्रोथने प्रायश्चित्तमाह ।

देवलः—बालिकां बालकं वापि दाह्याऽर्हं प्रोथयेद्भुवि[2] ।

[3]बालश्च याति नरकं तत्कर्त्ता बालघातकः ॥

मरीचिः—

दाह्ययोग्यं यदा बालं [4]प्रोथेदज्ञानतोद्विजः ।

बालः पिशाचतां याति तत्कर्त्ता भ्रूणहा भवेत् ॥

कात्यायनः—

बालं वा बालिकां वापि दाह्यार्हं निखनेद्भुवि[5] ।

महान्तं नरकं गत्वा भवेद्बालग्रहस्तदा ॥

विलादुद्धृत्य तं बालं प्रोक्षयेत् पञ्चगव्यतः ।

ततस्तन्मन्त्रैर्जलैः पश्चाद् भूमिर्भूम्नाऽनुवाकतः ॥

तं बालमभिमन्त्र्याऽऽशु कृत्वा कृच्छ्रं विधानतः ।

क्षत्रियादीनामेवम् ।

इति हेमाद्रौ दहनयोग्यस्य [6]प्रोथनेप्रायश्चित्तम् ।

---

(१) खनने इति क्रीत-लेखितपुस्तकपाठः ।

(२) दाह्ययोग्यं खनेद्भुवि इति क्रीत-लेखितपुस्तकपाठः ।

(३) स बाल इति क्रीतपुस्तकपाठः ।

(४) खनेदिति क्रीत-लेखितपुस्तकपाठः ।

(५) दाह्ययोग्यं खनेद्भुवि इति क्रीतपुस्तकपाठः ।

(६) खनन इति क्रीत-लेखितपुस्तकपाठः ।

## अथ खननयोग्यस्य दहनेप्रायश्चित्तमाह।

देवलः—[बालिकां बालकं वापि दाहयोग्यं खनेद्भुवि।]
[यो विप्रः खननेयोग्यं द्विवर्षात् किञ्चिदूनकाम्।]
कर्त्तासौ नरकं याति बालोयाति पिशाचताम्॥

गौतमः—अज्ञानात् मुखजोबालं खननार्हं[1] यदा दहेत्।
स बालो याति पैशाच्यं कर्त्ताऽसौ नारकी भवेत्॥

पराशरः—ऊनद्विवर्षं निखनेत् कन्यकां बालमेव वा।
अज्ञानाद्यदिवा मोहाद् भवेद्धर्मपराङ्मुखः॥
बालोयाति महद्दुःखं कर्त्ता नरकमश्नुते।
तद्दोषपरिहारार्थं वह्नौ हुत्वाऽऽहुतित्रयम्॥
वह्निं प्रजापतिं सोमं व्याहृतीस्तदनन्तरम्।
हुत्वा तं शवमादाय खनेद् भूमौ प्रयत्नतः॥
तद्दोषपरिहारस्तु[2] जायते नान्यथा भवेत्॥

क्षत्रियादीनामेवम्।

इति हेमाद्रौ खननयोग्यस्य दहनप्रायश्चित्तम्।

---

[ ] इदमर्द्धं लेखितपुस्तके न दृश्यते।
[ ] इदमर्द्धं क्रीतपुस्तके न दृश्यते।
(१) खननयोग्यं इति इति लेखितपुस्तकपाठः।
दाहायोग्यं इति क्रीतपुस्तकपाठः।
(२) हुत्वैवं इति क्रीत-लेखितपुस्तकपाठः।

## अथ दहनयोग्यस्य दहनाभावप्रायश्चित्तमाह ।

देवलः—यो विप्रो मातरं तातं भ्रातरं भगिनीं तथा ।
स्नुषां दुहितरं साध्वीं पुत्रीं वा पुत्रमेव वा ॥
प्रजावतीमात्मनश्च दाह्ययोग्यान् स्वबान्धवान् ।
लोभाद्वा नास्तिकाद्वापि वाक्याद्वाऽधर्म्मचारिणः ॥
अदग्ध्वैतान् कर्म्म कुर्य्यात्[1] मृतो नरकमेति सः[2] ।
तेऽपि वै प्रेतभूताःस्यु नैमुक्ताःस्युर्यमालयात् ॥

मार्कण्डेयः—

यः पुमान् [3]दाह्ययोग्यान् स्वान् बान्धवान् दाहवर्ज्जितान्[4] ।
कृत्वा तेषां क्रियाः कुर्य्यात् नरकं स प्रपद्यते[5] ॥
पितरस्तेऽपि प्रेतास्युर्यमलोके महत्तरे ।
तद्दोषपरिहारार्थं यस्तदोहं विशुद्धिदम् ॥
[6]प्राजापत्यत्रयं कृत्वा कर्त्ता शुद्धिमवाप्नुयात् ।
मृतास्तेऽपि परं यान्ति[7] अभिवृद्धिश्च जायते ॥

क्षत्रियादीनामप्येवम् ।

इति हेमाद्रौ दहनयोग्यस्य दहनाभावप्रायश्चित्तम् ।

---

(१) कुर्व्वन् इति क्रीत-लेखितपुस्तकपाठः ।
(२) अश्नुते इति क्रीत-लेखितपुस्तकपाठः ।
(३) दहनयोग्यान् इति लेखितपुस्तकपाठः ।
(४) दहनवर्ज्जितान् इतिलेखितपुस्तकपाठः ।
(५) कुर्व्वन् नरकं प्रतिपद्यतेइति क्रीत-लेखितपुस्तकपाठः ।
(६) प्राजापत्यं इति क्रीतपुस्तकपाठः । (७) प्रापुरिति क्रीतपुस्तकपाठः ।

## अथोत्तरीय-शिलापात्र-कर्त्तृ-द्रव्य-विपर्य्यय-प्रायश्चित्तमाह।

देवलः— (उत्तरीय शिलापात्र-कर्त्तृ द्रव्यविपर्य्यये।)

कृच्छ्रत्रयं तदा कृत्वा पुनः कर्म्म समाचरेत्॥

उत्तरीयं [1]चैतस्य पूर्व्वधारितवस्त्रखण्डं, शिला, दहनानन्तरं या संस्कारार्थं [2]गृहीता साशिला, ताम्र[3] पात्रं च प्रथमदिवसे चरुस्नपणार्थं सम्पाद्यते। न दशाहपर्य्यन्तं पचनं कर्त्तव्यम्। कर्त्ता मरणदिने अग्निकर्त्ता।

[असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान्]

"प्रथमेऽहनि यः कर्त्ता स दशाहं समापयेत्।"

इति वचनात्, स्थानं पिण्डनिक्षेपणस्थानम्। द्रव्यं पिण्डद्रव्यं तण्डुलमुद्गादिकं तेषामेकैकस्य नाशे प्रत्येकं कृच्छ्रत्रयं कृत्वा तत्तत्कर्म्म पुनर्दहनदिनादारभ्य कुर्य्यात्। तदाह-

मार्कण्डेयः—उत्तरीय-शिलापात्र-कर्त्तृ-द्रव्यविपर्य्ययः।

यदि दैवाद् भवेत्तेषां नाशे वर्षादिविद्रवैः[4]।

कृच्छ्रत्रयं तदा कृत्वा तत्तत्कर्म्म यथा क्रमम्।

---

[ ] क्रीतपुस्तके नास्ति।

(१) चैतस्य इति खेचितपुस्तकपाठः।

(२) गृहीत्वा इति क्रीत-खेचितपुस्तकपाठः।

(३) ताम्रेति खेचितपुस्तके नास्ति।

[ ] क्रीत-खेचितपुस्तकयोर्न दृश्यते।

(४) वर्षाति विद्रुवैरिति क्रीत-काशीपुस्तकपाठः।

द्वितीयदिनादारभ्य इत्यर्थः। कर्त्ता ज्वरादिना चेत् पीड़ितः तदा अन्यः पूर्व्ववत् कृच्छ्रत्रयं कृत्वा द्वितीयदिनादारभ्य शिलास्नान-मृदास्नानादिकं कुर्य्यात्।

गौतमः—

असगोत्रः सगोत्रोवा यदि स्त्री यदि वा पुमान्।
प्रथमेऽहनि यः कर्त्ता स दशाहं समापयेत्॥
तदभावे पुनश्चान्यः स्नात्वा कृच्छ्रत्रयं चरेत्।
तत्तत्कर्म्माणि सर्व्वाणि तानि कुर्य्याद्यथाक्रमम्॥
अन्यथा दोषमाप्नोति प्रेतत्वान्न विमुच्यते।

क्षत्रियादीनामेवम्।

इति हेमाद्रौ उत्तरीयशिलापाषाणादिविपर्य्ययप्रायश्चित्तम्।

---

## अथ पिण्डोपहतिप्रायश्चित्तमाह ।

देवलः—

श्व शृगाल-खरैः पिण्डःस्पृष्टोभिन्नः प्रमादतः ।
कर्त्तुरायुष्यनाशः स्यात् प्रेतत्वं [1]नाऽपसर्पति ।

गौतमः—

शृगाल रासभ श्वानैर्हतः पिण्डोभुवःस्थले ।
स्पृष्टोभिन्नस्तदा[2] राजन् कर्त्तुरायुष्यनाशनम् ॥
प्रेतस्तस्मिन्विनाशः स्यात् काकस्पर्शादिना तथा[3] ।
दत्तपिण्डो भुवःस्थाने श्व शृगाल-खरादिभिः ॥
स्पृष्टोभिन्नस्तदाकर्त्तुरायुष्यं क्षयमेष्यति ।
प्रेतस्तस्मिन्विनाशः स्यात् काकस्पर्शादिभि[4]स्तथा ॥
भिन्नोविदलितः स्पृष्टः श्वादिभिर्भक्षितस्तथा ॥

तयोरेकत्र सम्भवे कर्त्तुर्हान्यादिकं योजनीयम् ।

तस्मात् प्रायश्चित्तमाह ।

कात्यायनः—

दलिते श्वादिभिः स्पृष्टे पिण्डदोषो महान् भवेत्[5] ।
तदा कर्त्तुरनायुष्यं प्रेतत्वं नाऽपयाति वै[6] ॥

---

(१) नोपसर्पति इति केषाञ्चित्पुस्तकपाठः ।

(२) तथा इति गौतपुस्तकपाठः ।

(३) विना इति गौत-केषाञ्चित्पुस्तकपाठः ।

(४) काकस्पर्शादि विना इति गौतपुस्तकपाठः ।

(५) भवेदिति गौत-केषाञ्चित्पुस्तकपाठः ।

(६) नोपजिघ्रति इति केषाञ्चित्पुस्तकपाठः नापसर्पति इति गौतपुस्तकपाठः ।

तद्दोषपरिहारार्थं प्राजापत्यं प्रकल्पयेत् ।
पुनः स्नात्वा तदा कर्त्ता पिण्डं कुर्य्यात् यथाविधि ॥

क्षत्रियादीनामेवम् ।

इति हेमाद्रौ पिण्डोपहतिप्रायश्चित्तम् ।

अथ सञ्चयनात् प्राक् प्रेतदहनाग्निनाशप्रायश्चित्तमाह ।

देवलः— प्रेताग्निश्च चितावह्निर्गृताग्निर्जातकर्मणि ।

नष्टो हुतश्चोपहतःशान्तश्चेत्तत्र दोषभाक् ॥

मार्कण्डेयः—

प्रेताग्निर्जातकर्माग्निर्गृताग्निश्च विवाहजः[1] ।

शान्तो नष्टोऽपहृतो हुतश्चेद्दोषभाजनम् ॥

नष्टः अपसरणे[2] नाशादिषु ततोऽन्यातिभिर्गृहीतः, उपहतिरन्याग्निमेलनं[3], शान्तो नष्टप्रायः । एतेषां चतुर्विधानां अग्नीनां मेलने[4] प्रायश्चित्तं ग्रन्थकारैः स्मृतिकर्तृभिश्च यद् दर्शितं वयं तदेव ब्रूमः ।

कूर्मपुराणे—तत्तदग्निं समुद्धाऽऽय अयोदेवीत्यृचा जलैः ।

प्रोक्ष्य तथैव समिधं निधाय मनसा हरिम् ॥

आरोपेतेन मन्त्रेण चाग्निमन्यं च तां पुनः ।

अयन्तइति मन्त्रेण जानुज्ञानेति मन्त्रतः ॥

उद्बुध्यस्वेति तां त्यक्त्वा लौकिकाग्नौ निधापयेत् ।

एकैव गौः प्रदातव्या श्रोत्रियाय कुटुम्बिने ॥

---

(१) विवाहज इति मौलपुस्तकपाठः ।

(२) अपसरणे नाशादिषु इति केचित्पुस्तकपाठः । अपसरणेन हिसु इति मौलपुस्तकपाठः ।

(३) उपहतोऽन्याग्निमेलनं इति केचित्पुस्तकपाठः ।

(४) मेलनं इति केचित्पुस्तकपाठः ।

चतुष्पात्रप्रयोगेण स्रुचाऽऽज्यं प्रतिष्ठाप्य च ।
अयाश्च जुहुयात् पूर्व्वं पञ्चहोतारमादितः ॥
ब्राह्मण एकहोतेति दश म[१]नस्वतीश्च जुहुयात् ।
स्विष्टकाच्च जुहुयात् पश्चात् महाव्याहृतयस्तथा ।
अनाज्ञातत्रयं हुत्वा व्याहृतीः प्रणवैः सह ॥
इमं मे वरुणस्तत्त्वा मितस्त्वं न इति च जुहुयात् ।
ज्ञात्वा विप्रस्ततः पश्चात् तत्तत्कर्म्म समाचरेत् ।
प्रायश्चित्तविहीनं यत् तत्कर्म्म विफलं भवेत् ॥

स्थालीपाकानन्तरं शेषहोमपर्य्यन्तं विवाहाग्नौ शान्ते, एतदेव प्रायश्चित्तम् । उपनयनादूर्द्ध्वं चतुर्थहोमपर्य्यन्तं शान्तेऽप्येतदेव । शिशौ जाते तदा जातकर्म्म ज्ञात्वा फलीकरणहोमाग्नौ दशरात्रमध्ये शान्ते च एतदेव । शवाग्नौ तु अष्टम् । क्षत्रियादीनामेवम् ।

इति हैमाद्रौ अस्थिसञ्चयनात् पूर्व्वं प्रेतदहनाग्निनाश-
प्रायश्चित्तम् ।

---

(१) मानस्वतीं इति मौलपुस्तकपाठः ।

## अथ अस्थ्युपहतिप्रायश्चित्तमाह ।

देवलः—

अस्थिसञ्चयनात् पूर्व्वं अस्थीन्युपहतानि चेत् ।
खरैः शृगालैः श्वनकैः कङ्क-गृध्रादिभिः क्वचम् ॥
प्रेतोऽत्र नरकं याति कर्त्तुरायुर्विशङ्कितम् ।

मार्कण्डेयः—अस्थीन्यस्पृश्यतां[1] यान्ति श्व शृगाल-खरादिभिः ।
प्रेतस्य यमलोकः स्यात् कर्त्तुरायुर्विपर्य्ययः ॥
तद्दोषपरिहारार्थं पञ्चगव्यैर्विशोधयेत् ।
पुरुषसूक्तेन तान्यद्भिः स्नापयेदस्थिसञ्चये[2] ॥
प्राजापत्यद्वयं कुर्य्याद् उभयोः शुद्धिहेतवे ।
ततः कर्म्म प्रकुर्व्वीत न तेन [3]स हि दोषभाक् ॥
अन्यथा न शुभं श्रेयं कर्त्तु गृहनिवासिनः ।

क्षत्रियादीनामप्येवम् ।

इति हेमाद्रौ अस्थ्युपहतिप्रायश्चित्तम् ।

---

(१) अस्पृश्यतां इति कीतपुस्तकपाठः ।

(२) सञ्चयं इति कीत लेखितपुस्तकपाठः ।

(३) बहुदोषभाक् इति कीतपुस्तकपाठः ।

## अथ अस्थ्नां जलनिक्षेपाभावप्रायश्चित्तमाह।

[1]देवलः—विप्रस्य कीकसानीह कर्त्ताऽम्भसि न निक्षिपेत्।
प्रेतो वैतरणीं याति तत्पुत्रोऽ[2]शुभमाप्नुयात्॥
गौतमः—मृतस्य यानि शल्यानि कर्त्ताऽम्भसि [3]नचेत् क्षिपेत्।
तत्कर्त्ता नरकं याति प्रेतोयाति महानदीम्॥
आहिताग्नेर्विना राजन् अन्येषां विधिगौरवात्।
गालवः—दशाहमध्ये तत्कर्त्ता पक्षे वा शल्यसंग्रहं।
जलनिक्षेपणात् पित्रोः पितरोलोकमाप्नुयुः॥
कर्त्ता सुखमवाप्नोति अन्यथा [4]दोषवद्भवेत्।
तेषां नष्टभुवःस्थाने कुलनाशोभवेत्सदा॥
तद्दोषपरिहारार्थं कायकृच्छ्रं समाचरेत्।
पश्चादस्थि समादाय निक्षिपेत् जलमध्यतः॥
यावदस्थि मनुष्याणां गङ्गातोयेषु तिष्ठति।
तावद्युगसहस्राणि स्वर्गलोके महीयते॥
भागीरथ्यभावे यत्रकुत्र समुद्रगनदीजले स्थापयेत्।
अन्यथा दोषमाप्नुयात्। क्षत्रियादीनामेवम्।

इति हेमाद्रौ अस्थ्नां जलनिक्षेपाभावप्रायश्चित्तम्।

---

(१) केचित्पुस्तके नास्ति।
(२) तत्पुत्रोभयमाप्नुयात् इति क्वचित्पुस्तकपाठः।
(३) न विक्षिपेत् इति क्वचित्-केचित्पुस्तकपाठः।
(४) पूर्ववदिति क्वचित्केचित्पुस्तकपाठः।

## अथ परिषद्विप्रप्रायश्चित्तमाह ।

देवलः— पर्षत्स्थितस्य विप्रस्य दोषबाहुल्यमस्ति चेत् ।

तत्पापस्य विशुद्ध्यर्थं प्राजापत्यत्रयञ्चरेत् ॥

मार्कण्डेयः—

परिषदर्थे द्विजोयस्तु भागैकं पापमश्नुते ।

तद्दोषपरिहारार्थं प्राजापत्यत्रयं स्मृतम् ॥

उपोष्य रजनीमेकां ब्रह्मकूर्चं पिबेत्ततः ।

एतेन शुद्धिमाप्नोति नाऽन्यथा गतिरस्ति हि ॥

जावालिः—

परिषद्दक्षिणा[1]भागं गृहीत्वा विप्रपुङ्गवः ।

प्राप्तदोषो भवत्याशुस्तस्मादेतत् परित्यजेत् ॥

प्राजापत्यत्रयं कृत्वा शुद्धिमाप्नोति निश्चितम् ।

पञ्चगव्यं पिबेत् पश्चान्नाऽन्यथा शुद्धिरिष्यते ॥

एवं क्षत्रियादीनामपि ।

इति हेमाद्रौ परिषद्विप्रप्रायश्चित्तम् ।

---

(१) दक्षिणां भागं इति कोशपुस्तकपाठः ।

देवलः—

विधायकश्च पापानां तदर्द्ध[1]दोषभाग्भवेत् ।
तप्तकृच्छ्रद्वयं कृत्वा शुद्धिमाप्नोति पूर्व्वजः ॥

गौतमः—

विधायको विधाता च पापानां पापकर्म्मिणाम्[2] ।
[3]तदर्द्धदोषभाग्भूय तप्तकृच्छ्रद्वयं चरेत् ॥

जावालिः—

विधायको महापापी पापराशिं समुद्वहन् ।
तप्तकृच्छ्रद्वयं कृत्वा शुद्धिमाप्नोति पार्थिव ॥
पञ्चगव्यं ततः पश्चात् पीत्वा शुद्धिमवाप्नुयात्[4] ।

क्षत्रियादीनामेवम् ।

इति हेमाद्रौ विधायकप्रायश्चित्तम् ।

---

(१) तदर्थं इति लेखितपुस्तकपाठः ।
(२) पापकर्म्मणां इति क्रीतपुस्तकपाठः ।
(३) तदर्थं इति लेखितपुस्तकपाठः ।
(४) अवाप्यते इति क्रीत-लेखितपुस्तकपाठः ।

अथानुवादकपापप्रायश्चित्तमाह ।

देवलः —

पापान्यनुवदेद् यस्तु सभामध्ये तु पापिनः ।
तुल्यपापी भवेत् सोऽपि नाऽत्र कार्य्या विचारणा ॥

गालवः—

सभामध्ये द्विजोयस्तु पापान्यनुवदेन्नृणाम् ।
स तुल्यपापो तेनाऽऽशु महान्तं नरकं व्रजेत् ॥
पश्चात् महानदीं गत्वा स्नात्वा शुद्धजलैर्मृदा ।
गोमयैर्मृत्तिकाभिश्च अष्टोत्तरशतं चरेत् ॥
पश्चाद्देहविशुद्ध्यर्थं चान्द्रायणपरायणः ।
स्मरन्नारायणं देवं अनन्तमपराजितम् ॥
व्रतान्ते पञ्चगव्येन शुद्धिं कृत्वा विचक्षणः ।
दद्याद्विप्राय गा[1]मेकां तत्पापपरिशोधिनीम्[2] ॥
तुलादिसंग्रहीतॄणां महतां पापिनामपि ।
[3]अनुवादको भवेद्यस्तु तत्पापार्द्धफलं लभेत् ॥

क्षत्रियादीनामेवम् ।

इति हेमाद्रौ अनुवादकपापप्रायश्चित्तम् ।

---

(१) देया द्विजाय गोरेका इति क्रीतकेचितपुस्तकपाठः ।

(२) परिशोधनं इति क्रीतपुस्तकपाठः ।

(३) अनुवादोभवेद्यस्तु इति काशीपुस्तकपाठः ।

## अथ देशान्तरमरणप्रायश्चित्तमाह।

देवलः—

जननी जन्मदेशश्च जम्बूद्वीपो जनार्द्दनः।
जाह्नवीतीरमित्येते[1] जकाराः पञ्च दुर्लभाः॥
मरणं जाह्नवीतीरे नृणां मुक्तिप्रदायकम्।
विकृता[2]वपि संध्यातो मुक्तिदः स्याज्जनार्द्दनः॥
जननी जन्मदेशश्च मरणे मुक्तिदाः सदा।
तस्मात् स्वजन्मदेशश्च पापनाशकरो नृणाम्॥
देशान्तरे मृतिर्यस्य तस्य जन्म निरर्थकम्।
मृतो नरकमायाति जन्मभूम्यतिलङ्घनात्॥
तस्य दोषनिवृत्त्यर्थं प्राजापत्यं समाचरेत्।
[3]कृत्वा दहनकाले तु दग्ध्वा पश्चाद् यथाक्रमम्॥
[4]न तेन दोषमाप्नोति अन्यथा नरकं व्रजेत्।

विप्रस्यादीनामेवम्।

इति हेमाद्रौ देशान्तरमरणप्रायश्चित्तम्।

---

(१) [illegible] इति क्रीत-लेखितपुस्तकपाठः।
(२) विकृतौ यस्य मरणं इति लेखितपुस्तकपाठः। विकृतौ यस्य मरणे इति क्रीतपुस्तकपाठः।
(३) तथा इति काशीपुस्तकपाठः।
(४) तत्तेन इति क्रीतपुस्तकपाठः।

## अथ देशान्तरमृतादीनामस्थिशरीराभावे प्रायश्चित्तमाह ।

देवलः—

देशान्तरमृते[1] पुंसः[2] शरीरास्थ्नो[3]रभावतः ।
अग्नौ स्थिते गृहे तस्य पालाशविधिरुच्यते ॥
त्रयाणामप्यभावेऽपि देशान्तरमृतेरपाम् ।
क्रियां कृत्वा विशुद्धः स्याद् अन्यथा नारकी भवेत ॥

गौतमः—

अनाहिताग्नेर्विप्रस्य देशान्तरमृतस्य च ।
शरीरास्थ्नो[4]रभावेऽपि गृह्याग्नौ संस्थिते गृहे ॥
पालाशविधिरेवैव तदभावे जलक्रिया ।

पराशरः—

स्वगृहे विद्यमानोऽग्निर्देशान्तरगतोमृतः ।
शरीरास्थ्नोरभावे च पालाशविधिरुच्यते ॥
तस्मिन् गृहेऽपि नष्टेऽग्नौ जलमध्यक्रिया तदा ।

---

(१) देशान्तरमृतः इति कौतुकपाठः ।
(२) पुनः इति काशीपुस्तकपाठः ।
(३) शरीरास्थ्नामिति-कौतुकपाठः ।
(४) शरीरास्थ्नां इति काशीपुस्तकपाठः ।

महाभारते—

स्वगृहे विद्यमानोऽग्निर्देवाद्देशान्तरे[1] मृतः ।
अभावेऽप्युभयोस्तस्य दहेत्पालाशकर्म्मणा ॥
अग्नौ नष्टे गृहे तस्य विषमध्यक्रिया तदा ।
प्रायश्चित्तं तदा कार्य्यं मुनिभिः परिकीर्त्तितम् ॥
चतुरब्दं ततः कृत्वा दहेत् पालाशधर्म्मतः ।
जीवे त्वब्दं विशुद्ध्यर्थं निर्ज्जीवे[2] द्विगुणं स्मृतम् ॥
अस्थिनि त्रिगुणं प्रोक्तं पालाशे तु चतुर्गुणम् ।
षडब्दमुदकस्थाने कृत्वा कर्म्म समाचरेत् ॥
अन्यथा दोषमाप्नोति कर्त्ता नाऽऽप्नोति तत्फलम् ।

गृहेष्वग्निषु विद्यमानेषु आहिताग्निर्देशान्तरे यदि विपद्यते तदा अरण्युद्भवेन अग्निना दग्ध्वा अस्थीन्यादाय वह्निसमीपे परलोकक्रियां त्रिगुणिताब्दप्रायश्चित्तपुरःसरं सर्व्वां कुर्य्यात् । शरीरास्थ्नोरभावे पालाशैर्देहं कल्पयित्वा चतुरब्दप्रायश्चित्तं कृत्वा कु[4]र्य्यात् तदाऽऽह ।

---

(१) देशान्तरं इति लेखितपुस्तकपाठः ।
(२) कृत्वा इति क्रीत लेखितपुस्तकपाठः ।
(३) न जीवेत् इति क्रीतपुस्तकपाठः ।
(४) दहेत् इति काशीपुस्तकपाठः ।

मनुः—

अग्निषु भ्रियमाणेषु स्वग्टहे याजकोयदि ।
देशान्तरे मृत(१)स्तस्य दाहस्त्व(२)रणिवह्निना ॥
शरीरास्थ्नोरभावेऽपि पालाशविधिरुच्यते ।
चतुरब्दं तथा कृत्वा दहेत्तं पूर्व्ववत् क्रमात् ॥
तेषामभावे तस्याऽपि षड़ब्दं कृच्छ्रमाचरेत् ।
कृत्वा कुर्य्याज्जले सम्यक् परलोकक्रियां मुदा ॥
विधवादीनां स्त्रीणामप्येवं। तथा क्षत्रियादीनामपि ।

इति हेमाद्रौ देशान्तरमृतानामस्थिशरीराभावे
प्रायश्चित्तम् ।

---

(१) मृतिस्तस्य इति क्रीत-लेखितपुस्तकपाठः ।
(२) दहतोऽरणिशक्तिना इति क्रीतपुस्तकपाठः ।

अथ व्रणे कृम्युत्पत्तिप्रायश्चित्तमाह ।

देवलः—

यस्य कस्य व्रणेऽसाधुकृमयः सम्भवन्ति हि ।
न तस्य पुनरावृत्तिर्यमलोकात् कदाचन ॥

गालवः—

द्विजस्य यस्य देहे तु व्रणं कृमिसमाकुलम् ।
स तेन[1] मरणं गत्वा नरके वासमश्नुते ॥

महाभारते—

राजन्यस्य शरीरे तु कृमिराशिर्भवेदिह[2] ।
तेनैव मरणं गत्वा[3] स वै नरकमश्नुते ॥
तद्दोषपरिहारार्थं कृच्छ्रं सान्तपनञ्चरेत् ।
पश्चाद्दहेत्तं विधिना स तेन नहि[4] दोषभाक् ॥

स्त्रीणामप्येवं क्षत्रियादीनामपि ।

इति हेमाद्रौ व्रणे कृम्युत्पत्तिप्रायश्चित्तम् ।

---

(१) तेनैव इति कौतपुस्तकपाठः ।
(२) भवेद् यदि इति काशीपुस्तकपाठः ।
(३) प्राप्य इति काशीपुस्तकपाठः ।
(४) नह इति कौतपुस्तकपाठः ।

 अथ मृतस्य पुनरागमनप्रायश्चित्तमाह ।

देवलः —

मृत्वा पूर्व्वं[1] द्विजो दैवात् कृतप्रेतक्रियस्तदा ।
ततः परं मृतिं त्यक्त्वा पुनरुज्जीवितो[2] यदा ॥
तदाऽस्पृश्यो भवेत् सर्व्वैर्ब्रह्मधर्म्मपरायणैः[3] ।

( गौतमः—

मृत्वा द्विजोऽथ यः पूर्व्वं यदि पश्चात् स जीवति ।
तदाऽस्पृश्योभवेन्नृणां ब्रह्मधर्म्मपरायणैः ॥ )

जाबालिः—

पूर्व्वं सर्व्वानसूंस्त्यक्त्वा ह्यनाचारपरोद्विजः ।
पश्चाज्जीवमुपा[5]गत्य कृतप्रेतक्रियोयदि ॥
न तं सम्भाषयेत् कोऽपि द्विजोयाऽन्यः पुमानिह ।
तस्य दोषनिवृत्त्यर्थं पितृसूक्तं जपेत्तदा ॥
पञ्चगव्यैश्च सम्प्रोक्ष्य स्नाप्य शुद्धजलैर्मृदा ।
अन्येन वा[6]समाऽऽच्छाद्य उपविश्य सुखासने ॥

---

(१) पूर्व्वं इति केचित्पुस्तकपाठः ।

(२) पुनरुज्जीवयेद्यदा इति केचित्पुस्तकपाठः पुनरुज्जीवयेत्तदा इति तु क्रीतपुस्तकपाठः ।

(३) ब्रह्मधर्म्मपरायणैश्च इति क्रीतपुस्तकपाठः ।

(—) अयं पाठः क्रीतपुस्तके नोपलब्धः ।

(५) उपागत्य इति क्रीतपुस्तकपाठः ।

(६) अन्येन वा समाच्छाद्य इति केचित्पुस्तकपाठः ।

प्राजापत्यं षडब्दञ्च कृत्वा स्वस्वयमं चरेत्।
गर्भाधानं ततः कुर्य्यात् पटगर्भविधानतः॥
औपासनादिकं सर्व्वं कुर्य्यात् पूर्व्ववदत्र हि।
एवं कृत्वा शुचिर्भूयात् मृतः पुनरिहागतः॥
अन्यथा दोषमाप्नोति मृतवत्तं परित्यजेत्।

"कृतक्रिय" इति कर्षमन्त्र-षष्ठिमित्तोत्क्रान्ति तिलपात्र-सर्व्वप्राय-श्चित्त-प्रेताहुति वाहकवरणानि। "अनाचार" इति सन्ध्यादिनित्य कर्म्मलोपः।

इति हेमाद्रौ मृतस्य पुनरागमन-
प्रायश्चित्तम्।

### अथ देशान्तरवासिनो द्वादशवर्षादूर्ध्वं परलोकक्रियानन्तरं पुनरागतस्य प्रायश्चित्तमाह ।

देवल:—

पूर्व्वं देशान्तरं गत्वा [1]भ्रमेद् भूमण्डलं पुन: ।
द्वादशाब्दे गते तस्मिन् त्यक्त्वा स्वगृहमञ्जसा ॥
कृतक्रियश्चेत् पुत्त्रादि: कथं शास्त्रप्रवर्त्तनम् ।
शृणुध्वं मुनय: सर्व्वं तस्य निष्कृतिमुत्तमाम् ॥

गालव:—

पूर्व्वं विप्रोषितो विप्रो द्वादशाब्दमितस्तत: ।
भ्रमन् स्वगृहमागत्य स्वपुत्त्रै: कृतसत्क्रिय: ॥
भ्रातृपुत्त्रकलत्रेषु शास्त्रदृष्टि: कथं भवेत् ।

मार्कण्डेय:—

चिरकालाऽऽ[2]गतं बन्धुं हठात्तं नाऽवलोकयेत् ।
भित्वा कांस्यादिकं पश्येन् महानर्थान्तरं भवेत् ॥
भित्वा कांस्यादिकं दृष्ट्वा तस्माद्दोषात्प्रमुच्यते ।
अन्यथा हानिरुदिता तयोर्वा धनसंशय: ॥

पराशर:—

द्वादशाब्दात्परं प्राप्तं [3]पुत्राद्यै: कृतसंस्कृतं ।
दृष्ट्वा कांस्यादिकं भित्वा पश्चात् स्वगृहमानयेत् ॥

---

(१) भ्रमन् इति क्रीतपुस्तकपाठ: ।

(२) चिरकालं कथं बन्धुन् इति क्रीतपुस्तकपाठ: ।

(३) भ्रात्रभिरिति क्रीत-चेकित पुस्तकपाठ: ।

स्नानमभ्यज्य कर्त्तव्यं कारयित्वा तु [1]ततपुनः ।
पुण्याहवाचनं कुर्य्यात् नान्यान्नानं यथाक्रमम् ॥
पटगर्भविधानेन पुनः संस्कारमाचरेत् ।
ब्रह्मोपदेशादारभ्य पञ्चगव्यान्तमाचरेत् ॥
उशन्तस्त्वेतिमन्त्रेण स्वगृह्याग्नौ विधानतः ।
अष्टोत्तरशतं हुत्वा गोघृतस्याऽऽहुतीः पृथक् ॥
होमशेषं समाप्यैव तमग्निं त्रिः परिक्रमेत् ।
पत्नीं विगुण्ठनवतीं दृष्ट्वा जप्त्वाऽघमर्षणम् ॥
ततः स्पृष्ट्वा स्वयं गाश्च जपेत् सूक्तञ्च पौरुषम् ।
उपवेश्य ततस्तान्तु मार्ज्जयेदघमर्षणैः ॥
पुनर्वस्त्रान्तरं धृत्वा ध[2]वेन सहिताऽमना ।
लाजहोमविधानेन हुत्वा[3] शेषं समापयेत् ॥
षड़ब्दमुभयं कृत्वा प्रत्येकं विधिपूर्व्वकं ।
ब्राह्मणान् भोजयेत् पश्चात् ततो भुञ्जीत वाग्यतः ॥
एवं कृत्वा न[4]रः सम्यक् तस्माद् दोषात् प्रमुच्यते ।
अन्यथा निष्कृतिर्नाऽस्ति जायापत्योरिहाऽनयोः ॥

इति देशान्तरगतस्य मरणनिश्चयेन कृतक्रियस्य
पुनरागमने प्रायश्चित्तं ।

(१) तं पुनरिति कौतपुस्तकपाठः ।
(२) धेनवे इति कौतपुस्तकपाठः ।
(३) कृत्वा इति कौत-लेखित पुस्तकपाठः ।
(४ नरोवस्तु इति कौत-लेखित पुस्तकपाठः ।

## अथ सूतकद्वितये मृतस्य प्रायश्चित्तमाह ।

देवलः—

सूतकद्वितये राजन् यो विप्रोमृतिमभ्यगात् ।
तस्यैव निष्कृतिर्नाऽस्ति षड़ब्दात् कृच्छ्रसंयुतात् ॥

मार्कण्डेयः—

द्वयोराशौचयोर्मध्ये विप्रोदैवान्मृतोयदा ।
तस्य शुद्धिः [1]समुदिता मुनिभिः सत्यवादिभिः ॥
शुद्धिं [2]कुर्यात् षड़ब्दाच परिषद्विधिपूर्व्वकं ।
( जाबालिः-जातके तु षड़ब्दं स्यात् मृतकेतु द्वयं चरेत् ।
द्वयोराशौचयोर्मध्ये यस्य स्यान्मृतिनिश्चयः ।
तस्य शुद्धिः षड़ब्दाच कृच्छ्रादिह विनिश्चिता ॥ )
जातके तु षड़ब्दं स्यान्मृतके तु द्वयं चरेत् ।
अस्थिसञ्चयनात् पूर्व्वं त्र्यब्दकृच्छ्रं समाचरेत् ॥

क्षत्रियादीनामेवम् ।

इति हेमाद्रौ सूतकद्वितये मृतस्य प्रायश्चित्तम् ।

---

(१) इत्यापीता इति मौतपुस्तकपाठः ।
(२) कृच्छ्रात् इति केचित् पुस्तकपाठः ।
(—) अयं पाठः मौतपुस्तके नोपलभ्यः ।

### अथ सहगमनभीतायाः स्त्रियाः प्रायश्चित्तमाह।

देवलः—

पूर्व्वं गच्छामि निश्चित्य[1] पत्या सह हुताशनम्।
दहनस्थानमागत्य पश्चाद् या विनिवर्त्तते॥
तस्या लोकान्तरं नाऽस्ति पतिर्गच्छति नारकम्।

गौतमः—

मृतं भर्त्तारमुद्दिश्य गमिष्यामि हुताशनम्।
इति या भाषते[2] पूर्व्वं पश्चाद्भीता निवर्त्तते[3]॥
सैव याति महादुःखं भर्त्ता नरकमश्नुते॥

महाभारते—

तिस्रः कोट्योऽर्द्धकोटी च रोम्णां या मानुषे स्मृताः।
तावत्कालं वसेत् स्वर्गे भर्त्तारं याऽनुगच्छति॥

यमः—

पूर्व्वं यामीति [4]सङ्कल्प्य पश्चाद् भीता निवर्त्तते।
याति सा नारकं लोकं भर्त्ता भवति किल्बिषी॥
तद्दोषपरिहारार्थं गवाम्भो जुहुयात् क्रमात्।

---

(१) बाबुद्ध्या इति श्रीतवेष्टितपुस्तकपाठः।
(२) भाषिता इति श्रीतपुस्तकपाठः।
(३) निवर्त्तिता इति वेष्टितपुस्तकपाठः।
(४) भर्त्तारं इति श्रीत-वेष्टितपुस्तकपाठः।

"शतायस्वाहे"ति नवभि (र्दशभि) र्हुत्वा 'शेषेणाज्येन पत्न्याः सर्व्वाङ्गं विलेपयेत् ततः शुद्धा भवति भर्त्ताऽपि शुध्यति। एवं क्षत्रियादीनाम्।

इति हेमाद्रौ सहगमनभीतायाः स्त्रियाः प्रायश्चित्तम्।

---

(१) शेषमाज्यत इति क्वीतपुस्तकपाठः।

## अथ देशान्तरमृतस्याऽऽहिताग्नेररण्यग्निना विना लौकिकाग्निना दहने प्रायश्चित्तमाह ।

देवलः—

देशान्तरं मृतं राजन् यज्वानं लौकिकाग्निना ।
दहेत् [1]तत्तु वृथा भूयाद् [2]यग्निभिश्च त्रिभिर्विना ॥

पराशरः—

आहिताग्नेररण्यग्नेर्देशान्तरमृतिं विना ।
लौकिकाग्नौ दहेत् [3]पुत्रस्तयोः प्रोक्ता ह्यधोगतिः ॥

मार्कण्डेयः—

सोमपं स्वाग्निमुत्सृज्य परण्यग्नेर्विना दहेत् ।
उभयोर्नरकश्चात्र न तत्कर्मफलं लभेत् ॥

अङ्गिराः—

देशान्तरमृतं पुत्रः परण्यग्निं विना दहेत् ।
सोमपा नरकं गच्छेत् तत्पुत्रोयात्यधोगतिम् ॥
आहिताग्निं द्विजं पुत्रः परण्यग्निं विना दहेत् ।
यज्वा स नरकं याति तत्कर्ता नरकं व्रजेत् ॥

---

(१) वृथा इति केचित्पुस्तकपाठः वृथ इति कोतपुस्तकपाठः ।
(२) सोऽग्निभिः इति कोत-केचित्पुस्तकपाठः ।
(३) पुत्रैरिति केचित्पुस्तकपाठः ।

प्रायश्चित्तमाह,

गौतमः—

तदस्थीनि समादाय[1] पुत्त्रोद्देशात् स्वमालयम् ।
गत्वा तं [2]धर्म्ममार्गेण प्राजापत्यत्रयं चरेत् ॥
मथित्वा सम्यगरणिं तदुन्नवहुताशने[3] ।
प्रायश्चित्तं तु त्रिगुणं कृत्वाऽस्थीनि प्रदाहयेत् ॥
कृत्वौर्द्ध्वदेहिकं कर्म्म धर्म्मशास्त्रोक्तमार्गतः ।
एतेन शुद्धिमाप्नोति नाऽन्यथा शुद्धिरिष्यते ॥

तत्पत्न्या विधवाया अप्येवम् ।

इति हेमाद्रौ आहिताग्नेर्मृतस्य लौकिकाग्निना-
दहने प्रायश्चित्तम् ।

---

(१) समादाय इति क्रीत-पुस्तकपाठः ।
(२) तं धर्म्ममार्गेण इति क्रीत लेखितपुस्तकपाठः ।
(३) हुताशनं इति लेखितपुस्तकपाठः हुताशनात् इति क्रीतपुस्तकपाठः ।

## अथ गर्भिणीमृतिप्रायश्चित्तमाह ।

देवलः—

यदा सा गर्भिणी नारी दैवा[1]द्दिष्ट विपद्यते ।
ऊर्द्धं षण्मासतस्तस्याः गर्भं छिन्द्यात् शिशुं हरेत् ॥
मातुः पादप्रदेशे वा शिरोभागे तदा खनेत् ।
यदि जीवेत्तदाबालः गृहीत्वा पोषयेच्छनैः ॥
यदामृतस्तदाऽऽदाय पूर्व्ववन्निक्षिपेद् भुवि ।
गर्भं सूत्याऽथ सन्धाय जुहुयादाहुतित्रयम् ॥
प्राजापत्यद्वयं कृत्वा दहेत्तां शास्त्रमार्गतः ।
भर्त्तुर्गर्भस्य शुद्ध्यर्थं तत्तत्कर्म्मुदीरितम् ॥

गौतमः—

तृतीये पञ्चमे षष्ठे मृता स्याद् गर्भिणी यदि ।
तत्र दाहे न दोषः स्यात्पात इत्यभिधीयते ॥
मासि षष्ठे शिशुः प्राणैर्युज्यते तत्र दोषभाक् ।
अतः श्मशानदेशे तु नीत्वा तां गर्भिणीं मृताम् ॥
नारी वा सधवा वापि भिन्द्यान्नाभेरधःस्थलम् ।
शिशुं हृत्वा क्षिपेद्भूमौ शिरःस्थाने प्रपादयोः ॥
पिता[2] सूत्याऽथ तं गर्भं जुहुयादाहुतित्रयम् ।
प्राजापत्यद्वयं कृत्वा दहेत्तां शास्त्रमार्गतः ॥

---

(१) दैवाद्यदि इति क्रीत-लेखितपुस्तकपाठः ।
(२) पिधाय सूत्या तं गर्भं इति लेखितपुस्तकपाठः ।

गर्भस्य भेत्तुः[1] शुद्धार्थं तप्तकृच्छ्रं मनूदितम् ।
शिशुर्यदि तदा जीवेत् पोषयेद्यत्नतः शनैः ॥
यदामृतस्तदाऽऽदाय पूर्व्ववन्निक्षिपेद्भुवि ॥
( क्षत्रियादिस्त्रीणामप्येवम् ) ।

इति हेमाद्रौ गर्भिणीमरणप्रायश्चित्तम् ।

---

(१) छेत्तुः इति क्रीतपुस्तकपाठः ।
( ) अयं पाठः लेखितपुस्तके नास्ति ।

## अथ सूतिकामरणप्रायश्चित्तमाह।

देवलः—

सूत्वा पुत्रं यदा नारी दशाहाभ्यन्तरे मृता।
न तस्याः पुनरावृत्ती रक्तकुण्डाश्रयाभयात्॥

मरीचिः—

या नारी तनयं सूत्वा यदि दैवात् प्रमीयते।
सूतके पुनरावृत्तिर्न तस्या यममन्दिरात्॥

गौतमः—

सूता नारी मृता पश्चाद् दशाहाभ्यन्तरे यदि।
न तस्या यमलोकाद्वै निष्कृतिर्बहुवत्सरैः॥
तद्दोषपरिहारार्थं चत्वारश्चत्विजः पृथक्।
एक एव द्विजोवाऽपि वारुणान् कलसान् क्षिपेत्।
पूर्व्वादिदिक्षु सर्व्वत्र जलेनापूर्य्य यत्नतः॥
वरुणं पूजयेत्तत्र ऋत्विगेकश्चतुर्ष्वपि।
कलसान् पाणिभिः स्पृष्ट्वा मन्त्रानेतानुदीरयेत्॥
नमकं चमकञ्चैव पुरुषसूक्तञ्च वैष्णवम्।
पवमानानुवाकञ्च हिरण्य[1]शृङ्गमिति क्रमात्॥
शान्तिभिर्दशभिश्चैव कलसानभिमन्त्रयेत्।
अग्न्येन वाससाऽऽच्छाद्य सूतिकां कृतशौचिकाम्॥

---

१ हिरण्यशृङ्गमिति क्रमादिति केचित्पुस्तकपाठः।

मार्ज्जयेद् ऋत्विगम्भोभिः कलसस्थैः पवित्रजैः ।
आपोहिष्टादिभिर्मन्त्रैर्दवस्वत्वेति मार्ज्जयेत् ॥
ततः शवं वहिर्देशे स्थापयित्वाऽथ देशिकः ।
शतकुम्भोदकैः प्रोक्ष्य नूतनेनैव वाससा ॥
आच्छाद्य कुणपं पश्चाद् दहेदौपासनाग्निना ।

गौतमः—

तुषाग्निना दहेत् कन्यां कापालेन वटुस्तथा ।
विधुरं विधवाञ्चैव उत्पन्नेनैव दाहयेत् ॥
गृहस्थञ्चैव तत्पत्नीं दहेद् गृह्याग्निना पृथक् ।
आहिताग्निञ्च तत्पत्नीं वह्निभिश्च त्रिभिर्दहेत् ॥
अन्यथा दोषमाप्नोति गतिस्तेषां न विद्यते ।

यदि कन्यका वाऽथवा बालो वा धनिष्ठादिषु मृतः तदा पूर्व्ववत् प्रायश्चित्तं कृत्वा दहेत् ।

इति हेमाद्रौ सूतिकामरणप्रायश्चित्तम् ।

---

## अथ रजस्वलामरणप्रायश्चित्तम्।

( देवलः—

रजस्वला यदा नारी मृतिमायाद्यथा सती।
नरकं याति सा नारी रक्तकुण्डे निमज्जति॥ )

[1]गौतमः—

[2]यदा पुष्पवती नारी दैवाद्यदि विपद्यते।
तस्या वै निष्कृतिर्नाऽस्ति रेतःकुण्डाद्भयङ्करात्॥

जावालिः—

रजस्वला तु दैवेन दिनेषु त्रिषु यत्र हि।
मृता तस्या गतिर्नास्ति रक्तकुण्डाद्भयङ्करात्॥

सूतिकामरणप्रायश्चित्तवत् सर्व्वं कुर्य्यात्।

इति हेमाद्रौ रजस्वलामरणप्रायश्चित्तम्।

---

(—) अयं पाठः क्रीतपुस्तके न दृष्टः।

(१) देवल इति क्रीत-पुस्तकपाठः।

(२) रजस्वला यदा नारी-इति क्रीतपुस्तकपाठः।

## अथाहिताग्नेर्दुर्मृतिप्रायश्चित्तमाह ।

देवलः —

अत्र 'भारद्वाज सूत्रं "यद्याहिताग्निराधानं गच्छेत् सहाऽग्निहोत्रेणाऽनुव्रजेत् यावत्योग्राममर्य्यादा नद्यश्च, तावतीर्नातिहरेयुः, यद्यतिहरेयुः लौकिकाः संपद्येरन्। यदि पत्नी सीमान्तरेऽभिनिम्लोचेदभ्युदियाद्वा पुनराधेयं न तस्य प्रायश्चित्तिः। यद्यात्मन्यरण्योर्वा समारूढेष्वग्निषु यजमानोम्रियेत पूर्व्ववदग्न्यायतनानि कल्पयित्वा यजमानायतने प्रेतं निधाय गार्हपत्यायतने 'अरण्यौ सन्निधाय मन्थति। प्रेतस्य दक्षिणपाणिमभिनिनिधाय तत्पुत्रो भ्राताऽन्योवा प्रत्यासन्नबन्धु "उपावरोहजातवेदइमं मर्त्तं स्वर्गलोकाय प्रजानन्नायुः प्रजां रयिमस्मासु धेहि प्रेताहुतिश्चास्य जुषस्वस्वाहेत्य"रण्योर्वोपावरोह्य मन्येत्। यद्यरण्योः समारूढः स्यान्निवर्त्तमानं प्रेतमन्वारम्भयित्वा इमं मन्त्रं जपेत्।"

इति हेमाद्रौ आहिताग्नेर्दुर्मृतिप्रायश्चित्तम्।

---

(३) भरद्वाज इति क्रीतपुस्तकपाठः।

(४) अरणी इति क्रीतपुस्तकपाठः।

## अथापस्मारि श्व-शृगालदष्टमरणप्रायश्चित्तमाह । 503

देवलः—

अपस्मारि-शुना दष्टो विप्रः स्यात् प्रलपन् सदा ।
जम्बुकेनाऽथवा दष्टः प्रलपन् पूर्ववन्मृतः ॥

मार्कण्डेयः—

जम्बुकेन शुना विप्रो बुद्धिभ्रंशेन दष्टवान् ।
प्रलपन् तद्दशप्राणान्मृतोदैवात्तदा कथम् ॥

पराशरः—

जम्बुकेन शुना विप्रो बुद्धिभ्रंशेन दंशितः ।
प्रलपन् प्रत्यहं तद्वन्मृतो यदिह दैवतः ॥
तस्य वै निष्कृतिं (१)दृष्टा षडब्दैः कृच्छ्रसंश्रितैः ।
विधिना दाहयेत् पश्चात् न तेन स ह दोषभाक् ॥
न तस्य दुर्मृतेर्दोषो न पिशाचोभवेत्तदा ।
विधवा-विप्रस्त्रीणां क्षत्रियादीनामेवम् ।
इति हेमाद्रौ अपस्मारि श्व शृगालदष्टमरणप्रायश्चित्तम् ।

---

(१) नास्ति इति श्रौत-वैदिकितपुस्तकपाठः ।

## अथ शुना दष्टस्य प्रायश्चित्तमाह।

देवलः—

दिवा वा यदि वा रात्रौ शुना विप्रोऽथदंशितः।
दिवा सचेलःस्नायीत न रात्रौ स्नानमाचरेत्॥

गौतमः—

शुना विप्रो दिवा रात्रौ दंशितस्तत्क्षणाज्जलैः।
स्नात्वा दिवा तु शुद्धः स्यात् रात्रौ न स्नानमाचरेत्॥

पराशरः—

दिवा वा यदि वा रात्रौ विप्रः कवलितः श्वभिः।
धर्म्मनाशस्तदा भूयाद् दिवास्नानं समाचरेत्॥
तद्देशं क्षालयेत्तोयैरग्निसंस्पर्शनं चरेत्।
पुनः प्रक्षाल्य तं देशं पादौ प्रक्षाल्य वाग्यतः॥
आचम्य शुद्धिमाप्नोति परेद्युः स्नानमाचरेत्।
उपोष्य रजनीमेकां पञ्चगव्येन शुद्ध्यति॥
स्त्रीबालवृद्धातुराणामेवं क्षत्रियादीनामपि एवम्।

इति हेमाद्रौ शुनादष्टस्य प्रायश्चित्तम्।

---

## अथेदानीं गर्भाधानादिषोड़षकर्म्मातिक्रम-प्रायश्चित्तमाह ।

देवलः—

गर्भाधानं पुंसवनं सीमन्तोजातकर्म्म च ।
नामान्नप्राशने चौलं मौञ्जी-व्रतचतुष्टयम् ॥
गोदानाख्यं स्नातकञ्च विवाहः पैतृमेधिकम्

श्रावणहोमश्च । एतत्कर्म्मातिक्रमे पृथग्भ्रष्टाः[1] कर्म्मविभ्रष्टाः श्राखारण्डा[2] ब्रह्मभ्रष्टाश्चतुर्विधा षर्पाञ्जेयाः असम्भाष्याश्च ।

अत्र ।

मनुः—

पिता पितामहश्चैव तथैव प्रपितामहः ।
येन मार्गेण वर्त्तन्ते तत्पुत्रस्तेन सञ्चरेत् ॥

गौतमः—

येनाऽस्य पितरोयाताः येन याताः पितामहाः ।
तेन यायात् सतां मार्गं तेन गच्छन्न दुष्यति ॥
अन्यथा यदि वर्त्तन्ते चक्रलिङ्गादिधारिणः ।
पृथग्भ्रष्टास्तु ते ज्ञेयाः सर्व्वधर्म्मबहिष्कृताः ॥

---

(१) क्रीत-लेखितपुस्तकयोर्नास्ति ।
(२) लेखितपुस्तके नास्ति ।

गर्भाधानादिसंस्कारान् शक्ताः कर्त्तुं भुवि द्विजाः ।
तैर्व्विना ये प्रवर्त्तन्ते कर्म्मभ्रष्टास्तएव हि ॥
यः स्वशाखां परित्यज्य अन्यशाखामनुस्मरन् ।
उपनयनादिकं तत्र कुर्व्वन् विप्रो यदा भवेत् ॥
शाखारण्डः स विज्ञेयः सर्व्ववर्णवहिष्कृतः ।
सन्ध्यादिनित्यकर्म्माणि गायत्रीजपमेव च ॥
यागादिकं परित्यज्य समर्थोऽपि द्विजोत्तमः ।
यदि वर्त्तेत लोकेऽस्मिन् ब्रह्मभ्रष्टः स गद्यते ॥
अत एतानि कर्म्माणि श्रुतिस्मृत्युदितानि च ।
परित्याज्यानि विप्रेन्द्रैर्न कदा पापभीरुभिः ॥

---

देवलः—

स्नानवत्यां ऋतौ पत्न्यां गर्भाधानं समाचरेत्।
चतुर्थेऽहनि वा राजन् पञ्चमेऽहनि तत्त्वतः॥
कृत्वाऽभ्युदयिकं प्रातस्तद्रात्रौ मन्त्रपूर्व्वकम्।
गर्भाधानं ततः कुर्य्यात् सर्व्वं[1] गर्भविशुद्धिदम्॥
न तत्र प्रतिगर्भेषु[2] निषेको[3] मन्त्रसंहितः।
अन्यथा दोषमाप्नोति गर्भपातीह गद्यते॥
तद्दोषपरिहारार्थं गर्भंत्यागमेव हि।
प्राजापत्यत्रयं कुर्य्यात् द्वितीये पुनरार्त्तवे॥
अन्यथा गर्भपाती स्यात् यथा जारस्तथैव सः।

इति। क्षत्रियादीनामेवम्।

इति गर्भाधानातिक्रमप्रायश्चित्तम्।

---

(१) पूर्व्वं इति मीत-वेंकितपुस्तकपाठः।
(२) प्रतिगर्भं तु इति मीतपुस्तकपाठः।
(३) निषेकं मन्त्रवर्ज्जितं इति वेंकितपुस्तकपाठः।

 अथ सीमन्तपुंसवनातिक्रमप्रायश्चित्तमाह ।

देवलः—

सीमन्तः प्रथमे गर्भे चतुर्थे मासि शस्यते ।
अथवा देवयोगेन कुर्य्यात् षष्ठेऽष्टमे द्विजः ॥
पुंसवं तत्र कुर्व्वीत सीमन्तेन सहैव वा ।

जावालिः—

सीमन्तः प्रथमे गर्भेऽयुगे मासि ऋतौ च वा ।
ऋतौ मासि प्रकर्त्तव्या गर्भशुद्ध्यर्थमादरात् ॥
रजःपापसमुद्भूतं शुक्रं पापानुवर्त्ति यत् ।
तयोः संसर्गतोगर्भे प्रथमोदोषसम्भवः ॥
तद्दोषपरिहारार्थं सीमन्तोन्नयनञ्चरेत् ।
शलल्या दर्भपिञ्जल्या[1] मार्ज्जयित्वा न दोषभाक् ॥
अन्यथा दोषमाप्नोति न शुद्धिर्गर्भधारिणः ॥

तत्प्रायश्चित्तमाह—

मार्कण्डेयः—

पुंससीमन्तयोर्व्विप्रो यदि तद्दोषनाशनम् ।
न कुर्य्यात् पूर्व्वजः पापी प्राजापत्यत्रयञ्चरेत् ॥
कृत्वा शुद्धिमवाप्नोति गर्भशुद्धिश्च जायते ।

क्षत्रियादीनामेवं—

इति हेमाद्रौ सीमन्तपुंसवनाकरणप्रायश्चित्तम् ।

---

(१) दर्भपुञ्जीलैः इति क्वचित्पुस्तकपाठः ।

अथ जातकर्म्मातिक्रमप्रायश्चित्तमाह ।

देवलः—

जाते पुत्रे पिता स्नात्वा सचैलं जातकर्म्मणि ।
हेम्ना वा धान्यजातेन जातश्राद्धं समाचरेत् ॥
अच्छिन्ननाभिं तं पुत्रं पिता पश्येत् प्रयत्नतः ।
ये पुत्रमुखमीक्षन्ते स्वर्गद्वारमपावृतम् ॥
पुत्रं दृष्ट्वा तथा भूमौ जातकर्म्म समाचरेत् ।
फलोदकचमिश्रैश्च सर्षपैर्वाऽऽहुतीर्यजेत ॥
अजस्राग्निस्तदा तिष्ठेद् यावदाशौचनिर्गमः ।
दशरात्रं पिता कुर्य्यात् एवं पुत्राभिवृद्धये ॥
नैमित्तिके च कर्त्तव्ये स्नानदाने च रात्रिषु ।
पुत्रजन्मनिदानञ्च नैमित्तिकमितीरितम् ॥
ग्रहणोद्वाह-संक्रान्ति-यात्रासु प्रसवेषु च ः
दानं नैमित्तिकं [1]कुर्य्याद् रात्रावपि न दुष्यति ॥
देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनाम् ।
आयान्ति पुण्यं तदहः स्नानदानादिकर्म्मसु ।
मृताशौचेऽपि कर्त्तव्यं जातकर्म्माऽब्रवीद्वचः ॥
मृताशौचे समुत्पन्ने पुत्रजन्म यदा भवेत् ।
अशौचे निर्गते कुर्य्यात् जातकर्म्म च नाम च ॥
जननाशौच उत्पन्ने पुत्रजन्म यदा भवेत् ।
जननानन्तरं कुर्य्यात् जातकर्म्म यथाविधि ॥

---

(१) कार्य्यमिति श्रोत-वेष्टितपुस्तकपाठः ।

प्रतिग्रहो न दोषाय नाभिच्छेदनतः पुरा ।
नालस्य च्छेदनादूर्द्धं मपि तस्मिन् प्रतिग्रहः ॥
दिने न दोषायेत्याह मनुर्वृहस्तु धर्म्मवित् ।
जाते कुमारे तदहः कामं कुर्य्यात्प्रतिग्रहम् ॥
हिरण्य-धान्य-गो-वासस्तिलानां मधु-सर्पिषोः ।
जातकर्म्माऽकरणे प्रायश्चित्तमाह—

देवलः—

जातकर्म्म न कुर्व्वीत पूर्व्वजोयदि नास्तिकात् ।
व्रतकाले च तत्कर्म्म कुर्य्याद् विधिपुरः सरम् ॥
प्राजापत्यद्वयं कुर्य्यात् चौले वा नामकर्म्मणि ।

मुख्यकालोदग्गरात्वं गौणस्तु नामकर्म्मचौलोपनयनानि । मुख्य-कालातिक्रमे गौणकालेष्वेतत्प्राजापत्यद्वयं कृत्वा तत्कर्म्म कृत्वा शेषं समापयेत् । एवं क्षत्रियादीनामपि ।

इति हेमाद्रौ जातकर्म्माकरणप्रायश्चित्तम् ।

## अथ यमलयोर्व्युत्क्रमकर्मकरणे प्रायश्चित्तमाह।

देवलः—

यमलौ युगपज्जातौ मातुर्योनिर्विभेदनात्।
तयोर्ज्येष्ठः पूर्वजः स्याद् द्वितीयोऽनुज एव हि॥

मार्कण्डेयः—

पितुर्वीर्यनिषेकेण मातुर्मदनसद्मनि।
शुक्रशोणितसम्पर्काद् द्विधा गर्भौ भविष्यतः॥
तौ वर्द्धमानौ पेशिभ्यां दशमे मासि सम्भवे।
गर्भद्वारात् विनिष्क्रान्तौ युगपत्पततोभुवि॥
पूर्वजस्तु भवेज्ज्येष्ठो द्वितीयोऽनुज एव हि।

जाबालिः—

[1]पेशिभ्यां वीर्यबाहुल्यान् मातु [2]र्गर्भपितुस्तथा।
पिण्डवत् संपतत्यत्र द्विधा भवति पूरणात्॥
पिण्डद्वयं तदा भूयाद् वर्द्धते बहुमैथुनात्।
आगते प्रसवे काले [3]जातौ युगपदुद्गतौ॥
पूर्वजः पूर्वजो ज्ञेयो द्वितीयोऽवरजस्तथा।
यथा जनिर्यस्य शिशोः स एवाऽत्रैव पूर्वजः॥

---

(१) पैशुन्यां इति वेंचितपुस्तकपाठः।
(२) गर्भपितु इति श्रौत-वेंचितपुस्तकपाठः।
(३) जाते इति वेंचितपुस्तकपाठः।
(४) योनिभूत्वाऽपि इति श्रौतपुस्तकपाठः।
(५) गर्भयोऽस्य इति श्रौत-पुस्तकपाठः।

पराशरः—

योनिमूला द्विनिष्क्रान्तौ युगपद् गर्भगोलतः ।
जातौ यमलजौ ज्ञेयौ—तयो र्ज्येष्ठस्तु पूर्व्वजः ॥
उपनयनादिकं कर्म्म तत्पुरःसरमाचरेत् ।
योनिविन्दुसमुत्पत्तिर्न दृष्टा चाधतो जनैः ॥
प्रत्यक्षाद्दृष्टसामर्थ्योर्नैव कर्म्मफलप्रदा ।

मरीचिः—

एकयोनिसमुत्पन्नौ जायेतां यमलात्मकौ ।
तयोर्ज्येष्ठः पूर्व्वजः स्यात्कनीयान् अपरः क्षितौ ॥
( योनिविन्दोरदृष्टत्वात् जनिरत्रैव कारणम् ।
तस्माज् ज्येष्ठः पूर्व्वजः स्यात् कर्म्मार्होभुवि गौरवात्
अन्यथा दोषमाप्नोति परिवेत्तैव सर्व्वदा । )

[१]भारद्वाजः—

तयोर्व्युत्क्रमतः कुर्य्यात् पिता यमलयोः शुभम् ।
परिवित्तिः पूर्व्वजः स्यात् परिवेत्ता द्वितीयजः ॥
तयोर्यदिह सन्तानं परिविन्द्रा[२]दिकं भवेत् ।
पित्रा विमृश्य कर्त्तव्यं व्रतकर्म्मादिकं ततः[३] ॥

---

(—) अयं पाठः क्रीत-पुस्तके नोपलब्धः ।

(१) भरद्वाज इति लेखितपुस्तकपाठः ।

(२) परिविन्द्रादयो ऽभवन् इति लेखितपुस्तकपाठः ।

(३) तस्माद् विमृश्य कर्त्तव्यं व्रत कर्म्मादिकं पिता इति लेखित क्रीतपुस्तकयोः पाठः ।

व्युत्क्रमाज्ज्यौवीबन्धनादिकं मज्ञानात्कृत्वा परिवित्तिपरिवेत्तृप्रायश्चित्तं कृत्वा विवाहादिकं कुर्य्यात्। अन्यथा दोषमाप्नोति। क्षत्रियवैश्ययोरप्येवम्।

इति हैमाद्रौ यमलयोर्व्युत्क्रमविवाहादिप्रायश्चित्तम्।

---

## अथ नामकरणातिक्रमप्रायश्चित्तमाह।

देवलः—

एकादशेऽह्नि सम्प्राप्ते पितरौ नामकर्म्म यत्।
कुर्व्वीतां तस्य सम्पत्तिरायुषां तत्र तत्क्षणात्॥

मार्कण्डेयः—

पितरौ नामकरणं पुत्रस्य दशमेऽहनि।
विचार्य्या(१)ऽपरतो वेधात् कुर्य्यातां शुभमादरात्॥
पुत्रस्य वा कन्यकाया नामकर्म्म शुभाप्तये:
पिता कुर्य्यात् प्रयत्नेन सहद्भिर्द्विजपुङ्गवैः॥

---

(१) विचार्य्य परतो वेधात् इति कोल-पुस्तकपाठः।

पुत्रस्य नाम कुर्व्वीत पिता चैकादशेऽहनि ।
आयुषस्तस्य वृद्ध्यर्थं तस्य सम्पत्समृद्धये ॥

नाम त्रिविधं, मासनाम नक्षत्रनाम व्यवहारनाम च । त्रयाणां करणात् पुत्रस्याऽऽयुषः परिवृद्धिः । अतो नामकरणं एकादशेऽह्नि विहितम् ।

"एतेषां करणात् पुत्रः शतवर्षमकण्टकम् ।
आयुराप्नोति सहसा तस्मादेतत् त्रयं चरेत् ॥
एकादशाहं सन्त्यज्य भोजने चौलकेऽपि वा ।
व्रतबन्धे तु राजेन्द्र प्राजापत्यद्वयं पिता ॥
कृत्वा कर्म्म प्रकुर्व्वीत मुख्यकालव्यतिक्रमात् ।
एतेन शुद्धिमाप्नोति नाऽन्यथा शुद्धिरस्ति हि ॥

इति हेमाद्रौ नामकरणातिक्रमप्रायश्चित्तम् ।

---

## अथाऽन्नप्राशनकालातिक्रमप्रायश्चित्तमाह ।

देवलः—

शिशूनां भोजने राजन् कालः षण्मासईरितः ।
तदतिक्रमणे[1] नाऽस्ति मुख्यकालोद्विजन्मनाम् ॥

---

(१) तदतिक्रमणेनापि इति क्रीत-लेखितपुस्तकपाठः ।

हारीतः—

शिशूनां भोजनं शस्तं षण्मासे मुनिचोदितम्।

तदतिक्रमणे दोषोव्रतबन्धे तु मध्यमम्[1]॥

जाबालिः—

षष्ठे मासि कृतश्राद्धो वाचयित्वा शिशोर्द्विजैः।

ब्राह्मणांस्तत्र सम्पूज्य भोजयेत् तं शिशुं मुदा॥

मुख्यकालपरित्यागाद् गौणे गुणविहीनता[2]।

अतः षण्मासतः कुर्य्यादन्नप्राशनमादरात्॥

तदतिक्रमणे प्रायश्चित्तमाह—

उशनाः—

मुख्यकालपरित्यागादन्नप्राशनकर्म्मणः।

व्रतबन्धे तु गौणं स्यात् प्राजापत्यमुदीरितम्॥

कृत्वा शुद्धिमवाप्नोति कर्म्मलोपो न जायते।

क्षत्रियादीनामप्येवम्।

इति हेमाद्रौ अन्नप्राशनकालातिक्रमप्रायश्चित्तम्।

---

(१) मध्यम इति वेष्टितपुस्तकपाठः।

(२) गुणविहीनतात् इति क्रीतपुस्तकपाठः।

## अथ चौलकर्म्ममुख्यकालातिक्रमप्रायश्चित्तमाह ।

देवलः—

चूडाकर्म्म द्विजातीनां सर्व्वेषामेव धर्म्मतः ।
प्रथमेऽब्दे तृतीये वा कर्त्तव्यं श्रुतिदर्शनात् ॥

पराशरः—

चूडा नाम शिशूनाञ्च वपनं तच्छिखां विना ।
पञ्च वाऽत्र शिखामेकामवशेष्य वपेत्सदा ॥
शिशुर्दीर्घायुरत्रैव जायते पृथिवीपते ।
अन्यथा दोषमाप्नोति आयुर्हीनोभवेत्सदा ॥

मरीचिः—

प्रथमेऽब्दे तृतीये वा शिशूनां मुण्डनं स्मृतम् ।
शिखाः पञ्चैव संज्ञेया[1] आपस्तम्बानुवर्त्तिनाम् ॥
यस्यैव ऋषयोये च यस्यैव कुलधर्म्मतः ।

गौतमः-

देशकालानुरोधेन यदि दैवाद्विलम्बितम्[2] ।
प्राजापत्यद्वयं कृत्वा तत्पापपरिशोधनम्[3] ॥

---

(१) संशोध्या इति लेखितपुस्तकपाठः ।

(२) विलम्बिते इति क्रीत-लेखितपुस्तकपाठः ।

(३) परिशोधनात् इति क्रीतपुस्तकपाठः ।

चतुर्थ्यावविधानेन परिस्तीर्य्य हुताशनम् ।
महाव्याहृतिहोमं च कृत्वा कर्म्म समाचरेत् ॥
शिशुः शुद्धिमवाप्नोति कर्त्ता चैवं न दोषभाक् ।

क्षत्रियादीनामप्येवम् ।

इति हेमाद्रौ चौलकर्म्ममुख्यकालातिक्रमप्रायश्चित्तम् ।

---

## अथ शिशूनामक्षराभ्यासकालातिक्रमप्रायश्चित्तमाह ।

देवलः—

'उदग्गते भास्वति पञ्चमाब्दे
प्राप्तेऽक्षरस्वीकरणं शिशूनाम् ।
सरस्वतीं विष्णु-विनायकौ च
गुडौदनाद्यैरभिपूज्य कुर्य्यात् ॥

गालवः—

पञ्चमाब्दे शिशूनाञ्च कुर्य्याद्विद्यापरिग्रहम् ।
विनायकं शारदाञ्च पूजयित्वा जनार्द्दनम् ॥

---

(१) उदगयने इति लेखितपुस्तकपाठः ।

मार्कण्डेयः—

आरोग्यं भास्करादिच्छेद् विद्यामिच्छेद्विनायकात् ।
श्रियं महेश्वरादिच्छेन्मोक्षमिच्छेज्जनार्द्दनात् ॥

अतः पञ्चमवर्षे च विद्याभ्यासः प्रशस्तः मेधावी च भवति ।

तदतिक्रमे प्रायश्चित्तमाह—

पराशरः—

पञ्चमाब्दं विलङ्घ्याऽऽशु शिशोरक्षरसंग्रहे ।
कायकं तत्र कर्त्तव्यं कृच्छ्रं कृत्वा विशुध्यति ॥
अन्यथा दोषमाप्नोति [1]विद्या तं न प्रबोधयेत् ।

विद्याग्रहणं नाम पञ्चाशद्वर्णमातृकास्वीकारः ।

गालवः—

पञ्चमेऽब्दे शिशुः सम्यग् गुरोर्मातरमभ्यसेत् ।
अभ्यर्च्य गणपं विष्णुं शारदां भक्तवत्सलाम् ॥

इति हेमाद्रौ शिशूनामक्षरग्रहण-
कालातिपातप्रायश्चित्तम् ।

---

(१) विद्यां तत्र प्रबोधयेत् इति शीतपुस्तकपाठः ।

## अथोपनयनकालातिपातप्रायश्चित्तमाह।

देवलः—

गर्भाष्टमेऽष्टमे वाऽब्दे ब्राह्मणस्योपनायनम्।
[1]गर्भैकादशमे राज्ञो वैश्यं द्वादशवार्षिकम्॥

तदाह।

गृह्यकारः—

"गर्भाष्टमेषु ब्राह्मणमुपनयीत। गर्भैकादशेषु राजन्यम्। गर्भद्वादशेषु वैश्यम्"। इति।

द्वादशवर्षपर्यन्तं काम्योपनयनकालमाह

सएव—

"सप्तमे ब्रह्मवर्चसकामम्। अष्टमे आयुष्कामम्। दशमे अन्नाद्यकामम्। एकादशे इन्द्रियकामम्। द्वादशे पशुकामम्"।

इति।

गर्भाष्टमेषु इति बहुवचनं पञ्चवर्षादारभ्य गर्भाष्टमकालपर्यन्तं मुख्यकालः। (इति प्रतिपादनाय) गर्भाष्टमजन्माष्टमयोरेव मेधावी आयुष्मान् भवति वटुः। गर्भाष्टमेष्विति वचनं मुख्यकाल-गौरवात्।

---

(1) गर्भद्वादशमे राज्ञो वैश्यं षोडशवार्षिकम् इति लेखितपुस्तकपाठः।

(—) अयं पाठः श्रौत-लेखितपुस्तकयोर्न दृष्टः।

तदाह ।

गौतमः—

गर्भाष्टमे कुमाराणां व्रतबन्धो विधीयते ।
मेधावी दीर्घकालायुर्वटुर्भवति निश्चयम्[1] ॥

यदि दैवाद् गर्भाष्टमेऽभावः—तदा जन्माष्टमेऽब्दे वा कुर्य्यात् ।

तदेवाह ।

मनुः—

शिशोर्गर्भाष्टमेऽभावे कुर्य्याज्जन्माष्टमेऽपि वा ।
दीर्घायुर्ब्रह्मविद्[2] दान्तः व्रतजात्यो भवेत् तदा ॥

अतः गर्भाष्टमजन्माष्टमयोर्मुख्यं विहितम् । नवमो[3] दशमो वा मध्यमः । एकादशो[4] द्वादशो वा कनीयान् ।

तदेवाह ।

गौतमः—

नवमे दशमेऽब्दे च व्रतबन्धोऽस्य मध्यमः ।
एकादशे द्वादशे च कनीयान्[5] परिकीर्त्तितः ॥

---

(१) निश्चय इति वेंकितपुस्तकपाठः ।

(२) ब्रह्मविद्वान् च इति क्रीतपुस्तकपाठः ।

(३) नवम-दशमयोरिति वेंकितपुस्तकपाठः । नवमे दशमे वा इति क्रीत-पुस्तकपाठः ।

(४) एकादशद्वादशयोरिति क्रीत-वेंकितपुस्तकपाठः ।

(५) व्रतबन्धने इति क्रीत-वेंकितपुस्तकपाठः ।

मुख्यकाले व्रती भूयान्मध्यमे मध्यमोभवेत्।
गौणाब्दे गौणतां याति षष्टमाब्दं न लङ्घयेत्॥

षष्टमाब्दस्य बलवत्तामाह।

पराशरः—

बाले[1] तु बलहीनेऽपि गर्भिण्यामपि मातरि।
योयदीच्छेद् द्विजत्वं षष्टमाब्दं न लङ्घयेत्॥
आषोड़शाब्दपर्य्यन्तं कालमाहुर्मनीषिणः। इति

कालनिरोधस्यापेक्षया। कलौ यगे मन्दवाङ्ख्यात देशविप्लवाच्च पञ्चमवर्षादारभ्य षष्टमाब्दपर्य्यन्तं समीचीनम्। उक्त[2]नवम-दशमवर्षयोर्वा।

तेषां मुख्यकालातिक्रमे दोषमाह—

कात्यायनः—

अष्टगर्भाष्टमे राजन् व्यतिक्रम्य विदन्नपि।
गौणकालेषु पुत्राणां व्रतबन्धं यदा चरेत्॥
तदा पिता महत्पापमवाप्य रघुनन्दन।
[3]सपुत्रः पापकर्म्मा स्यादुभौ तौ पापसम्भवौ॥
षष्टमाब्दं लंघयित्वा—चरेद्व्रतम्।

---

(१) बालस्तु बलहीनोऽपि इति कोतपुस्तकपाठः।

(२) उक्तनवम-दशमवर्षौ वा इति कोतपुस्तकपाठः।

(३) पुत्रः ६।० कोतपुस्तकपाठः।

प्राजापत्यमित्यर्थः —

नवमे तप्तकृच्छ्रं स्याद् दशमे चोभयं स्मृतम् ।
एकादश-द्वादशयोरतिक्रम्यैन्दवं चरेत् ॥
त्रयोदशाब्दादारभ्य षोड़शाब्दव्यतिक्रमे ।
न सम्भाष्यो न पात्रेयः सर्व्वधर्म्मवहिष्कृतः ॥
ततः परं यदीच्छेत द्विजन्मत्वं पिताऽऽत्मजे ।
कृत्वा स्वयं पुनः कर्म्म चरेच्चान्द्रायणत्रयम् ॥
पुत्रस्य देहशुद्ध्यर्थं कुर्य्याद् गोसुख[1]सम्भवम् ।

[2]गोसुखसम्भवं गोसुखजननमित्यर्थः ।

प्राजापत्यत्रयं कृत्वा मौञ्जीबन्धं समाचरेत् ।
अन्यथा पतितं विद्यात्र कर्म्मार्हो भवेदिह ॥

क्षत्रियवैश्ययोरेवम् । तत्र क्षत्रियस्य द्वाविंशवत्सरातिक्रमे, वैश्यस्य चतुर्व्विंशवत्सरातिक्रमे च, एवं प्रायश्चित्तं द्विगुणं कृत्वा उपनयनं चरेत् । अन्यथा त्रयोवर्णा दोषमाप्नुयुः ।

इति हेमाद्रौ–उपनयनकालातिक्रमप्रायश्चित्तम् ।

---

(१) गोसुखसम्भवमिति क्रीतपुस्तकपाठः ।
(२) गोसुखसम्भवं गोसुख जननीमित्यर्थ इति क्रीतपुस्तकपाठः ।

## अथ दण्डाजिनमौञ्ज्याभावे वटोः प्रायश्चित्तमाह ।

देवलः--

अजिनं मेखलां दण्डं [1]व्रती नित्यं भजेत्तदा ।
यावत्पाणिग्रहस्तस्य तावद् वर्णी न सन्त्यजेत् ।

पराशरः--

मेखलामजिनं दण्डं [2]वर्णी नित्यं परिग्रहेत् ।
कर्म्म कुर्य्यात्तदा मौनी यदा कर्म्म समाप्यते ॥

गौतमः

मेखलामजिनं दण्डं ब्रह्मचारी सदा वहन् ।
सन्ध्यादिकं सदा कुर्य्यात् तदानन्त्याय कल्पते ॥

महाराजविजये--

अजिनं मेखलां दण्डमुद्वहन् प्रथमाश्रमी ।
सन्ध्यादिनित्यकर्म्माणि कुर्य्याद् यदि तदा शृणु ॥
सर्व्वाणि फलवन्त्यस्य ब्रह्मतेजोभिवृद्धये ।
तथा वेदानधीयीत गुरुशुश्रूषणस्तथा ।
ब्रह्मचारी यदि त्यजेद् प्रमादं मेखलाजिने ॥
दिनत्रयं वा पक्षं वा प्राजापत्यं समाचरेत् ।
नष्टे भ्रष्टे नवं सम्वाद धृत्वा भ्रष्टं जले क्षिपेत् ॥

---

(1) व्रते नित्यं भजेत्तदा इति कौतपुस्तकपाठः ।

(2) ब्रह्मचारी सदाचरेत् इति कौतपुस्तकपाठः ।

तथा मासपरित्यागे तप्तकृच्छ्रं समाचरेत् ।
अब्दमात्रपरित्यागे चरेच्चान्द्रायणव्रतम् ॥

क्षत्रियादीनामेवम् ।

इति हेमाद्रौ दण्डाजिनमौञ्ज्यभावे वटोः प्रायश्चित्तम् ।

---

## अथ ब्रह्मचारिणोव्रतलोपप्रायश्चित्तमाह ।

देवलः—

अशुचित्वं दिवास्वापं तथा ताम्बूलभक्षणम् ।
नृत्यं गीतं तथा वाद्यं द्यूतं स्त्रीव्यसनन्तथा ॥
गन्धं पुष्पं तथा चौद्रं छत्रं वा पादुकाद्वयम् ।
पाषण्डजनसंसर्गं तथा पाषण्डभाषणम् ॥
तथा दैव[1]परित्यागं [2]गुर्वशुश्रूषणन्तथा ।
ग्रामचाण्डालसम्भाषां म्लेच्छचाण्डालभाषणम् ॥

---

(१) तथा वेदपरित्याग इति क्रीत-पुस्तकपाठः ।
(२) गुरुशुश्रूषणं तथा इति क्रीत-पुस्तकपाठः ।

दर्पणं दन्तकाष्ठं च परनिन्दाऽऽत्मकत्थनम् ।
एतानि संत्यजेन्नित्यं ब्रह्मचारी जितेन्द्रियः ॥
एतेषां स परित्यागाद्व्रती ब्रह्मपदं व्रजेत् ।
[1]एतेषां च परित्यागी एकस्याऽपि यदा व्रती ॥
प्रायश्चित्ती भवेत् सोऽपि ब्रह्मचारी न संशयः ।
एतांश्च नियमांस्त्यक्त्वा ब्रह्मचारी गुरौ वसन् ॥
चान्द्रायणं व्रतं कृत्वा शुद्धिमाप्नोति निश्चितम् ।
महापातकयुक्तो वा युक्तो वा सर्व्वपातकैः ।
ब्रह्मचर्य्यपरोयस्तु स गच्छेद् ब्रह्मणः पदम् ।
इति हेमाद्रौ ब्रह्मचारिणोव्रतलोपप्रायश्चित्तम् ।

---

## अथाऽग्निकार्य्य-ब्रह्मयज्ञ-तर्पणलोपप्रायश्चित्तम् ।

देवलः--

अग्निकार्य्यं ब्रह्मयज्ञं देवर्षिपितृतर्पणम्
ब्रह्मचारी [2]परित्यज्य भुक्त्वा चान्द्रायणं चरेत् ॥

गौतमः--

अग्निकार्य्यं ब्रह्मयज्ञं देवर्षिपितृतर्पणं ।
त्यक्त्वा व्रती यदा भुङ्क्ते प्रमादाच् चान्द्रायणं चरेत् ॥

---

(१) एतेषांपूर्व्वंबहुत्यागी एकस्येव यथाव्रती इति क्रीत-पुस्तकपाठः ।
(२) यदित्यक्त्वा इति केषाञ्चित्पुस्तकपाठः ।

मार्कण्डेयः--

अग्निकार्य्यं ब्रह्मयज्ञं देवर्षिपितृतर्पणम्।
देवपूजां गुरोः सेवां त्यक्त्वा वर्त्तेद् व्रती यदा॥
भुक्त्वा चान्द्रायणं कुर्य्यान्मासमात्रं निरन्तरम्।

जावालिः--

देवपूजां गुरोः सेवां तथा वृद्धाभिवादनम्।
अग्निकार्य्यं ब्रह्मयज्ञं देवर्षिपितृतर्पणम्।
एकत्र दिवसे त्यक्त्वा ब्रह्मचारी सदा जपेत्।
लौकिकाग्निं (१)समाधाय (२)होमं व्याहृतिभिश्चरेत्
मासे तु पञ्चगव्यं स्याद् ऋतौ (३)कायं विशोधनम्।
संवत्सरे तु चान्द्रं स्यात् ततः पतित एव हि॥

इति हेमाद्रौ ब्रह्मचारिणोऽग्निकार्य्य-ब्रह्मयज्ञ-तर्पण-गुरुसेवातिक्रमप्रायश्चित्तम्।

---

(१) समादाय इति भीत लेखितपुस्तकपाठः।
(२) व्याहृतीर्होममाचरेत् इति भीत-लेखितपुस्तकपाठः।
(३) कार्य्यं विशोधनमिति लेखितपुस्तकपाठः।

## अथ वेदाभ्यासलोपप्रायश्चित्तमाह ।

देवलः--

मौञ्जीव्रतमुपक्रम्य परं श्रावणकर्म्मणः ।
ब्रह्मचारी वृथा कुर्व्वन् वेदाभ्यासं विना दिनम् ॥

दिनानोत्यर्थः ।

वेदघाती स विज्ञेयः सर्व्वकर्म्म[1]स्वनर्हितः ।

गौतमः--

उप[2]नायदिनादूर्द्धं परं श्रावणकर्म्मणः ।
अवन्ध्यं दिवसं कुर्व्वन् ब्रह्मचारी स लोकभाक् ॥
अन्यथा दोषमाप्नोति वेदघाती स उच्यते ।

पराशरः--

ब्रह्मचारी सदा शुद्धो वेदाभ्यासेन बुद्धिमान् ।
वेदोनारायणः साक्षाद् वेदाभ्या[3]साच्चहान् भुवि ॥

जातूकर्ण्यः--

उपनयनदिनादूर्द्धं परं श्रावणकर्म्मणः ।
ब्रह्मचारी ब्रह्मविद्यां त्यक्ता वर्त्तेत सर्व्वदा ॥

---

(१) अनर्हवान् इति क्रीत लेखितपुस्तकपाठः ।

(२) उपायनदिनादित इति लेखितपुस्तकपाठः उपनयनदिनादिति क्रीत-पुस्तकपाठः ।

(३) वेदाभ्यासे इति क्रीत-लेखितपुस्तकपाठः ।

वेदत्यागी स विज्ञेयः सर्व्वकर्मसु गर्हितः ।
तद्दोषपरिहारार्थं कायकृच्छ्रं ततः परम् ॥
कृत्वाऽभ्यासं च वेदानामधीत्य ब्रह्मविद्भवेत् ।
एकवर्षादूर्द्धं एतत्प्रायश्चित्तम् । वर्षद्वये वर्षत्रये वा चान्द्रायणम् ।

इति हेमाद्रौ वेदाभ्यासलोपप्रायश्चित्तम् ।

---

## अथानध्ययनेषु वेदपाठप्रायश्चित्तमाह ।

देवलः—

मासे मासे तु पर्व्वादि[1]स्तथा मन्वादयः परम् ।
युगादयस्तथा शुक्ला अष्टमी च चतुर्द्दशी ॥
शयनोत्थानद्वादश्यौ महाभरणी तथैव च ।
सन्ध्यायां गर्ज्जिते मेघे तथा भूकम्पनेऽपि च ॥
ग्रामदाहे राजनाशे तथा [2]स्वर्भानुदर्शने ।
मातापित्रोर्मृताहे च श्रोत्रिये मरणं गते ॥

---

(१) पर्व्वाश्च इति क्रीत-लेखितपुस्तकपाठः ।
(२) सर्व्वात इति लेखितपुस्तकपाठः ।

जाताशौचे च मातीनां गजच्छायाहये तथा ।
महापातकिनो दृष्ट्वा चाण्डालान् बहिरासितान् ॥
एतेषूक्तेषु राजेन्द्र वेदं वेदान्तमेव वा ।
योऽधीते मूढधीः पापी मृत्वा नरकमश्नुते ॥

नारदः—

वेदान्तमथ वेदं वा [1]अनध्यायेष्वधीतवान् ।
द्विजः पापमवाप्नोति [2]ब्रह्महत्यां च विन्दति ॥
अनध्यायेष्वधीतानां प्रज्ञामायुः प्रजां श्रियम् ।
मन्त्रवीर्य्यक्षयभयाद् इन्द्रो वज्रेण हन्ति च ॥
पक्षे पराकः कथितो मासे तप्तमुदीरितम् ।
ऋतौ चान्द्रं ततः पश्चाच्चरेद् ब्रह्महणोव्रतम् ॥

इति हेमाद्रौ अनध्ययनेषु वेदाध्ययनप्रायश्चित्तम् ।

(1) अनध्यायेऽपि इति लेखितपुस्तकपाठः ।
(2) ब्रह्महत्यां व्यपोहति इति क्वचित् लेखितपुस्तकपाठः ।

## अथ वेदव्रताकरणप्रायश्चित्तमाह ।

देवलः—

प्राजापत्यं तथा सौम्यमाग्नेयं वैश्वदेवकम् ।
चत्वारि वेदसंज्ञानि व्रतानि सुमहान्ति च ॥
प्राजापत्य[1]मृचां वेदः सौम्यं याजुषमेवच ।
आग्नेयं सामवेदश्च वैश्वदेवं चतुर्थकम् ॥
एतानि कुरुते यस्तु द्विजः पापात्[2] मुच्यते ।

मार्कण्डेयः—

वेदव्रतानि चत्वारि वेदसंज्ञानि योद्विजः ।
तत्तत्काले प्रकुर्व्वीत वाजपेयफलं लभेत् ॥
ऋग्वेदं समधीत्यैव प्राजापत्यं समाचरेत् ।
आग्नेयं सामवेदञ्च अधीत्यैव तथाऽमलम् ॥
आथर्व्वणं वैश्वदेवं कुर्य्याद्विप्रोयथाक्रमम् ।
एतानि क्रमशः कृत्वा वाजपेयफलं लभेत् ॥
न तत्र कर्म्मलोपः स्यादन्यथा पतितोभवेत् ।

---

(१) प्राजापत्यं त्वचां इति क्रीत-लेखितपुस्तकपाठः ।
(२) प्रमुच्यते इति क्रीत-लेखितपुस्तकपाठः । पु

अकरणे प्रत्यवायमाह

जातूकर्ण्यः—

'अकुर्व्वन् वै द्विजो मोहादेतद्व्रतचतुष्टयम् ।
एकतन्त्रेण वा राजन् कर्म्महीनोभवेद्भुवि ॥
अकृत्वैतानि यो मोहात्पाणिग्रहणमाचरेत् ।
महान्तं नरकं गत्वा भुवि जायेत सोऽ'प्रजः ॥

एतद्व्रतलोपे प्रायश्चित्तमाह ।

हारीतः—

प्रमादाद् ब्राह्मणोलोभाद्देशकालविपर्य्ययात् ।
अकृत्वैतानि कर्म्माणि प्राजापत्यं पृथक् चरेत् ॥
ततः परं न दोषो स्याद् विवाहे स्नातकव्रते ।

इति हेमाद्रौ वेदव्रतातिक्रमप्रायश्चित्तम् ।

---

(१) अकृत्वा यो द्विजः इति क्वचित्-लेखितपुस्तकपाठः ।
(२) जायेत निष्प्रजः इति क्वचित्-लेखितपुस्तकपाठः ।

## अथ गोदानकालातिक्रमप्रायश्चित्तमाह ।

देवलः—

षोडशे वर्षके राजन् विप्राणां पापनाशनम् ।
गोदानिकं महत् कर्म्म कुर्य्याद् विप्रः समाहितः ॥
यः कुर्य्यात् कर्म्मसम्पूर्त्तिं भवेद्‌विप्रः स पुण्यभाक् ।

जावालिः—

गोदानिकं महत्कर्म्म विप्राणां कर्म्मपूर्त्तये ।
कुर्य्याद्‌विप्रः प्रयत्नेन न तेन स ह दोषभाक् ॥

गौतमः—

अवश्यं करणीयं यद् द्विजैर्गोदानिकं व्रतम् ।
न तत्कर्म्म परित्याज्यं विप्रैर्धर्म्मानुवर्त्तिभिः ॥
एतद् गोदानिकं त्यक्त्वा वर्त्तते ब्रह्मवित्तमः ।
कुर्य्यात् पापविशुद्ध्यर्थं प्राजापत्यं विशोधनम् ॥
सर्व्वपापहरं पुण्यं प्राजापत्य
अन्यथा दोषमाप्नोति द्विजःपापभयादिह ॥

इति हेमाद्रौ गोदानकाललोपप्रायश्चित्तम् ।

---

## अथ स्नातकव्रतलोपप्रायश्चित्तमाह ।

देवलः—

वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् ।
अविप्लुतब्रह्मचर्य्यो गृहस्थाश्रममाविशेत् ॥

मार्कण्डेयः—

स्नातकं ब्रह्मचर्य्यस्य व्रतलोपेऽपि[1] पुण्यदम् ।
[2]कुर्व्वन् हि स्नातकं कर्म्म सर्व्वव्रतफलं लभेत् ॥

गालवः—

स्नातकव्रतमे[3]तत्तु ब्रह्मचर्य्यव्रतात् परम् ।
यः[4]कुर्य्यात् स्वविवाहादौ स विप्रः पंक्तिपावनः ॥

तदाह—

आपस्तम्बः—

"विद्यया स्नातीत्येके । यावतीर्विद्याधीते तावन्ति स्नातकव्रतानि विप्रः कुर्य्यात् । न तत्याज्यम्" ।

गौतमः—

---

(१) व्रतलोपेऽपुण्यदम् इति श्रौतपुस्तकपाठः ।
(२) यः कृत्वा इति श्रौत-वेष्टितपुस्तकपाठः ।
(३) व्रतलोपं इति श्रौतपुस्तकपाठः ।
(४) यः कृत्वा इति श्रौत-वेष्टितपुस्तकपाठः

अवश्यं स्नातकं कुर्य्याद् विप्रोलोकपरायणः।
अन्यथा दोषमाप्नोति प्रायश्चित्ती भवेदिह[1] ॥
स्नातकव्रतसंत्यागी कुर्य्याच्चान्द्रायणद्वयम्।
पश्चाद्विवाहयेत् कन्यां कुलशीलानुवर्त्तिनीम् ॥
चान्द्रायणद्वयं कृत्वा विवाहे न तु दोषभाक्।

इति हेमाद्रौ स्नातकव्रतलोपप्रायश्चित्तम्।

अथोपाकर्म्मलोपप्रायश्चित्तमाह।

देवलः—

वेदान्तानाञ्च वेदानां अधीतानाञ्च [2]वीर्य्यदम्।
ब्रह्मचारिगृहस्थानां सर्व्वपापहरं शुभम् ॥
संवत्सरे तु पापस्य गृहस्थब्रह्मचारिभिः।
कृतस्य[3] तु विशोधाय उपाकर्म्म समाचरेत् ॥

(१) भवेद्द्विजः इति कौतपुस्तकपाठः।
(२) वीर्य्यकम् इति कौतपुस्तकपाठः।
(३) कृतं तत्र विशोधाय इति कौत-लेखितपुस्तकपाठः।

बौधायनः—

संवत्सरं कृतं पापं गृहस्थैर्ब्रह्मचारिभिः।
उपाकर्म्म हरेत् क्षिप्रमन्ते विष्णुस्मृतिर्यथा॥

नारदः—

व्रतिनाञ्च गृहस्थानां संवत्सरकृतं महत्।
अघं हरति होमश्च श्रावणे मासि सम्भवः॥
एवं होममकृत्वा तु वेदारम्भं न कारयेत्।
वेदमूलो हि विप्रोऽसौ मूलाभावे फलं कुतः॥
तस्माद्विप्रैर्न सन्त्याज्यं श्रावणं कर्म्म तच्छुभम्।
त्यक्त्वा तु ब्रह्मचारी वा द्विजो वा वेदसम्मतः॥
एवं श्रावणकं होमं [1]मोहाद् यद्यतिवर्त्तते।
व्रती तस्त्रयं कुर्य्याद् गृहस्थोऽपि द्वयं चरेत्॥
कृत्वैतद् [2]व्रतकं प्रोक्तं शुद्धिमाप्नोति पूर्व्वजः।
प्रत्यब्दं यस्त्वकर्म्म श्रावणाख्यं परित्यजन्॥
पतितः स तु विज्ञेयः सर्व्वधर्म्मबहिष्कृतः।

इति हेमाद्रौ उपाकर्म्मलोपप्रायश्चित्तम्।

(१) त्यक्त्वा इति क्वचित्पुस्तकपाठः।
(२) वर्षकं इति क्वचित्-लेखितपुस्तकपाठः।

## अथ राक्षसादिकन्यापरिणयनप्रायश्चित्तम् ।

देवलः—

ब्राह्मो दैवस्तथा चाऽऽर्षः प्राजापत्यस्तथाऽऽसुरः ।
गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोमतः ॥

लिङ्गपुराणे—

ब्राह्मे विवाहे राजेन्द्र बन्धुं शीलं व्रतं तथा ।
आरोग्यं सम्यगालोच्य परीक्षेताऽन्वयं मुदा ॥
प्रजासहत्वकर्मभ्यस्तस्मै कन्यां प्रदापयेत् ।

इति ब्राह्मोविवाहः ।

दैवे विवाहे भूपाल स्वाध्वरे ऋत्विजे मुदा ।
[1]दद्यात् कन्यां दक्षिणार्थं स दैव इति कथ्यते ॥

इति दैवोविवाहः ।

आर्षे पाणिग्रहे राजन् जामात्रे मिथुनद्वयम् ।
गवां दत्त्वा [2]शुभां सम्यगलंकृत्य ततः परम् ॥
दद्यादस्मै मुदा कन्यां स आर्ष इति कथ्यते ।

इति आर्षोविवाहः ।

---

(१) दक्षिणार्थं तदा कन्यां इति क्रीत-लेखितपुस्तकपाठः ।

(२) सुतां इति क्रीत-लेखितपुस्तकपाठः ।

सुतामादाय विप्राय 'सह धर्म्मं चरेरिति।
उक्ता[1] दद्याद्यथाश्रेष्ठ प्राजापत्यः स ईरितः॥
इति प्राजापत्योविवाहः।
कन्यावरौ यदाऽन्योन्यमङ्गीकृत्य सुखाप्तये।
तथैव चरतो राजन् स गान्धर्वस्ततोरितः॥
इति गान्धर्व्वोविवाहः।
कन्यादात्रे धनं दत्वा तत्सुतामुद्वहेन्मुदा।
स आसुर इति ज्ञेयः सर्व्वदा तं परित्यजेत्॥
इति आसुरोविवाहः।
कन्यां दातारमथ वा वञ्चयित्वा बलादिह।
स्वयंवरेऽथवा जित्वा कन्यामादाय सत्वरम्॥
उद्वहेद् यदि पापात्मा स राक्षसस्ततोरितः।
इति राक्षसोविवाहः।
कन्यां सुप्तां प्रमत्तां वा हृत्वा यत्नां समुद्वहेत्।
रुदतीं पापकर्म्माऽसौ स पैशाच स्ततोरितः।
इति पैशाचो विवाहः।
आद्यास्त्रयः प्रशस्ताः स्युरन्त्याः[2] पञ्च विगर्हिताः
यथायुक्तो विवाहःस्यात् तथा युक्ता प्रजा भवेत्॥

---

(१) दद्यात् इति क्षौत-वेदित पुस्तकपाठः।
(२) इत्युक्ता दीयते कन्या इति क्षौत-पुस्तकपाठः।
(३) विवाहाः पञ्च गर्हिता इति क्षौत-वेदितपुस्तकपाठः।

तदाह

आपस्तम्बः—

"ब्राह्मे विवाहे बन्धु-शील-श्रुतारोग्याणि-बुद्धा प्रजासहत्व-कर्मभ्यः प्रतिपादयेत्। शक्तिविषयेण अलङ्कृत्य। आर्षे दुहितृमते मिथुनौ गावौ देयौ। दैवे यज्ञे तत्र ऋत्विजे प्रतिपादयेत्। सह धर्मं चरत इति प्राजापत्यः। मिथः कामात् संवर्त्तेत स गान्धर्व्वः। शक्तिविषये द्रव्याणि दत्त्वा वाऽहरन् स आसुरः। दुहितृमतः प्रोथयित्वा वहेरन् स [1]राक्षसः। सुप्तां मत्तां प्रमत्तां वा अपहरेत् स पैशाचः। एतेषां त्रयआद्याः प्रशस्ताः। पूर्व्वः पूर्व्वः श्रेयान्। यथा युक्तोविवाहस्तथा युक्ता प्रजा भवति"। इति।

अतस्त्रय आद्या विवाहाः समीचीनाः। [2]यथा यथा विवाहः मनुष्येषु भवति तदुपयुक्तः सन्तानो भवति। अतोगान्धर्व्वासुर-राक्षसपैशाचविवाहेषु विप्राणां निषिद्धत्वात् पृथक् पृथक् प्रायश्चित्तमाह—

मार्कण्डेयः—

विवाहे त्वासुरे विप्रश्चान्द्रायणत्रयं चरेत्।
चान्द्रायणं[3] पराकञ्च गान्धर्व्वे सम्यगाचरेत्॥

---

(१) आसुर राक्षस इति शीतबेक्षितपुस्तकपाठः।

(२) यो यो विवाह इति शील-बेक्षितपुस्तकपाठः।

(३) चान्द्रायणत्रयं इति बेक्षितपुस्तकपाठः।

राक्षसे च महाचान्द्रं तप्तकृच्छ्रत्रयं तथा।
पैशाचे कायकृच्छ्रं स्यात् तथा चान्द्रत्रयं स्मृतम्।
पूर्व्वं कामातुरः कृत्वा पश्चादेतच्चरेद् बुधः॥
कृत्वा शुद्धिमवाप्नोति नाऽन्यथा शुद्धिरस्ति हि॥
ब्राह्मो दैवस्तथैवाऽऽर्षः प्राजापत्यो द्विजन्मनाम्।
सन्तानकारिणो मुख्या स्तस्मादेतान् समाचरेत्॥
आसुरादिविवाहाश्च केवलं सुखदायिनः।
आसुरादिविवाहेषु दैवाद् यदिह पुङ्गवः।
प्रायश्चित्तं तदा कृत्वा पश्चात् तेषु प्रवर्त्तयेत्॥

इति हेमाद्रौ राक्षसादिकन्यापरिणयनप्रायश्चित्तम्।

## अथ परिवित्तिपरिवेत्तृविवाहनिर्णयप्रायश्चित्तमाह।

देवलः—

अनूढे भ्रातरि ज्येष्ठे यवीयान् सपरिग्रहः।
ज्येष्ठः स परिवित्तिः स्यात्परिवेत्ता तथाऽनुजः॥
विवाहे रा[1]ज्यलाभे च श्रेयसां व्युत्क्रमेऽपि च।

(१) राज्यलाभे इति कोचितपुस्तकपाठः।

अनुजविवाहे हेतुमाह।

मार्कण्डेयः—

पतितं क्लीवमुन्मत्तं कुब्जं काणं [1]रुजाश्रितम् ।
अपस्मारं परित्यज्य विवाहे न स दोषभाक् ।
तदनुज्ञामवाप्याऽस्य विवाहे न स दोषभाक् ॥

शातूकर्ण्यः—

काणं रुजान्वितं कुब्जं पतितं क्लीवमेव च ।
अपस्मारं पूर्व्वजातं कदल्याऽस्य विवाहयेत् ॥
पश्चादनुज्ञया राजन् विवाहे न स दोषभाक् ।
कदलीविवाहस्तु पुराभिहितः ।

तेषां अन्नपानादिकेषु वृत्तिं विधाय पश्चाद् उद्वाहयेत्। तदाह

देवलः—

तेषां वृत्तिं विधायाऽस्य कदल्या तान् [2]विवाह्य च ।
पश्चात् परिणयेत् कन्यां न दोषस्तत्र पार्थिव ॥

यमलयोर्व्युत्क्रमसंस्कारे ज्येष्ठः परिवित्तिः द्वितीयः परिवेत्ता तत् प्रकारःपूर्व्वमेवाभिहितः। (तेषां प्रायश्चित्तमपि पूर्व्वं अभिहितम्)

---

(१) रुजान्वितं इति कोन लेखितपुस्तकपाठः।
(२) विवाह्यः इति कोनपुस्तकपाठः।

तयोः पुत्राः परिविन्दानाः। तेषां परिवित्ति-परिवेत्तृ तत्पुत्राणां प्रायश्चित्तमाह—

लौगाक्षिः—

परिवित्तिश्चरेत् सम्यक् पूर्वं चान्द्रचतुष्टयम्।
कृत्वा शुद्धिमवाप्नोति नाऽन्यथा शुद्धिरस्ति हि॥
परिवेत्ता चरेत्कृच्छ्रं शतं देहविशुद्धये।
तत्पुत्रौ तु तयोः कृत्वा प्रायश्चित्तं विशुध्यतः॥

इति हेमाद्रौ परिवित्तिपरिवेत्रादिविवाहनिर्णय-प्रायश्चित्तम्।

---

## अथ विवाहमध्ये वध्वाः प्रथमार्त्तवदर्शने प्रायश्चित्तमाह।

देवलः—

विवाहे वितते तन्त्रे होमकाल उपस्थिते।
वधूः पश्येत् तदा पुष्पं प्रथमं दोषसम्भवम्॥
सा वधूः शूद्रकन्या स्यात् तत्पतिर्वृषलोपमः।
तयोः पुत्रास्तु वृषलास्ते यान्ति नरकं ध्रुवम्॥

---

(—) अयं पाठः काशीपुस्तके नोपलभ्यः।

मरीचिः—

विवाहदिवसाद्राजन् प्रारभ्य प्रथमार्त्तवा[1] ।
वधूः सा शेषहोमात् प्राक् उभौ नरकगामिनौ ॥
विवाहशेषहोमात् प्राक् वधूर्या प्रथमार्त्तवा[2] ।
तत्पतिः सा वधूश्चोभौ प्रायश्चित्तमिहाऽर्हतः ॥
हविष्मतीरिमा मन्त्रैर्वधूं संस्नापयेत्तदा ।
अन्यवस्त्रेण संच्छाद्य तस्मिन्नग्नौ विधानतः ।
संस्कृताज्येन जुहुयाद् युञ्जानेति द्वयं मुदा ॥
हुत्वा तदा चरेत् कृच्छ्रं पावनं कायसंश्रितम् ।
एवं वै पूर्ववत् कुर्यात् पञ्चमेऽहनि पूर्ववत् ॥
स्नापयित्वा परिधाय पूर्ववत् शुक्लवाससी[3] ।
पूर्ववज्जुहुयादग्नौ ततश्चान्द्रायणं पृथक् ॥
कृत्वा तौ पापसंशुद्धौ[4] अन्यथा दोषसम्भवः[5] ।
तदानीं न परित्याज्या पूर्वं पुष्पवती न चेत् ॥

---

(१) प्रथमार्त्तवी इति क्रीत-वेंकितपुस्तकपाठः ।
(२) प्रथमार्त्तवी इति क्रीत-वेंकित पुस्तकपाठः ।
(३) शुक्लवाससा इति क्रीतपुस्तकपाठः ।
(४) पापशुद्धौ स्तां इति वेंकितपुस्तकपाठः ।
(५) अन्यथा दोषसम्भवौ इति क्रीत-वेंकितपुस्तकपाठः ।

न युक्ता हव्यकव्येषु सा नारी वृषली भवेत्।
प्रायश्चित्तं तदा कृत्वा कर्म्म कुर्व्वन्न दोषभाक्॥

इति हेमाद्रौ विवाहमध्ये नववधूप्रथमरजोदर्शने
प्रायश्चित्तम्।

---

## अथोद्वाहौपासनमध्ये लाजहोमात्प्रागग्नि-शान्तौ प्रायश्चित्तमाह।

देवलः—

उद्वाहौपासनात् पूर्व्वमनले संस्थिते[1]ऽसति।
महान् दोषो भवत्यत्र पत्यौ जायापरिग्रहे॥

गोतमः—

विवाहात् परतो वह्नि[2]र्लाजहोमार्थसम्भवः।
राजौपासनतः पूर्व्वं शान्तश्चेदत्र दोषभाक्॥

जाबालिः—

लाजहोमाहुते दैवाद्वह्निर्योपासनादधः।
शान्तश्चेदुभयोर्दोषः प्रायश्चित्तं विधीयते॥

---

(१) शान्तिमागते इति श्रीत-वेंकटेश्वरपुस्तकपाठः।

(२) वह्नाविति श्रीतपुस्तकपाठः।

कुर्य्यादरस्यदाग्नौ वा उत्तरायौ विशेषतः ।
तत्तत्कृच्छ्रं तदा कृत्वा लौकिकाग्निं समाहरेत् ॥
प्रतिष्ठाप्य विधानेन आज्यभागान्तमाचरेत् ।
स्रुचा घृतं समादाय जुहुयाद् दत्त्वाऽऽहुतीः पृथक् ॥
ततश्च जुहुयादश्च व्याहृतीनां त्रयं पुनः ।
तमग्निं धार्य्यवत् कृत्वा युगलाजान्तरं पुनः ॥
मन्त्रावृत्तिं ततः कुर्य्याच्च[1]तेन स च दोषभाक् ।
उपासनं ततः कृत्वा शुद्धिमाप्नोति पूर्व्वजः ।
इति हेमाद्रौ लाजहोमाग्निशान्तिप्रायश्चित्तम् ।

---

## अथ स्थालीपाकसमये अग्निशान्तिप्रायश्चित्तमाह ।

देवलः—

स्थालीपाको यदा वह्नौ शान्ते तत्र महाभयम् ।
ततः कृत्वा कायकृच्छ्रं विप्रः कुर्य्यादनन्तरम् ॥
पूर्व्वोक्तं तत्र कुर्व्वीत प्रायश्चित्तं यथाक्रमम् ।
"पूर्व्वोक्तं" शवाग्निनाशप्रायश्चित्तवदत्रापि सर्व्वं कुर्य्यात् ।

इति हेमाद्रौ स्थालीपाकाग्निशान्तिप्रायश्चित्तम् ।

---

(1) कृत्वा इति केचित्पुस्तकपाठः ।

अथाग्नेयस्थालीपाकादूर्द्धं उपासनात् प्राक् पत्नी तद्भर्त्ता वा यद्याधिग्रस्तौ तदा प्रायश्चित्तमाह ।

देवलः—

स्थालीपाकात् परं राजन् उभयोर्होत्र[1]कर्म्मणि ।
अभावे नित्यहोमस्य पतिः पत्नी हुताहुतौ[2] ॥
तयोरेकतराभावे नित्यहोमोऽत्र दोषभाक् ।
तयोरेकं[3]मवस्थाप्य अग्निसान्निध्यमादरात् ॥
महासान्तपनं कृत्वा अध्वर्य्युर्होममाचरेत् ।
पत्नीसमक्षविषये उद्देश्यत्यागकारकः ॥

अध्वर्य्युरेव ( इति तात्पर्य्यम् )

तदाह—

कात्यायनः—

संनिधौ यजमानस्तु उद्देश्यत्यागकारकः ।
असन्निधौ तु पत्नी स्यादध्वर्य्युस्तदनुज्ञया ॥

---

(१) होत्रकर्म्मणी इति श्रौतपुस्तकपाठः ।
(२) हुताहुतिः इति श्रौतपुस्तकपाठः ।
(३) एकतमं स्थाप्य इति श्रौत-वैदिकपुस्तकपाठः ।
(—) अयं पाठः श्रौतवैदिकपुस्तकयोर्न दृष्टः ।

इति प्रायश्चित्तपुरःसरं नित्यहोमं कृत्वा ततः परं होमशेषं कृत्वा लौकिकादिकं कुर्य्यात् ।

इति हेमाद्रौ स्थालीपाकादूर्ध्वं देहापाटवादौपा-
सनलोपे प्रायश्चित्तम् ।

---

## अथान्वारम्भणीयलोपे प्रायश्चित्तमाह ।

देवलः—

अथाऽन्वारम्भणीयस्य लोपं विप्रो न कारयेत् ।
कुर्य्याद्यदि स मूढात्मा पतितोऽभून्न संशयः ॥
प्रथमायां पौर्णमास्यां वोढा देवाहुतीर्यजेत् ।
अग्निस्तथा च विष्णुश्च सरस्वांश्च सरस्वती ॥
( अग्निश्च भगिनी चैव स्विष्टकृद्देवतास्त्वमूः । )
प्रथमायां[1] प्रौर्णमास्यामन्वारम्भणमिष्यते ।
या तत्र देवता हुतास्ताः सर्व्वा वरदास्तयोः ॥

गौतमः—

वरवध्वोस्तदा राजन् प्रथमे पूर्णिमा[2]दिने ।
योयजेद्देवताः सम्यक् तस्यायुर्वृद्धिमभ्यगात् ॥

---

(—) अयं पाठः केचित-काशीपुस्तकद्वयोर्नोपलभ्यः ।
(१) प्रथमे पौर्णमास्यां तु इति श्रौत-केचितपुस्तकपाठः ।
(२) पौर्णमीदिने इति केचितपुस्तकपाठः ।

मरीचिः—

प्रथमा '[1]पूर्णिमा राजन् वरवध्वोः शुभप्रदा'[2] ।
तां [3]न कुर्य्याद् वरो यस्तु तस्यायुर्लयमेष्यति ॥
तद्दोषपरिहारार्थं प्रायश्चित्तं मनूदितम् ।
ब्रह्मकूर्चं तदा कुर्य्याद् वोढ़ा शुद्ध्यर्थमादरात् ॥
वध्वास्तदर्थं कथितं मुनिभिर्धर्मदृष्टिभिः ।
ततो[4]ऽन्यत्र च वा कुर्य्यात् पौर्णमीदेवतास्तवम् ॥
अन्यथा दोषमाप्नोति अशुभं स्यात्तयोरितः ॥

इति हेमाद्रौ अन्वारम्भणीयलोपप्रायश्चित्तम् ।

---

## अथ प्रतिपद्धोमलोपप्रायश्चित्तमाह ।

दवलः—

प्रतिपद्धोमलोपी[5] तु शुक्ले कृष्णे तथैव च ।
महान्तं दोषमाप्नोति नरकं चाऽधिगच्छति ॥

---

(१) पौर्णमी इति श्रौत-चिह्नितपुस्तकपाठः ।
(२) शुभप्रदौ इति चिह्नितपुस्तकपाठः ।
(३) तामकृत्वा इति श्रौत-चिह्नितपुस्तकपाठः ।
(४) ततोऽन्यत्र वा कुर्य्यात् इति श्रौतपुस्तकपाठ.
(५) होमलोपस्तु इति चिह्नितपुस्तकपाठः ।

गौतमः—

भार्य्याग्नौ यो गृही होमलोपी[1] प्रतिपदोर्द्वयोः ।
तस्यैव निष्कृतिर्नास्ति कायकृच्छ्रादृते[2] द्विजाः ॥

पराशरः—

गृहीताग्निर्होमकुण्डे प्रतिपत्पर्व्वणोर्द्वयोः ।
अग्निः स्विष्टिकृदग्निश्च देवते द्वे न संत्यजेत् ॥
त्यजेद्यदिह मूढात्मा अग्निस्तं संपरित्यजेत् ।
तस्याऽग्नेः सम्परित्यागात् विप्रस्याऽधोगतिर्भवेत् ॥
तस्य पापविशुद्ध्यर्थं कायकृच्छ्रं समाचरेत् ।

हारीतः—

प्रतिपत्ते वह्नितीर्थे सर्व्वपापापहे नृणाम् ।
द्विजा होमं परित्यज्य[3] देवताद्वयप्रीतिदम् ॥
नरकं यान्ति ते घोरं होमलोपादितो मुने ।
एतद्दोषविशुद्ध्यर्थं परलोकजिगीषया ॥
तेषां विशुद्धिरुदिता [4]कायकृच्छ्रान्महात्मभिः ।

इति हेमाद्रौ प्रतिपद्धोमलोपप्रायश्चित्तम् ।

---

(१) होमलोपं इति मौत-लेखितपुस्तकयोः पाठः ।
(२) कायकृच्छ्रादिह इति मौत-लेखितपुस्तकपाठः ।
(३) परित्यक्ता इति लेखितपुस्तकपाठः ।
(४) कायकृच्छ्रं इति मौत-लेखितपुस्तकपाठः ।

देवलः—

नवधान्ये समायाते ब्राह्मणो ब्रह्मवित्तमः ।
व्रीह्यादीनां नवानां च यच्चरं मुनिचोदितम् ॥
स्थालीपाकं तथा कृत्वा [1]हुत्वाऽऽग्रायणदेवताः ।
शेषचरुं प्रभुञ्जीयात् ब्राह्मणैर्ब्रह्मवित्तमैः ॥
आसने रक्तस्रावी स्याद् अतो दोषे [2]महत्तरे ।

मार्कण्डेयः—

इन्द्रश्चाग्निश्च विष्णुश्च विश्वेदेवा महाबलाः ।
द्यौश्चैव पृथिवी चैव अग्निःस्विष्टकृदत्र हि ॥
नवे धान्ये समायाते सदोषः पापभूरयम् ।
तस्य दोषोपशान्त्यर्थं स्वर्णकृच्छ्रं समाचरेत् ॥
पुनस्तदेव कर्त्तव्यं श्यामाकैर्व्रीहिभिर्नवैः ।

स्थालीपाकं कृत्वा पूर्व्वोक्तदेवताः यजेदित्यर्थः ।

दर्शपूर्णमासाग्रायणान्वारम्भप्रतिपत्स्थालीपाकादिकं सर्व्वशाखासमं, एतेषां परित्यागे एतत् प्रायश्चित्तमेव उपदर्शितं, अन्यथा पूर्व्वोक्तदोषोभवतीति तात्पर्य्यार्थः ।

इति हेमाद्रौ आग्रायणलोपप्रायश्चित्तम् ।

---

(१) कृताग्रयणदेवता इति क्वचित्पुस्तकपाठः ।

(२) दोषमहत्तरे इति कात-क्वचित्पुस्तकपाठः ।

550 अथ गृहस्थानां ब्रह्मयज्ञलोपप्रायश्चित्तमाह ।

देवलः—

ब्रह्मयज्ञपरित्यागी गृहस्थः स्वसमाश्रितः[1] ।
देवहन्ता स विज्ञेयो दुष्टमार्गश्च ईरितः ॥

मरीचिः—

देवयज्ञः पितृयज्ञोभूतयज्ञोनृनामकः ।
ब्रह्मयज्ञश्च यज्ञश्च पञ्च यज्ञाः प्रकीर्त्तिताः ॥
गृहस्थैर्न परित्याज्या वेदधर्मपरायणैः ।
पञ्चयज्ञैर्गृहस्थाः स्युरन्यथा गृहरक्षिणः ॥
पञ्चयज्ञपरित्यागी ब्रह्महेति निगद्यते ।
यतो यज्ञो न लोप्तव्यो ब्राह्मणैः पापभीरुभिः ॥

गौतमः—

ब्रह्मयज्ञमकुर्व्वाणो विप्रोब्रह्महणोव्रतम् ।
संवत्सरपरित्यागी पक्षमेकं निरन्तरम् ॥
पठेदुपनिषद्वाक्यं तथा नारायणं पठेत् ।
मार्त्तण्डोदयमारभ्य यावदस्तं गतो रविः ॥
तावद्विरम्य सहसा हविष्याशी भवेत्तदा ।
पक्षमात्रेण शुचिः स्यान् नान्यथा शुद्धिरीरिता ॥

---

(१) आश्रित इति स्रोत-पुस्तकपाठः ।

वर्षत्यागी पूर्व्वमुक्तं व्रयं क्वत्वा विशुध्यति ।
सर्व्वमासाससमेतत् [1]प्रायश्चित्तम् ।

इति हेमाद्रौ गृहस्थस्य ब्रह्मयज्ञलोपप्रायश्चित्तम् ।

---

## अथौपासनपरित्यागप्रायश्चित्तमाह ।

देवल:—

औपासनपरित्यागी सुरापोत्युच्यते बुधैः ।
न कर्म्माहों भवेत् तत्र [2]शूद्रएव न संशयः ।

पराशरः—

सायं प्रातर्द्विजो होमं धार्य्याग्नौ विधिपूर्व्वकम् ।
क्वत्वा लोकमवाप्नोति देवमानुषदुर्लभम् ॥

मनुः—

गृह्याग्नौ प्रत्यहं विप्रः सायं प्रातरनन्यधीः ।
तण्डुलैर्वा यवै[3]र्जुह्वन् लोकोत्कृष्टं समश्नुते ॥

मरीचिः—

पूर्व्वजः शुचिरासीनः स्वगृह्याग्नौ यवैर्मुदा ।
सूर्य्यमग्निं समुद्दिश्य हुत्वा लोकमवाप्नुयात् ॥

---

(१) प्रायश्चित्तमिति पदं कोल-ब्रोंकिन पुस्तकयोर्नास्ति ।
(२) चतुर्थपादोऽयं ब्रोंकिनपुस्तके न दृष्टः ।
(३) यवैर्वापि इति कोल-ब्रोंकिनपुस्तकपाठः ।

अन्यथा दोषमाप्नोति प्रायश्चित्ती भवेद्द्विजः ।
त्रिदिनं यदि विप्रोऽसावहरेकमुपोषितः ॥
जुहुयाद् व्याहृतीस्तत्र[1] हुत्वा नोपोषणं तयोः ।
अन्यथा रौरवं याति अग्नित्यागादितस्ततः ॥ इति ।

द्व्यब्दत्र्यब्दादित्यागपक्षे विशेषमाह—

मार्कण्डेयः—

द्व्यं त्रीन् बहुवर्षान् वा यस्त्यक्त्वाऽग्निं प्रवर्त्तयेत् ।
स विप्रोमत्र्यपेस्तुल्यः प्रायश्चित्तं समर्हति ॥
मासि मासि चरेत् कृच्छ्रं प्राजापत्यं विशोधनम् ।
स्त्रीणां तदर्द्धमिच्छन्ति पूर्व्वजा[2] मुनिपुङ्गवाः ॥

तदाह—

आपस्तम्बः—

"नित्योधार्य्योऽनुगतो मन्थ्यः श्रोत्रियाणामन्वाहार्य्य-उपवासश्चान्यतरस्य भार्य्यायाः पत्युर्वानुगतोऽपि वोत्तरया जुहुयात् नोपवसे"दिति ।

गौतमः—

औपासनं द्विजः कुर्य्यात् सायं प्रातः समाहितः ।
वह्निर्लोकमवाप्नोति नित्यमग्निपरिग्रहात् ॥

---

(१) अत्रोच्च व्याहृतीस्तत्र इति श्रौत-पुस्तकपाठः ।
(२) पूर्व्वजो मुनिपुङ्गवः इति श्रौत-देशितपुस्तकपाठः ।

अकरणे प्रत्यवायमाह —

जातूकर्ण्यः—

यस्तु स्थितायां भार्य्यायामग्निं त्यजति मूढधीः।
(१)सोऽनग्निकइति ख्यातः सर्व्व धर्म्मवहिष्कृतः॥

इति हेमाद्रौ औपासनपरित्यागप्रायश्चित्तम्।

---

## अथ देवतार्च्चनपरित्यागप्रायश्चित्तमाह।

अस्नात्वा नैव भुञ्जीत अनभ्यर्च्याऽग्निमेवच।
शालग्रामं हरेश्चिह्नं प्रत्यहं पूजयेद्द्विजः॥
(२)कौशिकीं गणपं चाऽर्कं शम्भुं चैव सरस्वतीम्।
महालक्ष्मीं महादुर्गां नित्यं विप्रः समर्चयेत्॥
शालग्रामशिलातोयं पिबेद्योमनुजोत्तमः।
तस्य पापानि नश्यन्ति ब्रह्महत्यादिकानि (३)॥

मनुः—

आजन्मकृतपापानां प्रायश्चित्तं विशोधनम्।
शालग्रामशिलावारि पापहारि निषेव्यतां॥

---

(१) अनग्निक इति ज्ञात-वेश्चितपुस्तकपाठः।
(२) अपचोऽग्निमनभिपूज्य च इति वेश्चितपुस्तकपाठः।
(३) भास्करं इति ज्ञात-वेश्चितपुस्तकपाठः।

पुरुषसूक्तं शङ्खतोयं शालग्रामशिला तथा ।
सुधोद्भवा चक्रपाणिः पञ्चतीर्थं प्रचक्षते ॥
यः पिबेद् धारयेन्मूर्ध्नि नित्यं पापापनुत्तये ।
सर्व्वपापविनिर्म्मुक्तः स याति परमं पदम् ॥

द्विजानामावश्यकत्वात् शालग्रामशिलार्च्चनं न त्याज्यम् ।

देवपूजात्यागे दोषमाह—

गौतमः—

यदि विप्रः समुत्सृज्य देवतार्च्चनमत्ति वै ।
स याति [1]नरकं घोरं य [2]दाचन्द्रतारकम् ॥
तस्य पापविशुद्ध्यर्थं प्रायश्चित्तमुदाहृतम् ।
ब्रह्मकूर्च्चं चरेत् तत्र दिनैकस्मिन् द्विजोत्तमः ॥
मासत्यागे पर्णकृच्छ्रं वर्षे त्वौदुम्बरं चरेत् ।
शालग्रामो [3]नास्ति यत्र यत्र चैवामृतोद्भवा ॥
श्मशानसदृशं गेहं स विप्रः पंक्तिदूषकः ।
गृहस्थ ब्रह्मचारि-सन्यासिनामेवम् ।

इति हेमाद्रौ देवतार्च्चनपरित्यागप्रायश्चित्तम् ।

---

(१) आदरात् इति श्रोत-वेष्टितपुस्तकपाठः ।
(२) परमं इति श्रोत-वेष्टितपुस्तकपाठः ।
(३) नास्ति यथा इति श्रोतपुस्तकपाठः ।

## अथ वैश्वदेवपरित्यागप्रायश्चित्तमाह ।

देवलः—

> वैश्वदेवं द्विजैः कार्य्यमन्नशुद्धयर्थमादरात् ।
> पञ्चसूनापमुक्त्यर्थं [1]लवणव्यञ्जनैर्विना ॥

लौगाक्षिः—

> द्विजैरहरहः [2]कार्य्यं वैश्वदेवं हुताशने ।
> अन्यथा दोषमाप्नोति वृषः स्यात् कण्टको भुवि ॥

दुष्टमन्नं[3] त्रिविधं संस्कारदुष्टं क्रियादुष्टं स्वभावदुष्टं चेति, देवपूजावैश्वदेवरहितं संस्कारदुष्टं, क्रियादुष्टं—एकपंक्तौ भुञ्जानो द्विजो भोजनं त्यक्त्वा गच्छति शेषैर्यद्भुक्तं तत्क्रियादुष्टं, स्वभावदुष्टं लशुनादिकम् । तदाह—

मनुः—

> संस्कारदुष्टं विज्ञेयं वैश्वदेवविवर्ज्जितम् ।
> एकपंक्त्युपविष्टस्य त्यक्त्वा पात्रं गतो यदि ॥
> क्रियादुष्टं हि विज्ञेयं तद्भोक्तॄणां द्विजन्मनाम् ।
> स्वभावदुष्टं लशुनं [4]विप्रैः सर्व्वत्र गर्ह्यते ॥

---

(१) लवणं इति केचित्पुस्तकपाठः ।
(२) कुर्य्यात् इति केचित्पुस्तके नोपलभ्य ।
(३) अन्नदुष्टं इति क्वचित्-केचित्पुस्तकपाठः ।
(४) विप्र इति केचित्पुस्तकपाठः ।

तस्माद् वैश्वदेवमवश्यं करणीयं अन्यथा दोषमाह--

गौतमः--

वैश्वदेवं परित्यज्य यो भुंक्ते स द्विजोत्तमः ।
महान्तं नरकं गत्वा हस्ती भवति कण्टकी ॥
प्रायश्चित्तमिदं प्रोक्तं वैश्वदेव'परिग्रहे ।
फलकृच्छ्रं तथा कृत्वा शुद्धिमाप्नोति पूर्व्वजः ॥
मासत्यागी तु चान्द्रं स्यात् वर्षत्यागी पतत्यसौ ।

अत ऊर्द्धं पतितप्रायश्चित्तम् ।

इति हेमाद्रौ वैश्वदेवपरित्यागप्रायश्चित्तम् ।

---

## अथ पित्रोराब्दिकपरित्यागप्रायश्चित्तमाह ।

देवलः—

मृताहं समतिक्रम्य चाण्डालः कोटिजन्मसु ।
अतोविप्रेन तत् त्याज्यं प्राणैः कण्ठगतैरपि ॥

नारदः—

'अध्वगैश्चातुरैश्चैव विहीनैश्च धनैस्तथा ।
आमश्राद्धं विधातव्यं' हेम्ना वा द्विजसत्तमैः ॥

---

(१) वैश्वदेवं इति केचित्पुस्तकपाठः ।

(२) अध्वग इति केचित्पुस्तकपाठः ।

(३) प्रकुर्वीत इति क्वीत-केचित्पुस्तकपाठः ।

द्रव्याभावे द्विजाभावे अन्नमात्रं तु पाचयेत् ।
पैतृकेण तु सूक्तेन होमं कुर्य्याद्विचक्षणः ॥
अत्यन्तद्रव्यशून्यश्च भक्त्या दद्याद् गवां तृणम् ।
स्नात्वा च विधिवद्विप्रः कुर्य्याद्वा तिलतर्पणम् ॥
अथवा रोदनं कुर्य्यात् अत्युच्चैर्विजने वने ।
दरिद्रोऽहं महापापी वदन्निति विचक्षणः ॥
परेद्युः श्राद्धकर्त्ता यो न [1]तर्पयते पितॄन् ।
तत्कुलं नाशमाप्नोति ब्रह्महत्याञ्च विन्दति ॥
तद्दोषपरिहारार्थं कुर्य्याच्चान्द्रमनुत्तमम् ।

मातुरप्येवम् । अविभक्त-ज्येष्ठ-कनिष्ठ-पितृव्य-ज्येष्ठभ्रात्रादि ष्वेवम् ।

इति हेमाद्रौ पित्रोः सांवत्सरिकपरित्यागप्रायश्चित्तम् ।

---

## अथाऽर्घ्यादिविस्मरणप्रायश्चित्तमाह ।

देवलः —

पितृकार्य्यपरोयस्तु प्रमादाद्विस्मरेद्दिज[2] ।
अर्घ्यपात्रादकं विप्रः पाणौ पैतृककर्म्मणि ॥

---

(१) तर्पयेत् पितॄन् इति केचित्पुस्तकपाठः ।
(२) पूर्वजो विस्मरेद्यदि इति कोन-केचित्पुस्तकपाठः ।

कर्त्ता याति महाघोरं पितरो यान्त्यधोगतिम् ।
तदन्नं राक्षसं प्रोक्तं तद्भोक्तारो विषाशिनः ॥

मरीचिः—

प्रवर्त्तमानः श्राद्धेषु अर्घ्यपात्रोदकं द्विजः ।
विस्मरेद् विप्रपाणौ तु तत्कर्त्ता नरकं व्रजेत् ॥
भोजनान्ते [1]स्मरेच्चेत् तद् विप्रेष्वेतेषु तत्तदा ।
आचान्तेषूपविष्टेषु तथा तत्कर्म्मतद्द्विजः ॥
लौकिकाग्निं प्रतिष्ठाप्य परिस्तीर्य्य यथाविधि ।
स्रुवेणाऽऽज्यं समादाय हुत्वाऽग्नौ विधिवद् द्विजः ॥
समुद्राय वरुणाय सिन्धूनां पतये नमः ।

"नदीनां सर्व्वासां पतये" इत्यन्तमन्त्रा चतस्र आहुतीरेतेन जुहुयात्, भूर्भुवःस्वरिति व्याहृतीश्च हुत्वा विप्रसन्निधावर्घ्यपात्राणि पुनरास्तीर्य्य अर्घ्यप्रदानान्तं कृत्वा शेषं कर्म्म समापयेत्, [2]तदाह मनुः—

विप्रस्त्वर्घ्यमकृत्वा तु पैतृके विप्रहस्तयोः ।
पश्चाद्वा भोजने काले पुनः स्मृत्वा प्रमादजम् ॥
आचान्तेषूपविष्टेषु कर्त्तव्यं श्राद्धकृत्तदा ।
लौकिकाग्निं समाधाय परिस्तीर्य्य यथाविधि ॥

---

(१) यदि स्मृत्वा इति क्रोत-लेखितपुस्तकपाठः ।

(२) तदाहेति लेखितपुस्तके नास्ति ।

स्रुवेणाज्यमथाऽऽदाय "समुद्रायहृदयं" स्मरन् ।
चतस्र आहुतीर्हुत्वा कर्म्मशेषं समापयेत् ॥
पार्व्वणेषु प्रकर्त्तव्य[1]मन्येषु तु न विद्यते । इति
सर्व्वशाखासममिदम् ।

इति हेमाद्रौ पार्व्वणश्राद्धेषु अर्घ्यविस्मरणप्रायश्चित्तम् ।

---

## अथ पार्व्वणश्राद्धेष्वग्नौकरणहोमलोपप्रायश्चित्तमाह ।

देवलः—

श्राद्धकर्त्ता यदाविप्रो गृह्याग्नौ दक्षिणानले ।
अग्निहोमं न [2]कुर्य्याच्चेत् पार्व्वणे समुपस्थिते ।
निराशाः पितरो यान्ति कर्त्ता याति यमालयम् ।
तत् श्राद्धं [3]राक्षसं ज्ञेयं वीक्षन्तामि हया हया ॥

मार्कण्डेयः—

द्विजः श्राद्धे पार्व्वणाख्ये [4]कुर्य्यान्नाग्नौ हविर्यदा ।
तत्कर्त्ता नरकं याति पितरो यान्त्यधोगतिम् ॥

---

(१) संकल्पेषु इति क्रोड लेखितपुस्तकपाठः ।
(२) अकृत्वा तु इति क्रोड-लेखितपुस्तकपाठः ।
(३) रौरवं इति लेखित पुस्तकपाठः ।
(४) अकृत्वाऽग्नौ इति क्रोड-लेखितपुस्तकपाठः ।

तच्छ्राद्धं राक्षसं प्रोक्तं तस्मादेतन् न संत्यजेत् ।
संस्मरेद् यदि तन्मध्ये[1] भोजनात् पूर्व्वमादरात् ॥
हविरग्नौ तदा कृत्वा यथाविधिपुरःसरम् ।
अन्ते वा भोजने काले [2]स्मरेत् कर्त्ता यदि द्विजः ॥
विप्रं वाऽथ द्वयं वापि निमन्त्र्य पुनराचमेत् ।
तच्छ्राद्धं विधिवत् कृत्वा न तेन [3]स हि दोषभाक् ॥

अङ्गिराः —

द्विजाग्नौ ब्राह्मणश्राद्धे होमं विस्मृत्य दैवतः ।
परिवेषणकाले तु स्मृत्वा कृत्वा समाचरेत् ॥
भोजने भोजनान्ते वा स्मृत्वा तत् संपरित्यजेत् ।
एकं विप्रं द्वयं वापि निमन्त्र्य पुनराचरेत्[4] ॥
सायंकाले न दोषः स्यात् पैतृकं बलवत्तरम् ।

तयोरकरणे दोषमाह —

नास्तिक्यात् पैतृकत्यागे [5]कुर्य्याच्चाग्नौ यदाऽऽहुतीः ।
निराशाः पितरो यान्ति शापं दत्त्वा सुदारुणम् ॥
कर्त्ता यात्य[6]न्धतामिस्रं तच्छ्राद्धं राक्षसं भवेत् ।
तयोरेकमकृत्वा[7] चेद् द्विजो यदि ह वर्त्तते ॥

(१) यदि मध्ये तदा स्मृता इति कौन-लेखितपुस्तकपाठः ।
(२) स्मृत्वा इति लेखितपुस्तकपाठः
(३) महद्दोषभाक् इति लेखितपुस्तकपाठः ।
(४) आचमेत् इति लेखितपुस्तकपाठः ।
(५) अकृत्वाग्नौ तदाहुतीः इति कौन-लेखितपुस्तकपाठः ।
(६) तत्कर्त्ता चान्धतामिस्रं इति कौनपुस्तकपाठः ।

स चाण्डालसमो ज्ञेयः सर्व्वथा तं परित्यजेत्।
तस्य देहविशुद्ध्यर्थं शिरसोवापनं चरेत्[1] ॥
कृच्छ्रमौदुम्बरं कृत्वा पञ्चगव्येन शुध्यति।
पुनः श्राद्धं तदा कुर्य्याद् अन्यथा पतितो भवेत् ॥

सर्व्वशाखासममिदम्।

इति हेमाद्रौ पार्व्वणश्राद्धेषु अग्निकरण[2]होमविस्मृतिप्रायश्चित्तम्।

---

## अथ श्राद्धपंक्तौ भुञ्जानानां द्विजानामन्योन्य-संस्पर्शप्रायश्चित्तमाह।

देवलः—

श्राद्धपंक्तौ तु [3]भुञ्जानो ब्राह्मणो ब्राह्मणं स्पृशेत्।
तदन्नमत्यजन् भुक्त्वा गायत्र्यष्टशतं जपेत् ॥

मार्कण्डेयः—

श्राद्धपंक्तौ द्विजोऽन्योन्यं प्रमादात् संस्पृशेद् यदि।
तदन्नं न परित्याज्यं भोक्तृभिः श्राद्धकर्म्मणि ॥
पङ्क्त्यभोजनात् पूर्व्वं स्नात्वा शुद्धेन वारिणा।
उपविश्य तथा कुर्य्याद् अष्टोत्तरशतं मन्त्रत् ॥

---

(१) शिरः कृत्वा तु वापनं इति कोल-लेखितपुस्तकपाठः।
(२) होम इति काशीपुस्तक एव दृष्टम्।
(३) भुञ्जानो ब्राह्मणो इति लेखितपुस्तकपाठः।

श्राद्धेषु भोक्तृविप्रेषु पतन्त्युच्छिष्टबिन्दवः ।
तदा प्रक्षाल्य देशं तं भुक्त्वाऽन्नं संपरित्यजेत् ॥
परेद्युरुदकं स्पृष्ट्वा जपेदष्टोत्तरं शतम् ।
निपतन्ति यदा पात्रे विप्रे[1] भोजनसंस्थिते ॥
प्रक्षाल्य पूर्ववत् पात्रं भोजने तत्र दोषभाक् ।
गायत्रीं पूर्व्ववत् जप्त्वा शुद्धिमाप्नोति पूर्व्वजः ॥

मनुः—

श्राद्धपंक्तौ तु भोक्तारो द्विजा यदि परस्परम् ।
स्पृशन्ति बिन्दवो वाऽपि अन्यत्रोच्छिष्टसंज्ञकाः ॥
कुक्कुटं पतितं श्वानं दृष्ट्वाऽन्नं न परित्यजेत् ।
अकुत्सयित्वा पात्रस्थमन्नं भुक्त्वा ततः परम् ॥
सम्यक् स्नात्वा परेद्युस्ते जपेयुर्वेदमातरम् ।
अष्टोत्तरशतं कृत्वा शुद्धिमापुर्न संशयः ॥
अन्यथा दोषवन्तस्ते द्विजाः पापानुवर्त्तिनः ।

श्राद्धपंक्तौ तु भोक्तॄणां देहेषु भोजनपात्रेषु वा अन्योन्योच्छिष्टबिन्दुरन्योन्यस्पर्शो वा शुनकादिदर्शनं वा प्राप्तं तदा तद्देशान् प्रक्षाल्य तत्र श्राद्धसमाप्तिपर्य्यन्तं भुक्त्वा परेद्युः स्नात्वा श्राद्धान्ने जीर्णे सति अष्टोत्तरशतगायत्रीजपं कृत्वा शुध्यति। सर्व्ववर्णसमम्[2]।

इति हेमाद्रौ श्राद्धभोक्तॄणामन्योन्यसंस्पर्शप्रायश्चित्तम् ।

(१) विप्रः इति लेखितपुस्तकपाठः ।

(२) अयं पाठः काशी-पुस्तके न दृष्टः ।

## अथ पार्व्वणविस्मृतिप्रायश्चित्तमाह ।

देवलः—

द्विजो यः पार्व्वणश्राद्धं[1] वि[2]स्मृत्य वर्त्तते यदि ।
श्राद्धकृत्वा स विज्ञेयः सर्व्वदा तं न भाषयेत् ॥

मरीचिः—

श्राद्धेषु पार्व्वणेष्वेषु यदि विस्मृत्य भोजयेत् ।
परेद्युः श्राद्धकृद्भूयो विप्रः शुद्धिमवाप्नुयात् ॥

कात्यायनः—

योविप्रः पार्व्वणश्राद्धे तद्विस्मृत्यैव भोजयेत् ।
परेद्युः श्राद्धकृत् पूतस्त्वन्यथा पतितोभवेत् ॥

गालवः —

द्विजः पार्व्वणश्राद्धेषु यदा विस्मृत्य भोजयेत् ।
तदेव पतितोज्ञेयः पुनः श्राद्धं समाचरेत् ॥

कश्यपः—

अकृत्वा 'पार्व्वणं प्राप्ते द्विजः पार्व्वणमादरात्
स्वभुक्तः पूर्व्वतः स्मृत्वा पितृकृद्विप्रमन्निधौ ॥
शुद्धिमाप्नोति सर्व्वत्र न चेदन्यत्र सञ्चरेत् ।

परेद्युः श्राद्धं कुर्य्यादित्यर्थः ।

---

(१) पार्व्वणश्राद्ध इति कौत लेखित-पुस्तक पाठः ।

(२) पार्व्वणे विस्मृते इति लेखित-पुस्तक पाठः पार्व्वणे विस्मृतिर्यदि इति कौतपुस्तक पाठः ।

मनुः—

स्वभुक्तेः पूर्व्वतः स्मृत्वा श्राद्धे पार्व्वणसंज्ञिते।
पिण्डस्तदा प्रकर्त्तव्योभुक्त्वा श्राद्धं परेऽहनि॥
दोषोभवति तस्माऽभूदन्यथा पतितोभवेत्।
इयं विस्मृत्य मोहेन [२]गच्छेन्नरकमञ्जसा॥
तद्दोषपरिहारार्थं फलकृच्छ्रं समाचरेत्।
कृत्वा कृच्छ्रं परेद्युर्वा पुनः श्राद्धं समाचरेत्॥

इति हेमाद्रौ पार्व्वणश्राद्धे पार्व्वणविस्मृति-
प्रायश्चित्तम्।

---

## अथ पार्व्वणपिण्डभङ्गे विड़ालादिस्पर्शे च प्रायश्चित्तमाह।

टेवलः—

पैतृके पार्व्वणश्राद्धे पिण्डविक्षेपणे यदा।
स पिण्डो हिदलोभूयात् तदा कर्त्तुर्महद्भयं॥

---

(१) पार्व्वणश्राद्धे इति क्रीत लेखित-पुस्तक पाठः।
(२) गत्वा इति लेखित-पुस्तक पाठः।

हारीतः--

पार्व्वणे पैतृके कर्त्ता पिण्डं कृत्वा दृढं मुदा।
विक्षिपेत् पार्व्वणस्थाने अप्रमत्तोऽभयातुरम्॥
तदा[1] चेद्दलितः पिण्डोभूमौ राजन् महद्भयम्।
कुलहानिः कर्त्तृहानिः पुत्रहानिर्निरन्तरम्॥
तस्मात् कृत्वा दृढं पिण्डं निक्षिपेद् भूतले तदा।

मरीचिः--

पिण्डविक्षेपणं श्राद्धे कर्त्ता कृत्वा दृढं सकृत्।
निक्षिपेद्भूतले राजन् अप्रमत्तः प्रमादतः॥
तदा भवेद् द्विधा पिण्डः कर्त्तृनाशोभवे[2]त्ततः।
अथ [3]प्रमादतः पि[4]ण्डं विड़ालादिः स्पृशेद्यदि॥
अधोगतिः पितृणाञ्च स्वस्य हानिश्च जायते।
यदा विदलितः पिण्डोविड़ालाद्यैर्विदूषितः।
कर्त्तुश्च तत्पितृणाञ्च नरकञ्च महद्भयं।
तद्दोषपरिहारार्थं कृच्छ्रं माहेश्वरं चरेत्॥

---

(१) तदा विदलितः इति क्रीत लेखित पुस्तक पाठः।
(२) भवेदत इति लेखितपुस्तकपाठः।
(३) यदि इति क्रीतपुस्तकपाठः।
(४) पिण्डः इति क्रीत-लेखितपुस्तकपाठः।
(५) विड़ालाद्यैरिति क्रीत-लेखितपुस्तकपाठः।

विड़ालाद्यैरुपहृतं पिण्डे कृच्छ्रञ्च पूर्व्ववत् ।
कृत्वाऽऽत्मदेहशुद्ध्यर्थं पुनः पिण्डं समाचरेत् ॥
मार्ज्जारोपहृते पिण्डे पुनःकरणमत्र हि ।
दोषएव महानत्र पिण्डे विदलिते क्रमात् ॥

एवमन्यत्र द्रष्टव्यम् ।

इति हेमाद्रौ पार्व्वणपिण्डभङ्गे विड़ालादिस्पर्शने च प्रायश्चित्तम् ।

---

## अथ दर्शपूर्णमासलोपप्रायश्चित्तमाह ।

देवलः —

कृत्वाऽनुष्ठानदिवसाद् याजनाद्यग्निहोत्रकम् ।
त्यक्त्वा यदि प्रवर्त्तेत भ्रूणहत्यामवाप्नुयात् ॥

मार्कण्डेयः—

यस्मिन् दिने क्रतुं कुर्य्यात् तदा तदग्निहोत्रकम् ।
यस्त्यजेन्मूढ़बुद्धिः [1]स भ्रूणहत्यामवाप्नुयात् ॥

कात्यायनः—

सोमं पिबति यत्रैव तदारभ्याऽनलं यजेत् ।
त्यजेद्वा [2]बहुलाद्व्याजादालस्याद्वा द्विजाधमः ॥

---

(१) इत्यग्निमिति श्रौत-लेखितपुस्तकपाठः ।
(२) क्रतुं कृत्वा इति श्रौत-लेखितपुस्तकपाठः ।

स याति नरकं घोरं भ्रूणहत्यामवाप्नुयात्।
दिनत्रयेऽग्निहोत्रस्य त्यागे कुर्य्याद्विशुद्धिदम्॥
प्राजापत्यं पञ्चमात्रे तप्तं मासैन्दवं चरेत्।
वर्षादूर्द्ध्वं भ्रूणहत्याप्रायश्चित्तं विशुद्धिदम्॥

कलौ पञ्च विवर्ज्जयेदिति पूर्व्वमुक्तं इदानीं तु अग्निहोत्रत्यागिनां नरकप्राप्तिरिति [१]भीत्याऽऽयं क्रतुर्विप्रैर्न कर्त्तव्यइतिप्रसज्येत[१] तस्माद् दौर्भाग्यनिवृत्त्यर्थं [२]आहिताग्निःसन् अग्निहोत्रं न सन्त्यजेदिति वाक्यार्थः।

इति हेमाद्रौ आहिताग्नेरग्निहोत्रत्यागप्रायश्चित्तम्।

---

## अथाऽऽहिताग्नेर्दर्शपूर्णमासलोपप्रायश्चित्तमाह।

देवलः –

दर्शश्च पूर्णमासश्च चक्षुषो सोमयाजिनः।
तयोर्लोपं न कुर्व्वीत बहुधा यत्नतश्चरेत्॥

मार्कण्डेयः—

दर्शञ्च पूर्णमासञ्च सोमयाजी न सन्त्यजेत्।
त्यक्त्वा यदि प्रवर्त्तेत चक्षुर्हीनोभवेदलम्॥

---

(१) वरं इति केचित्पुस्तकपाठः।
(१) वत्र् इति केचित्पुस्तकपाठः।
(२) बहुशो व्याजात् इति केचित्पुस्तकपाठः।

कात्यायनः—

दर्शञ्च पूर्णमासञ्च पक्षयोरुभयोर्यजेत् ।

अन्यथा दोषमाप्नोति महापातकिनां वरम्[१] ॥

गौतमः—

सोमयाजी महांल्लोके अष्टमूर्त्तेर्यदंशकः ।

दर्शश्च पूर्णमासश्च चक्षुषी सोमयाजिनः ॥

तयोरेकं परित्यज्य महापापमवाप्यते ।

तद्दोषपरिहारार्थं पथिकृन्मखमाचरेत् ॥

हारीतः—

पक्षयोरुभयोरिष्टिं[२] सोमयाजी न संत्यजेत् ।

महान्तं नरकं गत्वा चक्षुर्हीनोभवेद्भुवि ॥

तद्दोषपरिहारार्थं पथिकृन्मखमाचरेत् ।

पश्चात् कुर्व्वीत तामिष्टिं सर्व्वपापापहारिणीम् ॥

यदेव दर्शपूर्णमासयोर्लोपोदैवात् तदेव पथिकृन्मखेन हुत्वा पश्चादिष्टिं समाचरेत् ।

इति हेमाद्रौ दर्शपूर्णमासलोपप्रायश्चित्तम् ।

---

(१) वरमिति पदं श्रौत-लेखितपुस्तकयोर्नास्ति ।

(२) इष्टं इति लेखितपुस्तकपाठः ।

देवलः—

सोमयाजी तदा कुर्य्यात् यदा मासः प्रवर्त्तते ।
तथैव पिण्डयज्ञः स्यादनन्तफलदायकः ॥

गौतमः—

मासि मासि यदा दर्शः सोमयाजी तदा चरेत् ।
उद्दिश्य स्वपितॄन् पिण्डान् भुक्तिमुक्तिफलप्रदान् ॥

पराशरः—

मासि मास्यपराह्णे च उद्दिश्य स्वपितॄन् सुतः ।
सोमयाजी तदा पिण्डान् कुर्य्याद्दे दक्षिणानले ॥
स तु ब्रह्मपद याति पितरोयान्ति सद्गतिम् ।
अन्यथा दोषमाप्नोति नरकायोपपद्यते ॥
प्रमादाद्दैवयोगाद्वा दक्षिणाग्नौ 'न चेच्चरेत् ।
पुनः पिण्डप्रदानेन यजेद्वै सप्तहोतृकान् ॥

सप्तहोतारमित्यर्थः ।

प्रायश्चित्तमिदं प्रोक्तं मुख्यार्थं सोमयाजिनः ।
मासे मासे पुनः कार्य्यं सोपि ब्रह्मवेदमञ्जसा ॥

इति हेमाद्रौ पिण्डपितृयज्ञलोपप्रायश्चित्तम् ।

---

(१) वर्णं इति लेखितपुस्तकपाठः न वह्वारात् इति मोत-पुस्तकपाठः ।

## 570 अथ सूर्य्यसोमोपरागयोर्विद्यमानाग्नेः सोमयाजिनः कर्त्तव्यमाह ।

देवलः—

सूर्य्यसोमोपरागेषु सोमयाज्यग्निहोत्रवान् ।
गार्हपत्ये समिद्धेऽग्नौ विधानाज्जुहुयात् स्रुचा[1]

मार्कण्डेयः—

सूर्य्यसोमोपरागेषु स्नात्वा याजी प्रयत्नतः ।
मोक्षस्नानं पुनः कृत्वा मौनमास्थाय सत्वरः[2] ॥
गार्हपत्यं समिद्भिश्च प्रज्वाल्याऽऽज्यं [3]स्रुचोद्वहन् ।
सूर्य्योपरागे जुहुयाद् उदुत्यं चित्रमित्यृचा ।
उपस्थाय ततः पश्चात् नत्वा स्तुत्वा विसर्ज्जयेत् ॥
एवं कृत्वा तदा याजी सूर्य्यलोकमवाप्नुयात् ।
सोमोपरागे जुहुयाद् "आप्यायस्वेति" मन्त्रतः ॥
[4]स्वर्गं प्रयान्ति च पुनर्हुत्वा दत्त्वाऽऽहुतिद्वयम् ।
ततः मुक्तिमवाप्नोति सोमयाजी महानिह ॥
ग्रहणे चोभयोराजन् अग्नेर्वीर्य्यं क्षयं गतम् ।
राहुग्रस्ते तयोः पीड़ा अग्नौ संक्रम्य तिष्ठति ॥

---

(१) स्रुचा हुत्वा विधानतः इति क्रीत-लेखितपुस्तकपाठः ।
(२) मोक्षस्नानं पुनर्मौनं समाधाय च सत्वर इति क्रीतपुस्तकपाठः ।
(३) स्रुचोद्वहन् इति क्रीत-पुस्तकपाठः ।
(४) ततोऽपवाप्ति च पुनरिति क्रीतपुस्तकपाठः ।

सोमयाज्यष्टमूर्त्तिःस्यात् [1]पुष्पवन्तौ तथा नृप ।
अतो होमः प्रकर्त्तव्यो [2]याजिना यत्नतोनृप ॥
आत्मनश्चाग्निहोत्रस्य पुनर्वीर्य्यबलाप्तये ।

सोमयाजिनस्त्वष्टमूर्त्तित्वमस्तीत्युक्तं तदेवाऽऽह

नवधान्ये समायाते शरद्याग्रयणं चरेत् ।
तदैव देवतातुष्ट्यै सोमयाजी न संत्यजेत् ॥

पराशरः—

वर्षे वर्षे शरत्काले नवधान्ये समागते ।
बहुदेवोपकाराय इष्टिं तत्र समाचरेत् ॥

गौतमः—

प्रतिवर्षं शरत्काले श्यामाकैर्व्रीहिभिर्नवैः ।
कुर्य्यादाग्रयणं याजी बहुदेवोपकारकम् ॥
अकृत्वा नरकं याति यावदाभूतसंप्लवम् ।
तद्दोषपरिहारार्थं कुर्य्यात् [3]पथिकृतं वशी ॥

सोमयाजिन आग्रयणलोपे प्रायश्चित्तलोपे च दर्शपूर्णमासलोप-प्रायश्चित्तवदत्रापि पथिकृन्मखेन इष्ट्वा न [4]दोषोभवतीति भाष्य-कारमतम् ।

इति हेमाद्रौ सोमयाजिनआग्रयणलोपप्रायश्चित्तम् ।

---

(१) पुष्पवन्तौ इति कौतपुस्तकपाठः ।
(२) यजमानैरिति केचित्पुस्तकपाठः ।
(३) पथिकृतं इति कौतपुस्तकपाठः ।
(४) नदोषभागीति केचित्पुस्तकपाठः । न दोषभागिति कौतपुस्तकपाठः ।

## अथ गृहस्थधर्म्मातिक्रमे प्रायश्चित्तमाह।

देवलः—

गृहस्थस्य सदाचारं वक्ष्यामि शृणु तत्त्वतः।
यं श्रुत्वा सर्व्वपापेभ्यो मुच्यते नाऽत्र संशयः॥
विवाहादिषु विप्रस्य कर्त्तव्यं यत् शृणुष्व मे।
यज्ञोपवीत[1]द्वितयं सोत्तरीयञ्च धारयेत्॥
सुवर्णकुण्डले चैव धौतवस्त्रद्वयं तथा।
अनुलेपनलिप्ताङ्गः कृत्त[2]केशनखः शुचिः॥
धारयन् वैणवं दण्डं सोदकञ्च कमण्डलुम्।
उष्णीषममलं छत्रं पादुके चाऽप्युपानहौ॥
धारयेत् पुष्पमालाञ्च सुगन्धि[3] प्रियदर्शनम्।
नित्यं स्वाध्यायशीलःस्यात् यथाचारं समारभेत्॥
परान्नं नैव भुञ्जीत परवादञ्च वर्ज्जयेत्।
न दुर्ज्जनैः सह वसेन् नाऽप्यार्त्तं शृणुयात् तथा॥
(अन्यस्त्रियं न गच्छेत पैशुन्यञ्च परित्यजेत्)
नाऽपसव्यं व्रजेद्विप्रः अशक्तं च चतुष्पथम्।
असूयां मत्सरञ्चैव दिवास्वापञ्च वर्ज्जयेत्॥

---

(१) यज्ञोपवीतद्वितयम् इति केचित्पुस्तकपाठः।

(२) क्लृप्तकेश इति केचित्पुस्तकपाठः।

(३) सुगन्धं इति केचित्पुस्तकपाठः।

(—) इदं श्लोकार्द्धं केचित्पुस्तके नाऽस्ति।

न वदेत् परपापानि, स्वपुण्यं नैव कीर्त्तयेत्।
स्ववयश्च स्वनक्षत्रं नाम चैवाऽतिगोपयेत्॥
आसवद्यूतगीतेषु नरस्तु न रतिं चरेत्।
चार्द्रास्थि च तयोच्छिष्टं शूद्रं च पतितं तथा॥
नर्त्तकं कितवं स्पृष्ट्वा सचेलं स्नानमाचरेत्।
चितिश्च चितिकाष्ठञ्च यूपं चाण्डालमेव च॥
स्पृष्ट्वा देवलकञ्चैव सवासा जलमाविशेत्।
दीपखट्वातनुच्छायाकेशवस्त्रनखोदकम्॥
अजमार्जाररेणुश्च हन्ति पुण्यं पुराकृतम्।
स्नानं रजकतीर्थेषु भोजनं गणिकागृहे॥
नापितस्य गृहे चौरं हन्ति पुण्यं पुराकृतम्।
[1]शूर्पवातं प्रेतधूमं तथा शूद्रान्नभोजनम्॥
वृषलीपतिसङ्गं च दूरतः परिवर्जयेत्।
असच्छास्त्राभिगमनं स्वादनं नखकेशयोः॥
तथैव नग्नशयनं सर्व्वदा परिवर्ज्जयेत्।
गामश्वत्थं सभां चैव तथैव च चतुष्पथम्॥
देवतायतनं चैव नाऽपसव्यं व्रजेद् द्विजः।
शिरोऽभ्यङ्गावशिष्टेन तैलेनाऽङ्गं न लेपयेत्॥
ताम्बूलमशुचिर्नाऽद्यात् तथा सुप्तं न बोधयेत्।
धर्म्ममूलं भवेद् व्याधिः धर्म्मार्थं पापसम्भवम्॥

---

[1] शूर्पवातं इति श्लोक-पुस्तकपाठः।

चूर्णपर्णं हरेदायुः शिराबुद्धिविनाशनम्[1] ।
नाऽस्नुतोऽग्निं परिचरेन् न पूजां गुरुदेवयोः ॥
न वामहस्तेनैकेन पिबेद्वक्त्रेण वा जलम् ।
न चाऽऽक्रामेद् गुरोश्छायां तदाज्ञां च न लङ्घयेत् ॥
न निन्द्याद् योगिनो विप्रान् व्रतिनोऽपि यतीश्वरान् ।
परस्परस्य मर्म्माणि कदाचिन्न वदेद् द्विजः ॥
दर्शे च पौर्णमास्याञ्च यागं कुर्य्याद् यथाविधि ।
औपासनं च होतव्यं सायं प्रातर्द्विजातिभिः ॥
औपासनपरित्यागी सुरापोत्युच्यते बुधैः ।
अयने विषुवे चैव युगादिषु चतुर्ष्वपि ॥
दर्शे च प्रेतपक्षे च श्राद्धं कुर्य्याद् गृही द्विजः ।
मन्वादिषु मृताहे च अष्टकादिषु सत्तमः ॥
नवधान्ये समायाते गृही श्राद्धं समाचरेत् ।
श्रोत्रिये गृहमायाते ग्रहणे चन्द्रसूर्य्ययोः ॥
पुण्यक्षेत्रे पुण्यतीर्थे गृही श्राद्धं समाचरेत् ।
यज्ञोदानं तथा होमः स्वाध्यायः पितृतर्पणम् ॥
मिथ्या भवति राजेन्द्र ऊर्द्धपुण्ड्रं विना कृतम् ।
इत्येवमादयोधर्म्माः गृहस्थस्य समीरिताः ॥
तेषां व्युत्क्रमणे राजन् प्रायश्चित्ती भवेद्द्विजः ।

---

(१) शिरः बुद्धि विनाशिनीमिति कौत-लेखितपुस्तकपाठः ।

मरीचिः—

धर्म्माणां व्युत्क्रमे विप्रोन शुध्यति कदाचन।
अशुद्धस्य तथा कर्म्म चर्म्मणा च्छादितोयथा॥
तस्य वै निष्कृतिर्नास्ति यज्ञैरिष्टा महाधनैः।
एतेषां त्यागमात्रेण विप्रोदोषमवाप्नुयात्॥
ततः शूद्रत्वमायाति तस्मादेतान्न सन्त्यजेत्।

एतेषां व्युत्क्रमे प्रायश्चित्तमाह

मनुः—

ब्राह्मे मुहूर्त्ते उत्थाय शौचाचमनपूर्व्वकम्।
दन्तान् संशोध्य यत्नेन प्रक्षाल्य द्विर्मुखं जलैः॥
स्नानं वा देहशुद्ध्यर्थं धौतं वा परिधाय च।
पुण्ड्रादिकं तथा कृत्वा मानसं स्नानमाचरेत्॥
प्रातःसन्ध्यामुपासीत चार्घ्यध्यानपुरःसरम्।
मन्त्रैः षोड़शभिः सम्यक् मार्ज्जयेदम्बुभिः शिरः॥
मन्त्रपूर्व्वं क्षिपेदर्घ्यं सूर्य्यस्याऽभिमुखो जलम्।
सूर्य्यस्याऽभिमुखो भूत्वा जप्त्वा वै वेदमातरम्॥
द्विजस्तु यावती संख्या तावज् जप्त्वा न दोषभाक्।
ब्रह्मचारी गृहस्थश्च शतमष्टोत्तरं जपेत्।
वानप्रस्थोयतिश्चैव सहस्रादधिकं जपेत्॥
एवं प्रभावा सा सन्ध्या सर्व्वपापप्रणाशिनी।

सन्ध्यायाः सम्यगाचरणात्-( सर्व्वपापक्षयोभवतीति भावः )

तदुत्पत्तिमाह—

गौतमः—

पितामहः पितॄन् दृष्ट्वा मूर्त्तिं तामुत्ससर्ज्ज ह ।
ततः प्रभृति सा देवी सन्ध्यारूपेण पूज्यते ॥
एतां सन्ध्यां यथान्यायेन ये तु दीर्घमुपासते ।
दीर्घायुषोभविष्यन्ति निरुजः पाण्डुनन्दन ॥

सम्यक् सन्ध्याचरणे कालमाह—

कश्यपः—

उत्तमा तारकोपेता मध्यमा लुप्ततारका ।
नीचा स्यादुदयादूर्द्ध्वं प्रातःसन्ध्या त्रिधा मता ॥
कालेन चरिता सन्ध्या सा सन्ध्या फलदायिनी ।
अकालचरिता सन्ध्या वन्ध्या नारी यथाऽफला ॥
तस्मात् सूर्य्योदयात् पूर्व्वं प्रातःसन्ध्यां समाचरेत् ।
पूर्व्वोक्तदोषनिर्मुक्तः प्रपेदे परमं पदम् ॥

तथाच श्रुतिः—

यदह्ना कुरुते पापं तदह्ना प्रतिमुच्यते ।
यद्रात्री कुरुते पापं त द्रात्री प्रतिमुच्यते ॥
सम्यगाचरिता सन्ध्या सर्व्वाघविनिकृन्तनी ।

तावत्कालं तथैव मनसा समाधाय यः सन्ध्यां तु समाचरेत् तस्य सर्व्वेषां पूर्व्वोक्तानां गृहस्थधर्म्माणां प्रमादादतिक्रमे सन्ध्यैव प्रायश्चित्तं नान्यत् । अतएव द्विजातीनां(–)सन्ध्याकर्म्मैव बलवत्तरम् ।

इति हेमाद्रौ गृहस्थधर्म्मप्रायश्चित्तम् ।

(–) अयं पाठः केषुचित्पुस्तके नास्ति ।

## अथ सर्व्ववर्णोपकारार्थं मानसस्नानमाह ।

देवलः,—

स्वस्थितं पुण्डरीकाक्षं चिन्तयेत् पुरुषोत्तमम् ।
अनन्तादित्यसङ्काशं वासुदेवं चतुर्भुजम् ॥
शङ्खचक्रगदापद्मधारिणं वनमालिनम् ।
ध्वजवज्राङ्कुशालक्ष्म[1] पादपद्मं सुनिर्म्मलम् ॥
तत्पादोदकजां गङ्गां निपतन्तीं स्वमूर्द्धनि ।
चिन्तयेद् ब्रह्मरन्ध्रेण प्रविशन्तीं स्वकां तनुम् ॥
तया संक्षालयेद् देहं बाह्यमाभ्यन्तरं मलम् ।
[2]तत्क्षणाद् विरजो मन्त्री जायते स्फटिकोपमः ।
इति मानसिकं स्नानं प्रोक्तं हरिहरादिभिः ॥
इदं [3]स्नानवरं दिव्यं मन्त्रस्नानात् शताधिकम् ।
योनित्यमाचरेदेवं स वै नारायणः स्मृतः ॥
कालमृत्युमतिक्रम्य जीवत्येव न संशयः ।
इडा भागीरथी गङ्गा पिङ्गला यमुना स्मृता ॥
तयोर्मध्यगता नाडी सुषुम्नाख्या सरस्वती ।
स्नानह्रदे ध्यानजले रागद्वेषमलापहे ॥

---

(१) ध्वजवज्राङ्कुशालक्ष्म इति केचित्पुस्तकपाठः ।
(२) तत्क्षणात्तु द्विजो मन्त्री इति क्रीतपुस्तकपाठः ।
(३) इदं स्नानं परं इति क्रीतपुस्तकपाठः ।

यः स्नाति मानसे तीर्थे स याति परमां गतिम् ।
अच्युतोऽहमनन्तोऽहं गोविन्दोऽहमहं हरिः ॥
आनन्दोऽहमशेषोऽहमजोऽहममृतोऽस्म्यहम् ।
नित्योऽहं निर्व्विकल्पोऽहं निर्व्विकारोऽहमव्ययः ॥
सच्चिदानन्दरूपोऽहं परिपूर्णोऽस्मि सर्व्वदा ।
ब्रह्मैवाऽहं न संसारी मुक्तोऽहमिति भावयेत् ॥
एवं यः प्रत्यहं स्नात्वा मानसं स्नानमाचरेत् ।
स देहान्ते पर[1]ब्रह्मपदं याति न संशयः ॥

इति हेमाद्रौ मानसस्नानविधिः ।

---

## अथ निषिद्धदिवसे ताम्बूलभक्षणप्रायश्चित्तमाह ।

देवलः—

अमायाञ्च पितृश्राद्धे तीर्थयात्रासु सर्व्वदा ।
मृताशौचे बन्धुमृतौ पञ्चदशहरेर्द्दिने ॥
अशुचिर्मार्गमध्ये च सन्ध्ययोरुभयोरपि ।
देवालये सभास्थाने तथा कर्म्मसु भावणि ॥
दुःखान्विते बहुजने तथैवोत्पातदर्शने ।

---

(१) परंब्रह्म इति कौतपुस्तकपाठः ।

राजभङ्गे प्रजाक्षोभे गुरुदेवार्च्चनेषु च।
व्रताचरणकाले तु पुराणश्रवणे तथा।
ताम्बूलं भक्षयेद्यस्तु [1]स विष्ठाशी भवेदिह।

महाराजविजये—

इक्षुं[2] फलञ्च मूलञ्च ताम्बूलं पयश्चौषधम्।
भक्षयित्वाऽपि कर्त्तव्या स्नानयज्ञादिका:[3]क्रिया:॥

एतद्वचनमुक्तेषु एतेषु निमित्तेषु मोक्षव्यतिरिक्तविषयम् प्रायश्चित्तमाह।

गौतम:—

अमावास्यादिकालेषु यस्ताम्बूलन्तु भक्षयेत्।
तस्य दोषनिवृत्त्यर्थं जपेदष्टशतं द्विज:॥
अन्यथा दोषमाप्नोति विष्ठाशी जायते भुवि।

इति हेमाद्रौ निषिद्धदिवसे ताम्बूलभक्षणप्रायश्चित्तमाह।

---

(१) विष्ठाशनमिदं स्मृतम् इति श्रीनवेङ्कितपुस्तकपाठः।
(२) इक्षूनप: फलं मूलं इति वेङ्कितपुस्तकपाठः।
(३) स्नानदानादिका: क्रिया इति श्रीतपुस्तकपाठः।

## अथ तुलादिषोड़षमहादानानामितरदानानाञ्च प्रतिग्रहीतॄणां आचार्य्यादीनां प्रायश्चित्तं ब्रुवन् तत्रादौ तुलाप्रतिग्रहप्रायश्चित्तमाह ।

देवलः—

ऋणापकर्षणार्थं वा उत यागार्थमेव वा ।
द्विजः प्रतिग्रहं कृत्वा तद्दूर्ह्ं स्नानमाचरेत् ॥

देवस्वामी,—

तुलाप्रतिग्रहीता च पूर्व्वजोविषयातुरः ।
सोऽरण्ये निर्ज्जले देशे भवति ब्रह्मराक्षसः ॥
तस्यैव निष्कृति [1]र्दृष्टा न च लक्षजपादृते ।

[2]तुला त्रिविधा स्वर्णमयी रजतमयी रत्नमयी च, तासां प्रतिग्रहे आचार्य्यब्रह्मणोर्निष्कृतिर्नास्ति, तथाऽपि मुनिभिः कुत्राऽपि च निष्कृतिर्दृष्टा, तदेवाह ।

मार्कण्डेयः,—

तासाम् प्रतिग्रहे विप्र ऋणयागादिभिर्विना ।
रौरवे नरके घोरे ऋत्विग्भिः सह मज्जति ॥

ऋत्विजो ब्रह्मा सदस्यः द्वाःस्था जापको होतारश्च

---

(१) नास्ति इति श्रीत-लेखितपुस्तकपाठः ।

(२) तुला द्विविधा रजतमयी रत्नमयी च इति श्रीत-पुस्तकपाठः ।

देवीपुराणे—

आत्मतुल्यः सुवर्णं यः प्रतिगृह्य धनातुरः ।
अकृत्वा निष्कृतिं तस्य ऋत्विग्भिः सह राक्षसः ॥

कूर्म्मपुराणे,—

काश्यादिपुण्यतीर्थेषु उपरागादिसम्भवे ।
प्रतिगृह्य तुलां राज्ञः सहस्राब्दं पिशाचता ॥

गारुड़पुराणे,—

श्रीशैले हेमकूटे वा अचले गन्धमादने ।
महोबले वेङ्कटाद्रौ काश्यादिषु विशेषतः ॥
सूर्य्योपरागकालेषु अन्यकालेषु पर्व्वसु ।
प्रतिगृह्य तुलां विप्रो राज्ञोयोभोगलोलुपः ॥
सोऽरण्ये निर्ज्जले देशे [1]हस्तिहीनो निराश्रयः ।
सहस्राब्दं भवेद्रक्षः नवलक्षजपाद्गते ॥

नवलक्षजपोगायत्र्याः ।

ब्रह्माण्डे,—

सेत्वादिपुण्यतीर्थेषु उपरागेषु पर्व्वसु ।
यः पूर्व्वजोऽगुण्यश्नीयात् तुलां राजसुताद् यदि ॥
भवेद्रक्षः सहस्राब्दं हस्तिहीनोनिराश्रयः ।
निष्कृतिस्तस्य गायत्र्याः नवलक्षजपादिना ॥

---

(१) चिन्तिहीन इति केचित्पुस्तकपाठः ।

तदग्रतो लिङ्गपुराणे,—

वाणिज्यस्याष्टमं भागं कृषेर्विंशतिमं तथा ।
प्रतिग्रह[1]चतुर्थांशं दत्त्वा पापैर्न लिप्यते ॥

तदेवाऽऽह मार्कण्डेयः,—

वाणिज्यस्याष्टमं भागं भागं विंशतिमं कृषेः ।
प्रतिग्रहे[1] चतुर्थांशं दत्त्वा विप्रोन दोषभाक् ॥
अन्यथा निष्कृतिर्नास्ति दानैर्वा तीर्थसेवया ।

इति ।

महाराजविजये,—

यदा प्रतिग्रहस्तस्य तदा पातित्यमर्हति ।
सन्ध्यादिनित्यकर्माणि [2]विलुम्पन्ति न संशयः ॥
सावित्रीपतितं विद्यात् पुनः संस्कारमर्हति ।

स्कान्दपुराणे,—

प्रतिष्ठाप्य तुलामाद्य नवलक्षं जपेद् बुधः ।
व्ययं कृत्वा चतुर्थांशं यत्नं सर्व्वस्वदक्षिणम् ॥
प्रयुतेनाऽभिषेकस्य प्रश्नोक्तद्रविधानतः ।
तदर्थं ब्राह्मणः प्रोक्तं तथैव सदस्यतः ॥
होतॄणां द्वारपालानां पाठकानां महामुने ।
जापकानामिदं प्रोक्तं तयोरर्द्धं विचक्षण इति ॥

---

(१) प्रतिग्रही चतुर्थांशं इति क्वचित्पुस्तकपाठः ।

(२) विमुञ्चन्ति इति क्वचित पुस्तकपाठः ।

तयोर्ब्रह्मसदस्ययोरर्द्धं सर्व्वेषां प्रायश्चित्तं मुनिभिर्दर्शितम् ।

अन्यथा दोषमाह—

ब्रह्माण्डे,—

> उपदेशेषु तीर्थेषु पुण्यकालेषु पर्व्वसु ।
> भोगासक्तस्तुलां कृत्वा अकृत्वा निष्कृतीरिमाः ॥
> तदाचार्य्यः सहस्राब्दं भवति ब्रह्मराक्षसः ।
> तद्ब्रह्मा च सदस्यश्च कोटकौ [1]नाम राक्षसौ ॥
> होतारः प्रेतभूताः स्युर्द्वारपाला महोदराः ।
> पाठकाः [2]क्रूरवाचः स्युः कुष्माण्डा जापका मताः ॥
> अकृत्वा निष्कृतिं भूप यावद्भूमौ चरन्ति हि ।
> न भवन्ति हि कर्म्मार्हाः न सम्भाष्याः कदाचन ॥
> अहोनिष्कृतिरेतैर्वा कार्य्या लोकप्रसिद्धये[3] ।

तत्रापि सुलभमाह,—

मार्कण्डेयः,—

> तुलाप्रतिग्रहीता च प्रायश्चित्तमिदं चरेत् ।
> तच्चतुर्थांशभागेन परिषद्विधिपूर्व्वकम् ॥
> चतुर्थांशं धनं सर्व्वं चतुर्द्धा भागमाचरेत् ।
> अनुवादे भागमेकं भागमेकं विधायके ॥

---

(१) ब्रह्म राक्षसौ इति कोलपुस्तकपाठः ।

(२) क्रूरवाक्यरता इति वेङ्कितपुस्तक पाठः ।

(३) लोक निश्चिद्धये इति कोल वेङ्कित पुस्तकपाठः ।

भागं परिषदि प्रोक्तं शेषं अध्वरादिषु व्ययेत् ।
ततः परं विशुद्धोऽभूद् इहलोके परत्र च ॥
ब्रह्मराक्षसनिर्वृत्तिः कृत्वा यागादिकं सुधीः ।
पुनः संस्कारविधिना चाध्ययेद्वेदमातरम् ॥
ब्रह्मोपदेशं तत्रैव कुर्य्यादाचार्य्यवाक्यतः ।
ततः परं जपेद्वेदमातरं प्रत्यहं सुधीः ॥
प्रतिग्रहपराङ्मुखो विमुखो विष्णुमादरात् ।
चिन्तयन् वर्त्तयन् विप्रः सुखीह च परत्र च ॥
एवं [1]कुर्य्याद् द्विजो यस्तु निष्कृतिं शुद्धमानसः ।
तुलाप्रतिग्रहे राजन् शुद्धो भवति नाऽन्यथा ॥
यत्कृत्वा निष्कृतीरेताः एकां वाऽपि नरेश्वर ।
सन्ध्यादिनित्यकर्म्माणि पितृकार्य्याणि यानि च ।
न फलन्तीह सर्व्वाणि भस्मनि न्यस्तहव्यवत् ।
पुनः संस्कारमात्रेण पुनरायान्ति तानि वै ।
ततः प्रतिग्रहीता तु चात्मदेहविशुद्धये ।
कुर्य्याद्वै विरजाहोमं पञ्चगव्यमनन्तरम् ॥

इति हेमाद्रिविरचिते धर्म्मशास्त्रे प्रायश्चित्ताध्याये तुलाप्रतिग्रहप्रायश्चित्तम् ।

---

(१) कृत्वा इति श्रीतकेश्वरपुस्तकपाठः ।

## अथ हिरण्यगर्भप्रतिग्रहप्रायश्चित्तमाह ।

देवीपुराणे—

पूर्व्वजो द्रव्यलोभेन निमित्तैः पूर्व्वजैर्विना ।

गर्भं सर्वमयं ¹कृत्वा ऋत्विग्भिः सह राक्षसः ॥

कूर्मपुराणे—

हिरण्यगर्भं गृह्णीयाद् द्विजो लोकपराङ्मुखः ।

तस्योपनयनं भूयो भवेद्वै ब्रह्मचार्य्यसौ ॥

मात्स्ये—

हिरण्यगर्भं भूपालाद् भूपालद्विजवल्लभः ।

प्रतिगृह्य स मौर्ख्येण ब्रह्मचारी भवेद् भुवि ॥

ऋत्विजः कौणपा नाम पिशाचाः सप्तवक्त्रकाः ।

चरन्ते निर्ज्जने देशे कृष्णपादमहोदराः ॥

न तेषां निष्कृतिर्दृष्टा प्रायश्चित्तायुतैरपि ।

कथञ्चिद् निष्कृतिर्दृष्टा पुनर्गर्भार्चनाऽन्यथा ॥

देवीपुराणे—

दक्षिणामात्ममात्रस्य प्रधानं संपरित्यजेत् ।

तथाऽपि यानचर्य्यादीन् कृत्वा शुचिमवाप्नुयात् ॥

मोहे यदतिमोहेन द्रव्यार्थं ²लोभलोलुपः ।

तस्योपनयनं भूयो जननं गर्भगोलतः ॥

---

(१) कृत्वा इति केचित्पुस्तकपाठः ।

(२) लोभलोलुपः इति क्वचित्पुस्तकपाठः ।

पञ्चामृतेन गव्योर्वा अभिषेकात् प्रमुच्यते ।
अथ लक्षजपो देव्या कुष्माण्डायुतहोमतः ॥
चतुर्भागव्ययेनाऽपि यज्ञो वा सर्व्वदक्षिणः ।
एवं कुर्य्याद् द्विजो यस्तु तस्माद् दोषात् [1]स मुच्यते ॥

अभिषेकाग्नौ दक्षिणामात्रपरिग्रहे हिरण्यगर्भग्रहणे सुलभ-प्रायश्चित्तमाह ।

मार्कण्डेयपुराणे—

प्रधानं संपरित्यज्य यागार्थं दक्षिणां वहन् ।
तस्योपनिष्कृतिरियं[2] मुनिभिः परिकीर्त्तिता ॥
पर्वणि वा तदानीं वा स्नात्वा शुचिरलङ्कृतः ।
नीलवर्णां च गामेकां सुशीलां [3]क्षीरवत्प्रभाम् ॥
आपोहिष्ठादिभिर्मन्त्रैः प्राङ्मुखीं मार्ज्जयेज्जलैः ।
रक्तेन वाससाऽऽच्छाद्य त्रिः परिक्रम्य यत्नतः ॥
तत्पुच्छस्थानमासाद्य जपेन्मन्त्रमिमं सुधीः ।
"हिरण्यगर्भः समवर्त्तताग्रे" "हविषा विधेम"—
"विष्णुर्योनिं" "सधर्म्मयता"मिति एताभिरनुमन्त्रयते ।

ततः परं मुहूर्त्तमात्रं स्थित्वा, "गो गर्भमात्मनो मूर्द्धानं अष्टयोनी अष्टपुत्रा"मित्यनुवाकं पठेत् । ततः परमात्मानं पुनर्जातं मत्वा

---

(१) प्रमुच्यते इति श्रौत वैदिकपुस्तकपाठः ।
(२) तस्योपनिष्कृतिरिति श्रौतपुस्तकपाठः ।
(३) क्षीरवत्सां इति श्रौतपुस्तकपाठः ।

स्वयं वा पिता वा आचार्य्यो वा जातकर्म्माद्युपनयनं कुर्य्यात्। गां द्रव्याणि च आचार्य्याय दत्त्वा क्षमापयेत्, ततः परं पूतो भवति, दक्षिणामात्रप्रतिग्रहे प्रायश्चित्तमेतद् वेदितव्यं, प्रधान-त्यागाभावे पूर्व्वोक्तैरष्टलक्षजपादिभिः पूतो भवति। अन्यथा न निष्कृतिः तदेतद्दोषमाह—

हरिसागरे—

अन्यथा निष्कृतिर्नास्ति अकृत्वा निष्कृतीरिमाः।
सहस्राब्दं [1]भवेदन्ध आचार्य्यो द्रव्यलोभतः॥
ब्रह्मा सदस्यतिश्चैव तदर्द्धं राक्षसो वने।
होतारश्च ऋत्विजश्चैव पाठका जापका अपि॥
तयोरर्द्धं भवेयुस्ते राक्षसा घोररूपिणः।
आचार्य्यार्द्धं जपः प्रोक्तो ब्रह्मणः सदसस्पतेः॥
तयोरर्द्धं होतृकाणामितरेषामिति स्थितिः।

नागरखण्डे—

एवं हिरण्यगर्भस्य ग्रहणे निष्कृतिः पुरा।
दृष्टा मन्वादिभिर्विप्रैः धर्म्मशास्त्रपरायणैः॥
अन्यथा निष्कृतिर्नास्ति प्रायश्चित्तैर्जलाप्लुतैः।
इति हेमाद्रौ हिरण्यगर्भ-प्रतिग्रहप्रायश्चित्तम्।

---

(१) भवेदन्धः इति मौलपुस्तकपाठः।

## अथ ब्रह्माण्डघटप्रतिग्रहप्रायश्चित्तमाह ।

देवीपुराणे—

द्विजैर्ब्रह्माण्डसंज्ञोवै घटस्थापन्तु तासु च ।
न धार्य्यः पुण्यतीर्थेषु चात्मनाशकरो महान् ॥

देवलः—

ब्रह्माण्डं योनु गृह्णीयात् द्विजः ज्ञात्वाविधिं विना ।
पतितैभिः सह दुष्टात्मा राक्षसोभवति ध्रुवम् ॥

मत्स्यपुराणे—

ब्रह्माण्डं यस्तु[1] गृह्णीयाद् राज्ञो दानाधिकारिणः ।
तस्य वै निष्कृतिर्नास्ति अधीतब्रह्मास्तु[2] राक्षसात् ॥

मार्कण्डेयपुराणे—

ब्रह्माण्डग्राही[3] तीर्थेषु पुण्यकालेषु पर्व्वसु ।
निष्कृतिस्तस्य नास्तीह वसुलक्षजपाहृते ॥

इति ब्रह्मवैवर्त्ते—

ब्रह्माण्डं मुक्तो हृत्वा पापलोभपरायणः ।
अष्टलक्षजपादस्य निष्कृतिर्ब्रह्मराक्षसादिति ॥

---

(१) द्विजो गृहीत्वा ब्रह्माण्डं इति श्रीत केचित्पुस्तकपाठः ।
(२) अधीतब्रह्मास्य राक्षसात् इति श्रीतकेचित्पुस्तकपाठः ।
(३) ब्रह्माण्डं पुण्यतीर्थेषु इति श्रीतपुस्तकपाठः ।

महाभारते—

अष्टलक्षजपाहेव्या: विप्रस्य ब्रह्मणोघटे ।

आसहस्राब्दपर्य्यन्तं इति यत्तदसाम्प्रतम् ॥

तदाह—

लिङ्गपुराणे गौतमः—

ब्रह्मास्वं योद्विजोहृत्वा वसुलक्षजपादिह ।

पूतोभवति दुष्टात्मा इह लोके परत्र च ॥

नियतेनाऽभिषेकास्य शम्भोः पूर्व्ववदाश्रितः ।

चतुर्भागमयं कृत्वा यस्य वा वहुदक्षिणम् ॥

सर्व्वस्वमित्यर्थः ।

पापार्हं निष्कृतिस्तस्य ऋत्विग्भिः सहितस्य च ।

[1]अन्यथा निष्कृतिर्नास्ति सहस्राब्दं पिशाचतः ॥

प्रायश्चित्ताकरणे दोषमाह ।

भविष्योत्तरे—

आचार्य्यो जीवको नाम भवति ब्रह्मराक्षसः ।

ब्रह्मा भवेत् पराक्रुद्धः सहस्राक्षः सदस्यवान् ॥

द्वारस्थाः क्रूरकर्म्माणः [2]पातकाः पिशिताशनाः ।

होतारः काकलास्याख्या जापकाः पादहीनकाः ॥

---

(१) नान्यथा इति श्रीमद्गुप्तकपाठः ।

(२) पावका इति श्रीमद्गुप्तकपाठः ।

आचार्य्याँर्दं तयोः प्रोक्तं प्रायश्चित्तमिदं प्रभो ।
दास्यानां च तदर्द्धं स्याद् इतरेषाञ्च पूर्व्ववत् ॥
अर्द्धं वा तच्चतुर्भागं व्ययं वा कुरुतेऽथवा ।
अन्यथा निष्कृतिर्नास्ति [1]शतैस्तीर्थावगाहनैः ॥
आचार्य्यं प्रविशेत्पापं राज्ञोदानादिकारिणः ।
पादहीनं द्वयोः प्रोक्तं शेषं सर्व्वेषु संविशेत् ।
प्रायश्चित्तैर्विना राजन् न पुनः सम्प्रतिग्रहात् ।
ज्ञानादिदं प्रकर्त्तव्यं प्रायश्चित्तं द्विजातिभिः ॥
प्रायश्चित्तेन पूतात्मा शुद्धोभवति नाऽन्यथा ।

इति हेमाद्रौ ब्रह्माण्डघटप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ कल्पतरुप्रतिग्रहप्रायश्चित्तम् ।

मार्कण्डेयपुराणे—

आपत्सुद्[2]भवे विप्रो न गृह्णीयादमुं तरुम् ।
यान्यस्य सन्ति पर्णानि फलानि कुसुमानि च ॥

---

(१) दानैरिति श्रौतपुस्तकपाठः ।
(२) आपत्स्वसदुद्भवे इति काशीपुस्तकपाठः ।

तावतीस्तु समा भूयाद्ब्रह्मरक्षो निर्ज्जने वने।
ऋत्विभिर्ब्राह्मणा सार्द्धमधःपादविवर्ज्जिताः॥

सौपर्णे—

न गृह्णीयाद्द्विजः क्वाऽपि बहुभिः कारणैर्विना।
तद्धर्मेण पर्णवृन्तं रक्षोभवति कानने॥
इष्ट्वा यज्ञां विना राजन् ऋत्विग्भिः सह निर्ज्जने।
यावन्ति तस्य पर्णानि तावदब्दं नराधिप॥ इति

दीर्घाद्यन्नविहत्यर्थं क्रतुः, पितृभिरात्मना च कृतं कर्म, येनैव कृता यज्ञपारास्तटाको वा खिलो भवति, तदुद्धरणार्थं प्रतिग्रहः एतानि निमित्तानि प्रतिग्रहे। एतेषां रक्षणार्थं सर्व्वधनव्यये न दोषः।

तदाह।

गौतमः—

कुटुम्बी प्रतिगृह्णीनं द्विजस्तृणविमुक्तये।
यागार्थं स्वकृतारम्भतटाकादिविनाशने॥
सर्व्वं तदर्थं सहसा व्ययं कृत्वा न दोषभाक्।
शुद्धोभवति मानुष्ये न भवेद्ब्रह्मराक्षसः॥ इति

मार्कण्डेयपुराणे—

प्रतिगृह्य द्विजोयस्तु[1] तद्धर्मेण गृहीभवेत्[2]।
निष्कृतिस्तस्य नास्तीह नरकादेकविंशतेः॥

---

(१) योभाद् इति शीतवेष्टितपुस्तकपाठः।

(२) वृक्षाशये इति शीतवेष्टितपुस्तकपाठः।

अथचित्तिनिष्कृतिर्दृष्टा मनु-नारद-गौतमैः ।
अष्टत्वारेदमातुचतुर्थांशव्ययेन वा ॥
अभिषेकेण वा शम्भोर्भूमेर्वा त्रिःपरिक्रमात् ।
सेत्वादिपुण्यतीर्थेषु [1]अब्दं वा स्नानमाचरेत् ॥
( एता निष्कृतयोदृष्टा मनु-नारद-मानवैः । )

तयोरेतस्य संग्रहे ब्राह्मणदक्षिणां क्षीलबायकपाठकानां च प्रायश्चित्तमर्धांशांशेन वेदितव्यम् ।

बाहुजादेकगुणितं पादजाद्द्विगुणं चरेत् ।
मुखजादुत्तमानेन अवजात् क्षत्रियान् नृप ॥
एताभ्यो निष्कृतिभ्यश्च गतिर्नान्यत्र दृश्यते । इति

इति हेमाद्रौ कल्पतरुप्रतिषत्प्रायश्चित्तम् ।

---

## अथ गोसहस्रप्रतिग्रहप्रायश्चित्तमाह ।

देवलः—

तुलायां गोसहस्रे च चाचार्यस्य पुनर्भवः ।
चान्द्रायणोऽब्दपर्यन्तं भुवं[2] भूमौ पिबाचता ॥

---

(१) त्वब्दं इति श्रीतपुस्तकपाठः । ( ) चर्न पाठः केषिञ्चपुस्तकेनास्ति ।
(२) नास्ति इति श्रीतवेचितपुस्तकपाठः ।

ग्रन्थान्तरे—

तुलायां गोसहस्रे च पापार्थस्य पुनर्भवः।
पाग्रहणोऽब्दपर्य्यन्तं प्रेतजोयदि पूर्व्वजः॥
'तस्य नास्ति पुनर्जन्म यावद्ब्रह्मा लयं गतः।
तदापार्थस्ततोब्रह्मा सहस्रोराक्षसालयः॥
यावद्ब्रह्मा लयं याति तावत्ते सप्तरक्ष्यधः।

मार्कण्डेयपुराणे—

एका गौर्न प्रतिग्राह्या द्वितीया न कदाचन।
सा चेद्विक्रयमापन्ना दहत्यासप्तमं कुलम्॥

विष्णुरहस्ये—

काशीक्षेत्रे च गौतम्यां कृष्णवेणीनदीतटे।
श्रीशैले वेङ्कटाद्रौ च क्षेत्रे श्रीमत्स्वहोबले॥
काञ्चीक्षेत्रे च श्रीरङ्गे गोकर्णे गन्धमादने।
धनुष्कोट्यां महाराज तुलायां गोसहस्रकाम्॥
प्रतिगृह्य द्विजोलोभात् दयाणेर्विना नृप।
पुत्रपौत्रैः परिहृतो नरके वासमश्नुते॥ इति

स्कन्दपुराणे—

ग्रहणे संक्रमे चैव पुण्यतीर्थेषु पर्व्वसु।
गो सहस्रं तुलाविप्रः प्रतिगृह्य धनातुरः॥

(१) वध इति वेचितपुस्तकपाठः।

पूर्व्वोक्ता निष्कृतीरेताः परित्यज्य तु निर्व्विशेत् ।
सपुत्रपौत्रसंवीतः सहस्राब्दं निशाचरः ॥ इति

देवीपुराणे—

गोसहस्रं द्विजोधृत्वा भक्त्वा तद्धयं सुधीः ।
सोऽरण्ये निर्जले देशे कुलेन सह राक्षसः ॥ इति

मार्कण्डेयः—

धृत्वाऽग्रजो गोसहस्रं राज्ञोऽन्यत्राद्विजन्मनः ।
नवलक्षं जपेद्देव्याः पुनः संस्कारमर्हति ॥

मत्स्यपुराणे—

पुण्यक्षेत्रे पुण्यतीर्थे सूर्य्याचन्द्रमसोर्ग्रहे ।
धेनूनां यः सहस्रं च प्रतिगृह्णात्यनातुरः ॥
स भूप्रदक्षिणं कृत्वा नवलक्षं जपेत् ततः ।
केशानां वपनं कृत्वा पुनः संस्कारमर्हति ॥

महाराजविजये—

सहस्रधेनुदाने तु आचार्य्यत्वं व्रजेद्द्विजः ।
तस्य वै निष्कृतिर्नास्ति नवलक्षजपादृते ।
भूमेः प्रदक्षिणं कृत्वा केशानां वपनं पुनः ॥
प्रायश्चित्तेन पूतात्मा पुनः संस्कारमर्हति ।
एतदशक्तौ पक्षान्तरमाह ।

कूर्म्मपुराणे—

सहस्रधेनुदाने तु आचार्य्यो यदि लोभतः ।
भूमेः प्रदक्षिणं कृत्वा नवलक्षं जपेत्ततः ॥

तदग्रतो महाशङ्खैर्नमकैश्चमकैः शुभैः ।
स्नात्वाऽभिषेकं विधिवच् [1]चतुर्भागं प्रयत्नतः ॥
सर्व्वव्ययं च यागे वा क्षत्वा शुद्धिमवाप्नुयात् ।

नागरखण्डे—

ब्रह्मा सदस्यः पूर्व्ववत् प्रायश्चित्तार्द्धमर्हतः ।
तदर्द्धं द्वारपालानां पाठकानां तथैवच ॥
होतॄणां जापकानाञ्च पूर्व्ववन्मुनिभिः स्मृतम् ।

तत्र विशेषमाह—

लिङ्गपुराणे—

गोसहस्रे तुलायाञ्च आचार्य्योयत्तनं हरेत् ।
[2]न कुर्य्यात् तद्धनं धर्म्मं पत्नीपुत्रपरिप्लुतः ॥
तत्पत्नीनाञ्च पुत्राणामनुजानां धनाधिपः ।
हव्यकव्येषु यो भोक्ता ये वा सम्बन्धिबान्धवाः ॥
तस्यैवाब्दत्रयं [3]तेषां निष्कृतिः कथितोत्तमैः ।
एतदब्दपर्य्यन्तं अतः परं निष्कृतिर्नास्ति ।
चान्द्रायणत्रयं प्रोक्तं तत्पुत्राणां धनागमे ।
तद्भ्रातॄणां पराकः स्याद् यदि तद् विभजेद्धनम् ॥
हव्यकव्येषु भोक्तॄणामुपवासो दिनं भवेत् ।
परेद्युः प्राशनं कृत्वा पञ्चगव्यं पिबेत्ततः ॥

---

(१) चतुरयुतं इति केषितपुस्तकपाठः ।
(२) अकृत्वा इति कोतकेषितपुस्तकपाठः ।
(३) पञ्च इति केषितपुस्तकपाठः ।

तेषां पराकः सम्प्रोक्तो ये च सम्बन्धिबान्धवाः ।
तस्य सम्भाषणादेव कुर्य्यात् सूर्य्यावलोकनम् ।
तस्माच्च निष्कृतिः कार्य्या आचार्य्येण शुभेप्सुना ॥
अन्यथा दोषमाप्नोति इह लोके परत्र च ।

तुलाप्रतिग्रहे त्वेवमेव वेदितव्यम् । गोसहस्रं तुला च द्वयं समं तस्मादपरिग्रहएव वरं, उभयोर्लोकयोरतिगर्हितत्वात् ।

इति हेमाद्रौ गोसहस्रप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ हिरण्यकामधेनुप्रतिग्रहप्रायश्चित्तमाह ।

महाभारते ।

व्यासः—

शृणु धर्मज्ञ वक्ष्यामि स्वर्णकामदुघां सकृत् ।
योद्विजः प्रतिगृह्णाति[1] स सद्यः पतितोभवेत् ॥
तस्यैव निष्कृतिर्भूप पुनर्ब्रह्मोपदेशतः ।
षट्सहस्रजपाद्राजन् अर्यं[2] वाऽष्टमभागतः ॥

---

(१) प्रतिगृह्णाद्विजोयस्तु इति कतिचित्पुस्तकपाठः ।
(२) अर्धं वाऽष्टमभागत इति केचित्पुस्तकपाठः ।

अभिषेकेण वा शश्वत्तीर्थैर्वा सर्व्वदक्षिणैः ।
एतैः शुद्धिमवाप्नोति उभयोर्लोकयोरपि ॥

लिङ्गपुराणे—

हिरण्यकामधुक् पूर्व्वं राज्ञो श्रेयोऽभिवृद्धये ।
सर्व्वपापक्षयकरी महापातकनाशनी ॥
अग्निकुण्डात् समुत्पन्ना पश्यतां सुहृदां सताम् ।
दृष्ट्वा ब्रह्माणमद्राक्षीत् ब्रह्मा तां प्रत्युवाच ह ॥
इतआगच्छ भद्रं ते महीं गच्छ प्रयत्नतः ।
राजानस्तत्र वर्त्तन्ते [1]सततं पापकारिणः ॥
तत्र तान् रक्ष दानेन सुघोरात् पापसङ्कटात् ।
ओमित्युक्त्वा तथा धेनुर्भुवं गतवती तदा ॥
तदा प्रभृत्यसौ धेनुः कामधुक् स्वर्णरूपिणी ।
राज्ञां पापनिवृत्त्यर्थं [2]सर्व्वेषां पापचेतसाम् ॥
पापनिर्मोचनी प्रोक्ता स्वर्पिता पुण्यसद्मनि ।
एतादृशीं पुण्यरूपां स्वर्णकामदुघां द्विजः ॥
प्रतिगृह्णाति यो[3] लोभात् स सद्यः पतितो भुवि ।

कूर्म्मपुराणे,—

स्वर्णकामदुघं राज्ञा स्वर्पितां शास्त्रवर्त्मना ।
प्रतिगृह्णन् द्विजो मोहात् स सद्यः सूतकी भवेत् ॥

---

(१) सततं इति मीतपुस्तकपाठः ।
(२) तेषां इति मीतर्षेक्षितपुस्तकपाठः ।
(३) प्रतिगृह्य यदा इति मीतर्षेक्षितपुस्तकपाठः ।

शिवपुराणे,—

सदा पवित्रां दिव्यां[1] तां राजभिः पूजितामिमाम् ।
न गृह्णीयात् पुण्यकाले पूर्व्वोक्तैः कारणैर्विना ॥
प्रायश्चित्ती भवेत् सद्यः पुनर्ब्रह्मोपदेशतः ।
अष्टलक्षजपं कृत्वा प्रत्यहं विधिपूर्व्वकम् ॥
धनस्याऽष्टमभागेन प्रायश्चित्तं समाचरेत् ।
अभिषेकेण वा विप्रैर्यत्नः सर्व्वसदक्षिणः ॥
एतेषूक्तेषु राजेन्द्र प्रायश्चित्तेन शुद्धिमान् ।
इहलोके परत्राऽपि शुद्धिमाप्नोत्यनुत्तमाम् ॥

महाभारते—

स्वर्णकामदुहं धृत्वा द्विजो निष्कारणान्मुने ।
अष्टलक्षजपं कृत्वा शुद्धिमाप्नोति दैहिकीम् ॥
धनस्याऽष्टमभागेन प्रायश्चित्तेन वा द्विजः ।
अभिषेकेण वा शम्भोर्निःशेषकल्मषमोचनात् ॥
नाऽन्यथा शुद्धिमाप्नोति द्विजो लोभाज्जनार्द्दन ।

इति नियमेन गायत्रीजपं कृत्वा स्वर्णकामधेनुप्रतिग्रहात् पूतो भवति। तदशक्तौ धनाष्टभागेन तुलाप्रतिग्रहप्रायश्चित्तोक्तवत् कुर्य्यात्। नमकचमकैः[2] शम्भोः प्रयुताभिषेचनात् पूतो भवति।

---

(१) सु सर्व्वदा पवित्रां इति क्रोतवेष्टितपुस्तकपाठः ।
(२) नमकचमकौ इति वेष्टितपुस्तकपाठः ।

अथवा तेन[१] प्रतिग्रहलब्धेन धनेन निःशेषं ऋणमोचनं कृत्वा पञ्चगव्यप्राशनं कृत्वा च शुद्धो भवति ।

इति हेमाद्रौ हिरण्यकामधेनुप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ हिरण्याश्वप्रतिग्रहप्रायश्चित्तमाह ।

कूर्म्मपुराणे,—

हिरण्यवाजिनं गृह्णन् द्विजोलोभपरायणः ।
जन्मत्रये राक्षसत्वमनुभूय पिशाचताम् ॥
तदन्ते भुवमासाद्य राक्षसत्वमवाप्नुयात् ।
तदन्ते रोगवान् भूत्वा नरकं याति पाण्डव ॥ इति

मत्स्यपुराणे,—

हिरण्यवाजिनं धृत्वा राज्ञोदानपरायणात् ।
पुण्यकाले पुण्यदेशे द्विजोयोभोगलोलुपः ॥
सोऽपि देशान्तरे भूयादरण्ये राक्षसस्तदा ।
तदन्ते रासभोभूयात् ततोनरकमाप्नुयात् ॥

---

(१) अनेन इति कैश्चित्पुस्तकपाठः ।

ब्रह्माण्डे—

हिरण्यवाजिनं विप्रः प्रतिगृह्य नराधिपात् ।
सोऽरण्ये निर्जले देशे राक्षसत्वं भवेदिह ॥
ततस्तु गर्दभत्वञ्च सोऽनुभूय ततः परम् ।
ततोव्याधिभिराकीर्णे नरके वासमश्नुते ॥

महाभारते—

हिरण्याश्वं नृपश्रेष्ठाद् द्विजो लोभातुरोवहन् ।
ग्रहादिभिर्निमित्तैर्यो विना पुण्यदिने (१)ह वै ॥
राक्षसत्वमवाप्नोति ततोरासभतां व्रजेत् ।
तदन्ते व्याधिना ग्रस्तस्ततोनरकमश्नुते ॥
न तस्य पुनरावृत्तिर्दिव्यवत्साष्टकोटितः । इति

ब्रह्मवैवर्त्ते—

हिरण्याश्वं द्विजोहृत्वा तस्य (२)निष्कृतिमाचरेत् ।
अष्टलक्षजपाद्दाऽपि नियतेनाऽभिषेकतः ॥
अष्टमांसव्ययेनाऽपि यागैर्वा सर्व्वदक्षिणैः ।
ततः शुद्धिमवाप्नोति पुनर्मौञ्जीविधानतः ॥

पुनःसंस्कारइत्यर्थः ।

तद्भूम्या च सहस्रच प्रायश्चित्तार्थमर्हतः ।
दास्यास्त्वव्यापका राजन् अर्हन्त्यर्थार्थसंयतः ॥

---

(१) निष्ठ इति शोतवेश्चितपुस्तक पाठः ।
(२) निष्कृतोरिता इति वेश्चितपुस्तकपाठः ।

अन्यथा दोषवन्तस्ते न संभाष्याः कदाचन ।
न संस्पृश्याश्चपाङ्क्तेया नाऽलपेत्तानिह द्विजान् ॥ इति ।

इति हेमाद्रौ हिरण्याश्वप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ हिरण्याश्वरथप्रतिग्रहप्रायश्चित्तमाह ।

ब्रह्मवैवर्त्ते—

हिरण्याश्वरथं दिव्यं पूजितं नृपसूनुभिः ।
[1]गृह्णाति ब्राह्मणोलोभाद् यः कश्चिद्राजवल्लभात् ॥
स मृत्वा राक्षसो घोरो निर्जने विपिने जले ।
भवत्येव सदा क्षुब्धः निष्ठुरं सर्व्वदा वदन् ॥

भविष्योत्तरे—

विश्वार्चौ च घृतार्चौ च त्रियौलोकविमोहने ।
अकल्पयत् पुरा ब्रह्मा हिरण्याऽश्वरथं मुदा ॥
ते आरोप्य रथश्रेष्ठे नीतवान् त्रिदिवं सुरान् ।
रथं तमिन्द्रः सहसा आलोक्याऽप्सरसां गणैः ॥
आरुरोह मुदा युक्तो हतवान् राक्षसान् बहून् ।
हिरण्याश्वरथं दृष्ट्वा तद्दीप्त्या राक्षसा हताः ॥

---

(१) तं हृत्वा इति श्रीलक्ष्मीपितमुक्तकपाठः ।

तदन्ते दिवमासाद्य हिरण्याम्बरथेन वै ।
ततः परं तु तत्याज[1] देवेन्द्रो रथमञ्जसा ॥
ब्रह्मा तु तमालोक्याऽथ हिरण्याम्बरथं पुनः ।
हस्ते गृहीत्वा तं दिव्यं राजभ्यः प्रददौ मुदा ॥
दानं कुरुत विप्रेभ्यः सर्व्वपापापनुत्तये ।
[2]वैरिहिंसाकरं दिव्यं पूजितं मन्त्रितं द्विजैः ॥
इति तेभ्योमुदा दत्त्वा ब्रह्मा लोकपितामहः ।
तूष्णीमास्ते ततस्तेऽपि चक्रुर्ब्रह्मनिदेशतः ॥
तस्माद्धिंसाकरं विप्रो न गृह्णीयात् कदाचन ।

मन्त्ररहस्ये,—

हिरण्याम्बरथं यस्तु द्विजो [3]गृह्णाति भूपतेः ।
सोऽरण्ये निर्ज्जने देशे ऋत्विग्भिः सह राक्षसः ॥
यावद्ब्रह्माऽसृजद्विश्वं तावद्राक्षसदेहवान् ।
तस्यैवं निष्कृतिर्दृष्टा मुनिभिस्तत्त्वदर्शिभिः ॥
वसुलक्षजपाद्वापि नियतेनाऽभिषेकतः ।
अष्टमांशव्ययेनाऽपि प्रायश्चित्तविधानतः ॥
तदन्ते वपनं प्रोक्तं पुनः संस्कारमर्हति ।
एवञ्चैव शुद्धिमाप्नोति प्रायश्चित्तेन भूयसा ॥

---

(१) क्रीतपुस्तके अयं पाठो नोपलभ्यः ।
(२) हिंसाकरमिमं इति केचित्पुस्तकपाठः ।
(३) स्वर्णं नराधिपात् इति केचित्पुस्तकपाठः ।

अन्यथा ते न शुद्धाः स्युर्न सम्भाष्याः कदाचन ।

ब्रह्म-सदस्य-हारस्थानां ऋत्विजां पूर्व्ववत् प्रायश्चित्तं वेदितव्यं, पुनः संस्कारः पूर्व्ववत् ।

इति हेमाद्रौ हिरण्याश्वरथप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ हेमहस्तिप्रतिग्रहप्रायश्चित्तमाह ।

ब्रह्माण्डपुराणे—

हिरण्यहस्तिनं भक्त्या पुण्यकालेषु पर्व्वसु ।
यो विप्रः [1]प्रतिगृह्णाति राज्ञो दानार्थिनो नृपः ॥
तस्य वै निष्कृतिर्नास्ति दशलक्षजपादृते ।
लक्षहोमेन कुष्माण्डैः शुद्धिमाप्नोत्यनुत्तमाम् ॥

ब्रह्मवैवर्त्ते,—

हिरण्यहस्तिनं भूपाद् द्विजो यो लोभमोहितः ।
पुण्यकालेषु पुण्येषु तीर्थेष्वायतनेषु च ॥
प्रतिगृह्णाति[2] वै लोभाद् मकृत्वा निष्कृतिं पृथक् ।
सोऽरण्ये निर्ज्जले देशे राक्षसोभवति ध्रुवं ॥

---

(१) लोहलोभेन इति श्रीतर्कचिन्तपुस्तकपाठः ।

(२) प्रतिगृह्य ततो लोभात् इति श्रीतर्कचिन्तपुस्तकपाठः ।

तस्येह निष्कृतिर्नास्ति नवलक्षजपादृते[1]।
लक्षहोमेन कुष्माण्डैः शुद्धिमाप्नोति [2]दैहिकीम्॥
अष्टमांशव्ययेनाऽपि प्रायश्चित्तविधानतः।
एतेन शुद्धिमाप्नोति अशक्तोऽप्यन्यथा द्विजः॥

इति।

देवीपुराणे—

हेमहस्तिरथं धृत्वा विप्रोयदि विमोहितः।
निशाचरत्वमाप्नोति ऋत्विग्भिः सह पार्थिव!॥
निशाचराद्विमुक्तः स्यान्[3] नवलक्षजपादिह।
लक्षहोमेन कुष्माण्डैः शुद्धोभवति निश्चयः॥
केशानां वपनं कृत्वा पुनः संस्कारमाचरन्।
तदर्द्धं ब्रह्मणः प्रोक्तं तथैव सदसःपतेः॥
तदर्द्धं द्वारपालानां जापकानां तदर्द्धतः।
प्रायश्चित्तमिदं प्रोक्तं हेमहस्तिरथग्रहे॥

लिङ्गपुराणे,—

पुरा देवासुरे युद्धे निर्म्मितं विश्वकर्म्मणा।
हेमहस्तिरथं दिव्यमारुरोह प्रजापतिः॥
जिगायै राक्षसान् सर्व्वान् हेमहस्तिरथेन वै।
त्रिषु लोकेषु प्रपूर्णत्वाद् दृष्ट्वा कायमनुत्तमम्॥

---

(१) जपादिह इति केचित्पुस्तकपाठः।
(२) दैविकीं इति केचित्पुस्तकपाठः।
(३) अभूत् इति केचित्पुस्तकपाठः।

यभावे देवतामध्ये योवा कोवा भुवःस्थले ।
पूजयित्वा द्विजाग्राय दत्त्वा मां प्रतिपद्यते ॥
इतीरयित्वा तं दिव्यं दत्तवान् कृपया तदा ।
तदा प्रभृति तद्यानं नृणां पापहरं महत् ॥
पूजयित्वा द्विजाग्राय योदद्यात् स प्रजापतिः ।
तं [1]गृह्णाति द्विजो यस्तु तस्य पापं महत्तरम् ॥
तस्यैव निष्कृतिरियं सर्व्वपापप्रणाशिनी ॥

इति हेमाद्रिविरचिते हिरण्यहस्तिरथप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ पञ्चलाङ्गलप्रतिग्रहप्रायश्चित्तमाह ।

शिवपुराणे,—

पुण्यदेशे पुण्यकाले राजा धर्म्मपरायणः ।
लाङ्गलं वाऽथ पञ्चैव भाग्यदोषोपशान्तये ॥
कुर्य्याद्यदिह पूतात्मा पापादस्मात् प्रमुच्यते ।
तत्र ज्ञात्वा द्विजोयस्तु लोकद्वयविगर्हणम् ॥
लाङ्गलं प्रतिगृह्णीयात् षड्वा वा पञ्च वाऽथवा ।
ऋत्विग्भिः सह दुष्टात्मा खिलभूतेऽजलेऽजने ॥

---

(1) दत्ता ग्राह्मणो यस्तु इति केचित्पुस्तकपाठः ।

सहस्राब्दं चरेद् रक्षः अरन् जन्माऽऽसन: सदा ।
लाङ्गलं यो द्विजो गृह्णन् राज्ञः कर्माधिकारिणः ॥
स भवेन्निर्जने घोरे सहस्राब्दं भवेत् तरौ ।
राजन् भाकल्पपर्यन्तं निष्कृतिर्नास्ति कुत्रचित् ॥
दशलक्षजपाद् देव्याः शुद्ध दृष्टा महर्षिभिः ।
प्रधानत्यागमात्रेण यागार्थं दक्षिणां वहन् ॥
तदर्थं मुनिभिः प्रोक्तं प्रायश्चित्तं विशोधनम् ।

एतद् दक्षिणामात्रप्रतिग्रहविषयं प्रधानत्यागाभावे लक्षजपात् शुद्धिः ।

शिवधर्मे,—

लाङ्गलं [1]यदि गृह्णीयात् मुखजो भोगलोलुपः ।
तस्यैव निष्कृतिर्नास्ति दशलक्षजपादृते ॥

एतदपवादो पक्षान्तरमाह,—

वशिष्ठसंहितायां—

लाङ्गलं मुखजो धृत्वा पञ्च वा ह्येकमेव वा ।
तस्य या निष्कृतिर्वक्ष्ये शृणु नाऽन्यमना: प्रभो ! ॥
दशलक्षजपाद् वाऽथ प्रयुतं वा ऽभिषेचनम् ।
चतुर्भागव्ययं वाऽपि यज्ञं वा सर्वदक्षिणम् ॥
[2]कुर्यात्पापविशुद्ध्यर्थं परिशुद्धोऽथदाऽपि वा ।
मार्तण्डस्योदयादर्वाक् स्नानं ज्ञात्वा यथार्हणम् ॥

---

(१) देवि इति केषितपुस्तकपाठः चैव इति क्रीतपुस्तकपाठः ।
(२) एतत् इति केषितपुस्तकपाठः ।

नित्यकर्म्म समाप्याऽऽद्य यावत् सूर्य्योदयो भवेत्।
तावद् गत्वा जलाधारं नदीं पुष्करिणीमपि॥
कण्ठदघ्नजले स्थित्वा स्मरन् नारायणं विभुम्।
मुखमुद्धृत्य मार्त्तण्डं पश्यन्नुत्तानपाणिकः॥
अघमर्षणसूक्तं च जपन् पापविमुक्तये।
यावदस्तं गतो भानुस्तावत् कालं जपेत् सुधीः॥
मध्ये माध्याह्निकं कृत्वा ब्रह्मयज्ञञ्च तर्पणम्।
मनसा देवमाराध्य पुनर्गत्वा जलं जपेत्॥
प्रभातायां तु [1]शर्व्वर्य्यां पूर्व्ववद् व्रतमाचरेत्।
एवं तु मण्डले पूर्णे विरजाहोममाचरेत्॥
उपोष्य दिनमेकञ्च पञ्चगव्यं पिबेत्ततः
सायं सन्ध्यामुपासित्वा सायं होममनन्तरम्॥
मौनं त्यक्त्वा तदा राजन् फलाहारं समाचरेत्।
उत्तमं यावकं भैक्ष्यं तथा मुद्गभक्षणम्॥
अधःशायी भवेत्तत्र कृतं पापमनुस्मरन्।
ब्राह्मणान् भोजयेत् पश्चात् तेभ्योदत्त्वा च दक्षिणाम्।
पश्चात् स्वयं प्रभुञ्जीयात् तद्विप्रानुज्ञया सह॥

"सर्व्वेषु वा वेषु लोकेषु मृत्युर्व्वीन्धायत्ता" इत्यघमर्षणसूक्तम्। औपासनाग्नौ तिलैः सक्तुभिर्वा जुहोति, "सरसासी"ति मन्त्रे-

(1) अहन्यां इति केषांचित्पुस्तकपाठः।

विरजाहोमः । पञ्चगव्यं ब्रह्मकूर्च्चविधानं एतत् प्रायश्चित्त-
माचार्य्यस्य । सर्व्वेषां पुनः प्रायश्चित्तमाह ।

मात्स्ये—

ब्रह्मा सदस्यतिर्योभौ तदर्द्धं भागमर्हतः ।
शाःस्त्राणां च तदर्द्धं स्यात् तदर्द्धमितरेषु वै ॥
प्रायश्चित्तविधिश्चैषां नाऽन्यथा गतिरस्ति हि ।

प्रायश्चित्ताकरणे दोषमाह

गौतमः—

तुलायां गोसहस्रेषु लाङ्गले चैव ऋत्विजः ।
प्रायश्चित्तमकुर्व्वन्तो न तैः सम्भाषणं चरेत्[1] ॥
न तेषां दर्शनं कुर्य्याद् एतैः सह न संविशेत् ।
महादानेषु सर्व्वेषु प्रायश्चित्तमुदीरितम् ॥
तदकृत्वा द्विजोगर्व्वाच्चाण्डालत्वमवाप्नुयात् ।
न योग्यो हव्यकव्येषु न सम्भाष्यः[2] कदाचन ॥
सोऽनुभूय महत्पापं घृतेऽहनि परत्र च ।
इह जन्मनि चाण्डालः परत्र ब्रह्मराक्षसः ॥
तस्मादेवं प्रकर्त्तव्यं प्रायश्चित्तं द्विजोत्तमैः ।

इति हेमाद्रौ लाङ्गलप्रतिग्रहप्रायश्चित्तम् ।

---

(१) विना इति केचित्पुस्तकपाठः ।
(२) सम्भाष्य इति केचित्पुस्तकपाठः ।

## अथेदानीं धरादानप्रतिग्रहप्रायश्चित्तमाह ।

मार्कण्डेयः—

यो राजा मण्डलं रक्षेद्धर्म्मशास्त्रानुसारतः ।
सोऽपि स्वर्गमवाप्नोति किमन्यैर्दानसागरैः ॥
तथापि कुरुते पापं विप्रग्रामेषु सर्व्वदा ।
देवद्रोहं जनद्रोहं विप्रद्रोहं महत्तरम् ।
चाण्डालादपि सर्व्वत्र धनार्ज्जनमितीरितम् ।
दुष्टदण्डश्च सर्व्वत्र तथा निष्ठुरभाषणम् ॥
न दानं पुण्यकालेषु [1]रागसेवा हि सर्व्वदा ।
व्रतत्यागोऽसदाचारो नृषु वित्तार्ज्जनं महत् ॥
ब्रह्महत्यादिपापानां[2] मनसा चिन्तनं[3] सदा ।
एवमादीनि पापानि राज्ञः सन्ति दिने दिने ॥
एतत्पापविशुद्ध्यर्थं धरादानं समाचरेत् ।
अभ्यर्च्य गन्धवस्त्राद्यैर्योराजा पुण्यसङ्गमे ॥
विप्रसात् कुरुते यस्तु तस्य चान्तो न विद्यते ।
धरामेतां तु योग्टह्नन् पुण्यकालेषु पर्व्वसु ॥

---

(१) रज्यते वह्नि सर्व्वदा इति क्रीतपुस्तकपाठः रजते वह्नि इति केचित-पुस्तकपाठः ।

(२) पापानि इति केचितपुस्तकपाठः ।

(३) चिन्तवन् सदा इति केचित क्रीतपुस्तकपाठः ।

तस्य विप्रस्य नाऽस्तीह न पुनर्जन्म राक्षसात् ।
ब्रह्मोपदेशः कर्त्तव्यः सावित्रीदानमेव च ॥
ततः परं जपेद् देव्याः दशलक्षमतन्द्रितः ।

पद्मपुराणे —

धरामभ्यर्च्चितां राज्ञो धर्म्मशास्त्रानुसारतः ।
यो विप्रः प्रतिगृह्णीयाद् धनलोभपरायणः ॥
यज्ञादिकमकृत्वा[1] स भवति ब्रह्मराक्षसः ।
दशलक्षजपाद् देव्यास्तस्य निष्कृतिरीरिता ॥
पुनःसंस्कारविधिना गायत्रीं वेदमातरम् ।
गृह्णीयाद् विप्रमुख्येभ्यस्ततः शुद्धिमवाप्नुयात् ॥

ब्रह्माण्डे---

अभ्यर्च्य गन्धवस्त्राद्यैर्धरित्री या महीभुजा ।
दीयते विप्रवर्य्याय[2] सर्व्वपापापनुत्तये ॥
राज्ञा दत्तां धरामेनां निष्कारणतया द्विजः ।
पुण्यकालेषु गृह्णीयाद् यो यत्रैव महास्थले ॥
तस्यैव निष्कृतिर्नास्ति कदाचिद् ब्रह्मराक्षसात् ।
निष्कृतिस्तस्य कथिता दशलक्षजपादिह ॥
उपदेशः पुनः कार्य्यो ब्रह्मणो ब्रह्मलोकभाक् ।
जप्तव्या तेन सावित्री पुनः संस्कारमादितः ॥

---

(१) चेत् इति क्रीतकेषितपुस्तकपाठः ।
(२) विप्रवर्य्येभ्य इति क्रीत-पुस्तकपाठः ।

अन्यथा स न योग्यः स्याद्धव्यकव्येषु कर्म्मसु ।
असम्भाष्योऽप्यपांक्तेयो न तेन सह संविशेत् ॥
सदस्यब्रह्मणोरर्द्धं हारस्थानाच्च तदर्द्धकम् ।
तदर्द्धं जापकानाञ्च होतॄणां च तथैव च ॥
मार्ज्जनं सर्व्वदानानामाचार्य्याणां स्वयम्भुवा ।
उक्तं पुरा देवमध्ये लोकस्याऽस्य हितैषिणा ।
अन्यथा मृत्युमाप्नोति कुर्य्यादेवं प्रयत्नतः ॥

इति हेमाद्रौ धरादानप्रतिग्रहप्रायश्चित्तम् ।

---

## अथेदानीं विश्वचक्रप्रतिग्रहप्रायश्चित्तमाह ।

देवलः,—

पुरा (१)स्वयम्भुवा राजन् लोकानां हितकाम्यया ।
विश्वचक्रमिदं (२)सृष्टं राज्ञां पापापनुत्तये ॥
स्थावरा जङ्गमाश्चैव देवराक्षसपन्नगाः ।
यक्षाः पिशाचाः कुष्माण्डा विश्वचक्रं समाश्रिताः ॥

---

(१) प्रतिग्रहा इति केचित्पुस्तकपाठः ।
(२) सृष्टमिति केचित्पुस्तकपाठः ।

कालमृत्युहरं चेदं सर्व्वपापप्रणाशनम् ।
राज्ञां श्रेयस्करं दिव्यं विश्वचक्रमिदं द्विजाः ॥
निर्म्माय लोकं गतवान् हंसारूढ़श्चतुर्मुखः ।
मान्धातृप्रमुखान् दृष्ट्वा क्षितिपालान् महौजसः ॥
ददौ परमया भक्त्या विप्रेभ्योदीयतामिति ।
इत्युक्त्वा तांस्तदा दत्त्वा पुनर्लोकं जगाम च ॥
तदा प्रभृत्यदश्चक्रं पूज्यते राजभिः सदा ।
दीयते विप्रवर्य्येभ्यः सर्व्वश्रेयोपपत्तये ॥

कूर्म्मपुराणे,—

योराजा ब्रह्मणा दत्तं विश्वचक्रं महत्तरम् ।
अभ्यर्च्य गन्धवस्त्राद्यैर्धर्म्ममार्गोपदेशतः ॥
विप्राय वेदविदुषे [1]ददाति पुण्यसद्मनि ।
तस्य पुण्यस्य लेशं वा मया वक्तुं न शक्यते ॥
कल्पकोटिसहस्राणि कल्पकोटिशतानि च ।
स्थित्वा स ब्रह्मणो लोके पुनर्भुवमुपागतः ॥
चक्रवर्त्तित्वमाप्नोति किमन्यैर्बहुभाषितैः ।

भारते,[2]—

एतादृशं विश्वचक्रमर्च्चितं राजवल्लभैः ।
दत्तं[3] विप्रोऽनुगृह्णीयात् यदि निष्कारणादिह ॥

---

(१) दद्याचेत् इति क्रीतलेखितपुस्तकपाठः ।
(२) महाभारते इति लेखितपुस्तकपाठः ।
(३) दत्ता इति लेखितपुस्तकपाठः ।

न तस्य पुनरावृत्ती राक्षसाद् ब्रह्मनामकात् ।
कथञ्चिन् निष्कृतिर्दृष्टा मुनिभिस्तत्त्वदर्शिभिः ॥
अरण्ये निर्जले स्थित्वा मण्डले[1] वायुपूरितः[2] ।
तत्र त्रिषवणं स्नानं कुर्व्वन् सन्ध्यादिकाः क्रियाः ॥
मार्त्तण्डोदयमारभ्य यावत् सूर्य्योलयं गतः ।
तावज्जपेच्च सावित्रीं तिष्ठन्नुत्तानपाणिकः ॥
रवौ मध्यं गते तत्र माध्याह्निकमथाऽऽचरेत् ।
पुनर्जपेच्च सावित्रीं यावदस्तं गतो रविः ॥
तावद्विरम्य नियमादन्नभक्षो वायुभक्षकः ।
तदशक्तौ[3] फलाहारः केवले स्थण्डिले स्वपेत् ॥
एवं मण्डलमावर्त्त्य तस्माद्दोषात् प्रमुच्यते ।
विश्वचक्रं द्विजो धृत्वा निर्निमित्तेन लोभतः ॥
अरण्ये निर्जले देशे राक्षसोऽभून्महाभयङ्करः ।
न तस्य पुनरावृत्तिः सहस्राब्दान्महाभयात् ॥
[4]कथञ्चिन् निष्कृतिर्दृष्टा वसिष्ठेन महात्मना ।
चतुर्भागव्ययं कृत्वा प्रायश्चित्तविधानतः ॥
पुनः संस्कारविधिना पुनः संस्कारमाचरेत् ।
ब्रह्मोपदेशं सावित्रीमभ्यसेद्द्विजपुङ्गवात् ॥

---

(१) मण्डलं इति केचित्पुस्तकपाठः ।
(२) वायुपूरितैः इति कोतपुस्तकपाठः !
(३) तदशक्त इति केचित्पुस्तकपाठः ।
(४) तेषां वै इति कोतकेचित्पुस्तकपाठः ।

प्रयुतेनाऽभिषेकेण निष्कृतिस्तस्य नाऽन्यथा ।
तदर्द्धं ब्राह्मणः प्रोक्तं तथैव सदसस्पतेः ॥
द्वास्थानां जापकानां च तयोरर्द्धं प्रकल्पयेत् ।
विघ्नचक्रं महाद्भुतं सर्व्वपापहरं परम् ॥
मृत्युदं तद्गृहीतॄणां दातुः श्रेयःप्रदं सदा ।
प्रायश्चित्तमिदं विप्र[1] विघ्नचक्रधृतां नृणाम् ॥
एतेन शुद्धिमाप्नोति नाऽन्यथा शुद्धिरीरिता ।

इति ।

इति हेमाद्रौ विघ्नचक्रप्रतिग्रहप्रायश्चित्तम् ।

---

## अथेदानीं कल्पलताप्रतिग्रहप्रायश्चित्तमाह ।

देवीपुराणे,—

कल्पवल्ली सुरैः पूज्या उद्भवा क्षीरसागरे ।
विष्णुप्रियकरी नित्यं सर्व्वथा सर्व्वदा नृणाम् ॥
लक्ष्मीरूपामिमां वल्लीं पूजयित्वा नराधिपः ।
पुण्यकालेषु संक्रान्तौ व्यतीपाते च वैधृतौ ।
विप्रायाऽध्यात्मविदुषे यो[2] दद्यात् स जनार्द्दनः ॥

---

(१) विप्रः इति कोतकेचितपुस्तकपाठः ।

(२) योऽपि दद्याज्जनार्द्दनः इति केचितपुस्तकपाठः ।

महानारदीये—

लतामिमामश्विभवामर्च्चयित्वा जनाधिपः ।
पुण्यकालेषु तीर्थेषु विप्रसात् कुरुते यदि ॥
षष्टिकोटिजनैर्युक्तो मातृतः पितृतस्तथा ।
विष्णुलोकं समासाद्य स्थित्वा तत्र चतुर्युगम् ॥
पुनर्भुवमुपागम्य धनवान् क्षितिपालकः ।
ब्रह्मज्ञानमुपागम्य पश्चा'न्निर्व्वाणमाप्नुयात् ॥

विष्णुरहस्ये—

दत्तामिमां कल्पलतां राजभिः पूजितां शुभाम् ।
यो गृह्णीयाद् द्विजःकामात् 'स भवेद् राक्षसोवने ॥
यावत् तिष्ठन्ति ज्योतींषि तावत्तिष्ठन्ति राक्षसाः ।

लिङ्गपुराणे—

इमां कल्पलतां दिव्यां पूजितां राजवल्लभैः ।
दत्तां पर्व्वसु कालेषु द्विजो यस्तां प्रतिग्रहेत् ॥
न तस्य पुनरावृत्तिर्विराद्ध ब्रह्मराक्षसात् ।
तद्ब्रह्मा 'तत्सदस्यश्च तद्वारस्था जापका अपि ॥
राक्षसाः क्रूरकर्म्माणो भवन्त्यपि हि तत्क्षणात् ।
सहस्रञ्च तदर्द्धञ्च तदर्द्धं वै यथाक्रमम् ॥

कल्पलताप्रतिग्रहप्रायश्चित्तं कल्पतरुप्रतिग्रहप्रायश्चित्तवद्वेदितव्यम् ।

इति हेमाद्रौ कल्पलताप्रतिग्रहप्रायश्चित्तम् ।

---

(१) निवृत्तिं इति क्रीतलेखितपुस्तकपाठः । (३) सदस्यैव इति लेखितपुस्तकपाठः ।
(२) भवेद्वै इति क्रीतलेखितपुस्तकपाठः ।

## अथेदानीं सप्तसागरप्रतिग्रहप्रायश्चित्तमाह ।

गरुड़पुराणे—

लवणेक्षुसुरासर्पिर्दधिक्षीरोदकार्णवाः ।
जम्बूद्वीपश्च प्लक्षश्च शाल्मलीद्वीप एव च ॥
कुशद्वीपश्च क्रौञ्चश्च शाकः पुष्करएव च ।
एते द्वीपाः समुद्राणां मध्ये तिष्ठन्त्यनामयाः ॥
प्लक्षद्वीपे महापुण्ये मेरुश्च हिमवान् गिरिः[1] ।
(मेरुश्च हिमवान् शैलः) कैलासो गन्धमादनः ।
महेन्द्रो मलयः शैलस्त्रिशूलीयो महान् गिरिः ॥
त एते सप्तशैलाश्च लवणोदधिमध्यगाः ।
जम्बूद्वीपे मनुष्या ये वसन्त्यत्र निरामयाः ॥
प्लक्षद्वीपे महापुण्ये तुरङ्गास्याः वसन्त्यथ ।
तथैव[2] शाल्मलीद्वीपे किन्नराः सन्ति कामिनः ॥
कुशद्वीपे महाराज वसन्तीच्छाविहारिणः ।
क्रौञ्चद्वीपे महापुण्ये तिष्ठन्ति पितरस्तथा ॥
शाकद्वीपे महापुण्ये विश्वेदेवा वसन्त्यथः[3] ।
वसन्ति पुष्करद्वीपे देवाः साग्निपुरोगमाः ॥

---

(१) हिमवान् बलात् इति क्रीतपुस्तकपाठः ;
( ) अयं पाठः क्रीतपुस्तके नास्ति ।
(२) तद्देव इति केचितपुस्तकपाठः ।
(३) वसन्त्वह इति क्रीतपुस्तकपाठः ।

मर्त्त्या [1]श्रयनमिच्छन्ति प्रत्यहं मुनिवल्लभ ।
तस्मान्नाऽस्ति प्रभावस्य नियन्तानुग्रही नृणाम् ॥
तुरङ्गास्यास्तथा राजन् वारे वारेऽन्नकाङ्क्षिणः ।
किन्नराः पञ्चमासेन भक्ष्यमन्नं समश्नुते ॥
कुशद्वीपगतानां तु विंशत्या दिवसैर्दिनम् ।
क्रौञ्चद्वीपे तु पितरः सप्तमासानुभोजिनः ॥
शाकद्वीपे तु शृणु मे विश्वेदेवा महाप्रभाः ।
विप्रश्राद्धेषु भुञ्जन्ति श्राद्धार्हा यत्र जन्तवः
देवाश्च पुष्करे द्वीपे प्रतिवर्षं प्रभोजिनः ।
एते समुद्राः पुण्यार्हास्तद्दानं पृथिवीपतिः ॥
निष्कामनतया कुर्व्वन् स नृपः पुरुषोत्तमः ।
सूर्य्यसोमोपरागेषु पुण्यकालेषु पर्व्वसु ॥
पुण्यक्षेत्रे पुण्यतीर्थे यः कुर्य्यात् पृथिवीपतिः ।
अभ्यर्च्च्य गन्धपुष्पाद्यैः सागरान् सप्त संख्यया ॥
कुलमुद्धृत्य सहसा दशपूर्व्वं दशावरम् ।
वैकुण्ठे वासमासाद्य तिष्ठत्याचन्द्रतारकम् ॥
मुग्धबोधनलोभाद्[2] यो गृह्णीयात् सप्तसागरम् ।
कुलेन सह[3]युक्तः स राक्षसोऽभूद्वनेऽवसे ॥

---

(१) इर्यनमिच्छन्ति इति श्रीतपुस्तकपाठः ।
(२) धनबोधेन यो गृह्णन् इति केचित्पुस्तकपाठः ।
(३) कुलेन सहसा युक्त इति केचित्पुस्तकपाठः ।

यागार्थं दक्षिणां गृह्णन् प्रधानत्वागमाचरन् ।
यागे सर्व्वं व्ययं कुर्य्यान्नाऽस्ति तस्य पिशाचता ॥
प्रायश्चित्तेन पूतात्मा इह लोके परत्र च ।
पूतोभवति राजेन्द्र नाऽत्र कार्य्या विचारणा ॥

लिङ्गपुराणे—

योविप्रः पृथिवीपालाद्गृह्णीयात् सप्तसागरम् ।
कुलेनैकेन संवीतो राक्षसोऽभून्महावने ॥
अशेषयित्वा तद्द्रव्यं यागं कुर्य्याद्द्विजोयदि ।
तस्य नाऽस्ति पिशाचत्वं इह लोके परत्र च ॥

नागरखण्डे—

यो विप्रः पुण्यकालेषु राज्ञा दत्तं सुखाप्तये ।
सप्तसागरदानञ्च प्रतिगृह्णाति[1]नातुरः ॥
राक्षसत्वं भवेत्तस्य न पुनर्जन्म राक्षसात् ।
तद्दोषपरिहारार्थं कुर्य्याद्द्वादशतप्तकान्[2] ॥
तस्योपनयनं भूयोगायत्रीदानमेव च ।
कुर्य्याद्ब्रह्मोपदेशञ्च पुनःसंस्कारमागतः ॥

गारुड़पुराणे—

विप्रोयदिह मूढ़ात्मा गृह्णीयात् सप्तसागरम् ।
स सद्यः पतितोभूयात् पुनःसंस्कारमर्हति ॥

(१) प्रतिग्रह्णपनातुरः इति श्रीत-लेखितपुस्तकपाठः ।
(२) द्वादश तप्तचान्द्रे इति श्रीत-लेखितपुस्तकपाठः ।

तद्दोषप्रशमायाऽलं कुर्य्याद्वादशलक्षकम्।
चतुर्भागव्ययेनाऽपि प्रायश्चित्तं समाचरेत्॥
तस्योपनयनं भूयः सावित्रीदानमेव च।
पुनः संस्काररूपेण कुर्य्याद्ब्रह्मोपदेशकम्॥
व्यवहारसमोभूयादिह लोके परत्र च।
ब्रह्मा सदस्यस्तस्यार्हं प्रायश्चित्तमिहाऽर्हतः॥
तयोरर्द्धन्तु हास्यानां जापकानां तथा क्रमात्।
प्रायश्चित्तमिदं कार्य्यं सागराणां प्रतिग्रहे॥
अन्यथा दोषमाप्नोति पतितोऽभून्न संशयः।
तस्मात् सर्व्वप्रयत्नेन प्रायश्चित्तं समाचरेत्॥

इति हेमाद्रौ सप्तसागरप्रतिग्रहप्रायश्चित्तम्।

---

## अथेदानीं चर्म्मधेनुप्रतिग्रहप्रायश्चित्तमाह।

वायुपुराणे,—
पुरा चर्म्ममयी धेनुर्निर्म्मिता विश्वकर्म्मणा।
सर्व्वपापहरीं[1] पुण्या भोगमोक्षप्रदायिनी॥

---

(१) पापहरा इति मैथिलपुस्तकपाठः।

तामर्च्चयित्वा [1]यो राजा पुण्यकालेषु पर्व्वसु ।
दद्यात्तां विधिवद्विप्रवर्य्यायाऽध्यात्मवेदिने ॥
स राजा कुलसंयुक्तो मातृतः पितृतस्तथा ।
यावन्ति धेनुरोमाणि तावत्कालं वसेद्दिवि ॥
ततस्तु भुवमासाद्य चक्रवर्त्तित्वमागतः ।
ततो ब्रह्मपदमवाप्यैव ब्रह्मणा सह मोदते ॥

देवीसारे,—

कृत्वा चर्म्ममयीं धेनुं पुण्यकाले च राजभिः ।
दत्तां विप्रोऽनुगृह्णीयाद्धनभोगपरायणः ॥
समजन्मसु राजेन्द्र विपिने [2]निर्ज्जनेऽजले ।
ज्ञातं पापमनुस्मृत्य स भवेद्ब्रह्मराक्षसः ॥
तस्य निष्कृतिरत्रापि देव्या द्वादशलक्षतः ।
तस्योपनयनं भूयः पुनः संस्कारमर्हति ॥

कूर्म्मपुराणे—

योधर्त्ता चर्म्मणोधेनुं द्विजोदत्तां नृपात्मजैः ।
पूजितां पुण्यकालेषु स भूयोराक्षसाधरः[3] ॥
तस्य वै निष्कृतिर्दृष्टा देव्या द्वादशलक्षतः ।
ब्रह्मोपदेशः कर्त्तव्यो गायत्रीदानमेव च ॥

---

(१) तां राजा इति क्रोतपुस्तकपाठः ।
(२) निर्ज्जने वने इति क्रोतपुस्तकपाठः ।
(३) राक्षसोनर इति लेखितपुस्तकपाठः ।

पुनः संस्कारमात्रेण पूतोभवति चोभयोः।
अन्यथा पतितं विद्यादासपेर्त्तं कदाचन॥

पराशरः,—

भुक्तो योऽनुभन्नीयाद् धेनुं [1]दत्तां नृपात्मजैः।
ग्रहणादिषु कालेषु पुण्यतीर्थेषु तेषु च॥
तस्य वै[2] निष्कृतिर्नाऽस्ति चतुर्भागव्ययादिष।
प्रायश्चित्तविधानेन शुद्धोभवति पापतः॥
देव्या द्वादशलक्षेण नियतेनाऽभिषेकतः।
शुद्धिं परामवाप्नोति पुनः संस्कारतः सुधीः॥

ब्रह्मोपदेशोगायत्रीप्रदानं विरजाहोमश्चाऽनेन दर्शितः। ब्रह्म-सदस्ययोस्तदर्द्धम्। पूर्व्ववत् ऋत्विजामपि। अपमृत्यूत्तरण-मार्ज्जनमत्राऽपि योज्यम्।

तथा गारुड़पुराणे,—

तुलायां गोसहस्रे च पञ्चलाङ्गलसंयुते।
विश्वचक्रे चर्म्मधेनौ महाभूतघटपदे॥
हेमहस्तिरथे चैव चाचार्य्यं मृत्युराविशेत्।
तस्मात् तन्मार्ज्जनं कर्म्म मृत्यूत्तरणहेतवे॥
तदानीं वाऽपरेद्युर्वा पक्षे वा पञ्चमेऽहनि।

(१) कृत्वा इति क्वचित् पुस्तकपाठः।
(२) तस्यैव इति क्वचित् पुस्तकपाठः।

प्रायश्चित्तेन पूतात्मा पुनः संस्कारमर्हति ॥
व्यवहारक्षमोभूयाद् उभयोर्लोकयोरपि ।
अन्यथा दोषमाप्नोति न मुक्तिर्ब्रह्मराक्षसात् ॥

इति हेमाद्रौ चर्म्मधेनुप्रतिग्रहप्रायश्चित्तम् ।

---

## अथेदानीं महाभूतघटप्रतिग्रहप्रायश्चित्तमाह ।

देवलः,—

महाभूतघटस्याऽस्य प्रायश्चित्तमिदं शृणु ।
येन पूतोभवेद्[1] विप्रस्तदहं कथयामि ते ॥
तं च भूतघटं गृह्णन् विप्रोभवति राक्षसः ।
सहस्राब्दं [2]वसेद्घोरे निर्जले निर्जने वने ॥
तुलादीनि च दानानि योराजा कर्त्तुमुद्यतः ।
सर्व्वपापविनिर्म्मुक्तः सर्व्वलोकमवाप्नुयात् ॥
पूजितैर्भूमिपालैस्तं महाभूतघटं शुभम् ।
गृह्णाति[3] मुखजोलोभात् तस्य नाऽस्तीह निष्कृतिः ॥

---

(१) भवन् इति क्वचित् पुस्तकपाठः ।
(२) वने इति क्वचित् पुस्तकपाठः ।
(३) दत्ता च इति क्वचित् पुस्तकपाठः ।

पुरा वृत्रवधे राजन् विड़ोजा विप्रहत्यया ।
पीड़ितः शरणं गत्वा धिषणं स्वपुरोहितम् ॥
उवाच वचनं पश्चात् तद्दोषोपशमाय वै ।
गुरुस्तं पुनरप्याह लोकानुग्रहकाम्यया ॥
राजानः क्रूरकर्माणोराज्यार्थं धनलोभतः ।
मातरं पितरं पुत्रं घ्नन्ति वा भ्रातरं तथा ॥
किं न कुर्व्वन्ति कामान्धाः किं न कुर्व्वन्ति पापिनः ।
किं न कुर्व्वन्ति भूपालाः किं न कुर्व्वन्ति योषितः ॥
तस्मादेतद्विशुद्ध्यर्थं त्वया राजन्यशेखर ! ।
कर्त्तव्यः पुण्यकाले तु महाभूतघटः सजन् ॥
यस्याऽऽचरणमात्रेण मुक्तोभवति किल्विषात् ।
तथेति वृत्रहा सद्यः पुण्यकाल उपागते ॥
यत् प्रोक्तं गुरुणा [1]पूर्व्वं विधिना तच्चकार ह ।
विप्रहत्या गता सद्यः किमन्यैरुपपातकैः ॥

मत्स्यपुराणे,—

पुण्यकालेषु जन्मर्क्षे यो राजा धर्म्मवत्सलः ।
महाभूतघटं सम्यगर्च्चयित्वा द्विजन्मने ॥
दद्यान्निष्कामतो राजन् तस्य नाऽस्ति पुनर्भवः ।

(१) पूतं इति श्रौतपुस्तकपाठः ।

लिङ्गपुराणे—

वर्जितं पुण्यकालेषु भूपालेन महात्मना ।
योऽश्नाति द्विजः[1] सोऽपि भवेद्वै ब्रह्मराक्षसः ॥
लक्षमात्रं जपेद्देव्याः संख्यया परिगण्यते ।
तस्योपनयनं भूयः पुनः संस्कारपूर्व्वकम् ॥
नियुतेनाऽभिषेकेण चतुर्भागव्ययेन वा ।
नाऽन्यथा शुद्धिमाप्नोति ब्रह्मराक्षसदेहतः ॥

मत्स्यपुराणे,—

वर्जितं [2]पुण्यकालेषु पर्व्वसु संक्रमेषु च ।
महाभूतघटं विप्रोऽश्नीयाच्चेत्क्रमागतः ॥
तस्य वै निष्कृतिर्नाऽस्ति गायत्र्या लक्षसंख्यया ।
उपायनं[3] पुनः कुर्य्यात् पुनः संस्कारमेव च ॥
इह लोके परत्रैव शुद्धिमाप्नोत्यनुत्तमाम् ।
तदर्द्धं ब्राह्मणः प्रोक्तं तथैव सदसस्पतेः ॥
शास्त्राणां आपणानां च तयोरर्द्धं प्रकल्पयेत् ।
महाभूतघटस्याऽस्य प्रायश्चित्तमिदं द्विजः ॥
यः कुर्य्याद्द्विजशार्दूल ! सोऽपि मुक्तो न संशयः ।
पुनः संस्कारहीनस्य प्रायश्चित्तं तु निष्फलम्[4] ॥

---

(१) यो भक्षुन् पूर्व्वजः इति क्वचित् केचित्पुस्तकपाठः ।
(२) पुण्यकालेन पुण्यकालेषु पर्व्वसु । इति कौतपुस्तकपाठः ।
(३) उपनयनं इति केचित्पुस्तकपाठः ।
(४) संस्कारहोमेन प्रायश्चित्तेन निष्फलं इति केचित्पुस्तकपाठः ।

ब्रह्महत्यायुते विप्रे न पुनस्त्वीह सत्क्रियाः ।
अलं कृतं प्रयत्नेन सुराभाण्डमिवाऽपगाः ॥
प्रायश्चित्ते कृते राजन् सन्तुष्टाः सर्व्वदेवताः ।
ऋषयः पितरोदेवाः सन्तुष्टाः स्युर्नसंशयः ॥
सन्तुष्टेष्वेषु सर्व्वेषु सन्तुष्टोऽभूज्जनार्द्दनः ।
महापातकजालानि प्रायश्चित्तं दहत्यहो ॥
दुरन्नं दुष्टसंसर्गं दुर्द्दानं दुष्प्रतिग्रहम् ।
प्रायश्चित्तं दहत्याऽऽशु तूलराशिमिवाऽनलः ॥
प्रायश्चित्तविहीनेन द्विजेन विदुषा मुने ।
तेन कार्य्यं किमस्तीह तस्य जन्म निरर्थकम् ॥

इति हेमाद्रौ महाभूतघटप्रतिग्रहप्रायश्चित्तम् ।

---

## अथेदानीं तुलापुरुषा(१)दिदानेष्वाचार्य्यब्रह्मर्त्विजां अपमृत्यूत्तरणमार्ज्जनमाह—

स्कन्दपुराणे,—

तुलापुरुषे लाङ्गले गोसहस्रप्रतिग्रहे ।
विश्वचक्रे घर्म्मधेनौ सप्तसागरसंग्रहे ॥

---

(१) तुलापुरुषदाने च इति मौलपुस्तकपाठः ।

महाभूतघटग्राहे आचार्य्यं मृत्युराविशेत्।
[1]तदानीमपरेद्युर्वा पञ्चमे पञ्चसंख्यिते॥
मासे वाऽथ त्रिमासे वा वत्सरे पूर्णतां गते।
तस्मादेतत् प्रकर्त्तव्यं अपमृत्यूपशान्तये॥

भविष्योत्तरे,—

राज्ञां[2] पापानि यावन्ति ब्रह्महत्यायुतानि च।
सप्तजन्मार्ज्जितानीह मिलित्वा तानि सर्व्वशः॥
पापान्येतानि राजेन्द्र पिशाचाः सम्भवन्त्यत।
खेचरी दुर्भरी भङ्गी खेटरी लम्बनस्तनी[3]॥
पञ्चैतानि[4] महाभूता आचार्य्यनिधनप्रदाः।
राज्ञः श्रेयस्करा नित्यं आयुर्वर्द्धनकारिणः॥
तुलासहस्रे गोदाने[5] लाङ्गले सप्तसागरे।
विश्वचक्रे चर्म्मधेनौ महाभूतघटे तथा॥
दानेष्वेतेषु कर्त्तारं त्यक्त्वाऽऽचार्य्यमुपाश्रिताः।
आचार्य्यं प्रविशन्त्येनं ब्राह्मणं वा नरेश्वर[6]॥

---

(१) इदानीं वा परेद्युर्वा इति क्रीतपुस्तकपाठः।
(२) राज्ञ इति क्रीतपुस्तकपाठः।
(३) लम्बस्तनी इति केचित्पुस्तकपाठः।
(४) एताश्च इति क्रीतपुस्तकपाठः।
(५) तुलापुरुष गोदानं इति केचित्पुस्तकपाठः।
(६) नरेश्वरं इति केचित्पुस्तकपाठः।

वायुरूपेण सहसा हृतभीत्या जनागमे।
[1]तत्पत्नी वा सुतोवाऽपि स्वयं वा मृत्युमाप्नुयात्॥

तत्परिहारमाह,—

मार्कण्डेयपुराणे,—

तदार्न्नौ वा परेद्युर्वा अपरेद्युरथाऽपि वा।
स्नात्वा शुचिरलङ्कृत्य दर्भपाणिर्जितेन्द्रियः॥
आचार्य्यं वरयेत् प्राज्ञमपमृत्यूपशान्तये।
प्राङ्मुखः स्वयमासीनः द्वितीयोदङ्मुखस्ततः॥
कांस्यपात्रं पञ्चपलं तिलैरापूर्य्य यत्नतः।
तस्योपरि लिखेत्पद्मं कलशं तत्र निक्षिपेत्॥
वरुणं पूजयेत्तत्र गन्धपुष्पाक्षतादिभिः।

"इमं मे वरुण" इति पूजामन्त्रः।

कुर्य्याद्वैर्वारुणैर्मन्त्रैरब्लोङ्गैरेभिरादरात्।

"आपोहिष्टामयो भुव" इति तिस्रः "हिरण्यवर्णा शुचयः पावका" इति चतस्रः, "परं मृत्यो अनुपरेहीति वीरा" नित्यन्तं,[2] "अपमृत्यु मपः क्षुध" मित्यनुवाकः, "मृत्यवे स्वाहे"त्यन्तं, "हिरण्यशृङ्ग"-मित्यादि"सुवान इन्दु"रितिसूक्तं, "पवमानः सुवर्ज्जन"इत्यनुवाकः,[3] "चक्षिये"त्विति पञ्चभिः, नमकैश्चमकैश्च, "मृत्यो जहि मां जहि

(१) तत्पुत्रो वा इति क्वचित् पुस्तकपाठः।

(२) परं मृत्यो अनु ० नाम्। अनुपरेहि ० वीरान् इत्यन्वमिति ढ श्रीत पुस्तकपाठः।

(३) बहवचपीर्षे इयं इति अनुवाकः इत्यधिकः पाठः श्रीतकाशीपुस्तकयोर्दृष्टः।

यजमानं जहि यजमानं रक्ष मां रक्ष रक्ष स्वाहा" । "ब्रह्मघ्न राजघ्न-मारीघ्न मृत्यो मां जहि यजमानं जहि यजमानं रक्ष मां रक्ष गच्छ गच्छ स्वाहा" । "सर्व्वपापमय सर्व्वभूतमय सर्व्वघ्न श्रेयोघ्न मृत्यो मां जहि यजमानं जहि यजमानं रक्ष मां रक्ष गच्छ गच्छ स्वाहा" । "निशाचराणामधिप प्रेतराजन् महामृत्यो मां जहि यजमानं यजमानं रक्ष मां रक्ष गच्छ गच्छ स्वाहा" । "भूतप्रेत-ब्रह्मराक्षसशाकिनीडाकिन्यधिप महामृत्यो मां जहि यजमानं जहि यजमानं रक्ष मां रक्ष गच्छ गच्छ स्वाहा" ।

"भूम्यन्तरिक्षदिग्विदिग्महाकालरूप महामृत्यो मां जहि यजमानं जहि यजमानं रक्ष मां रक्ष गच्छ गच्छ स्वाहा" । "समुद्र गिरिवनयक्षतक्षमक्षाधिप महामृत्यो मां जहि यजमानं जहि यजमानं रक्ष मां रक्ष गच्छ गच्छ स्वाहा" ।

(1)( "सर्व्वान्तर्यामिन् सर्व्वसञ्चारिन् सर्व्वव्याधिमय महामृत्यो मां जहि यजमानं जहि मां रक्ष यजमानं रक्ष गच्छ गच्छ स्वाहा" ॥ )

इत्याथर्व्वणोक्ता मार्ज्जनमन्त्राः । एतैर्यजमानं मार्ज्जयेत् । "देवस्यत्वेति" मार्ज्जनशेषं समाप्य यजमानः पुनः स्नात्वा धौत-वस्त्रधरः शुचिर्नित्यकर्म्माणि निर्व्वर्त्य आचार्य्यं परितोषयेत् ।

"कांस्यं वह्निसमुद्भूतं सर्व्वदेवमयं च यत् ।
कांस्यदानेन महता मम पापं व्यपोहतु" ॥

इति कांस्यदानमन्त्रः ।

---

(1) अयं पाठः मीत काशीपुस्तकयो नोपलभ्यः ।

"तिलाः पापहरा नित्यं विष्णोर्देहसमुद्भवाः ।
तिलदानादशाच्च मे ¹तापं नाशय केशव" ॥

इति तिलदानमन्त्रः ।

कलशो ब्रह्म-दैवत्यः कलशे विष्णुराश्रितः ।
कलशः शङ्करः साक्षाद् अतः शान्तिं प्रयच्छ मे ॥

इति कलशदानमन्त्रः ।

दक्षिणाभिश्च बहुभिराचार्य्यं परितोषयेत् ।
( एवं प्रतिग्रहीता च जप्त्वा मृत्युं तरेत्ततः ॥ )²
अन्यथा मृत्युमाप्नोति पक्षे मासेऽपि वा द्विजः ।
ततः परं विप्रवाक्या ब्राह्मणान् भोजयेत्ततः ॥
प्रायश्चित्तं ततः ³कुर्य्यादिह लोके ⁴सुखाप्तये ।

इति हेमाद्रौ अपमृत्यूत्तरणमार्ज्जनविधिः ।

---

(१) पापं इति श्रीतपुस्तकपाठः ।
(२) इदमर्द्धं श्रीतपुस्तके नोपलभ्यम् ।
(३) ततः जप्त्वा इति श्रीत पुस्तकपाठः ।
(४) इह लोकसुखाप्तये श्रीत केचित्पुस्तकपाठः ।

# अथ पुनः संस्कार[1]विधिः ।

एको भागः परिषदि भागमेकं विधायकी ।
[2]अनुवादे भागमेकं शेषं जप्यादिषु न्यसेत् ॥
ततः परं विशुद्धोऽभूद् इह लोके परत्र च ।
ब्रह्मराक्षसनिर्व्वृत्तिं ज्ञात्वा यागादिकं सुधीः ॥
पुनः संस्कारविधिना चभ्यसेद्वेदमातरम् ।
ब्रह्मोपदेशं तत्रैव कुर्य्यादाचार्य्यवाक्यतः ॥
ततः परं जपेद्वेदमातरं प्रत्यहं सुधीः ।
प्रति ग्रहपरावेषु—विमुखोविष्णुमादरात् ॥
चिन्तयन् वर्त्तयन् विप्रः सुखीह च परत्र च ।
एवं कुर्य्याद्द्विजोयस्तु निष्कृतिं शुद्धमानसः ॥
तुलाप्रतिग्रहे राजन् शुद्धोभवति नाऽन्यथा ।
अकृत्वा निष्कृतीरेता एकां वाऽपि नरेश्वर ! ॥
सन्ध्यादिनित्यकर्म्माणि पितृकार्य्याणि[3] यानि च ।
न फलन्तीह सर्व्वाणि भस्मनि न्यस्तहव्यवत् ॥

---

(१) अथ पुन संस्कार इत्येव केचित पुस्तकपाठः ।
(२) भागाः परिषदि प्रोक्ता इति केचित पुस्तकपाठः ।
(३) पितृकर्म्माणि च इति क्रीतपुस्तकपाठः ।

पुनः संस्कारमात्रेण पुनरायान्ति तानि वै ।
अतः प्रतिग्रहीता तु आत्मदेहविशुद्धये ॥
कुर्य्यादै विरजाहोमं पञ्चगव्यमनन्तरमिति ।

इति हेमाद्रौ तुलादिप्रतिग्रहप्रायश्चित्तम् ।

---

## अथेदानीमाचार्य्यर्त्विजां पुनः संस्कारमाह ।

देवलः,—

तुलायां गो सहस्रे च लाङ्गले विश्वमण्डले ।
सप्तसागरदाने च चर्मधेनुप्रतिग्रहे ॥
महाभूतघटे चैव आचार्य्यो योभवेद्द्विजः ।
स सद्यः पतितोभूयात् पुनः संस्कारमर्हति ॥
तस्योपनयनं भूयो न कर्म्मार्होभवेदिह ॥

मत्स्यपुराणे,—

तेषूक्तेषु द्विजोयस्तु कर्म्मस्वाचार्य्यतां व्रजेत् ।
सन्ध्यादिनित्यकर्म्माणि तस्य नश्यन्त्यधो[1]गतेः ॥
[2]अथ प्रतिग्रहस्तेषु दानेष्वेतेष्वसत्क्रिया ।
तस्मिन् भवति राजेन्द्र दानमन्त्रोभिये यथा ॥

---

(१) अधोगता इति लेखित पुस्तकपाठः ।
(२) अथा इति लेखित पुस्तकपाठः ।

तस्योपनयनं भूयः सावित्रीदानमेव च ।
ब्रह्मोपदेशः कर्त्तव्योब्रह्मकर्मफलाप्तये ॥

सौपर्णे,—

एतेषूक्तेषु दानेषु आचार्य्यत्वं सकृद्‌द्विजः ।
करोति धनलोभेन तस्य सन्ध्यादिकाः क्रियाः ॥
न पुनन्ति पुनस्तस्य भस्मानि न्यस्तहव्यवत् ।
अधिकारोऽपि नाऽस्ति नित्यकर्मसु [1]तेषु वै ॥
सावित्रीपतितं विद्यात्रालपेत् तं कदाचन ।

ब्रह्माण्डे,—

[2]आचार्य्या ये भवन्त्येषु दानेषु द्विजवल्लभ ।
तेषां सन्ध्यादिकर्माणि गायत्रीजपएव च ॥
न फलन्ति द्विजास्ते[3] तु न कर्मार्हा भवन्त्यतः ।
पुनः संस्कारमात्रेण शुद्धिमायान्त्यनुत्तमाम् ॥

भविष्योत्तरे,—

तुलादिष्वेषु दानेषु प्रतिगृह्णाति चेद्‌द्विजः ।
तस्य सन्ध्यादिकर्माणि न फलन्ति द्विजव्मन: ॥
पैतृकादिषु राजेन्द्र नाधिकारोभवेदिह ।
अतस्तद्दोषयात्यर्थं पुनः संस्कारमर्हति ॥

---

(१) तेषु वै इति क्वचित् कोचित्पुस्तकपाठः ।
(२) आचार्याद्या इति क्वचित्पुस्तकपाठः ।
(३) द्विजस्तेषु न कर्मार्हो भवत्यतः इति क्वचित्पुस्तकपाठः ।

कौर्म्मे—

महत्स्वेतेषु दानेषु यदा यस्य प्रतिग्रहः।

तदा प्रभृत्यसौ विप्रः पतितोऽभून्न संशयः॥

सन्ध्यादिनित्यकर्म्माणि पितृकार्य्याणि यानि च।

तानि सर्व्वाणि विप्रेण न फलन्ति द्विजोत्तम॥

पत्नी वा तनयो भ्राता न स्पृशेत्तं कदाचन।

तस्माद्दोषापहारार्थं पुनः संस्कारमाचरेत्॥

नवलक्षजपादिषु विध्येकेन प्रायश्चित्तेन परिशुद्धोभूत्वा पश्चात् पुनः संस्कारं कुर्य्यात्। तदाऽऽह—

देवलः—

प्रायश्चित्तेन पूतात्मा नवलक्षजपादिना।

पुनः संस्कारमात्रेण शुद्धिमाप्नोति पूर्व्वजः॥

अधिकारो[1]भवेत् पश्चात् पैतृकादिषु कर्म्मसु।

तत्प्रकारमाह,—

नृसिंहपुराणे—

पटगर्भं समाहृत्य तत्र तं विनिवेशयेत्।

नूतनेनैव वस्त्रेण गर्भं कुर्य्यात् कुशूलवत्॥

तस्याधस्तात् कुलान् स्थाप्य तत्र पत्रं लिखेत्ततः।

[2]तत्रोपरि न्यसेद्विप्रं कर्त्तारं पापमुक्तये॥

---

(१) अभवेत् इति केषुचित्पुस्तकपाठः;

(२) पत्रोपरि इति कोतपुस्तकपाठः।

[1]पिधाय तेन वस्त्रेण तत्र ब्राह्मणमर्चयेत् ।
गन्धपुष्पाक्षतैर्धूपैर्दीपैर्नैवेद्यचन्दनैः ॥
पटं भित्त्वा ततः पश्चात् "हिरण्यगर्भ" इत्यृचा ।

लिङ्गपुराणे[2]—

पञ्चमे दशमे षष्ठे[3] पक्षे वाऽन्यदिनेऽपि वा ।
अभ्यर्च्य दम्पती स्नात्वा प्रातःकाले यथाविधि ॥
पुण्याहवाचनं कुर्य्याद्ब्राह्मण्याह्वानं ततः परम् ।
पूतेन मनसा राजन् द्रव्यलोभपराङ्मुखः ॥
स्वगृहे रहसि स्थाने पाषण्डजन[4]वर्ज्जिते ।
आचार्य्यं वरयेत्प्राज्ञमन्यगोत्रं कुटुम्बिनम् ॥
स्थविरं कर्म्मकुशलं द्रव्यलोभात्[5] पराङ्मुखम् ।

"ब्रह्मजज्ञान"मिति ब्रह्मपूजान्ते पूर्व्वमन्त्रेण गर्भं भिन्द्यात् । ततोऽनन्तरकर्त्तव्यम् । "दिवस्परी"त्यनुवाकं जपेदाचार्य्यएव । "अङ्गादङ्गा" दिति द्वाभ्यां अभिमन्त्रणं, मूर्द्धन्यवघ्राणं, दक्षिणकर्णे जपश्च । गर्भनिर्म्माणमन्त्रः "परिधास्य यशो धास्ये"ति मन्त्रेण पटवर्ज्जीं कुर्य्यात् । "यशसे मे द्यावापृथिवीति" मन्त्रेण गर्भे प्रवेशः । ततः पूजा कर्त्तव्या पूर्व्ववत् । "उद्धृतोऽसि शुभात् पूतो

(१) विधाय इति केचित्पुस्तकपाठः ।
(२) लैङ्गे इति क्वचित्पुस्तकपाठः ।
(३) दिवसे इति केचित्पुस्तकपाठः ।
(४) वर्जने इति केचित्पुस्तकपाठः ।
(५) द्रव्य लोभ पराङ्मुखं इति क्वचित्पुस्तकपाठः ।

भवसि गर्भात् पापात् पूतो भवसि" इति मन्त्रैः कर्त्तारं विमोच्य नूतने कांस्ये घृतं पूरयित्वा तत्रावलोकनं कारयित्वा, "अग्निर्येत्वेति" पञ्चभिः स्नापयित्वा, आचार्य्यः—स्वसमीपमुपवेश्य, लौकिकाग्निं प्रतिष्ठाप्य, अलङ्कृत्य, परिस्तीर्य्य, स्वगृह्योक्तविधिना आज्यभागान्तं कृत्वा, पाहित्रयोदशहोमं कुर्य्यात् । ततः कर्त्रान्वारब्धे तस्मिन्नेवाग्नौ पूर्व्ववत्परिस्तरणान्ते कृते, पिष्टाज्यसंमिश्रैस्तिलैर्विरजाहोमं कुर्य्यात्, ततश्चाचार्य्यः कर्त्तारमुदङ्मुखं कृत्वा ब्रह्मोपदेशमुपनयनवत् कुर्य्यात् । ततोयज्ञोपवीतं धारयित्वा आचार्य्योगायत्री मुपदिशेत्, तत उपनयनव्रतस्यौपासनाग्नेः सन्धानं । औपासनानन्तरं पञ्चगव्यविधिना पञ्चगव्यप्राशनं पत्नी[1]पुत्रेषु योज्यम् ।

ब्राह्मणान् भोजयेत् पश्चाद्यथा विभवपूर्व्वकम् ।
पश्चाद्भवति पूतात्मा इह लोके परत्र च ॥
नित्यकर्म्मसु [2]काम्येषु पितृकार्य्येषु सर्व्वदा ।
नास्तिक्याल्लोकसाहस्यादालस्याद्वा च्छलादपि ।
विसृजन् यः पुनःकर्म्म वर्त्तयेद्यदि मोहतः ।
दुःखी भवति पापात्मा[3] इह लोके परत्र सः ॥

---

(१) पतिपुत्रेषु इति केचित्पुस्तकपाठः ।
(२) कार्य्येषु इति केचित्पुस्तकपाठः ।
(३) पूतात्मा इति केचित्पुस्तकपाठः ।

राक्षसत्वं ब्रजेत्तत्र जलदानविवर्ज्जितम्[1] ।
पुनं संस्कारकृत्यस्माच्छुद्धोभवति तत्क्षणात्[2] ॥
वेदशास्त्रं पुराणानि प्रमाणं ब्रह्मकर्म्मणि ।
कलौयुगे विशेषेण प्रायश्चित्तं विशुद्धिदम् ॥
प्रायश्चित्तेन पूतात्मा तरेल्लोकद्वयं मुदा ।
आचार्य्यऋत्विजः परिक्रम्य प्रणिपत्य क्षमापयेत् ॥
दद्याद्द्रव्याणि सर्व्वाणि आचार्य्याय सुधीमते ।

इति हेमाद्रौ तुलादिप्रतिग्रहीतृणां आचार्य्यादीनां
पुनः संस्कारविधिः ।

---

## अथ पशुपुरोडाशभक्षणे प्रायश्चित्तमाह ।

देवीपुराणे,—

यज्ञेषु साधुवृत्तेषु धर्म्मार्ज्जितधनेषु[3] च ।
तत्रैव क्षपयेन्मेध्यं पशुं हव्यर्थमादरात् ॥

---

(१) विवर्ज्जितं इति केचित्पुस्तकपाठः ।
(२) भवति चोभने इति क्कोतपुस्तकपाठ ।
(३) धर्म्मार्ज्जन धनेषु च इति क्कोतकेचित्पुस्तकपाठः ।

ब्राह्मणो[1] ब्रह्मवित्पूतं पद्यं यद्यभिचारयेत्।
तस्यैव निष्कृतिर्भूयोवेदपारायणं स्मृतम्॥

एतदबहुवारविषयम्। अन्यत्र[2] भक्षणे त्रिगुणं, शूद्रद्रव्यग्रहण-पूर्व्वकयज्ञेषु पशुभक्षणे पञ्चगव्यं पुनः संस्कारश्च।

तदेवाह—

कूर्म्मपुराणे—

स्वयम्भुक्तयज्ञेषु प्राप्तं यत्पशुभक्षणम्।
पारायणं विशुद्धिः स्याद् अन्यत्र त्रिगुणं[3] भवेत्॥
अग्नीषोमीये तु त्रैगुण्यं शूद्रे पञ्चगुणं भवेत्।
पुनः संस्कारतः पूतः शुद्धोभवति सर्व्वदा॥

तत्प्रतिग्रहे दोषमाह,—

लिङ्गपुराणे,—

पशुं भक्षयतीयस्तु द्विजः स्यात् क्षतनिष्कृतिः।
प्रतिगृह्य सुवर्णं वा ज्ञात्वाऽर्थं सम्परित्यजेत्[4]॥
अज्ञात्वा कृच्छ्रमात्रेण ज्ञानेनैव द्वयं स्मृतम्।
अन्नभुक् पञ्चगव्येन शुद्धिमाप्नोति पूर्व्वजः॥

अल्पसुवर्णप्रतिग्रहे द्विगुणं अन्नभक्षणे पञ्चगव्यात् शुद्धिः।

इति हेमाद्रौ शूद्रप्रतिग्रहीतुर्यज्ञे पशुपुरोडाशभोक्तुः प्रायश्चित्तम्।

---

(१) ब्राह्मणे इति श्रौतपुस्तकपाठः।

(२) अन्यच्च इति श्रौतवाणीपुस्तकपाठः।

(३) द्विगुणं इति श्रौतवैचित्रपुस्तकपाठः।

(४) संपरिपद्वेत् इति वैचित्रपुस्तकपाठः।

वाणिज्ये चस्वाष्टमं भागं अवेविंशतिमं तथा ।
प्रतिग्रहे चतुर्थांशं दत्त्वा पापैर्न लिप्यते ॥

स्कान्दे,—

प्रतिगृह्य तु ग्रामादि नवलक्षं जपेद्बुधः ।
व्ययं कृत्वा च तुर्यांशं यज्ञं सर्व्वस्वदक्षिणम् ॥

---

## अथेदानीं तुलादिप्रतिग्रहीतॄणां नदीस्नानरूप-प्रायश्चित्तम् ।

स्कन्दपुराणे,—

हंसद्वारं[1] च केदारं नरनारायणं तथा ।
कौरवं चम्पकारण्यं ततोवाराणसीपुरम् ॥
प्रयागः पुष्करं चैव गङ्गासागरसङ्गमः ।
जगन्नाथश्च सिंहाद्रिर्द्राक्षारामेश्वरं[2] तथा ॥
मार्कण्डेयं शोभनाद्रिः जये वाऽपि हि मध्यमे[3] ।
ततः परं धर्मपुरी नृसिंहोयत्र तिष्ठति ॥

---

(१) हरिद्वारं इति क्रीतपुस्तकपाठः ।
(२) भागरामेश्वरं तथा इति क्रीतपुस्तकपाठः ।
(३) जये वापि अङ्कत्यपि इति काशीपुस्तकपाठः ।

ततः सप्तनदीसंज्ञः श्रीशैलः पुण्यपर्व्वतः ।
अहोबलं महाक्षेत्रं वेङ्कनाथमतः परम् ॥
वेङ्कटाद्रिः कालहस्ती[1] काञ्चीक्षेत्रं ततः परम् ।
अरुणाचलं महाक्षेत्रं महाक्षेत्रं चिदम्बरम्[2] ॥
कमलालयं महाक्षेत्रं [3]मधुराऽऽग्नेयभागगः ।
रामेश्वरं महाक्षेत्रं जनार्द्दनमतः परम् ॥
अनन्तशयनं गोकर्णं सुब्रह्मण्यं महत्तरम् ।
पम्पाक्षेत्रमिति प्रोक्तं पुण्यक्षेत्रं यथाक्रमम् ॥

एतानि क्षेत्राणि स्वयम्भूनि[4] ।

अथ पुण्यनद्यः,—

गङ्गा सरस्वती चैव यमुना फाल्गुनी तथा ।
गण्डकी शोणभद्रा च नर्म्मदा गौतमी तथा ॥
मलापहारी भीमरथी कृष्णा वेणी तथैव च ।
तुङ्गभद्रा तथैवाख्या नदी च भवनाशिनी ॥
पिनाकिनी च कावेरी ताम्रपर्णी महानदी ।
पयोष्णी चञ्चुला चैव तथा वेगवती नदी ॥
एताः पुण्यतमा नद्यः स्मरणात् पापनाशिकाः[5] ।

---

(१) कालहस्तिं इति लेखितपुस्तकपाठः ।
(२) चिदम्बरं इति लेखितपुस्तकपाठः ।
(३) मधुराग्नेय भागश्च इति क्रीतपुस्तकपाठः ।
(४) स्वयं भुवि इति क्रीतपुस्तकपाठः ।
(५) पाप नाशिनीः इति क्रीतलेखितपुस्तकपाठः ।

एता महानद्यः ।

अयोध्या मथुरा माया काशी काञ्ची अवन्तिका ।
पुरी द्वारवती चैव सप्तैता पुण्यवर्द्धिका:[१] ।
तीर्थेष्वेतेषु राजेन्द्र नदीष्वेतासु पूर्व्वज: ॥
परित्यज्य तुलादीनि राज्ञ: पापपरायणात् ।
प्रायश्चित्तेन पूतात्मा पुन: संस्कारपूर्व्वकम् ॥
गङ्गायां मौषलस्नानै: षण्मासाच्छुद्धिमाप्नुयात् ।
रेवायां तु तथा स्नात्वा शुद्धिमाप्नोति दैहिकीम् ॥
वर्षेण वै सरस्वत्यां प्रत्यहं विधिपूर्व्वकम् ।
स्नानैस्त्रिषवणै:[२] सम्यक् शुद्धिमाप्नोति पूर्व्वज: ॥
फाल्गुन्यां प्रातरारभ्य वर्षार्द्धं स्नानमाचरन् ।
तत्रापि त्रिषवणमित्यर्थ: ।
पूर्व्ववच्छुद्धिमाप्नोति दानेष्वेतेषु संयमी[३] ।
प्रातरारभ्य गण्डक्यामामासार्यं स्नानमाचरन् ॥
वर्षद्वयेन पूतात्मा उभयोर्लोकयो: शुचि: ।
तथैव शोणभद्रायां पूर्व्वज: शुद्धिमाप्नुयात् ॥
गौतम्यां नियमै: स्नात्वा नित्यकर्म्मपरायण: ।
विंशत्या मौषलस्नानैरब्दमात्रेण शुध्यति ॥

---

(१) पुण्यवर्द्धिनी: इति मोतवेष्टितपुस्तकपाठः ।

(२) त्रिषवणै: इति मोतपुस्तकपाठः ।

(३) व्रजम् इति वेष्टितपाठः । संयतात् इति मोतपुस्तकपाठः ।

स्नानेनैतापहारिण्यां विंशत्याऽनुदिनं द्विजः ।
षण्मासेन तथाऽपि शुद्धिमाप्नोति पौर्व्विकीम् ॥
भीमरथ्यां महानद्यां षड्रात्रौ जितेन्द्रियः ।
जानुदघ्नजले स्थित्वा जपेन्मन्त्रं त्रियम्बकम् ॥
सहस्रं पूर्णतां याति यदा तावद्विरम्य तु ।
एवं मासत्रयं कृत्वा शुद्धिमाप्नोति वैदिकीम् ॥
कृष्णवेण्यां महानद्यामेकादश्यामिनोदये ।
स्नात्वा नित्यं समाप्याऽथ नाभिदघ्नजले वसन् ॥
"नमो नारायणाये"ति जपेत् प्रणवपूर्व्वकम् ।
माध्याह्निकं ततः कृत्वा ब्रह्मयज्ञञ्च तर्पणम् ॥
कृत्वा ततः पुनर्जप्ता सायंकाले विरम्य च ।
अप्रतप्तं तदा कृत्वा पुनरेकादशेऽहनि[1] ।
तथैव पूर्व्ववत् कृष्णे कृत्वा शुक्ले तथैव च ॥
वर्षमात्रेण पूतात्मा तरेल्लोकद्वयं[2] मुदा ॥
तथैव तुङ्गभद्रायां कृत्वा शुद्धिमवाप्नुयात् ।
जपेद्धोबले वेणे कुण्डे वा राजसंस्थिते ॥
तथैव भवनाशिन्यां जानुदघ्नजले वसन् ।
जपेन्नृसिंहगायत्रीं मासमेकं निरन्तरम् ॥

---

(१) पुनरेकादशो व्रतः । इति केंचित्पुस्तकपाठः ।
(२) लोक त्रयं इति क्वचित्पुस्तकपाठः ।

ततः शुद्धिमवाप्नोति न प्रतिग्रह[1]दोषभाक् ।
पिनाकिनीनदीतीरे प्रतिगृह्य तुलादिकम् ॥
जपेत् पञ्चाक्षरं मन्त्रं शिवं पापहरं परम् ।
स्नात्वा प्रातः शुचिर्भूत्वा त्रिसहस्रं दिने दिने ॥
मासत्रयेण शुद्धः[2] स्यात् तुलादीनां प्रतिग्रहे ।
अखण्डायां तु कावेर्यां प्रातः स्नात्वा यथाविधि ॥
नित्यकर्म समाप्याऽऽशु कण्ठदघ्नजले वसन् ।
जपेच्च पौरुषं सूक्तमष्टोत्तरशतं[3] क्रमात् ॥
यावत् समाप्तिर्भवति तदा मौनं परित्यजेत् ।
एवं कुर्यात् प्रतिदिनं शुद्धोऽभूदृतुमात्रतः ॥
ताम्रपर्णीनदीतोये अवगाह्य दिनत्रयम् ।
त्रियम्बकं जपेन्नित्यं संख्यां मनसि धारयेत् ॥
दिनत्रये तु पूर्णेऽस्मिन् निर्विघ्नेन नराधिप ! ।
पूतो भवति विप्रोऽसौ तुलादीनां प्रतिग्रहात् ॥
धनुःकोट्यां तुलादीनां गृहीत्वा धनलोभतः ।
स्नात्वा मध्याह्नवेलायां गत्वा रामेश्वरालये ॥
औपासनाग्नौ जुहुयात् विरजाहोममादितः ।
अधःशायी[4] भवेन्नित्यं मासमेकं निरन्तरम् ॥

---

(१) प्रतिग्रहे दोषभाक् इति केचित्पुस्तकपाठः ।
(२) शुद्धिः स्यादिति केचित्पुस्तकपाठः ।
(३) अष्टायतनसुक्रमात् इति कोतकेचित्पुस्तकपाठः ।
(४) अधःशय्या इति कोतकेचित्पुस्तकपाठः ।

दुग्धाहारः फलाहारोऽनयोरेकं समाचरेत् ।

एवं मासत्रयं कुर्य्यात् तस्माद्दोषात् प्रमुच्यते ॥

एतन्नदीव्रतं यागादिकर्म्मकर्त्तॄणां पूर्व्वोक्तनिमित्तैः अपूतस्य, पूतस्य तु नदीस्नानादिकर्म्मकरणे शरीरक्लेशएव, तदाह —

मनुः —

तुलादिसंग्रहीतॄणां पूर्व्वं शुद्धिमनिच्छताम् ।

पुनः संस्कारभीतानां[1] नदीस्नानमुदीरितम् ॥

प्रायश्चित्तैर्विशुद्धानां पूर्व्वं शुद्धिमतां सताम् ।

पुनः संस्कारपूतानां नदीस्नानं निरर्थकम् ॥

निरर्थकं नदीस्नानादिकमित्यर्थः ।

इति हेमाद्रौ तुलादिप्रतिग्रहीतॄणां नदीस्नानरूप-
प्रायश्चित्तम् ।

---

## अथ तुलादिप्रतिग्रहीतॄणां प्रायश्चित्तविशेषम्[2]माह ।

महानारदीये,—

तुलायां गोसहस्रे च लाङ्गले विश्वमण्डले ।

सागरे चर्म्मणोधेनौ महाभूतघटे नृप ॥

---

(१) पुनः संस्कार क्षोभीनां इति इति मोतपुस्तकपाठः ।

(२) विशेषेतिपदम् मोतवेंषितपुस्तकयोर्नोपलभ्यम् ।

तिलगर्भे कालचक्रे कोटिहोमे[1] जनाधिप ! ।
आचार्य्या ये भवन्त्यत्र ते सर्व्वे दोषगामिनः[2] ॥

लिङ्गपुराणे,—

आत्मतुल्यसुवर्णेन गोसहस्रे च लाङ्गले ।
महोदधिषु भूताख्ये घटे धेनौ[3]च चर्म्मणाम् ॥
कोटिहोमे कालचक्रे तिलगर्भे तिलाचले ।
कार्पासपर्व्वते राजन् तथा लवणपर्व्वते ॥
आर्द्र[4]कार्ष्णाजिने ये च प्रमुख्याः[5] सुद्विजोत्तमाः ।
तेषामेवानुकम्पार्थमिदमाह प्रजापतिः ॥
प्रायश्चित्तं विशुद्ध्यर्थमिह लोके परत्र च ।

कूर्म्मपुराणे,—

आर्द्रकृष्णाजिने कालचक्रे लवणपर्व्वते ।
कार्पासपर्व्वते कोटिहोमे गर्भे तिलाह्वये ॥
गोसहस्रे तुलायाञ्च लाङ्गले विश्वमण्डले ।
सागरे चर्म्मधेनौ च महाभूतघटे तथा ॥

---

(१) कोटिहोमं इति केचित्पुस्तकपाठः ।
(२) सर्व्वे निरयगामिनः इति कोतपुस्तकपाठः ।
(३) धेनोश्च इति कोतपुस्तकपाठः ।
(४) कृष्णाजिने इति कोतपुस्तकपाठः ।
(५) मनुष्या इति केचित्पुस्तकपाठः ।

आचार्य्यत्वं यदि प्राप्तं दानानां पुत्त्रसत्तम।
आचार्यो [1]यो भवेद्विप्रस्तस्य निष्कृतिरुच्यते॥

आचार्य्य इति वाक्यं आर्द्रकृष्णाजिनादिग्रहीतृणाम् तुला-गोसहस्रप्रतिग्रहीतुराचार्य्यस्य ब्रह्मसदस्यर्त्विजाञ्चोपलक्षणम्—

तदाह,—

वशिष्ठसंहितायां,—

आत्मतुल्यसुवर्णस्य गोसहस्रस्य च संग्रहे।
आचार्य्यप्रभृतीनाञ्च ऋत्विजां पापनाशनम्॥
प्रायश्चित्तमिदं प्रोक्तं देहशुद्ध्यर्थमादरात्।

इतरदानेषु समव्यतिरिक्तेषु हिरण्यगर्भादिषु आचार्य्याणामेव नेतरेषाम्। तदाह—

नारदः,—

पूर्व्वमुक्तेषु दानेषु तुलागोलाङ्गलादिषु।
आचार्य्याणाञ्च सर्व्वेषां प्रायश्चित्तं विशोधनम्॥

(एतद्व्यतिरिक्तहिरण्यगर्भादिषु आचार्य्याणामेव नेतरेषां)

हिरण्यगर्भसंहितायाम्—

आर्द्रकृष्णाजिने राम कोटिहोमे तिलाचले।
कार्पासपर्व्वते काल-चक्रे लवणपर्व्वते॥

---

(१) यदि व इति श्रीतवेष्टितपुस्तकपाठः।
( ) अयं पाठः वेष्टितपुस्तके नास्ति।

तिलगर्भं च गृह्णीयात्[1] समस्तेतेषु योद्विजः।
तस्यैव[2] निष्कृतिरियं कथिता मुनिपुङ्गवैः॥
पूर्व्वोक्तानां तुलादीनां दानानां ये द्विजोत्तमाः।
आचार्य्यास्त्वृत्विजोभूप तेषामेवेह निष्कृतिः॥

तत्प्रकारमाह[3]—

देवलः—

तदानीं वा परेद्युर्वा पञ्चमे वाऽथसप्तमे।
यस्मिन् कस्मिन् दिने वाऽपि मनसा परिशुद्धिमान्॥
गन्धाक्षतान् पञ्चगव्यं ताम्बूलानि कुशानपि[4]।
ब्राह्मणान् वेदसम्पन्नान् आमन्त्र्य सरितस्तटे[5]॥
गत्वा सर्व्वैः समालोच्य बन्धुभिः सह पार्थिव।
तैरनुज्ञामवाप्याऽथ प्रणिपत्य यथाक्रमम्॥
द्रव्यलुब्धतया[6] विप्राः मयाऽकारि प्रतिग्रहः।
यागादिकरणेऽयत्नस्तत्क्षन्तव्यं द्विजोत्तमाः॥

---

(१) राजेन्द्र इति क्रीतलेखितपुस्तकपाठः।

(२) तस्योपनिष्कृतिः इति क्रीतपुस्तकपाठः।

(३) तत्प्रकारमथाह इति क्रीतपुस्तकपाठः।

(४) कुशानि च इति क्रीत-पुस्तकपाठः।

(५) आनयित्वा नदीतटं इति लेखित-पुस्तकपाठः आनाययित्वा नदीतटं इति क्रीतपुस्तकपाठः।

(६) लोभतया इति क्रीतलेखितपुस्तकपाठः।

इति मत्वा व्रजेत्तीर्थं प्रार्थयित्वा समापयेत्।
मलापकर्षणं कृत्वा नित्यकर्म्म समाप्य च ॥
पुण्याहिकं ततो हुत्वा दर्भपाणिर्जितेन्द्रियः।
चतुर्विंशति[1]कान् विप्रान् वेदशास्त्रपरिष्कृतान् ॥
अष्टादश द्वादश वा पर्षद्यें[2] नियोजयेत्।
स्थापयित्वा ततः सम्यक् परिषद्विधिपूर्व्वकम् ॥
उपविश्य शुचौ देशे तदग्रे प्राङ्मुखः शुचिः।
पूर्णेन मनसा युक्तः प्राणायामत्रयं चरेत् ॥
पुण्याहवाचनं कुर्य्यात् तेन तोयेन मार्ज्जयेत्।
नान्द्याद्धानं[3] ततः कुर्य्यात् केचिदिच्छन्ति पार्थिव ॥
प्राणानायम्य विधिवद्देशकालौ च कीर्त्तयेत्।
निमित्तं कीर्त्तयेद्विद्वान् यस्मिन् क्षेत्रे यदा तिथौ ॥
यस्य राज्ञः समुत्पन्नं पापमेतत् परिग्रहात्।
तन्नोमनाम नक्षत्रराशिपूर्व्वं समुच्चरेत् ॥
तत्तद्गोत्रं समस्तं दानमन्त्रं प्रकीर्त्तयेत्।
प्रायश्चित्तमहं कुर्व्वे धर्म्मशास्त्रानुसारतः ॥
इति सङ्कल्प्य विधिवद् गन्धपुष्पाक्षतैर्मुदा।
अभ्यर्च्य पर्षदं[4] सम्यक् नारायणमनुस्मरन् ॥

---

(१) चतुर्विंशति वा इति श्रीतवेङ्कितपुस्तकपाठः।
(२) परिषद्यें इति श्रीतवेङ्कितपुस्तकपाठः।
(३) नद्याद्धानं इति श्रीतपुस्तकपाठः।
(४) परिषदं इति श्रीतवेङ्कितपुस्तकपाठः।

तदष्टमांशद्रव्यस्य चतुर्भागस्य वाप्यतः ।
भागमेकं ततो बद्धा वस्त्रेऽक्षतपूर्व्वकम् ॥
समस्तसम्पदित्याद्यैर्वाक्यैः पौराणिकैः पठन् ।
त्रिः परिक्रम्य यत्नेन प्रणम्योत्थाय दण्डवत् ॥
तदग्रे दक्षिणां स्थाप्य ततो विज्ञापयेत् सुधीः ।

येन दोषः [1]समुत्पन्नः तन्निमित्तम् । तन्निरासार्थं प्रायश्चित्तं करिष्ये इति विज्ञाप्य तदग्रे स्थातव्यम ।

सभा तु तत् समाकर्ण्य तेन विज्ञापितं वचः ।
नत्वा विप्रान् सप्त पञ्च त्रयं वा विदुषां मुदा ॥
पूर्व्वोक्तदक्षिणां दत्वा प्रेषयेदनुवादकम् ।
प्रेषयन्निति तानुक्त्वा स्मरेन्नारायणं विभुम् ।
तन्नैकं विदुषां शान्तमनुवादार्थमादरात् ॥
दक्षिणां बहुशो दत्त्वा प्रेषयेयुर्द्विजोत्तमाः ।
सोऽपि स्नात्वा दर्भपाणिः कर्त्तारमनुबोधयेत् ॥
तच्छोधनामनघचमनूद्यार्य्योपदेशयेत् ।
तत्सर्व्वमनुवादाच्च श्रुत्वा वाक्यं समाचरेत् ॥
हिरण्यदानरूपेण प्रायश्चित्तं विशोधनम् ।
प्राणाङ्गवपनं कृत्वा दन्तधावनपूर्व्वकम् ॥
स्नानं कृत्वा पञ्चगव्यैस्तत्तन्मन्त्रैः पृथक् पृथक् ।
गोदानञ्च ततः कुर्य्यात् प्राणाङ्ग[2]परिपुष्टये ॥

---

(१) दोषं समुत्पन्नं इति कौतकेचित्पुस्तकपाठः ।
(२) परिशुद्धये इति कौतकेचित्पुस्तकपाठः ।

उदीच्याङ्गानि सर्व्वाणि शालाहोमं ततः परम्।
नान्दीश्राद्धं वैष्णवाख्यं पञ्चगव्यमनुत्तमम्॥
शालाहोमं ततः कुर्य्यादुत्तराख्यं विचक्षणः।
पुनर्गोदानकृत्कर्त्ता दशदानमनुक्रमात्॥
भूरिदानं ततः कृत्वा ब्राह्मणान् भोजयेत्सुधीः।
एवं कृते द्विजोनित्यं मुक्तोदोषात् परिग्रहात्॥
अन्यथा दोषमाप्नोति दुःखी स्याज्जन्मजन्मनि।

---

## अथ प्रायश्चित्तप्रकारः।

आदौ मलापकर्षणं स्नानं, ततः परिषन्मेलनं, अष्टाविंशतिरष्टादश द्वादश वा विप्रा विद्वांसः परिषदर्थे नियोक्तव्याः, ततः परिषदश्चैवं कर्त्तव्यं, परिषदभ्यर्च्चनं सङ्कल्पितद्रव्यं वस्त्रान्तरे बद्ध्वा दर्भपाणिर्मुकुलितहस्तः "समस्तं सम्य"दितिमन्त्रमनुस्मरन् परिषदं त्रिः प्रदक्षिणीकृत्य, दण्डवत्प्रणम्य, दक्षिणां परिषदग्रे निधाय, मुकुलितपाणिः सन्—हे परिषत् मदीयां विज्ञापनां अवधार्य्य, मया समर्पितामिमां सौवर्णां दक्षिणामल्पीयसीमपि यथोक्तदक्षिणात्वेन स्वीकृत्य, काश्यपगोत्रममुकराशौजातममुकशाखाध्यायिनममुक नामधेयं मामुद्धर, इत्युक्त्वा पुनः प्रणम्य उत्थाय मुकुलितकरः सन्—हे परिषत् पूर्व्वेद्युर्यस्मिन् कस्मिन् दिने वा अमुकनदीतीरे अमुक देवसन्निधौ अमुकपुण्यकाले अमुकगोत्रेण अमुकनक्षत्रे अमुकराशौ

जातेन अमुकनामधेयेन धर्म्मवर्त्तिना राज्ञा विप्रेण वैश्येन वा कृतेषु तुलादिमहादानेषु काश्यपगोत्रस्य अमुकनक्षत्रे अमुकराशौ जातस्य अमुकशाखाध्यायिनो ऽमुकनामधेयस्य मम दैवात् प्रतिग्रहः प्राप्तः, तस्माद् ब्रह्मराक्षसत्वभयनिवृत्तिद्वारा तुलादिदानेषु प्रतिग्रहात् स्नानसन्ध्यादिनित्यकर्म्मभ्रंशरूपतद्दोषपरिहारद्वारा च उत्तरत्रसन्ध्यादिनित्यकर्म्मानुष्ठानाधिकारसिद्ध्यर्थं युष्मदनुज्ञया प्रतिग्रहलब्धस्य धनस्य चतुर्थभागेन धर्म्मशास्त्रोक्तविधिना प्रायश्चित्तं करिष्ये—इति सङ्कल्प्य, पुनः प्रणम्य उत्थाय तदग्रे मुकुलितपाणिः सन् तिष्ठेत्, पूर्व्वसङ्कल्पस्यैवमेव। अग्रेषैषा परिषच्चेत्तदा विचार्य्य सप्त पञ्च त्रीन् वा विदुषोविप्रान् परिवद्दक्षिणासमदक्षिणया तोषयित्वा "हे विद्वांसः यूयं सम्यग्विचार्य्य अमुकगोत्रेणाऽमुकनक्षत्रे अमुकराशौ जातेन अमुकशाखाध्यायिना अमुकनामधेयेन युष्मत्सविधौ विज्ञापितस्य तुलादिषोडशमहादानेषु मध्ये यस्य कस्यचित् प्रतिग्रहात् यत्पापमुत्पन्नं तेन तत्प्रतिग्रहात् प्रभृत्येतत्क्षणपर्य्यन्तं सन्ध्यादिनित्यकर्म्माणि भ्रंशितानि तत्पापापनोदनं प्रायश्चित्तं धर्म्मशास्त्रेषु निश्चित्य पुण्यप्रत्याम्नायरूपेण समुपदिशतैकं तत्पापोद्धारणदक्षं प्रेषयत च" इति। ततः परिषत् प्रेषयेत् विधायकम्।

---

# अथ विधायकवाक्यम्।

सर्व्वे स्नातवन्तः—एवं विपश्चितं अर्थधारणोच्चारणदक्षं स्वदक्षिणात्तुल्यदक्षिणया सम्भाव्य ब्रूयुः "भो अनुवादक इत आगच्छ इमां दक्षिणां स्वीकृत्य अमुकनदीतीरे अमुकदेवसन्निधौ अमुकपुण्यदिवसे अमुकगोत्रस्य अमुकनक्षत्रस्य अमुकराशौ जातस्य अमुकशाखाध्यायिनोऽमुकनामधेयस्य एतस्य पूर्व्वेद्युः यस्मिन् कस्मिन् दिने वा तुलादिषोड़शमहादानेषु मध्ये यस्य प्रतिग्रहात् यत्पापमुत्पन्नं तेन तत्तत्प्रतिग्रहात् एतस्य उपनयनप्रभृत्येतत्क्षणपर्य्यन्तं सन्ध्यादिनित्यकर्म्माणि भ्रंशितानि तत्तत्पापनोदनं प्रायश्चित्तं धर्म्मशास्त्रेण निश्चित्य परिषन्निर्णीतं शब्दप्रत्याम्नायरूपेणाऽस्य उपदिशेत्येवं अनुवादकवाक्यम्। स तु सचेलं स्नात्वा दर्भपाणिः सन् कर्त्तारमधिकृत्य उत्तानपाणिः सन् "हे काश्यपगोत्र अमुकनक्षत्रे अमुकराशौ जात अमुकशाखाध्यायिन् अमुकनामधेय त्वया परिषत्सन्निधौ विज्ञापितस्य पापस्य अपनोदनमस्मिन् निर्णीतं सर्व्वप्रायश्चित्तं प्राच्योदीच्याङ्गसहितं पूर्व्वोत्तरशालाहोमानुगतं वैष्णवादीनां श्राद्धसहितं एकमखण्डं शब्दप्रत्याम्नायरूपेणोपदिशति, विधायकमुखेनाशेषपरिषन्मां प्रेषितवती च, अहमपि उपदिशामि, सावधानः समाकर्णय, काश्यपगोत्रामुकनक्षत्रे अमुकराशौजात अमुकशाखाध्यायिन् अमुकनामधेय तवाऽमुकनदीतीरे अमुकदेवसन्निधौ अमुकपुण्यदिवसे अमुकगोत्रेण अमुकनक्षत्रे अमुकराशौ जातेन

अमुकनामधेयेन स्वधर्म्मवर्त्तिना राज्ञा कृतेषु तुलादिषोड़शमहादानेषु मध्ये यस्य दानस्य प्रतिग्रहात् यदुयत्पापमुत्पन्नं तेन हतः पूर्व्वं त्वया चरितनित्यकर्म्मणां फलमपि भंशितं, इतःपरं सन्ध्यादिनित्यकर्म्मानुष्ठानाधिकारसिद्ध्यर्थं एतत्पापनोदनं प्राजापत्यकृच्छ्ररूपमस्ट्ं प्रतिकृत्य-विप्रेभ्यः प्रतिग्रहश्चेत् षड़्गुणितं प्राजापत्यकृच्छ्रात्मकं विशोधनं भवति, क्षत्रियेभ्यो द्विगुणं विशोधनं वणिग्भ्यश्चेत् त्रिगुणितं शूद्रेभ्यश्चेत् षड़्गुणितषड़ब्दं प्राजापत्यकृच्छ्रात्मकं विशोधनं भवति। राज्ञां हत्यादिदोषबाहुल्यात् तत्प्रतिग्रहे अशीत्यधिकसहस्रप्राजापत्यकृच्छ्रप्रत्याम्नायात्मकसर्व्वप्रायश्चित्तं प्रायोदीच्याङ्गसहितं पूर्व्वोत्तरशालाहोमवैष्णवनान्दीश्राद्धपञ्चगव्यानुसङ्गतं सर्व्वप्रायश्चित्तं, साचाश्चर्य्यां शक्तश्चेदाचारपूतो भव, साचाश्चर्य्यायामशक्तश्चेत्प्रत्याम्नायानाचर धेनुदानसमुद्रगामिनदीस्नानसंहितामाश्चवेदपारायणायुतगायत्रीजपद्विशतप्राणायामसृत्युञ्जयमन्त्रसहित-सहस्रतिलहोम- द्वादशब्राह्मणभोजनानि प्रत्याम्नायाः एतैः प्रत्याम्नायरूपैरस्मिन् सर्व्वप्रायश्चित्ते काश्यपगोत्रेण अमुकनक्षत्रे अमुकराशौ जातेन अमुकशाखाध्यायिना-ऽमुकनामधेयेन त्वया सम्पूर्णमनुष्ठिते सति काश्यपगोत्रः अमुकनक्षत्रेऽमुकराशौ जातोऽमुकशाखाध्यायी अमुकनामधेयोऽसौ (जातोऽमुकामुकशाखाध्यायी अमुकनामधेयोऽसौ,) अमुकनदीतीरे अमुकदेवसन्निधौ अमुकपुण्यदिने अमुकनक्षत्रेऽमुकराशौ जातेन अमुकनामधेयेन स्वधर्म्मवर्त्तिना राज्ञा कृतेषु तुलादिषोड़शमहादानेषु यस्य दानस्य प्रतिग्रहात् ब्रह्मराक्षसत्वमवश्यम्भावि, तस्मा-

द्दिनः पूर्व्वं सन्ध्यादिनित्यकर्म्मालोपात् सर्व्वेभ्यः पापेभ्यश्च मुक्तो भूयादित्यनुवादकस्तैर्वदेत्। परिषद्एकवाक्येन तथास्त्विति वदेत्, अनुवादकोऽपि आन्ध्रभाषया पुनर्वदेत्, परिषत् अपि तथाऽस्त्विति पुनर्वदेत्। तस्माद्देशादपक्रम्य शुद्धाचमनं कृत्वा कृच्छ्राणि अब्दप्रत्याम्नायरूपेण स्वयं वा ब्राह्मणैर्वा कारयित्वा, प्रायश्चित्ताङ्ग-भूतानि दन्तधावनपवमानगोमूत्रगोमयक्षीरदधिसर्पिर्भिस्तत्तन्मन्त्रैः पृथक् पृथक् स्नात्वा, प्रायश्चित्तं गोदानं कृत्वा, प्रायश्चित्ताङ्गभूतं पूर्व्वशालाहोमं कृत्वा वैष्णवनान्दीश्राद्धं कुर्य्यात्। अनन्तरं ब्रह्मकूर्चविधिना पञ्चगव्यं पीत्वा तदङ्गदशदानानि कुर्य्यात्। उदीच्याङ्गं उत्तरशालाहोमं कृत्वा ब्राह्मणान् भोजयेत्। अनन्तरं पुनःसंस्कार-विधिना पुनः संस्कारं कृत्वा पूतो भवेत्। उभयोर्लोकयोर्व्यवहार-क्षमो भवेत्। एवं कोटिहोमाचार्य्यादीनां प्रायश्चित्तं। कालचक्र-तिलगर्भप्रतिग्रहीतॄणां अपि एवं प्रायश्चित्तम्। नाऽन्यथा शुद्धो भवति।

तदाह—

गौतमः—

यथा चर्म्ममयोवस्तो यथा दारुमयो [1]मृगः।
तथा निष्कृतिहीनोऽसौ द्विजोलोकविगर्हितः॥
यागादिकमकृत्वा तु प्रायश्चित्तपराङ्मुखः।
अपवित्रः सदा भूयाद् अनर्हः सर्व्वकर्म्मसु॥

---

(१) मत इति लेखितपुस्तकपाठः।

योवा कोवा द्विजोलोके विप्रस्वाऽऽर्त्तनिष्कृतिः ।
स्वरी यदिह भुञ्जीयाद् गोमांसाशी निगद्यते ॥
द्विजस्वाऽऽर्त्तचित्तस्य गृहे नित्यं समाश्रिताः ।
यातयक्षाः पिशाचाश्च श्मशानसदृशं गृहम् ॥
पितरोनाऽत्र भुञ्जन्ति तदेव ऋषिपुङ्गवाः ।
न विष्णुः पृथिवी गावः प्रपश्यन्त नराधमम् ॥
इति ।

इति हेमाद्रौ तुलादिदानेषु प्रतिग्रहीतॄणां
आचार्य्यादीनां प्रायश्चित्तविधिः ।

---

## अथ तुलादिदानेषु प्रतिग्रहीतॄणां आचार्य्यादीनां भयहरयन्त्रोत्तारप्रकारमाह ।

मन्त्ररहस्ये,—

तुलापुरुषादिदानेषु कालपुरुषप्रतिग्रहे ।
गाढ़ालिङ्गनदाने च सहायां [1]रोगिणोगृहे ॥
अपां मार्ज्जनकाले च आसन्नमरणे गृहे ।
प्रवदर्शनकाले च संग्रामे रक्तदर्शने ॥

---

(1) चतुरावारोऽहिनी गृहे इति क्रीतपुस्तकपाठः ।

एतेषूक्तेषु कालेषु पिशाचाः सञ्चरन्त्यतः।
केचित्तु वायुरूपेण केचिच्च जनदर्शने॥
दातुः प्रतिग्रहीतुर्वा दृष्ट्वा केचिच्चरन्त्युत।
तत्कर्त्तुः सर्व्वपापानि दानमात्रे व्रजन्त्यथ॥
वदन्तः प्रविशन्त्येव पापार्थं भयविह्वलम्।
तदानीं वा परेद्युर्वा पञ्चमे दशमेऽपि वा॥
पक्षे वा मासमात्रे वा द्वितीये वा तृतीयके।
शिरःकम्पो ज्वरो वाऽपि शूलं वा कुक्षिमध्यतः॥
भ्रमः सर्व्वेषु दुर्वान्तं करपादनिपीड़नम्।
सर्व्वदा भ्रमबुद्धिः स्यादु एतदेव निवेदितम्॥
मन्दाग्निरुरुचिर्नित्यं एतल्लक्षणमीरितम्।

कोटिहोमकाले शिरोभ्रमणादिकम्। भास्विग्नदाने स्वयं वा पतति पादहस्तौ वा न चलतः। रत्नदर्शने स्वकामि, कुक्षपदर्शने महाभीतिः सैव व्याधिहेतुः—

तेषां च रक्षणार्थाय लोकानां हितकाम्यया।
सर्व्वपापहरं पुण्यं सर्व्वोपद्रवनाशनम्॥
सर्व्वभूतहरं दिव्यं सुदर्शनमनुत्तमम्।
वक्ष्यामि शृणु राजेन्द्र सर्व्वभूतपलायनम्॥
भूर्ज्जे वा तालपत्रे वा स्वर्णे वा राजतेऽपि वा।
लिखित्वाऽत्र पूर्व्वमन्त्रं दानकाले वहेत् करे॥
तं दृष्ट्वा प्रपलायन्ते महाभूताः दिशोदश।
भूर्ज्जपत्रे लिखेन्मन्त्रं स्वर्णकार्पासमात्रया॥

गोरोचनेन पूतात्मा प्राङ्मुखोदङ्मुखःशुचिः ।
पत्रमध्ये लिखेद्यन्त्रं रेखात्रयसमन्वितम् ॥
चतुःशूलं चतुर्दिक्षु तन्मध्ये तं नृकेसरिम् ।
लक्ष्मीवीजं लिखेत्पूर्व्वं प्रकारं पश्चिमे लिखेत् ॥
दक्षिणे मारुतं वीजं उत्तरे गारुडं लिखेत् ।
दुर्गाभिरष्टपूर्व्वाभिर्वलयाकारमालिखेत् ॥
एवं यन्त्रं लिखित्वाऽऽदौ पूजयेद्गन्धपुष्पकैः ।
नानाविधैः फलैश्चैव धूपदीपनिवेदनैः ॥
पूजयित्वा न्यसेद्यन्त्रं स्वर्णे वा राजतेऽपिवा ।
बध्नीयाद्धस्तमूले तु सर्व्वभूतनिवारणम् ॥
प्रतिग्रहेषु[1] दानानां तुलादीनां विशेषतः ।
रणमध्ये कोटिहोमे शवसन्दर्शने तथा ॥
श्मशानमध्ये राजेन्द्र निर्भीकः स भवेद्ध्रुवम्[2] ।
नीरोगो जायते पश्चात् नारसिंह[3]प्रसादतः ॥
दानप्रतिग्रहे काले मार्ज्जनेनाऽन्यतोऽपिवा ।
बध्नीयात् सर्व्वथा यन्त्रं तत्स्त्रीपुत्रोऽथ बालकः ॥
आयुः पूर्णञ्च सर्व्वेषां न भयं विद्यते क्वचित् ।

इति हेमाद्रौ तुलादिप्रतिग्रहीतॄणां आचार्य्यादीनां
भयनिवारणसुदर्शनोद्धारः ।

---

(१) प्रतिग्रहेषु इति क्वचित् पुस्तकपाठः ।
(२ गतौ इति केचित् पुस्तकपाठः ।
(३) नारसिंहाः प्रसादतः इति क्वचित्पुस्तकपाठः ।

तथापि भयनिबद्धानां[1] तुलादिप्रतिग्रहीतॄणां
ज्वरादिरोगहरमृत्युप्रतिमापूजाविधानं
होमप्रकारश्च दर्शयति ।

मार्कण्डेयः—

तथा[2]पि भयबद्धानामाचार्य्याणाञ्च ऋत्विजाम् ।
दानप्रतिग्रहे काले मृत्युरायाति सर्व्वथा ॥
अन्धकारतया राजन् उत दीप्त्या महत्तया ।
अथ वा जलदोषेण दृष्ट्या वाऽन्यस्य पापिनः ॥
व्याधिराविशते देहे आचार्य्यस्य द्विजन्मनः ।
कम्पः शूलं शिरःशूलं पातनं पादघातनं: ॥
पित्तस्य वमनञ्चैव अन्त्रवृद्धिरथाऽपि वा ।
बहुमूत्रं बहुमलं बहुवाक् सर्व्वदा भ्रमः ॥
ततश्चक्षणमेतेषामाचार्य्याणां जनाधिप ।
मृत्युस्तु वायुरूपेण अङ्गमाविशते सदा ॥
तदा तत्परिहारार्थं मृत्युपूजां समाचरेत्[3] ।
मृत्युं स्वर्ण[4]मयं कृत्वा पलमानसुवर्णतः ॥
चतुर्भुजं नीलवर्णं दीर्घास्यं रक्तलोचनम् ।
रक्तपातञ्च खड्गञ्च पाशं शूलञ्च पाणिभिः ॥

---

(१) भयबद्धानां इति कीतपुस्तकपाठः ।
(२) तदा इति लेखितपुस्तकपाठः ।
(३) समाचर इति लेखितपुस्तकपाठः ।
(४) सुवर्णमयं इति लेखितपुस्तकपाठः ।

दधानं पद्ममध्यस्थं पूजयेद्रोगशान्तये ।
आचार्य्यः पूजयेन्मृत्युं रक्तगन्धाक्षतैर्मुदा ॥
तिलपद्मे पूर्व्वमाने स्वगृहे शुद्धदेशतः ।

"परं मृत्यो" इति पूजामन्त्रः । गन्धपुष्पधूपदीपनैवेद्यैः प्रदक्षिणनमस्कारैश्च पूजां समाप्य, तद्दीशानभागे स्थण्डिले समिदाज्यचरुभिर्होमं कुर्य्यात्, होमपूजायां स एव मन्त्रः । होमान्ते अपमृत्यूत्तरणमार्ज्जनवद्रोगिणं मार्ज्जयेत् । द्विवर्षत्रिवर्षचतुर्व्वर्षमध्ये यदा रोगोद्भवस्तदेव सर्व्वमेतत् कार्य्यं, आचार्य्यादीनां अन्यथा मृत्यूत्तरणं न भवति ।

होमान्ते मार्ज्जनं कृत्वा ततोदानं समाचरेत् ।
आचार्य्यं गन्धपुष्पाद्यैरलङ्कृत्य यथार्हतः ॥
उदङ्मुखाय विप्राय स्वयमिन्द्राननः शुचिः ।

"तिलाः पापहरानित्यं" इति तिलदानम् । "शीतवातोष्णसन्त्राण"मिति वस्त्रदानम् ।

मृत्युरूपामिमां दिव्यां सर्व्वरोगोपशान्तये ।
महाभयनिरासार्थं दास्येऽहं द्विजवल्लभ ॥
प्रतिग्रहसमुद्भूतं पापं मे यदुपार्ज्जितम् ।
तत्सर्व्वं विलयं यातु व्याधिर्मे नाशतामियात् ॥

इति प्रतिमादानमन्त्रः ।

ततस्तु प्रतिमा देया दशगावः स्वयम्भुवे ।
एतद्रोगविशुद्ध्यर्थं ब्राह्मणान् भोजयेत्ततः ॥

एवं यः कुरुते 'सोऽथ सर्व्वरोगात् प्रमुच्यते ।
अन्यथा दोषमाप्नोति जन्मजन्मनि पार्थिव ।

इति हेमाद्रौ आचार्य्यादीनां ज्वरादिसर्व्वरोगहरमृत्यु-
प्रतिमादानविधिः ।

---

## अथेदानीं कोटिहोमे आचार्य्यादीनां प्रायश्चित्तमाह ।

महानारदीये—

योविप्रः कोटिहोमेषु लक्षहोमेषु वा नृप ।
आचार्य्यत्वं यदा कुर्य्यात् तदा नश्यन्ति तत्क्रिया ॥
देहान्ते नरकं गत्वा पिशाचोमूकसंज्ञकः ।
न तस्य' निष्कृतिर्नास्ति त्रिः परिक्रमणाद्भुवः ॥

लैङ्गे—

कोटिहोमेषु योविप्रोनिर्निमित्तं प्रधानभाक् ।
महान्तं नरकं भुक्त्वा पिशाचोजायते त्वये ॥
निष्कृतिः कुत्रचिद्दृष्टा शम्भुना लोकशम्भुना ।
त्रिः परिक्रमणाद्भूमेरत्र कालोनिवेशनम् ॥

---

(१) यस्तु इति केचित पुस्तकपाठः ।
(२) तस्य वै इति केचित्पुस्तकपाठः ।

आजन्मपतनात्तिष्ठेत्तदा सुखिमवाप्नुयात् ।

तदाह—

गौतमः—

कोटिहोमेषु नियमा बहवः सन्ति पार्थिव ।
मौनं पद्मासनं ध्यानं हविष्यान्नस्य भक्षणम् ॥
स्थण्डिले शयनं गन्धताम्बूलादीनि वर्ज्जयेत् ।
मन्त्रान्तमुच्चरन् हुत्वा हविरुत्तानपाणिना ॥
कृमिकीटास्थिकेशादिबाहुल्याद् धान्यमध्यतः ।
संत्यज्य विविधानेतान् ऋत्विजो वर्त्तयन् सदा ॥
दोषान्नियमसन्त्यागान् न होमफलमश्नुते ।

महाराजविजये,—

अव्रतस्तु तिलान् हुत्वा परार्थं शुभमन्त्रतः ।
स एव ग्रामचाण्डालस्तन्नदा नाऽऽलपेत् सुधीः ॥

चतुर्द्दश चाण्डाला ग्रामस्यास्तानाह ।

शिवपुराणे,—

रजकश्चर्म्मकारश्च नटोवरुड एव च ।
कैवर्त्तमेदभिल्लाश्च स्वर्णकारस्तु सौचिकः[1] ॥
तक्षकस्तिलयन्त्री च सूनचक्री तथा ध्वजी ।
त एते ग्रामचाण्डाला वाङ्मात्रेणाऽपि नाऽऽलपेत् ॥
परार्थं काम्यकार्यायी दत्ताग्निः कौकसानुगः ।
अतोऽपि दोषबाहुल्यात् होममेनं परित्यजेत् ॥

---

(१) सूनचक्री इति क्वचित्पुस्तकपाठः ।

[1]ईषमात्रस्य सौख्यस्य कृते दोषान् जिहासुभिः।
नृभिस्त्याज्योलचहोमः कोटिहोमोऽपि पार्थिव।

ब्रह्माण्डे,—

होमङ्कृत्वा वृथा विप्रः कोटिं लचमथाऽपि वा।
यागाद्यभावे कुर्व्वीत प्रायश्चित्तं विशुद्धये॥
विप्रस्यार्थे कृते होमे षडब्दं कृच्छ्रमाचरेत्।
बाहुजार्थे कृते होमे तदेतद्विगुणं चरेत्॥
वणिग्भ्यस्त्रिगुणं प्रोक्तं पादजेभ्यश्चतुर्गुणं।
संस्कारार्थे कृते होमे षाड्गुण्यं पूर्व्ववच्चरेत्॥
सदस्यब्रह्मणोरर्द्धं तदर्द्धमृत्विजां स्मृतम्।

पूर्व्वोक्तप्रायश्चित्तवत् सर्व्वं कुर्य्यात् प्रायश्चित्ताकरणे दोषमाह।

मार्कण्डेयपुराणे,—

लचहोमे कोटिहोमे आचार्य्य ऋत्विजोऽथवा।
तद्दोषपरिहारार्थं अकृत्वा निष्कृतिं शुभाम्॥
पैशाच्यमनुभूयाऽन्ते तिलघातो भवेद्भुवि।
भिषक्स्त्रीषु च जन्मानि गर्द्दभः पञ्चजन्मसु॥
वानरत्वं भवेत्पश्चात् कृकलासस्ततःपरं।
ततोभुवं समासाद्य बहुरोगी प्रजायते॥

आचार्य्यार्द्धं तयोः प्रोक्तं तदर्द्धं ऋत्विजां पृथक्। इति।

प्रायश्चित्तं पूर्व्वोक्तरूपं पूर्व्ववत् सर्व्वं कुर्य्यात्। लचहोमेऽपि

(१) होषमात्रस्यभिक्षुभिरिति कोतकेचितपुस्तकपाठः।

एवमेव । लक्षहोमे कोटिहोमे प्रायश्चित्तमाचार्यस्य । तदर्द्धं सदस्यब्रह्मणोस्तदर्द्धं ऋत्विजां तदाह—

बौधायनः—

लक्षे तत्कोटिहोमार्द्धं प्रायश्चित्तं तथाऽमयी: ।
तदर्द्धमुभयोः प्रोक्तं तदर्द्धमृत्विजां पृथक् । इति ।

तदेतत् प्रायश्चित्तं सर्व्वं पूर्व्ववत् कुर्य्यात् ।

इति हेमाद्रौ कोटिहोमे लक्षहोमे च प्रधानर्त्विजां प्रायश्चित्तम् ।

---

## ( अथेदानीं कालचक्रप्रतिग्रहप्रायश्चित्तमाह—)

कूर्म्मपुराणे,—

जन्मान्येकत्र पैशाचः कालचक्रप्रतिग्रहे ।
विप्रोभवति दुष्टात्मा पूर्व्वजैः कारणैर्विना ॥

मत्स्यपुराणे,—

भोगासक्तोद्विजोविद्वान् सौरचैव प्रतिग्रहे ।
पिशाचोभवति चिप्रं राज्ञः पापानुवर्त्तिनः ॥

---

(—) अयं पाठः क्रीत केश्चित्पुस्तकयोर्नोपलभ्यते ।

तस्येह निष्कृतिर्नाऽस्ति तप्तकृच्छ्रव्रतादिना।

सत्क्रियास्तस्य नश्यन्ति पुनः संस्कारमर्हति ॥

गारुड़पुराणे—

मुखजो यमचक्रस्य संग्रहे पापमश्नुते।

पिशाचत्वं भवेत् तस्य जन्मन्येकत्र भूमिप ॥

निष्कृतिः कथिता विप्रैस्तप्तकृच्छ्रव्रतत्रयात्।

अन्यथा दोषमाप्नोति अकृत्वा नियमानिमान् ॥

स्थविरयोः पित्रोः संरक्षणं पक्षदर्शपौर्णमासादयः एते नियमाः, एतेषां नियमानां लोपे दोषप्राप्तिः तस्मादेतत् परिपूर्णार्थं कालचक्रकालपुरुषादिप्रतिग्रहः। तद्रव्यस्य सर्व्वस्य परित्यागेन एकां रजनीमुपोष्य पञ्चगव्यप्राशनं विशोधनं, अन्यथा तप्तकृच्छ्रव्रतत्रयम् प्रायश्चित्तं कुर्य्यात्। उभयोरेतयोरभावे पिशाचानन्तरं सहस्रदृषणोनाम मृग[1]विशेषो जायते। तदाह—

कौर्म्मे,—

पित्रादिरक्षणाभावे नियमानामसम्भवे।

प्रायश्चित्तमकृत्वा तु सहस्रदृषणो मृगः॥

ततः परं वराहः स्याद् विड़ालस्त्रिषु जन्मसु।

तस्मादेतद्विशुद्ध्यर्थं प्रायश्चित्तं समाचरेत् ॥

उभयोर्लोकयोः पूज्य उभौ लोकौ तरेत्तदा।

इति हेमाद्रौ कालचक्रप्रतिग्रहप्रायश्चित्तम्।

---

(१) विशेषोजायतेइत्येव क्वचित् केषाञ्चित्पुस्तकपाठः।

अथेदानीं कालपुरुषप्रतिग्रहप्रायश्चित्तमाह—

स्कन्दपुराणे,—

राज्ञः पीडानिबद्धस्य सूर्य्यसोमग्रहेऽपिवा ।
पुण्यकाले पुण्यतीर्थे द्विजोभोगपरायणः ॥
गृह्णीयात् कालपुरुषं राज्ञोदोषानुवर्त्तिनः ।
यमस्य सदनं गत्वा यमपाशनिपीड़ितः ॥
ततः परं पिशाचोऽभूत् शून्यागारेषु वर्त्तयन् ।
सन्त्रासयन् जनान् सर्व्वान् बालवृद्धातुरानिह ॥
तस्यैव निष्कृतिर्दृष्टा गायत्र्याः पञ्चलक्षतः ।
तिलाः सन्तीह यावन्तस्तावत्कालं न निष्कृतिः ॥
पञ्चलक्षेण गायत्र्यास्तिलाभक्षोभवन्त्यतः ।

लैङ्गे,—

काश्यादिपुण्यतीर्थेषु पुण्यकालेषु भूमिपात् ।
गृह्णीयात् कालपुरुषं द्विजोयो निर्निमित्ततः ॥
स तु कालवशं याति बहुशृङ्खलयाऽऽवृतः ।
शून्यागारेषु सर्व्वेषु पिशाचः सञ्चरन् भवेत् ॥
पञ्चलक्षैर्वेदमातुर्निष्कृतिर्नाऽस्ति चाऽन्यथा ।
यावन्तोऽत्र तिलाः सन्ति पुरुषे कालसंज्ञिते ।
तावन्त्येतानि पापानि राज्ञस्तस्य प्रतिग्रहात् ॥
तदा विशन्ति तं विप्रं तस्माद्विप्रः स पातकी ।
तं कदा नाऽऽलपेद्द् ब्राह्मन् तथा तं नाऽवलोकयेत् ॥

तस्माद्विधिवत् कुर्व्वीत पञ्चलक्षैर्न चाऽन्यथा ।
¹सर्व्वव्ययं वा कुरुते यागार्थञ्च न दोषभाक् ॥
कालपुरुषं कालचक्रं द्वयमेतत् समं भुवि² ।
यमस्तु कालपुरुष³श्चक्रं तस्याऽऽयुधं पृथक् ॥
⁴उभयं यदि गृह्णीयाद्दोषस्तत्र न गण्यते⁵ ।
प्रायश्चित्तेन पूतात्मा उभयं सन्तरेत्तदा ॥

इति हेमाद्रौ कालपुरुषप्रतिग्रहप्रायश्चित्तम् ।

---

## अथेदानीं गजप्रतिग्रहप्रायश्चित्तमाह—

देवीपुराणे—

गजप्रतिग्रहीता चेद्विप्रः पुण्याहकर्म्मणि ।
नित्यं नैमित्तिकं काम्यमिष्टा⁶पूर्त्तादिकञ्च यत् ॥
तत् सर्व्वं विलयं याति भिन्नभाण्डोदकं यथा ।
नित्यकर्म्मफलाभावाच्चक्रीभवति भूतले ॥

---

(१) सर्व्वं इति वेष्टितपुस्तकपाठः ।
(२) विभो इति क्रीतपुस्तकपाठः ।
(३) पुरुषे इति क्रीतपुस्तकपाठः ।
(४) उभयोः इति क्रीतपुस्तकपाठः ।
(५) गण्यते इति वेष्टितकाशीपुस्तकपाठः ।
(६) इष्टापूर्त्तादिकमिति क्रीतपुस्तकपाठः ।

'चक्री कुलालकः, नित्यं स्नानसन्ध्यादि, नैमित्तिकं गङ्गास्नानादि, काम्यमनन्तव्रतादि, इष्टमग्निष्टोमादि, पूर्त्तं तटाकधननिक्षेपादि।

तदेवाह,—

कौर्मे—(पूर्त्तमधिकृत्य)

तटाकोधननिक्षेपो ब्रह्मस्थाप्यं सुरालयः।
'तत्पूर्त्तिर्वनकासारौ समसंस्थानमिष्यते' ॥

चतुर्द्दश चाण्डालभेदाः—

मार्कण्डेयपुराणे—

रजकश्चर्म्मकारश्च नटोवुरुड़ एव च।
कैवर्त्तमेदभिल्लाश्च स्वर्णकारस्तु सौचिकः॥
तक्षकस्तिलयन्त्री च सूतचक्री तथा ध्वजी।
चतुर्द्दश समा ह्येते चाण्डालाः परिकीर्त्तिताः॥

नित्यकर्म्मभ्रंशो' नामधारक इत्युच्यते।

तदेवाह—

शिवपुराणे—

---

(१) कुलाल इति कौतपुस्तकपाठ।
( ) अयं पाठः कौतकेचितपुस्तकयोर्नदृश्यते।
(३) तत्पूर्त्तीरिति कौतकेचितपुस्तकपाठः।
(४) चण्डालमिति कौतकेचितपुस्तकपाठः।
(५) भ्रंशे इति कौतपुस्तकपाठः।

'शूद्रापति: कर्म्महीनो वेदहीनश्च मूषक:।
अत: प्रतिग्रहीराजन् गर्ह्हित:[1] साधुवर्त्तिनाम्[2] ॥
याागाद्यसम्भवे तात न च दोष: प्रतिग्रहे[3]।
अन्यथा दोषमाप्नोति दु:खी स्याज्जन्मजन्मनि ॥

मनुरहस्ये—

निष्कृतिस्तस्य कथिता गजं य: सम्परित्यजेत्।
चान्द्रायणत्रयं कृत्वा पुन: संस्कारमर्हति ॥

स्कन्दपुराणे,—

हस्तिनं यो नु गृह्णीयात् मञ्जुलाम्बुकलान्वितम्[4]।
तस्यैव नित्यकर्म्माणि न फलन्ति द्विजन्मन: ॥
चान्द्रायणत्रयं कृत्वा पुन: संस्कारकृद्द्विज:।
सिद्धिमाप्नोति चाण्डालादन्यथा पतितोभवेत् ॥ इति।

चान्द्रायणलक्षणं कृच्छ्रप्रकरणे[5] अभिहितम्।

भविष्योत्तरे।

मञ्जुलाम्बुकलायुक्तं हस्तिनं पापदायिनम्।
देवालये पुण्यतीर्थे यो गृह्णीयाद्द्विजाधम: ॥

---

(१) शूद्रपतिरिति श्रीतपुस्तकपाठः।
(२) गर्हितं इति वेष्टितपुस्तकपाठः।
(३) साधुवर्त्तिना इति श्रीतपुस्तकपाठः।
(४) प्रतिग्रहः इति वेष्टितपुस्तकपाठः।
(५) मञ्जुकान्वितः इति श्रीतपुस्तकपाठः।
(६) कृच्छ्रप्रकरणेऽपि इति वेष्टितपुस्तकपाठः।

कुलालकः स सद्योऽभूत् तस्य चित्तं विनश्यति ।
चान्द्रायणत्रयं कृत्वा शुद्धिमाप्नोति देहिकीम् ॥
पुनः संस्कारपूतात्मा कुर्य्याद्यागादिकं पुनः ।
अन्यथा दोषमाप्नोति पुत्त्रहीनोऽपि जायते ॥

इति हेमाद्रौ गजप्रतिग्रहप्रायश्चित्तम् ।

---

## अथेदानीं श्वेताश्वप्रतिग्रहप्रायश्चित्तमाह ।

कूर्म्मपुराणे,—

पुरा दुर्व्वाससः शापाद्गतैश्वर्य्यः पुरन्दरः ।
तदर्थं मथितः[1] सिन्धुर्दिविजैरसुरान्वितैः ॥
ऐरावतः कल्पतरुश्चन्द्रमाः कमलालया[2] ।
उच्चैःश्रवाः समुत्पन्नः श्वेताश्वस्तदनन्तरम् ॥
देवमध्ये हरिः साक्षादिदमाह वचस्तदा ।
शृण्वन्तु देवताः सर्व्वाः श्वेताश्वं तं भुवस्तले ॥
सपत्याणं सोपकारं सायुधं व्याधिवर्ज्जितम् ।
यो राजा विप्रसात्कुर्य्यात्[3] स गच्छेत्मामकं पदम् ॥

---

(१) मथ्यते इति श्रोतवेश्चितपुस्तकपाठः ।
(२) कमलोद्भवा इति श्रोतवेश्चितपुस्तकपाठः ।
(३) कृत्वा इति श्रोतवेश्चितपुस्तकपाठः ।

तं हयं योनु गृह्णीयात् द्विजः पापपरायणः ॥
यागादिकमकृत्वा तु आत्मभोगपरायणः ॥
स भवेन्मरणे विप्रो गर्द्दभः क्रोधसंयुतः ।
तस्य तु निष्कृतिः[1] प्रोक्ता तप्तकृच्छ्रं शतत्रयात् ॥

लिङ्गपुराणे,—

श्वेताश्वं पुण्यकालेषु मुख्यकालेषु पर्व्वसु ।
सायुधं सहपल्याणमुपस्कर[2]समन्वितम् ॥
निष्कारणं द्विजो धृत्वा भवेद्वै[3] गर्द्दभो भुवि ।
तस्यैव निष्कृतिरियं कथिता मुनिपुङ्गवैः ॥
तप्तकृच्छ्रत्रयं कृत्वा केशानां वपनं चरेत् ।

त्रयं शतत्रयमित्यर्थः ।

उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ।
यागादिकरणे तस्य पञ्चगव्यमलं सकृत् ॥

न प्रायश्चित्तम् । तस्मात्[4] परिग्रहो भवति ।

मत्स्यपुराणे—

सायुधं च सपल्याणमुपस्कर[5]समन्वितम् ।
पुण्यकालेषु तीर्थेषु दत्तं राज्ञा द्विजोऽग्रहीत् ॥

---

(१) निष्कृतिर्नास्ति इति क्रीतवेष्टितपुस्तकपाठः ।
(२) सोपस्करसमन्वितं इति क्रीतवेष्टितपुस्तकपाठः ।
(३) भवेद्गर्द्दभतां भुवि इति वेष्टितपुस्तकपाठः ।
(४) तदुपरि शुद्धो भवति इति क्रीतपुस्तकपाठः ।
(५) सोपस्करसमन्वितं इति क्रीतपुस्तकपाठः ।

देशान्ते तत्र वै अन्न खरस्य श्रोत्रजल्पनः ।
तज्जनेन द्विजोयानां मलमोचन[1]मेव वा ॥
अज्ञात्वा यदि भोगी स्यात् स मलोगर्हभी[2]स्तुतः ।
प्रायश्चित्तमिदं कृत्वा तप्तकृच्छ्रव्रतत्रयं ।
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ॥

[3]ब्रह्माण्डे,—

द्विजो[4]ऽयं प्रेतरूपं गृह्णीयात्पुत्रजन्मनि ।
तस्य वै निष्कृतिर्दृष्टा[5] तप्तकृच्छ्रव्रतत्रयात् ॥
केशानां वपनं कृत्वा पञ्चगव्येन शुध्यति ।

इति हेमाद्रौ प्रेतान्नप्रतिग्रहप्रायश्चित्तम् ।

---

(१) मलमोचनमेव वा इति श्रीतपुस्तकपाठः ।
(२) नार्हभीतस्तु इति वेंकितपुस्तकपाठः । नार्हम.पुनः इति श्रीतपुस्तकपाठः ।
(३) श्रीतपुस्तके नास्ति ।
(४) द्विजोऽयं प्रेतरूपेण इति श्रीतपुस्तकपाठः ।
(५) निष्कृतिर्नास्ति इति श्रीतवेंकितपुस्तकपाठः ।

## ( अथेदानीं तिलचक्रप्रतिग्रहप्रायश्चित्तमाह । )

ब्रह्माण्डे,—

पुरा शम्भूरथारूढ़: प्रतस्थे पुरसाधने ।
वेदा हया सूर्य्यचन्द्रौ रथचक्रौ बभूवतुः ॥
मेरुर्धनुर्गुणः[1] शेषः सायकस्तु चतुर्भुजः ।
सारथिर्भगवान् साक्षात् शम्भुरेव हि साधकः ॥
तथाऽपि तेन राजेन्द्र न साध्यं तत्पुरत्रयं ।
पूजितं विप्रवर्य्याय दत्त्वा शीघ्रं पुरत्रयम् ॥
अजयत्पुर[2]मागत्य महेन्द्राय ददौ हरः ।
विड़ौजास्तु स्वयं दत्त्वा अजयच्छत्रुमण्डलम् ॥
सर्व्वपापहरं पुण्यं सर्व्वोपद्रवनाशनं ।
राज्यदं स्वर्गदं नृणां तिलचक्रं सुदुर्लभम् ॥
पूजयित्वा द्विजाग्र्याय योदद्यात्सनरोभुवि ।
अनुभूय भुवश्चक्रं तदन्ते हरिमश्नुते ॥

स्कन्दपुराणे,—

पुण्यकाले पुण्यतीर्थे तिलचक्रं भुवः पतिः ।
पूजयित्वा द्विजे[3] दद्यात् तस्यान्तोनास्ति कुत्रचित् ॥

---

(—) चर्ब पाठ. ढेषितपुस्तके नोपलभ्य ।
(१) मेरुर्धनुर्गुणैः शोभा इति शीतपुस्तकपाठः ।
(२) पुनरागत्य इति शीतपुस्तकपाठः ।
(३) द्विजः इति शीतपुस्तकपाठः ।

स भुवो मण्डलं सार्वं शतवर्षं द्विजैः सह ।
पालयित्वा हरेर्वेश्म गच्छेत् स्वकुलसंयुतः ॥
तच्चक्रं यो द्विजोऽहृत्वा बहुभिः कारणैर्विना ।
राजभिः पुण्यकालेषु दत्तं लोभपरायणः ॥
स भवेद्भुवि चाण्डालस्तिलघाती त्रिजन्मसु ।
तस्य वै निष्कृतिः प्रोक्ता[1] कृच्छ्रा[2]त्सान्तपनाच्छतात् ॥

निष्कृतिर्योगादिकर्म कृत्वा एकाहमुपोष्य पञ्चगव्यमेवाऽलं, न प्रायश्चित्तम् ।

तदेवाह,—

शिवधर्मोत्तरे,—

तिलचक्रं द्विजोऽहृत्वा निष्कारणतया नृप ।
स भवेत्तिलघाती च त्रिषु जन्मसु पापभाक् ॥
कृत्वा शतं सान्तपनं शुद्धो भवति पापतः ।
अन्यथा पापमेवाशु भुक्त्वा नरकमश्नुते ॥
कृच्छ्रं सान्तपनं नाम महापातकनाशनं ।
एतच्छतं द्विजः कृत्वा तस्मात्पापात्प्रमुच्यते ॥

सान्तपनकृच्छ्रलक्षणं कृच्छ्रप्रकरणेऽभिहितम् ।

इति हेमाद्रौ तिलचक्रप्रतिग्रहप्रायश्चित्तम् ।

---

(१) निष्कृतिर्नास्ति इति श्रोतपुस्तकपाठः ।
(२) कृच्छ्रसान्तपनात् इति श्रोतपुस्तकपाठः ।

## ( अथेदानीं तिलगर्भप्रतिग्रहप्रायश्चित्तमाह । )

[1]ब्रह्माण्डे,—

> ब्राह्मणोब्रह्मसम्पन्नो यमलोकभयातुरः ।
> [2]गर्भं तिलमयं क्वाऽपि न गृह्णीयाज्जनाधिपात् ॥
> तिलगर्भं द्विजोधृत्वा तिर्य्यग्योनित्वमाप्नुयात् ।
> न तस्य पुनरावृत्तिस्तिर्य्यग्जन्मोर्नराधिप ॥

नारदीये,—

> इहलोके सुखं भुञ्जन् परलोकभयातुरः ।
> त्यजेत्तिलमयं गर्भमन्यथा सूकरो भवेत् ॥

विष्णुधर्म्मे,—

> निष्कारणं तिलमयं गर्भं [3]धर्त्ता द्विजोयदि ।
> अनन्तं नरकं भुक्त्वा तिर्य्यग्योनित्वमाप्नुयात् ॥

देवीपुराणे,—

> धृत्वा तिलमयं गर्भं पूर्व्वजः कारणं विना ।
> [4]महान्तं दोषमाप्नोति सूकरोभुवि जायते ॥

तिलगर्भप्रायश्चित्तं हिरण्यगर्भप्रायश्चित्तवत्सर्व्वं कुर्य्यात् ।

इति हेमाद्रौ तिलगर्भप्रतिग्रहप्रायश्चित्तम् ।

---

( - ) अयं पाठ केचित्पुस्तके नोपलब्धः ।

(१) ब्रह्माण्डे इति केचित्पुस्तके नास्ति ।

(२) तिलगर्भमयंक्वापि इति कोतपुस्तकपाठः ।

(३) धृत्वाइति कोतकेचित्पुस्तकपाठः ।

(४) महद्दोषमवाप्नोति इति कोतकेचित्पुस्तकपाठः ।

## अथेदानीं कनकप्रतिग्रहप्रायश्चित्तमाह ।

ब्रह्माण्डे—

द्विजोयः पुण्यकालेषु तीर्थेष्वायतनेषु च ।
राजन्या(१)दन्यतोवाऽपि लोभमोहपरायणः ॥
कनकं प्रतिगृह्णीयाद् अणुमात्रमकिञ्चनः ।
स दरिद्रोभवेत् पापी नरकाननुभूय च ॥
पुनः संसृतिमाप्नोति मृतः कर्कोटकः कृमिः ।

नारदीये—

पुण्यकालेषु तीर्थेषु पुण्येष्वायतनेषु च ।
हिरण्यमणुमात्रं वा द्विजोयदि नराधिपात् ॥
प्रतिगृह्णाति स(२) पापी मृतः कर्कोटकः कृमिः ।
तस्य वै निष्कृतिः प्रोक्ता(३) चान्द्रायणचतुष्टयात् ॥

भारते—

कनकं प्रतिगृह्णीयाद् द्विजोनिष्कारणान्मुने !
स महानिरयं गत्वा कृमिः कर्कटसम्भवः ॥
पश्चात्तापसमायुक्तः चान्द्रायणचतुष्टयम् ।
कृत्वा शुद्धिमवाप्नोति नाऽन्यथा शुद्धिरिष्यते ॥

---

(१) राजन्योवाऽन्यतोवापि इति लेखितपुस्तकपाठः । राजतोवाऽन्यतोवापि इति क्रीतपुस्तकपाठः ।

(२) प्रतिगृह्णन्प्रभोः इति क्रीतलेखितपुस्तकपाठः ।

(३) निष्कृतिर्नास्ति इति क्रीतलेखितपुस्तकपाठः ।

ब्रह्मवैवर्त्ते—

ब्रह्मनाभिसमुद्भूतं [1]सुरवल्लीफलं तथा ।
तद्वदाभाति सर्व्वत्र कनकं तदुदाहृतम् ॥
राज्ञः[2]पापं तदा दग्ध्वा दानकाले विशेषिद्विजम् ।
अतः प्रतिग्रहस्त्याज्यः द्विजैर्लौकिषुभिः सदा ॥

कनकप्रमाणं स्तेयादिप्रकरणे द्रष्टव्यम् ।

ब्रह्मवैवर्त्ते—

हिरण्यगर्भसम्भूतं कनकं यः समुद्वहेत्[3] ।
पुण्यकालेषु पुण्येषु तीर्थेषु द्विजवल्लभात् ॥
तस्य वै[4] निष्कृतिर्दृष्टा चान्द्रायणचतुष्टयात् ।
अथवा त्रिः परिक्रम्य गां भवेत् परितोऽनृप ! ॥

अणुमात्रमितिश्लोके—प्रतिग्रहे कनकस्य यावत्प्रमाणं पूर्व्वमुक्तं तावत् प्रतिग्रहे पापबाहुल्यमित्यर्थः । कनकं शुद्धसुवर्णं खदिराङ्गारवत् दीप्तियुक्तम् । दानाध्याये यावत् प्रमाणमुक्तं तावदित्यर्थः ।

इति हेमाद्रौ कनकप्रतिग्रहप्रायश्चित्तम् ।

---

(१) कारवल्ली इति क्रीतर्वेश्वितपुस्तकपाठः ।
(२) राजपापं इति क्रीतपुस्तकपाठः ।
(३) समुद्वहन् इति क्रीतर्वेश्वितपुस्तकपाठः ।
(४) तस्यैव इति क्रीतपुस्तकपाठः ।

## अथ तिलप्रतिग्रहप्रायश्चित्तमाह ।

मार्कण्डेयपुराणे—

शूद्रजो वाऽनुजाद्राजन् पुण्यकालेषु पर्व्वसु ।
तिलप्रतिग्रहं कृत्वा निष्कारणमथाऽधनः[1] ॥
महत्पापमवाप्नोति ब्रह्मरोगी स[2] जायते ।

ब्रह्माण्डे—

मधुकैटभयोर्युद्धे मासमेकं निरन्तरम् ।
अत्यन्तग्लानिमापन्नो हरिः स्वेदधरस्तदा ॥
स्वेदबिन्दुसमुत्पन्नास्तिलाराशीकृता[3] बभुः ।
तिलानालोक्य सहसा हरिरेव जगाद ह ॥
युष्मान्[4] दत्त्वा तु भुक्त्वा तु हुत्वा वा जनवल्लभः ।
स सर्व्वपापनिर्मुक्तो मामकं लोकमश्नुते ॥
इत्युक्त्वा तान् गृहीत्वाऽऽदौ ददौ मुनिगणाय सः ।
मधुकैटभनामानौ हत्वा वैकुण्ठमाप्तवान् ॥
तदाऽऽरभ्य तिलास्त्वेते लोकेऽस्मिन् सञ्चरन्ति हि ।
तानेतान् मानवो[5] दत्त्वा विष्णुलोकमवाप्नुयात् ॥

---

(१) निष्कारणतया धनी इति क्रीतपुस्तकपाठः ।

(२) प्रजायते इति क्रीतपुस्तकपाठः ।

(३) राशीभवन् तदा इति वेङ्कितपुस्तकपाठः । राशीभवंस्तदा इति क्रीतपुस्तकपाठः ।

(४) युष्मान् दत्त्वा वा इति वेङ्कितपुस्तकपाठः ।

(५) योनरः इति क्रीतवेङ्कितपुस्तकपाठः ।

तस्यैव निष्कृतिरियं कण्ठदघ्नजलेवसन्।
प्रातरारभ्य-सायाह्ने फलभोजनमाचरेत्॥
तद्विष्णोरिति 'मन्त्रेण मासमात्रेण शुध्यति।

निष्कारणतया तिलान् प्रतिगृह्य पश्चात्तापसमायुक्तः प्रातःकाल-मारभ्य कण्ठदघ्नजले वसन् "तद्विष्णोः परमं पद"मितिमन्त्रमुच्चरन् सायंकाले विरम्य फलाहारं कृत्वा स्थण्डिले 'शयीत, एवं मास-त्रयेण'शुद्धिमाप्नोति नाऽन्येन। दशमहादानमध्ये तिलदानस्य यावत्तिला विहितास्तावत्परिग्रहे प्रायश्चित्तमिदं वेदितव्यं नाऽल्पस्य।

तदाऽऽह—

ब्रह्मपुराणे—

तिलप्रतिग्रहे विप्रः पश्चात्तापसमन्वितः।
प्रातः स्नात्वा नित्यकर्म्म समाप्य विधिपूर्व्वकम्॥
उदयात्सम्प्राविश्य कण्ठदघ्नजलेवसन्।
तद्विष्णोरितिमन्त्रेण अपमासायमादरात्॥
विरम्य नियतः' सम्यक् फलाहारं समाचरेत्।

(१) इति वैभुत्वा इति मीतपुस्तकपाठः।
(२) भवेत् इति वेंचितपुस्तकपाठः।
(३) मासत्रये इति वेंचितपुस्तकपाठः।
(४) निरपं इति मीतवेंचितपुस्तकपाठः।

केवले स्थण्डिले सुप्त्वा स्मरन् नारायणं विभुम् ।
माससात्रेण शुद्धः स्यात् अशुचिर्वाऽन्य[1]थाद्विजः ॥

इति हेमाद्रौ तिलदानप्रतिग्रहप्रायश्चित्तम् ।

---

## अथेदानीं दासीप्रतिग्रहप्रायश्चित्तमाह ।

मार्कण्डेयपुराणे—

सुरूपां सुस्तनीं सुभ्रूं सुकेशीं शूद्रयोनिजाम् ।
[2]दासीं द्विजोशु गृह्णीयात् भोगार्थं पतितोभवेत् ॥
नित्यं नैमित्तिकं कार्य्यं सद्यः चरति पापिनः ।
विक्रयेद्यदि तां मूढश्चाण्डालत्वं तदाऽऽप्नुयात्[3] ॥

लिङ्गपुराणे—

दासीं शूद्रसमुत्पन्नां सर्व्वालङ्कारभूषिताम् ।
निष्कारणतया गृह्णन् विक्रीणाति रमेत वा[4] ।
चाण्डालयोनिमाविश्य वसेदाब्रह्मणः पदात् ॥

---

(१) नान्यथा इति क्रीत-लेखितपुस्तकपाठः ।
(२) प्रतिगृह्णन्द्विजोयदि इति क्रीतलेखितपुस्तकपाठः ।
(३) चाण्डालत्वमवाप्नुयादिति क्रीत लेखितपुस्तकपाठः ।
(४) विक्रयित्वा च तां रमेत् इति क्रीतपुस्तकपाठः ।

भविष्योत्तरे,—

दासीमलङ्कृतां राजन् दत्तां राजभिरादरात्।
प्रतिगृह्य द्विजोयस्तु कारणैर्बहुभिर्विना॥
दमेद्दा विक्रयेद्दाऽपि स चाण्डालोभवेत्तदा।
यावद्ब्रह्मा सृजेद्विश्वं तावच्चाण्डालजन्मता[1]॥

शिवपुराणे,—

दासीमलङ्कृतां यस्तु प्रतिगृह्णाति वै द्विजः[2]।
पश्चात्तापसमायुक्तः प्रधानं स [3]परित्यजेत्॥
यागं कृत्वा ऋणं [4]तीर्त्वा तस्माद्दोषात् प्रमुच्यते।
अन्यथा निष्कृतिर्नास्ति त्रिवर्षं यावभक्षकः॥
केशानां वपनं कृत्वा पुनः संस्कारमाचरेत्।
एवं त्रिवर्षाच्छुध्येत अन्यदानेन शुद्धिभाक्॥

ब्रह्मवैवर्त्ते,—

दासीमलङ्कृतां शूद्रीं निष्कारणतया द्विजः।
प्रतिगृह्य पुनः पश्चात्तापेनाऽनेन संयुतः॥
कृत्वा त्रिषवणस्नानं जप्त्वा नारायणाक्षरं।
चतुर्थकालमायाते यवभुक्स्थण्डिले [5]स्वपन्।

---

(१) चाण्डालजन्मस्तु इति क्रीतपुस्तकपाठः।
(२) प्रतिगृह्य द्विजाधम इति क्रीतलेखितपुस्तकपाठः।
(३) सम्परित्यजेत् इति क्रीतपुस्तकपाठः।
(४) तीर्थं इति क्रीतपुस्तकपाठः।
(५) यवन् इति क्रीतलेखितपुस्तकपाठः।

प्रधानं सम्यरित्यज्य वर्षत्रयमतन्द्रितः ।

इह लोके परत्राऽपि शुद्धिमाप्नोति दैहिकीम् ॥

एतत् प्रायश्चित्तं यज्ञयागाकरणे वेदितव्यं, तदा पञ्चगव्यमात्रेण शुद्धिः । तयोरभावे प्रायश्चित्तेनाऽनेन शुद्धिमाप्नोति, नाऽन्यदानैरित्यर्थः । सर्पदष्टस्य यथा विषनिवारणमेवौषधं योजनीयं नाऽन्यथा तद्वदत्रापीत्यर्थः ।

इति हेमाद्रौ दासीप्रतिग्रहप्रायश्चित्तम् ।

---

## अथेदानीं सोपस्करगृहप्रतिग्रहप्रायश्चित्तमाह—

ब्रह्माण्डे,—

गृहं सोपस्करं राज्ञः[1] प्रतिगृह्य द्विजाधमः ।

अज्ञात्वा तद्वयं भोगाद् [2]व्यालोभवति कानने ॥

लैङ्गे,—

सोपस्करं द्विजोराजन् प्रतिगृह्यैव वाहुजात् ।

यागादिकं न कुर्य्याचेद् दन्दशूकोभवेद्वने ॥

---

(१) राज्ञा इति क्वचित्पुस्तकपाठः ।

(२) व्याली इति ज्ञातक्वचित्पुस्तकपाठः ।

(३) वर्षपूर्व्वं इति काशीपुस्तकपाठः ।

(४) तेन वर्जितेनात्र नूतनेतिपाठः श्रौतक्वचित्पुस्तकेऽदृष्टः ।

सोपस्करमिति निक्षेपधान्यं पूर्णार्थम्, तेन सहितभाण्डखट्टादि कुशूलमुषलोलूखलकण्डनीदृषदुपलाखलारामकूपगोमहिष्यादिक-मित्यन्नादिकञ्च, गृहिणः प्रतिग्रहीतुर्व्वर्षपूरणं यथा[1] भवति तेन प्रकारेण सहितं गृहं निर्म्माय श्रोत्रियाय दत्त्वा गृहदानफल-माप्नोति, नोचेद्यावद्दत्तं तावन्मात्रमेवफलं, न ग्रहीतुरपि तावत्पापं, तदाऽऽह—

मार्कण्डेयः,—

सोपस्करं गृहं रम्यं निर्म्माय [2]सुदृढ़ं प्रभुः ।
यः प्रयच्छेत् [3]पुण्यकाले श्रोत्रियाय कुटुम्बिने ॥
सप्तजन्मसु [4]राजन् स हरेः प्रीतिकरोभवेत् ।
तद्गृहीत्वा द्विजोलोभाद् विना यागादिकं[5] वृथा ॥
व्ययं कृत्वा च मूढ़ात्मा व्यालोभवति निर्ज्जने ।
तद्दोषपरिहारार्थं वर्षार्द्धं वर्षपीड़ितः ॥
मार्त्तण्डोदयमारभ्य क्लिन्नवासा वहिःस्थले ।
जपन् वै वारुणं सूक्तं समूर्द्ध्वस्तबाहुकः ॥
मध्याह्ने नित्यकर्म्माणि तथा पूर्व्ववदाचरेत् ।
सायङ्काले फलाहारः स्वपेद्वै स्थण्डिले व्रती ॥

---

(१) यथेति श्रीतर्केखितपुस्तकयोर्नास्ति ।
(२) दृढ़वत् इति श्रीतर्केखितपुस्तकपाठः ।
(३) पुण्यतीर्थे इति श्रीतर्केखितपुस्तकपाठः ।
(४) राजेन्द्र इति श्रीतर्केखितपुस्तकपाठः ।
(५) यागादिकमनर्थकं इति श्रीतर्केखितपुस्तकपाठः ।

वर्षर्त्तुमेवं नीत्वाऽथ शुद्धिमाप्नोत्यनुत्तमाम् ।

वारुणं सूक्तं हिरण्यशृङ्गमित्यनुवाकः ।

ब्रह्माण्डे,—

सोपस्करं गृहं विप्रः प्रतिगृह्णाति चे[1]न्नृपात् ।
तस्येह[2] निष्कृतिर्नास्ति सुघोरात्सर्पजन्मतः[3] ॥
वर्षर्त्तौ जलवातार्त्तः क्लिन्नवासा जितेन्द्रियः ।
व्यस्तबाहुः स्रोतमाङ्गे बहिरेव वसन् सदा ॥
जपन् वै वारुणं सूक्तं यावदस्तङ्गतो रविः ।
तदा विरम्य मनसा फलाहारं समाचरेत् ॥
स्थण्डिले च स्वपेद्रात्रौ कृतं पापमनुस्मरन् ।
एवं मासद्वयं नीत्वा गृहदानप्रतिग्रहात् ॥
तस्माद्दोषात् प्रमुक्तः स्या[4]दन्यथा भुजगो भवेत् ।
यागे क्रये वा सर्व्वस्वव्ययं कृत्वा न दोषभाक् ॥
प्रधानत्यागमथवा पशुनिक्षेपवर्ज्जितं ।
कृत्वा शुद्धिमवाप्नोति न भुङ्क्ते[5] सर्पजन्म सः ॥

इति हेमाद्रौ गृहदानप्रतिग्रहप्रायश्चित्तम् ।

---

(१) प्रतिगृह्णन्नराधिपात् इति श्रौतशोधितपुस्तकपाठः ।

(२) तस्यैव इति शोधितपुस्तकपाठः ।

(३) सर्पजन्मत्वतोऽन्यथ इति श्रौतपुस्तकपाठः । सर्व्वजन्मत्वयाऽन्यथ इति शोधितपुस्तकपाठः ।

(४) वभूविति श्रौतशोधितपुस्तकपाठः ।

(५) भुक्ते इति शोधितपुस्तकपाठः ।

## अथ शय्याप्रतिग्रहप्रायश्चित्तमाह ।

मत्स्यपुराणे—

शय्यां सोपस्करां दिव्यां सवस्त्रां मुख्योद्विजः ।
पुण्यकाले पुण्यतीर्थे राज्ञो[1] गृह्णाति लोभतः ॥
तस्य मृत्युभयं प्रोक्तं षण्मासाभ्यन्तरे यमात् ।
ततः पिशाचतां याति त्रिषु जन्मसु गोखरः ।

स्कन्दपुराणे—

एकादश्यां पौर्णमास्यां चन्द्रसूर्यग्रहे द्विजः ।
पुण्यदेशे पुण्यतीर्थे शय्यां चोपस्करान्विताम् ॥
राज्ञः सम्पादयेद्यस्तु तस्य मृत्युभयं भवेत् ।
ततः पिशाचोभवति [2]गोखरत्वमवाप्यते ॥

भविष्योत्तरे—

आषाढशुक्लद्वादश्यां पुण्यतीर्थे नराधिप ।
शय्यां सोपस्करां राज्ञां द्विजोयः सम्परिगृह्णेत् ॥
[3]स खरत्वमवाप्नोति मृत्युवक्त्राद्विमोचितः ।
तस्य वै[4] निष्कृतिर्नास्ति तीर्थैर्दानशतैरपि ॥

---

(१) राज्ञां यदिह संप्रगृह्णादिति कीतकेचितपुस्तकपाठः ।

(२) गोखुरत्वमिति कीतपुस्तकपाठः ।

(३) नखरत्वं इति केचितपुस्तकपाठः ।

(४) तस्यैव इति कीतपुस्तकपाठः ।

ब्रह्माण्डे—

शयनोत्थानद्वादश्योः[1] पुण्यकाले नदीतटे ।
सवत्सां दामसंयुक्तां गव्यां यः सम्परिग्रहेत् ॥
षण्मासान्मृत्युमाप्नोति गोघ्नत्वमवाप्यते ।
[2]तस्य वै निष्कृतिर्दृष्टा ब्रह्मणा लोकवर्त्तिना ॥
चतुर्भागव्ययं वाऽपि यागार्थं दक्षिणां वदन् ।
अभाव[3]सम्भवे राजन् शृणु निष्कृतिमुत्तमाम् ॥
वसन्तर्त्तौ जले स्नात्वा अश्वत्थं समुपाश्रयेत् ।
हस्तमात्रं विलिप्याऽथ गोमयेन सुवर्चसा ॥
उपविश्याऽत्र देशे वै नित्यकर्म समाप्य च ।
माध्याह्निकं ततः कृत्वा पुनः कर्म समाप्य च ॥
मौनी व्रतमुपस्थाय जपेदस्तमयावधि ।
त्रियम्बकं महामन्त्रं न्यासध्यानपुरःसरम् ॥
माध्याह्निकं समाप्याऽथ[4] पुनः कर्म समाचरेत् ।
सायं सन्ध्यामुपासित्वा नित्यहोमं समाप्य च ॥
फलाहारं ततः कृत्वा स्थण्डिले स्वगृहे स्वपेत् ।
ब्रह्मचर्यं व्रतं कुर्वन् कृतं पापमनुस्मरन् ॥

---

(१) द्वादश्यां इति क्रोत पुस्तकपाठः ।
(२) तस्यैव इति क्रोतपुस्तकपाठः ।
(३) अभाव सम्भवात् इति वेष्टितपुस्तकपाठः ।
(४) ततः कृत्वा इति क्रोतवेष्टितपुस्तकपाठः ।

एवं मासद्वयं नीत्वा शुचः स्यात्तत्परिग्रहात्।
अन्यथा दोषमाप्नोति पिशाचत्वं [1]व्रजेदिह॥

सोपस्करामिति शय्यादोलार्थं शृङ्खलाचतुष्टयं हस्तपादनिवेश-नार्थं[2] सूक्ष्मावरणवद्[3] उपबर्हणं सोत्तरच्छदञ्च। एतत् सोपस्करम्। सोपस्करं तल्पं द्विजैर्निस्तारणार्थं लोकेप्सुभिर्न प्रतिग्राह्यम्। उभयोरभावे मधुमाधवमासयोः पूर्वोक्तनिष्कृतिं कृत्वा तत्परि-ग्रहात् शुद्धिमाप्नोतीत्यर्थः।

इति हेमाद्रौ शय्याप्रतिग्रहप्रायश्चित्तम्।

---

## अथेदानीं कन्याप्रतिग्रहप्रायश्चित्तमाह।

देवीपुराणे—

ब्राह्मणो ब्रह्मसम्पन्नो ब्रह्मचर्यपुरस्कृतः।
समुद्वहेत् स्वकुलजां कन्यां ब्राह्मादिषु स्थिताम्॥
तयोः प्रसूतः[4] कुलजः पितृभक्तिपरायणः।
सन्तरेदुभयं लोकं तत्पुत्रः पुण्यवान् द्विज!॥

---

(१) भवेदिह इति श्रीतर्कपञ्चाननपुस्तकपाठः।
(२) निद्रेशनार्थं इति श्रीतर्कपञ्चानन पुस्तकपाठः।
(३) सूक्ष्मास्तरणवत् इति श्रीतर्कपञ्चाननपुस्तकपाठः।
(४) प्रसूतकुलज इति श्रीतपुस्तकपाठः।

ब्राह्मादिषु चिषु विवाहेषु कन्यालोकरणे न दोषः ।

तदेवाह ।

नारदीये—

ब्राह्मोदैवस्तथाऽऽर्षः प्राजापत्यस्तथासुरः ।
गान्धर्व्वो राक्षसश्चैव पैशाचश्चाष्टमोमतः ॥
तेषां चयः प्रशस्ताः स्युः शेषाः[1] पञ्च विगर्हिताः ।
तस्माद् ब्राह्मादिषु ब्रह्मन् विवाहः पुण्यलोकदः ॥
एवं द्विजोयः कुरुते स्वपितृनुद्धरे[2]त्तथा ।
एतत्पुण्यतमं त्यक्त्वा यो विप्रोवासुरादिषु ॥
कन्यार्थं धनमादाय कामलोभपरायणः ।
तद्द्रव्येण विवाहीनां [3]जायते खलु पापभाक् ॥
रतिमात्रं सुखं तस्य सन्ततिर्दोतुरेव हि ।
तस्मादेतत्परित्याज्यं द्विजैः सर्व्वत्र सर्व्वदा ॥

ब्राह्मणव्यतिरिक्तजातिभ्यः कन्यकाधनसंग्रहे दोषमाह ।

कूर्म्मपुराणे,—

मुखजोऽन्यत्र जातिभ्योविवाहार्थं धनं वहन् ।
तेनाऽपूतेन वसुना यदि कन्यां समुद्वहेत् ॥

---

(१) तेषां इति क्वीतपुस्तकपाठः ।
(२) उत्तरेत् इति क्वीतके चतपुस्तकपाठः ।
(३) कन्यां वहिष इति क्वीतकेचितपुस्तकपाठः ।

स विप्रः पतितोभूयात् तत्पुत्राः पतिताः स्मृताः[१] ।
तत्पत्नी तत्सुता राजन् वृथा यत्र धनार्ज्जनम् ॥
कलौयुगे विशेषेण स्वजातेः[२] सम्परिग्रहः ।
तेषु मुख्यतमः प्रोक्तः कलौ नेच्छन्ति तद्बुधाः[३] ॥

ब्रह्मवैवर्त्ते—( कलिवर्ज्ज्यधर्म्मान् प्रक्रम्य )

स्वजाते[४]रन्यजातिभ्योद्विजैः कन्यापरिग्रहः ।
दत्तक्षतायाः कन्यायाः पुनर्दानं परस्य च ॥
समुद्रयात्रास्वीकारः कमण्डलुविधारणम् ।
दीर्घकालं ब्रह्मचर्य्यं वर्ज्जनीयं[५] कलौयुगे ॥
अतः पाणिग्रहार्थं वा नाहरेद्धनमन्यतः ।
अपत्यार्थं विवाहश्च यागार्थं धनसंग्रहः ॥
ब्राह्मण्यं परलोकार्थं ब्रह्मचर्य्यन्तु मुक्तये ।
पातिव्रत्यं कुलार्थन्तु जपः पापप्रणाशने ॥
सत्यं धर्म्मप्रतिष्ठार्थं आचारः कुलवृद्धये ।
तस्मात्कन्या परित्याज्या विप्रेणाऽन्यकुलोद्भवा ॥

---

(१) भवन् इति श्रीतर्कवेचितपुस्तकपाठः ।
(२) स्वजातिः च परिग्रह इति श्रीतर्कवेचितपुस्तकपाठः ।
(३) सुरव इति श्रीतर्कवेचितपुस्तकपाठः ।
(—) अयं पाठः श्रीतर्कवेचितपुस्तकयो र्न दृष्टः ।
(४) स्वजातिरिति वेचितपुस्तकपाठः ।
(५) वर्ज्जिता इति श्रीतर्कवेचितपुस्तकपाठः ।

कन्येति कन्यकार्थधनपरिग्रहः तत्परिग्रहे दोषं प्रायश्चित्तञ्चाह ।

कूर्म्मपुराणे,—

सुखजः पुण्यकालेषु पुण्यदेशेषु पर्व्वसु ।
जातिव्रयाहनं धृत्वा उद्वहेत्[1] सुखलिप्सया ॥
सा पत्नी तत्कुलोद्भूता तत्सन्तानन्तदिष्यते ।
तद्भर्त्ता च स्वयं लोके यावत्कालं प्रकीर्त्त्यते[2] ॥
तत्कुलं तत्पतिः पुत्राः पतिताःस्युर्न संशयः ।
तथैवं वर्ज्जयेत् पश्च विप्रोलोकपरायणः ॥
कन्यादानं नमस्कारं भोजनं सहभाषणम् ।
आमन्त्रणं [illegible]ुः श्राद्धे स्वप्नेऽपि च न संस्मरेत् ॥
प्रायश्चित्तं यदीच्छेत पश्चात्तापसमन्वितः ।
पत्नीपुत्रान् परित्यज्य प्रायश्चित्तं समाचरेत् ॥

पूर्व्वं[3] यत्पतितप्रायश्चित्तमुक्तं तत्सर्व्वं कृत्वा शुद्धिमाप्नोति नान्यतः ; तत्पुत्राणां तत्पत्न्याश्च प्रायश्चित्तं नेच्छन्ति । पतित-प्रायश्चित्तं सम्यक् कृत्वा स्वकुले कन्यामुद्वाह्य लोकसम्मत्या व्यव-हरेत्, एतत् पापं प्रकटयेत् न गूढ़येत्, तदाह ।

---

(१) हाराद्दै गीतवेष्टितपुस्तकपाठः ।
(२) चर्त्तेहति १. कौतवेष्टितपुस्तकपाठः ।
(३) धर्म्मं पतितप्रायश्चित्तमिति कौतपुस्तकपाठः ।

नारदः,—

गुरुरात्मवतां शास्ता शास्ता राजा दुरात्मनाम्।
इह प्रच्छन्नपापानां शास्ता वैवस्वतो यमः॥
तस्माद् द्विजः कुलेऽन्यत्र नाहरेद्दारसंग्रहम्।

इति हेमाद्रौ कन्याप्रतिग्रहप्रायश्चित्तम्।

---

## अथेदानीं कपिलधेनुप्रतिग्रहप्रायश्चित्तमाह।

देवीपुराणे,—

कपिलां वत्ससहितां राज्ञा(१) दत्तामलङ्कृताम्।
पुण्यकाले च पुण्यर्क्षे द्विजोयः सम्परिग्रहेत्॥
तस्य(२) वै जन्मवैफल्यं विपिनस्थेव चन्द्रिका।
यावन्ति धेनुरोमाणि तावन्नरकमश्नुते॥

हरिवंशे,—

कपिलां संग्रहेद् वत्सां द्विजोलोभपरायणः।
तद्रोमाणीह यावन्ति तावन्नरकमश्नुते॥

---

(१) राज्ञामिति वैखितपुस्तकपाठः।
(२) तस्यैव इति मोतपुस्तकपाठः।

मत्स्यपुराणे,—

कपिला ब्रह्मणा दत्ता लोकोपकरणादिह।
राजा दद्याद्द्विजेभ्यश्च देहपापापनुत्तये॥
इतीरितं तदा वाक्यं मान्धातृप्रमुखैर्नृपैः[1]।
तां गृहीत्वा द्विजेभ्यश्च दद्युः पापापमोचनीम्॥
तदाप्रभृत्यसौ धेनुर्दातॄणां पुण्यवर्द्धिनी।
सर्व्वथा पुण्यकालेषु स्वर्गदा धेनुरर्पिता[2]॥

नारदीये—

कपिलां समलङ्कृत्य सवत्सां विधिपूर्व्वकम्।
अर्च्चयित्वा द्विजाग्र्याय यो दद्यात् सोऽपि पुण्यभाक्॥
तां तु यो मुखजो धृत्वा यतते[3] द्रव्यसंग्रहे।
सोऽरण्ये निर्ज्जने देशे गवयो भवति ध्रुवम्॥
[4]तस्येह निष्कृतिर्नास्ति त्रिषु जन्मसु पार्थिव।

ब्रह्माण्डपुराणे—

द्विजो गृह्णाति [5]वेद्दत्तां राज्ञा वत्सान्वितां सतीम्।
कपिलां द्रव्यवाञ्छ्यात् स भवेत् गवयो वने॥

---

(१) मनुष्याद्यपा इति लेखितपुस्तकपाठः।
(२) धेनुर्दायिनो इति क्रीतलेखितपुस्तकपाठः।
(३) हृत्वा तद्द्रव्यसंग्रहे इति क्रीतलेखितपुस्तकपाठः।
(४) तस्यैव इति क्रीतलेखितपुस्तकपाठः।
(५) इमां पुण्यकाले इति क्रीतलेखितपुस्तकपाठः।

तस्यैव निष्कृतिरियं दृष्टा मुनिवरोत्तमैः ।
गां सवत्सां परित्यज्य तद्द्रव्यं यागपूर्त्तये ॥
व्ययं कृत्वा ऋणी वाऽपि न दोषो[1] कपिलाग्रहे ।
प्राजापत्यसहस्राणां [2]त्रयेण शुद्धिरीरिता ॥
पूर्व्वोक्तेनैव मार्गेण परिषद्विधिपूर्व्वकम् ।
प्रायश्चित्तेन पूतात्मा यागमात्रं समाचरेत् ॥
आधानी वा भवेत्[3]कुर्य्याद् दर्शपूर्णादिकाः क्रियाः ॥
न भवेत्तेन दोषोऽत्र अग्निर्दहति पातकम् ॥
प्रायश्चित्तेन पूतात्मा यागमात्रं समाचरेत् ।

तदाह—

आपस्तम्बः—

"अग्नीन् आध्यास्ये सर्व्वक्रत्वर्थमिति" वचनबलादाधानदीक्षा मनुसरन् अग्निहोत्रादिकाः क्रियाः समाचरन्[4] सर्व्वपापेभ्योमुक्तो भूया"दिति वेदितव्यम् ।

इति हेमाद्रौ कपिलाधेनुप्रतिग्रहप्रायश्चित्तम् ।

---

(१) दोष इति लेखितपुस्तकपाठः ।
(२) त्रयाणां इति लेखितपुस्तकपाठः ।
(३) सोऽपि इति लेखितपुस्तकपाठः ।
(४) सुचरन् इति श्रौतलेखितपुस्तकपाठः ।

## अथेदानीं पृथिवीप्रतिग्रहप्रायश्चित्तमाह ।

देवीपुराणे—

पृथिवीं भूमिपालेन दत्तां शालीक्षुसम्भवाम् ।
यागार्थमग्निहोत्रार्थं प्रतिगृह्य[1] द्विजोत्तमः ॥
तत्रोद्भवेन धान्येन आधानादिकमाचरेत् ।

आधानानन्तरं दर्शपूर्णमासादिकं कुर्य्यादित्यर्थः ।

ब्रह्माण्डे—

ब्रह्मविद् ब्राह्मणस्तस्माद्[2] भुवं भूपालवल्लभात् ।
प्रतिगृह्याऽग्निहोत्रादीन् अतिथींश्चापि पूजयेत् ॥

मार्कण्डेयपुराणे—

कुटुम्बपालनस्यैव क्रतुर्वा यावती च भूः ।
समाश्रित्य यथा कार्य्या तावतीं क्ष्मां परिग्रहेत् ॥

महाराजविजये,—

वृद्धौ च मातापितरौ साध्वी भार्य्या सुतः शिशुः ।
सत्क्रियाः क्षयमापन्ना धर्म्मोऽपक्षीयते तदा ॥
तदा प्रतिग्रहोभूमेः विप्रस्यैव न दोषभाक् ।

अशीतिवर्षादूर्द्धं वृद्धः । या नारी स्वप्नेऽपि परं न चिन्तयेत् न सम्भावयेत् पतिपादप्रक्षालनादिकं मनसाऽप्यकुर्व्वयन्ती प्रत्यहं

---

(१) पृथ्वीयाह्याद्विजोत्तमैरिति क्रीतपुस्तकपाठः ।

(२) यस्मात् इति क्रीतलेखितपुस्तकपाठः ।

कुर्य्यात् सा साध्वी। षोड़शवर्षात् पूर्व्वं शिशुः, सत्क्रियाः अग्निष्टोमादयः, धर्म्मो नित्यस्नानादिः। तदा क्ष्मापरिग्रहो विप्रस्य न दोषः, यावत्या भुवा एतेषां परिपूरणं भवति तावद्भूमि-परिग्रहे न दोषः।

विष्णुरहस्ये,—

पितृपत्नीसुतानाञ्च अग्निष्टोमादिकर्म्मणाम्।
[1]संरक्षणाय राजेन्द्र न दोषः क्ष्मापरिग्रहे[2]॥
विनाऽप्येतैर्निमित्तैर्यः पृथिवीं संग्रहेद् द्विजः।
[3]स सभार्य्यः सपुत्रश्च नरके वासमश्नुते॥

मार्कण्डेयपुराणे,—

धान्यं प्रभूतं सुखजस्तत्रजातं तथाव्यये।
[4]विक्रीय निजभोगार्थं "भवेयं धनिको" भुवि॥
इत्यहङ्कारतश्चैव चाण्डालत्वमवाप्नुयात्।
निष्कृतिस्तस्य कथिता वसिष्ठेन महात्मना॥
पादत्रयेऽब्दकृच्छ्रं स्यात् तत्त्रिगुणे त्रिधा स्मृतम्।
बीजानां प्रस्थमात्राणां प्रसूति[5] र्यावती क्षितिः॥

---

(१) पापसंहरणे राजन् इति क्रीतपुस्तकपाठः—
(२) क्ष्मापरिग्रह इति क्रीतपुस्तकपाठः।
(३) सभार्य्यं पुत्रवर्ज्जित इति क्रीतलेखितपुस्तकपाठः।
(४) विक्रयित्वात्मभोगार्थं इतिक्रीतलेखितपुस्तकपाठः।
(५) समाप्निरिति क्रीतलेखितपुस्तकपाठः।

तस्याः प्रतिग्रहे कार्यं मुनिभिः परिकीर्त्तितम् ।
'प्रसूतिर्द्रोणवीजानां पृथिवी यावती भवेत् ॥
तस्याः परिग्रहे चान्द्रं प्रायश्चित्तं विशोधनम्' ।
स विप्रः शूद्रतां याति हृया भूमेः परिग्रहात् ॥

( विंशत्यादशभिर्द्रोणैर्यावती क्ष्मा महीभुजा । दत्ता तस्याग्रहेविप्रश्चान्द्रायणशतञ्चरेत् । अतोधिकाया ग्रहणे प्रायश्चित्तं न दृश्यते )

पित्रार्ज्जितं निजं क्षेत्रं राजाक्रान्तं यदा भवेत् ।
आत्मार्ज्जितं वा राजेन्द्र समाक्रान्तं नृपात्मजैः ॥
तदा प्रतिग्रहं कृत्वा यावन्मात्रेण पोषणम् ।
जीवनं धर्म्मसिद्धिर्वा अथवा ऋणमोचनम् ।
तावत् प्रतिग्रहे दोषो न भवेदिति निश्चितम् ॥

कूर्म्मपुराणे,—

राजाक्रान्तं जनाक्रान्तं क्षेत्रं पित्राऽर्ज्जितं यदि ।
तदा प्रतिग्रहं कृत्वा यावन्मात्रेण जीवनम् ॥
तावत् प्रतिग्रहेद्विप्रो 'राष्ट्रस्तस्मान् न दोषभाक् ।

इति हेमाद्रौ पृथिवीप्रतिग्रहप्रायश्चित्तम् ।

(१) समार्प्तिरिति क्रीतलेखितपुस्तकपाठः ।
(२) न दृश्यते इति लेखितपुस्तकपाठः ।
(—) अयं पाठः लेखितपुस्तकेनोपलब्धः ।
(१) राष्ट्रातेन इति क्रीतपुस्तकपाठः ।

## अथेदानीं सप्ताचलप्रतिग्रहप्रायश्चित्तं ब्रुवन् कनकाचलप्रतिग्रहप्रायश्चित्तमाह—

तदाह,—

देवीपुराणे,—

अचलं काञ्चनं पुण्यं[1] राज्ञः पुण्यानुवर्त्तिनः ।
द्विजो य इह गृह्णाति स[2] भजेद्दै पिशाचताम् ॥

कनकस्वरूपमाह,—

लिङ्गपुराणे,—

पूतेष्वष्टसु संशुद्धं शोधितं वह्नितापनात् ।
अतीव शुचतां याति कनकं तदुदाहृतम् ॥

पद्मपुराणे,—

कनकाद्रिं द्विजोदत्तं[3] राजभिः पुण्यवर्त्तिभिः ।
[4]प्रतिगृह्णन् हि पुण्याहे सम्भवेत् पिशिताशनः ॥

मार्कण्डेयपुराणे,—

कनकाद्रिं नदीतीरे पुण्यकालेषु राजभिः ।
दत्तं द्विजश्चेद् गृह्णीयात्[5] पिशाचः स्याद्विरूपकः ॥

---

(१) कृत्वा इति केचित्पुस्तकपाठः ।
(२) मोक्षात्मा इति कौतकेचित्पुस्तकपाठः ।
(३) कृत्वा इति कौतकेचित्पुस्तकपाठः ।
(४) पुण्यकालेषु इति केचित्पुस्तकपाठः ।
(५) तत्तद्विजोऽनुगृह्णीयादिति केचित्पुस्तकपाठः ।

( नदीषु पुण्यकालेषु पुण्यतीर्थेषु पर्व्वसु ।
कनकाद्रिं द्विजोघृत्वा लोभाद्विष्कारणं भुवि ॥
स भवेद्विन्ध्यदेशेषु—पिशाचः कान्तिवर्ज्जितः । )
चतुर्थांशव्ययं कृत्वा यागं वा बहुदक्षिणम् ।
प्रायश्चित्तेन पूतात्मा पुनः संस्कारमाचरेत् ॥
शुद्धिमाप्नोति लोकेऽस्मिन् अर्हता नित्यकर्म्मसु ।
भिक्षाटनं वरं नृणां एतस्मात् सम्परिग्रहात् ॥
संसारं वा त्यजेद्विद्वान् सन्न्यासं वा परिग्रहेत्[१] ।
एवं मुक्तिमवाप्नोति कनकाद्रिं त्यजेदतः ॥

अपरिग्रहस्य विप्रस्य शुद्धा वृत्तिः कथिता ।

उञ्छवृत्तिः शिलवृत्तिः कुम्भवृत्तिः कुशूलता ॥
चतुर्व्वा वृत्तयः प्रोक्ताः कनकाद्रिप्रतिग्रहात् ।

एतासां पूर्व्वोक्तानामभावे कनकाद्रिग्रहे प्रायश्चित्तमाह—

मार्कण्डेयपुराणे,—

कनकाद्रिं द्विजोयस्तु गृह्णाति कारणैर्विना[२] ।
स तु शुद्धिमवाप्नोति कृच्छ्रैरयुतसंख्यकैः[३] ॥

कृच्छ्राणि प्राजापत्यानि ।

---

(—) अयं पाठः लेखितपुस्तके नोपलब्धः।
(१) वा परिग्रहं इति क्रीतलेखितपुस्तकपाठः ।
(२) कृत्वा इति क्रीतलेखितपुस्तकपाठः ।
(३) कृत्वा निष्कारणं सुधीः इति क्रीतपुस्तकपाठः ।
(४) कृच्छ्राणामयुतसंख्यया इति क्रीतलेखितपुस्तकपाठः ।

लिङ्गपुराणे—

कनकाद्रिं द्विजोऽहृत्वा राज्ञः पुण्यागमे तथा।
कृच्छ्रैरयुतसंख्याकैः शुद्धिमाप्नोति नाऽन्यथा॥ इति।

इति हेमाद्रौ कनकाचलप्रतिग्रहप्रायश्चित्तम्।

---

## अथ रजताचलप्रतिग्रहप्रायश्चित्तमाह।

वामनपुराणे—

राजतं योऽनुगृह्णीयात् (अचलं राजवल्लभात्।
पूर्वजो भोगमोहात्मा कालपाशवशं गतः॥
तत्पापमनुभूयाऽऽशु बलाकः स भवेद्वने।
त्रिषु जन्मसु काकः) स्यात् श्वेतरोगी भवेत्ततः[1]॥

शिवपुराणे—

राजभिः पुण्यकालेषु दत्तं यो रजताचलम्।
विना निमित्तैर्बहुभिः [2]प्रतिगृह्णाति भोगवान्॥

---

(—) अयं पाठः श्रीतपुस्तके नास्ति।
(१) भवेत् तदा इति श्रीतपुस्तकपाठः।
(२) प्रतिगृह्णातभोगवान् इति श्रीतपुस्तकपाठः।

ग्रीष्मं कालवशं गत्वा दुःखं तत्राऽनुभूय च ।
[1]वलाकः स भवेत्पश्चात् श्वेतरोगी स जायते ॥
( जन्मनवे तु काकः स्यात् तदा मुक्तिर्न जायते । )[2]

स्कन्दपुराणे—

राजतं प्रतिगृह्याऽद्रिं[3] प्रायश्चित्तपराङ्मुखः ।
[4]वलाकः स भवेत्पश्चात् काकः स्यात् त्रिषु जन्मसु ॥
कथञ्चिन्मुक्तिमापन्नः श्वेतरोगी भवेत्तदा ।

एतदकृतप्रायश्चित्तपरं कृतप्रायश्चित्तस्य न [5]वलाकत्वादि तदेवाह—

गारुडपुराणे—

प्रायश्चित्तेन पूतस्य द्विजस्याऽस्य शृणुष्व यत् ।
तस्यैव न[6] वलाकादिदैहिकीगतिरीरिता ॥
प्रायश्चित्तं पुरा कृत्वा धर्म्मशास्त्रोक्तमार्गतः ।

---

(१) बालक इति श्रौतपुस्तकपाठः ।
२(—) इदमर्द्धं वेष्टितपुस्तकेनास्ति ।
(३) राजतं प्रतिगृह्णाति इति श्रौतवेष्टितपुस्तकपाठः ।
(४) बालक इति श्रौतपुस्तकपाठः ।
(५) न बालत्वादि इति श्रौतपुस्तकपाठः ।
(६) तस्यैव इति श्रौतवेष्टितपुस्तकपाठः ।

ततः पश्चात् पुनः कर्म पञ्चगव्यं पिबेत्ततः[1] ॥
एवं पूतस्य विप्रस्य पश्चिजन्म न जायते ।
कनकाचलप्रतिग्रहप्रायश्चित्तार्थमत्राऽपि निष्कृतिर्गोऽन्यथा ।

इति हेमाद्रौ रजताचलप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ रत्नाचलप्रतिग्रहप्रायश्चित्तमाह ।

मार्कण्डेयः—

रत्नाचलं द्विजोभक्ते[2] राज्ञः पुण्यागमे तु यः ।
न तस्य पुनरावृत्तिर्नरकाद्भयदायिनः ।

ब्रह्माण्डे—

गङ्गातीरेऽथ गौतम्यां कृष्णवेणीनदीतटे ।
श्रीशैले सङ्गमे वाऽपि भीमरथ्यानदीतटे ॥
अहोबले महाक्षेत्रे वेङ्कटनाथस्य सन्निधौ ।
काञ्चीस्थले वेङ्कटाद्रौ श्रीरङ्गे कुम्भकोणके[3] ॥

---

(१) अनन्तरं इति श्रीतवेङ्कितपुस्तकपाठः ।

(२) भुङ्क्ते इति श्रीतवेङ्कितपुस्तकपाठः ।

(३) कुम्भकर्णके इति वेङ्कितकाञ्चीपुस्तकपाठः ।

मथुरायां महाराज चापाग्रे गन्धमादने ।
योद्विजोधनलोभेन राज्ञा दत्तानिमान् गिरीन् ॥
[1]गृह्णाति तस्य विप्रस्य पैशाच्यं जन्मनान्वये ।
निष्कारणतया भूप निमज्जन् नरकार्णवे ॥
पैशाचान्ते मर्त्यलोके[2] जायते पिटकाकृतिः ॥
तेषां मध्ये तथा राजन् रत्नाचलपरिग्रहात् ।
अरण्ये निर्जले देशे पिशाचोभवति ध्रुवम् ॥

स्कन्दपुराणे,—

षडशी संक्रमे चैव मन्वादिषु युगादिषु ।
अयने द्वितये चैव व्यतीपाते च वैधृतौ ॥
कृष्णाङ्गारचतुर्दश्यां अमायां [3]पूर्णिमादिने ।
द्वादश्यां पुष्यनक्षत्रे द्विजोलोभपरायणः ॥
अचलान् राजभिर्दत्तान् [4]प्रतिगृह्य पृथक् पृथक् ।
अकृत्वा [5]निष्कृतीस्तेषां तत्तत्पापविमुक्तये ॥
यमस्य सदनं गत्वा अनुभूय महद्भयम् ।
पिशाचो भवति क्षिप्रमरण्ये निर्जनेऽजले[6] ॥

---

(१) न गृह्णातीति श्रोतकोषितपुस्तकपाठः ।
(२) मनुजलोके इति श्रोतपुस्तकपाठः ।
(३) पौर्णिमादिने इति कोषितपुस्तकपाठः ।
(४) एषु पुण्यदिनेष्वपि इति कोषितपुस्तकपाठः । तेषु पुण्यदिनेष्वपि इति च श्रोतपुस्तक-पाठः ।
(५) निष्कृतिं इति श्रोतपुस्तकपाठः ।
(६) वने इति श्रोतपुस्तकपाठः ।

भविष्योत्तरे,—

रजस्वलामिमां धृत्वा द्विजो निष्कारणान्मुने[1] ।
अज्ञात्वा निष्कृतिं तस्य मृत्वा नरकमाप्नुयात् ॥
[2]पिशाचाशुभयं ज्ञात्वा जायते पिटकाकृतिः ।
तस्यैव निष्कृतिरियं ब्रह्मणा परिकल्पिता ॥
अरण्यं निर्जनं गत्वा शून्ये देवालये विभुम् ।
ज्ञात्वा शिववचस्थानं अप्यकृष्णाजिनं वहन् ॥
मौनव्रतमुपास्थाय वीरासनमुपाश्रितः ।
रुद्राध्यायं जपेन्नित्यं तावत्संख्याः समाचरन् ॥
यावदस्तं गतोभानुर्विरमेत्तावता जपात् ।
अव्रतन्नं पयोवाऽपि अशक्तो फलभोजनम् ॥
स्वपेच्च स्थण्डिले रात्रौ द्विजस्यैतस्य निष्कृतिः ।
एवं ऋतुत्रयं नीत्वा शुद्धिमाप्नोति वैदिकीम् ॥
अशक्तो तद्धनस्यार्द्धं [3]व्रतार्थं व्ययमाचरेत् ।
एवमेव निष्कृतिर्दृष्टा[4]रजस्वलापरिग्रहात् ॥
पुनः संस्कारमात्रेण शुद्धोभवति निश्चितम् । इति

---

(१) मुनिरिति वेष्टितकाशीपुस्तकपाठः ।
(२) पिशाचादि भयं ज्ञात्वा इति शीतपुस्तकपाठः ।
(३) तद्वर्षमिति शीतवेष्टितपुस्तकपाठः ।
(४) भूप इति शीतवेष्टितपुस्तकपाठः ।

प्रतिग्रहलब्धधनस्य चतुर्थभागेन पूर्व्ववत् प्रायश्चित्तं कृत्वा पुनः-संस्कारकाले ब्रह्मोपदेशं गायत्रीं [1]गुरोः सकाशात् शुद्धिमाप्नोति, नान्यथा शुद्धिरस्तीत्यर्थः ।

इति हेमाद्रौ रत्नाचलप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ धान्याचलप्रतिग्रहप्रायश्चित्तमाह ।

देवीपुराणे,—

धान्याचलप्रदाता यः पुण्यक्षेत्रेषु पर्व्वसु ।
अर्च्चयित्वा द्विजाग्र्याय स वै लोकाधिपो भवेत् ॥

[2]कूर्म्मपुराणे,—

अर्च्चिताय[3] द्विजाग्र्याय धान्याचलमनुत्तमम् ।
अर्च्चितं शास्त्रमार्गेण पुण्य[4]तीर्थेषु पर्व्वसु ॥
यो दद्यात् पृथिवीपालः स गच्छेद् विष्णुमन्दिरम् ॥

---

(१) गुरवा इति कोलब्रुकियपुस्तकपाठः ।
(२) ज्ञातपुस्तके नास्ति ।
(३) अर्च्चयित्वा इति ज्ञातपुस्तकपाठः ।
(४) कालेषु इति ज्ञातपुस्तकपाठः ।

लिङ्गपुराणे,—

धान्याचलं द्विजो मोहात् पुण्यकाल उपागते।
प्रतिगृह्य नृपश्रेष्ठात् अकृत्वा धर्मसंग्रहम्॥
आरामेषु च देशेषु पिशाचो दुर्भगो भवेत्।
ततोऽनुभूय नरकं पुनर्मूषिकतां[1] व्रजेत्॥

स्कान्दपुराणे,—

शृणु वत्स्य वक्ष्यामि धान्याचलपरिग्रहे।
दोषं परिग्रहीतुर्वै राज्ञो धर्मानुवर्त्तिनः॥
शालिक्षेत्रे वने वाऽपि आरामे दृष्यसङ्कुले।
पिशाचो दुर्भगो नाम त्रासयन् वै जनान् बहून्॥
महान्तं नरकं भुक्त्वा अकृत्वा धर्मनिष्कृतिम्।
स भवेत् मूषिकः[2] क्षुत्क्षिप्तु अधस्य संग्रहात्॥

भविष्योत्तरे,—

धान्याचलं द्विजो भुक्त्वा दृष्यलोभपरायणः।
अकृत्वा निष्कृतिं तस्य स भवेत्पिशिताशनः॥
तद्दोषपरिहारार्थं कृत्वा चान्द्रायणत्रयम्।
पुनः संस्कारमात्रेण शुद्धिमाप्नोति दैहिकीम्॥

---

(१) मूषकतां इति श्रीतपुस्तकपाठः।
(२) मूषकः इति श्रीतपुस्तकपाठः।

भविष्योत्तरे,—

( धान्याचलस्य महतस्तस्य निष्कृतिरीरिता ।
यागादिकं पुराऽकृत्वा कुर्य्याच्चान्द्रायणत्रयम् ॥
पुनः संस्कारपूतात्मा गायत्री मभ्यसेद्विजात् ।
तां पठन् प्रयतोनित्यं वर्त्तयेद्यदि बुद्धिमान् ।
अन्यथा निष्कृतिर्नाऽस्ति पापस्यैतस्य गौरवात् ॥ )

विष्णुपुराणे,—

समाऽचलाः समुद्राश्च निर्म्मिताश्चक्रपाणिना ।
जनानां पापनाशाय स्मरणात्कीर्त्तनादिषु ॥
तेषां प्रतिग्रहे राजन् पतितः स्याद्विजाधमः ।
अतस्तस्य पुनः कर्म्म मुनिभिः परिकीर्त्तितम् ॥

पुनःकर्म्म पुनःसंस्कार इत्यर्थः ।

इति हेमाद्रौ धान्याचलप्रतिग्रहप्रायश्चित्तम् ।

---

(—) अत्र श्रीतपुस्तके पाठः ।
"धान्याचलं द्विजोभुक्त्वा द्रव्यलोभपरायणः ।
अकृत्वा निष्कृतिं तस्य स भवेत्पतिताधमः ॥
तद्दोषपरिहारार्थं कृत्वा चान्द्रायणत्रयम् ।
पुनःसंस्कारपूतात्मा गायत्रीमभ्यसेद्द्विजः ॥
तां पठन् प्रयतोनित्यं वर्त्तयेत् स विप्रविधानात् ।
अन्यथा निष्कृतिर्नास्ति पापस्यैतस्य गौरवात् ॥

## अथ तिलपर्व्वतप्रतिग्रहप्रायश्चित्तमाह ।

नारदीये,—

तिलाचलः कालपुरुषस्तिलधेनुस्तिलास्तथा ।
तिलकृष्णाजिनञ्चैव शकटं सयुगं तथा ॥
एतानि विप्रवर्य्याणां महानरकदानि वै ।
निष्कारणतया राजन् प्रतिगृह्य द्विजाधमः ॥
महान्तं नरकं भुक्त्वा गत्वा स्त्रीजन्म निन्दितम्[1] ।
पश्चात्तापसमायुक्तः प्रायश्चित्तं यदीच्छति ॥
प्रायश्चित्तेन महता[2] पुनः संस्कारमर्हति ।

ब्रह्माण्डे,—

धनलोभेन योविप्रः समादत्ते[3] तिलाचलम् ।
सप्तजन्मसु नारी स्यात् तत्राऽपि विधवा भवेत् ॥
नार्य्येव नरकस्थानं किमन्यैर्बहुभाषितैः ।
वैधव्यसदृशं दुःखं स्त्रीणामन्यन्न विद्यते ।
तत्राऽपि बालवैधव्यं तिलाचलप्रतिग्रहात् ॥

---

(१) महान्तं नरकं गत्वा स्त्रीजन्म तदनन्तरमिति क्रीतपुस्तकपाठः ।
(२) मनसा इति क्रीतवेष्टितपुस्तकपाठः ।
(३) प्रतिगृह्य इति क्रीतवेष्टितपुस्तकपाठः ।

स्कन्दपुराणे,—

पुण्यकालेषु वै[1] पुत्र पुण्यतीर्थेषु पर्व्वसु ।
तिलाचलं द्विजोधृत्वा महान्तं नरकं व्रजेत् ॥
पश्चाद्भवति नारीत्वं समजन्मसु कुत्सितम् ।
वैधव्यदुःखभाग्भूत्वा[2] पश्चात् कण्डूतिमान् भवेत् ॥
अतोद्विजन्मनः पुत्र ! धनिकस्य तिलाचलम् ।
[3]प्रतिगृह्य भवेद्विप्रोयागादिषु पराङ्मुखः ।
अजागलस्तनमिव तस्य जन्म तदा वृथा ॥

भविष्योत्तरे,—

विप्रस्तिलाचलं धृत्वा भूपालात्[4] पुण्यपर्व्वसु ।
शुद्धोयागादिकं कृत्वा अन्यथा नित्यसूतकी ॥

कूर्मपुराणे,—

यावन्तः पर्व्वता राजन् तिलराशीकृता नृभिः ।
तावन्ति पापजालानि ग्रहीतुर्नाऽत्रसंशयः[5] ॥
अतोविप्रवराणाञ्च गर्हणं तत्परिग्रहः ।
यदोच्छेन्मनसा शुद्धिं तिलाचलप्रतिग्रहात् ॥

---

(१) यः इति श्रौतवेष्टितपुस्तकपाठः ।
(२) वैधव्यं दुःखमामेत्य इति श्रौतवेष्टितपुस्तकपाठः ।
(३) लब्धा प्रतिग्रहं इति श्रौतवेष्टितपुस्तकपाठः ।
(४) राजतः इति वेष्टितपुस्तकपाठः ।
(५) यन्ति पुत्र न संशय इति श्रौतवेष्टितपुस्तकपाठः ।

अनुज्ञातो द्विजेन्द्राणां मनसा हरि¹मुच्चरन् ।
नद्यां समुद्रगामिन्यां प्रातःस्नात्वा यथाविधि ॥
नित्यकर्म्म समाप्याऽथ स्वगृहे देवसन्निधौ ।
स्थण्डिलाग्निं प्रतिष्ठाप्य आज्यभागान्तमाचरेत् ॥
त्र्यम्बकेणैव मन्त्रेण तिलैराज्याभिमिश्रितैः ।
आसायं जुहुयाद्वह्नौ तावत्संख्यां समुद्वहन् ॥
²विमुच्य च तदा होमं तमग्निं न त्यजेद्बुधः ।
अव्रतघ्नान् तिलान् भुक्त्वा³ स्वपेद्देवगृहे मुदा ॥
परेद्युः प्रातरुत्थाय पूर्व्ववद्धोममाचरेत् ।
यावत् प्रयुतसंख्या स्यात् तावद्धोमं समापयेत् ॥
उपोष्य रजनीमेकां पुनः संस्कारमाचरेत् ।
एषा विशुद्धिरुदिता तिलानाञ्च प्रतिग्रहे ॥
अन्यथा निष्कृतिर्नाऽस्ति दानैस्तीर्था⁴वगाहनैः । इति

प्रयुतं दशलक्षं, तदुक्तं—

महाभारते —

अयुतं दशसाहस्रं नियुतं लक्षमुच्यते ।
प्रयुतं दशलक्षं स्याद् अर्व्वुदं कोटिरुच्यते ॥ इति ।

---

(१) अर्च्चयन् इति क्वचित्पुस्तकपाठः ।
(२) विरम्याथ तदा होमं इति क्वचित् पुस्तकपाठः ।
(३) भुक्त्वा इति केचित्पुस्तकपाठः ।
(४) तीर्थै इति केचित्पुस्तकपाठः ।

एतत्प्रायश्चित्तं पूर्व्ववत् सधनस्य चतुर्भागव्ययेन कुर्य्यात्, अन्यथा न निष्कृतिः ।

इति हेमाद्रौ तिलाचलप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ कार्पासाचलप्रतिग्रहप्रायश्चित्तमाह ।

मार्कण्डेयपुराणे,—

सवीजञ्जमिकीटाद्यैः शोधितं पुण्यपर्व्वसु ।
कार्पासं द्विजवर्य्याय योदद्यात् सोऽपि मुक्तिभाक् ॥

ब्रह्माण्डे—

कार्पासस्याऽचलं राजा पुण्यदेशेषु पर्व्वसु ।
अर्च्चितं गन्धवस्त्राद्यैः शास्त्रमार्गेण धर्म्मतः ॥
योदद्याद् द्विजवर्य्याय स मुक्तः संसृतेर्भयात् ।
तद्दीजानीह यावन्ति तावत्कालं वसेद्दिवि ॥

कूर्म्मपुराणे,—

कार्पासस्याऽचलं विप्रः प्रतिगृह्य जनाधिपात् ।
सद्यः पतति पुण्यानि तस्य[1] पापानि सन्दिशेत् ॥

---

(१) कर्त्तुः इति श्रीतवेश्चितपुस्तकपाठः ।

स विप्रः पतितोभूयाद् आत्मघाती नरेश्वर।
मृतः कालवशं गत्वा काकोलं नरकं व्रजेत्॥
तदन्ते भुवमासाद्य श्वेतरोगी दरिद्रकः[1]।
पत्नीपुत्रपरित्यागी दुःखितः स्यात्पुनः पुनः॥

ब्रह्माण्डपुराणे,—

योविप्रः पुण्यकालेषु गिरिकार्पाससंश्रितम्।
अर्जितं गन्धवस्त्राद्यैः [2]प्रतिगृह्णाति भूपते॥
अकृत्वा स[3]व्रतं सम्यक् यमपाशवशङ्गतः।
काकोलं नरकं गत्वा श्वेतरोगी भवेद्भुवि।
अथ तद्दोषनाशार्थं प्रायश्चित्तं चरेद्बुधः॥

स्कन्दपुराणे,—

कार्पासस्याचले पुत्र प्रायश्चित्तमिदं शृणु।
पश्चात्तापसमायुक्तः प्राप्याऽनुज्ञां द्विजोत्तमैः॥
विपिनं निर्ज्जनं गत्वा वपनं कारयेत्ततः।
तत्र त्रिषवणस्नानं कृत्वा विष्णुपरायणः॥
नाभिमात्रजले स्थित्वा [4]प्राङ्मुखोदङ्मुखः शुचिः।
पुरुषसूक्तं जपंस्तिष्ठेद् आनक्षत्रोदयाज्जले॥

---

(१) दरिद्रताम् इति श्रीतर्कचिंतपुस्तकयोः पाठः।
(२) प्रतिगृह्णन्नराधिपात् इति श्रीतर्कचिंतपुस्तकपाठः।
(३) तद्व्रतं इति श्रीतर्कचिंतपुस्तकपाठः।
(४) प्राङ्मुखमुदङ्मुखः शुचिरिति काशीपुस्तकपाठः।

ततो विरम्य सहसा संख्यां मनसि धारयन् ।
मुष्टिद्वयमितान् सक्तून् भक्षयेद्गुडवर्ज्जितम् ॥
स्वपेन्नारायणस्याऽग्रे केवले स्थण्डिले व्रती ।
पुनः परेद्युरुत्थाय पूर्व्ववज्जपमाचरेत् ॥
यथैव पूर्व्वसंख्या यावत्कालेन साध्यते ।
तदा विरम्य पूर्व्वद्युरुपोष्य विधिपूर्व्वकम् ॥
पुनः कर्म्म तदा कुर्य्याद् दक्षमौक्ता[1]जिनं विना ।
एतेनैव विशुद्धिः स्यात्स्याऽन्यथा शुद्धिरिष्यते ॥

एतत्प्रायश्चित्ताकरणे पूर्व्ववत्स्वधनस्य चतुर्भाग[1]व्ययेन प्रायश्चित्तं कुर्य्यात् । तेन शुद्धोभवतीत्यर्थः ।

इति हेमाद्रौ कार्पासाचलप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ लवणाचलप्रतिग्रहप्रायश्चित्तमाह—

मार्कण्डेयपुराणे,—

लवणाचलं नरपतिरादरात् कुरुते यदा ।
पुण्यदेशे पुण्यनदीतटेषु विमलेषु च ॥

---

(१) चतुर्भागेन इति श्रीतर्कपञ्चाननपुस्तकपाठः ।

तदा विप्राय दद्यात् तं ममश्रीलवते स्वयम् ।
एवं हि तस्य न भूमौ पुनरागमसम्भवः ॥

स्कन्दपुराणे,—

पुरा हिमवतः पार्श्वे कन्यका काचिदप्सराः ।
सुकेशी सुदती सुभ्रूर्हसन्ती सुन्दरस्तनी ॥
विहारार्थं वहिर्गत्वा विचरन्ती गृहाङ्गणे ।
तदा तामवलोक्याऽथ रावणोनाम राक्षसः[1] ॥
कामातुरोमोहवशात्[2] हस्तङ्ग्राह पाणिना ।
हस्तस्पर्शनमात्रेण तस्या[3]भूत्सात्विकोदयः ॥
स्तम्भःप्रलापोरोमाञ्चः स्वेदोवैवर्ण्यवेपथू ।
अश्रु वैस्वर्य्यमित्यष्टौ सात्विकाः परिकीर्त्तिताः ॥
स्वेदोदकं तदा तस्य नदीभूत्वा[4] प्रवर्त्तते ।
तदा प्रभृत्यसौ सिन्धुर्लावण्यो भुवि विश्रुतः ॥
सा तदा हिमवत्पार्श्वात् प्रत्येकं सागरङ्गता ।
स्वेदरूप[5] प्रवाहेण पत्नीभावपरिष्कृता ॥
अङ्गीचकार सलिलं लावण्यं लवणाम्भसि ।
तदा प्रभृत्यसौ सिन्धुर्लवणो जलसङ्गमात् ॥

---

(१) दैत्यराट् इति श्रीतबेचितपुस्तकपाठः ।
(२) तदातन्वी इति श्रीतबेचितपुस्तकपाठः ।
(३) तदा इति श्रीतबेचितपुस्तकपाठः ।
(४) नदीरूपा इति बेचितपुस्तकपाठः ।
(५) स्वेदरूपा इति श्रीतपुस्तकपाठः ।

मत्यूषरतया राजन् लवणोदधिरीरितः ।
तेनोत्पन्नं तु लवणं दोषाधिकतया मुने ॥
न प्रतिग्रहणं तस्य केचिदिच्छन्ति सूरयः ।
लवणं वाऽणुमात्रं वा प्रतिगृह्णाति चेद्द्विजः[1] ।
तन्निष्कृतिं पराकृत्य विन्ध्यदेशे पिशाचता ॥

मार्कण्डेयपुराणे,—

लवणस्याऽचलं हृत्वा राज्ञः पुण्यागमे सकृत् ।
विप्रोयदिह दुष्टात्मा यमपाशवशङ्गतः ॥
महान्तं नरकं भुक्त्वा पिशाचोभवतिध्रुवम् ।
पश्चाद्भुवमुपागम्य खेदाङ्गोजायते सदा ॥

ब्रह्मवैवर्त्ते—

पूर्व्वजस्याचलं हृत्वा लावणं राजवल्लभात् ।
[2]पुण्यतीर्थे पुण्यदेशे पुण्यकालेषु पर्व्वसु ॥
निष्कारणतया लोभाद् यमलोकमुपागतः ।
महद्भयं तदा भुक्त्वा पुनर्भुवमुपाविशन् ॥
पिशाचजन्मतामित्य तदन्ते खिन्न[3]देहवान् ।
अतः प्रतिग्रहस्तस्य गर्हितो लोकवर्ज्जितः ॥

---

(१) प्रतिगृह्णाति द्विजोयदि इति श्रीतवेष्टितपुस्तकपाठः ।
(२) पुण्यतीर्थेषु पुण्यदेशेषु इति श्रीतपुस्तकपाठः ।
(३) खेददेहवान् इति श्रीतवेष्टितपुस्तकपाठः ।

शिवपुराणे,—

मुख्यजो बाहुजाद् धृत्वा लावणमचलं भुवि ।
पिशाचत्वं व्रजेत्[1] पश्चात् खेदाक्लोजायते पुनः ॥
तस्य पापविशुद्ध्यर्थं प्रायश्चित्तमिदं द्विजैः ।
दर्शितं लोकरक्षार्थं तदहं कथयामि वः[2] ॥
विप्रानुज्ञामवाप्याऽथ पश्चात्तापसमन्वितः ।
[3]स्नात्वा शुभनदीतोये गत्वा पर्व्वतगह्वरम् ॥
[4]कण्टकप्रचयं धृत्वा स्वमूर्द्धन्यात्मनः सदा ।
तत्र तिष्ठन् जपेदेनं सर्व्वपापापनुत्तये ॥
नारायणं हृदा ध्यायन् सर्व्वपापप्रणाशनम् ।
आधारं सर्व्वमन्त्राणां यावदस्तं गतोरविः ॥
तदा विरम्य सहसा संख्यां मनसि धारयन् ।
पलद्वयप्रमाणेन पिबेद्गोदुग्धमादरात् ॥
स्वपेन्नारायणस्याऽग्रे स्थण्डिले केवले भुवः ।
ततः परेद्युरुत्थाय पूर्व्ववज्जपमा[5]चरेत् ॥
एवं ऋतुद्वयं कृत्वा नियतं विधिपूर्व्वकम् ।
रुद्राध्यायं पठेद्वाथ उत विष्णोरनुज्ञया ॥

---

(१) भवेदिति श्रीतर्केक्षितपुस्तकपाठः ।
(२) कथयामि च इति श्रीतपुस्तकपाठः ।
(३) कृत्वा इति श्रीतपुस्तकपाठः ।
(४) कण्टकं चाहरं इति श्रीतपुस्तकपाठः ।
(५) चादरात् इति श्रीतर्केक्षितपुस्तकपाठः ।

एतद्द्वयोरभावेऽपि प्रायश्चित्तं समाचरेत् ।
पूर्व्ववत् तत्पनस्यार्थं प्रायश्चित्तं विशुद्धिदम् ॥
अन्यथा निष्कृतिर्नाऽस्ति लवणाचलसंग्रहे ।

नियुतं नमकचमकौ, आरण्यदशमाध्यायो नारायणं, सर्व्वमन्त्राणा आकरत्वात् । एवं कृते लवणाचलप्रतिग्रहपापनिवृत्तिर्भवति ।

तदेवाह,—

दशाध्यायं सकृज्जप्त्वा सर्व्वपापैः प्रमुच्यते ।
अत्यशनादतिपानात् [3]तथाचोपात् प्रतिग्रहात् । इति ।

अत्यशनं सपिण्डीकरणश्राद्धादिषु निमित्तेष्वन्नाने भोजनमत्यशनं अतिपानं शूद्रप्रपादिषु पानमतिपानम् । उग्रप्रतिग्रहः शूद्रादिभिर्दत्तस्य[1] [2]लवणाचलादेः प्रतिग्रहः । प्रायश्चित्तपक्षे पुनः सत्कारं पूर्व्ववत् कृत्वा शुद्धोभवति नाऽन्यथयति ।

इति हेमाद्रौ लवणाचलप्रतिग्रहप्रायश्चित्तम् ।

---

(१) दत्तस्येति श्रोतलेखितपुस्तकपाठः ।

(२) महद्भूताभ्यितः इति श्रोतपुस्तकपाठः ।

(३) बहु चोपात् इति श्रोतपुस्तकपाठः ।

## अथ तिलधेनुप्रतिग्रहप्रायश्चित्तमाह ।

देवीपुराणे,—

महापुण्यनदीतीरे व्यतीपाते च वैधृतौ ।
ग्रहणे संक्रमे चैव मन्वादिषु युगादिषु ॥
राज्ञा दत्तां तिलमयीं धेनुं गन्धाक्षतैर्युताम् ।
अर्च्चितां योद्विजोऽहृत्वा हतोमृत्युवशङ्गतः ॥
[1]सोऽनुभूय महाघोरां वेदनां यमनिर्म्मिताम् ।
पश्चाद् भवति पापात्मा निष्पुत्रो रोगवान् भुवि ॥

कूर्म्मपुराणे—

पुण्यतीर्थेषु[2] पुण्याहे जन्मर्क्षे जन्मसम्भवे ।
दत्तां राजभिर्गन्धाद्यैरर्च्चितां तिलरूपिणीम् ॥
योद्विजः प्रतिगृह्णाति [3]न कुर्य्यान्निष्कृतिं शुभाम् ।
तस्यैव[4]मृत्युरायाति अनुभूय महद्भयम् ॥
पश्चात्पापी महान् घोरोनिष्पुत्रो[5]रोगवान् भवेत् ।
तिलाः सन्तीह यावन्तोह्यजिने धेनुवत्सयोः ॥

---

(१) अनुभूय इति श्रीतवेष्टितपुस्तकपाठः ।
(२) पुण्यकालेषु इति श्रीतपुस्तकपाठः ।
(३) अकृत्वा इति श्रीतवेष्टितपुस्तकपाठः ।
(४) तथैव इति वेष्टितपुस्तकपाठः ।
(५) रोगवान् इति वेष्टितपुस्तकपाठः । रोषवान् इति श्रीतपुस्तकपाठः ।

तावद्युगसहस्राणि नरके वासमश्नुते[1] ।
तस्येह नित्यकर्म्माणि क्षरन्ते तत्प्रतिग्रहात् ॥
तस्मात्प्रतिग्रहो धेनोर्निष्कारणतया नृप ।
गर्हितो मुख्यजानां हि तस्मादेतत् परित्यजेत् ॥

लैङ्गे,—

पूर्व्वोक्तेष्वेषु पुण्येषु दिनेषु पृथिवीपतेः ।
धेनुं तिलमयीं विप्रो गृह्णीयाद्यदि लोभतः[2] ।
तस्य नित्यञ्च काम्यञ्च इष्टापूर्त्तादिकञ्च यत् ।
सर्व्वं [3]क्षरति तत्काले दानमश्रोत्रिये यथा ॥
तस्यैव निष्कृतिरियं कथिता मुनिपुङ्गवैः ।
तद्द्रव्यं सम्परित्याज्यं दक्षिणामाचमुद्वहेत्[4] ॥
आधानं वा क्रतुं वापि कृत्वा सर्व्वस्वदक्षिणम् ।
ततः शुद्धिमवाप्नोति पुनः संस्कारपूर्व्वकम् ।
अन्यथा निष्कृतिर्नाऽस्ति पञ्चचान्द्रायणै[5]र्विना ॥

(१) पापमश्नुते इति श्रोतवेष्टितपुस्तकपाठः ।
(२) धेनुं तिलमयीं दत्वा विप्रो लोभपरायणो इति श्रोतवेष्टितपुस्तकपाठः ।
(३) तरति इति वेष्टितपुस्तकपाठः ।
(४) उद्वहन् इति श्रोतवेष्टितपुस्तकपाठः ।
(५) पञ्चचान्द्रायणं विना इति श्रोतपुस्तकपाठः ।

स्कान्दपुराणे—

दौर्ब्राह्मण्यनिवृत्त्यर्थं धेनुं तिलमयीं द्विजः ।
गृहीत्वाऽऽधानयागौ[1] च कृत्वा तत्राऽग्निमर्पयेत् ॥
प्रधानं सम्परित्यज्य न दोषस्तत्प्रतिग्रहात् ।
अथवा पञ्चभिश्चान्द्रैः[2] शुद्धिमाप्नोति वैदिकीम् ॥
पुनः संस्कारमात्रेण नित्यकर्मस्वियाऽर्हता ।
उभयं यः परित्यज्य[3] वर्त्तते भोगलोलुपः ॥
स मृत्वा[4] निष्प्रजोभूयात् तिलरोगीमहान् भुवि ॥

इति हेमाद्रौ तिलधेनुप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ घृतधेनुप्रतिग्रहप्रायश्चित्तमाह—

स्कान्दपुराणे,—

धेनुं घृतमयीं दत्तां[1] कृष्णाजिनपरिष्कृताम्
स्वर्चितां गन्धवस्त्राद्यैराजभिः पुष्पसत्कृमि ॥

---

(१) अग्न्याधानञ्च यागञ्च इति श्रीतवेष्टितपुस्तकपाठः ।
(२) चान्द्रैः इति श्रीतपुस्तकपाठः ।
(३) परित्यज्य केवलं इति श्रीतपुस्तकपाठः ।
(४) तदन्ते इति श्रीतवेष्टितपुस्तकपाठः ।
(५) शुद्धां इति श्रीतपुस्तकपाठः ;

तथा परिग्रहं [1]कृत्वा द्विजोयागादिभिर्विना ।
यमलोकमुपागम्य कुम्भीपाके निमज्जति ॥
तदन्ते भुवमासाद्य दैवज्ञोजायते भुवि ।
अतोमहादोषभयात् परित्याज्या[2] द्विजन्मभिः ॥

लिङ्गपुराणे—

धेनुमेकां द्विजोराजन् अजिने घृतनिर्म्मितास् ।
सवत्सां घृतधेनुं[3] यो निष्कारणतया वहेत्[4] ॥
कुम्भीपाके निमज्जेत्स[5] पीड़ितोयमकिङ्करैः ।
तदन्ते पृथिवीमेत्य वैणवानां कुलोद्भवः ॥
हीनजातिषु सर्व्वासु भूत्वा भूत्वा न निष्कृतिः ।
यागादिकं न कुर्य्याच्चेद्[6] एतस्मान्न विमुच्यते ॥

गारुड़पुराणे,—

कृष्णाजिनेषु पुण्येषु निर्म्मितां घृतरूपिणीम् ।
प्रदत्तां[7] राजपुरुषैर्धेनुं यो मुखजोवहेत्[8] ॥

---

(१) त्यक्त्वा इति क्षीतलेखितपुस्तकपाठः ।
(२) परित्यागः इति क्षीतपुस्तकपाठः ।
(३) घृतधेनुंसवत्सेन इति क्षीतपुस्तकपाठः ।
(४) वहतु इति ।लिखितपुस्तकपाठः ।
(५) निमज्जन्नि इति लेखितपुस्तकपाठः । तन्मज्जन्नि इति क्षीत-पुस्तकपाठः ।
(६) अकृत्वाचेत् इति लेखितपुस्तकपाठः ।
(७) पूजितां इति क्षीत-पुस्तकपाठः ।
(८) वहनु इति लेखितपुस्तकपाठः ।

तस्यैव नरकोघोरः कुम्भीपाकः समुज्ज्वलन्।
तत्र भुक्त्वा पुनः पापी प्राप्य वैवस्वतक्षताम्॥
नानायोनिषु सम्भूयाद् यागादिषु पराङ्मुखः।
पश्चात्तापसमायुक्तः प्रायश्चित्ती भवेत्ततः॥

तत्र प्रायश्चित्तमाह—

ब्रह्माण्डे,—

घृतधेनुं राजदत्तां सर्च्चितां वस्त्रभूषणैः।
पुण्यकालेषु पुण्याहे प्रतिगृह्णाति चेद्विजः[1]॥
द्रव्यलोभपरीतात्मा प्रायश्चित्तमिदञ्चरेत्।
नदीषु पुण्यतीर्थेषु स्नातः प्रातर्यथाविधि॥
स्वगृहं पुनरागत्य स्वगृह्याग्नौ विशुद्धये।
अग्नीन्धनादिकं कृत्वा आज्यभागान्तमाचरेत्॥
तस्मिन्नग्नौ सपत्नीकः कुष्माण्डै[2] र्जुहुयाच्छतम्।
तदर्द्धं गणहोमञ्च कृत्वा शुद्धिमवाप्नुयात्॥
निराहारस्तदा तिष्ठेत् पयोवा धेनुसम्भवम्।
अधःशायी पिबेत्तत्र[3] पत्नीपुत्रविवर्ज्जितः॥
एवं व्रती दिनं कुर्य्यात् संख्यां यावत् समाप्य च।
तदन्ते भोजयेद् गव्यं होमशेष विशुद्धये॥

---

(१) प्रतिगृह्य द्विजोयदि इति क्रोतलेखितपुस्तकपाठः।
(२) कुष्माण्डं इति क्रोतपुस्तकपाठः।
(३) भवेत्तत्र इति लेखितपुस्तकपाठः।

ब्राह्मणान् भोजयेत् पश्चात् परिक्रम्य प्रणम्य च ।
स्वयञ्च पारणं कुर्य्यात् पत्नीपुत्रसमन्वितः ॥
एवं कृत्वा द्विजः शुध्येर[1]दन्यथा पातकी भवेत् ।

एतदाचरणेऽसमर्थः स्वधनार्द्धार्द्धभागेन पूर्व्ववत् प्रायश्चित्तं कृत्वा शुद्धिमाप्नोति ।

इति हेमाद्रौ घृतधेनुप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ जलधेनुप्रतिग्रहप्रायश्चित्तमाह ।

स्कन्दपुराणे,—

अथ दोषान्[2] प्रवक्ष्यामि जलधेनुप्रतिग्रहे ।
अमायां सर्व्वसंक्रान्तौ द्वादशीपूर्णिमादिने[3] ॥
महातीर्थेषु पुण्येषु तथा पुण्यालयेषु च ।
कृष्णाजिनेन निर्म्माय धेनुं जलमयीं शुभाम् ॥
अर्चितां ब्रह्मरूपाद्यैः धर्म्ममार्गेण राजभिः ।
दत्तां गृहीत्वा योविप्रो[4] द्रव्यलोभपरायणः ॥

---

(१) शुद्धं इति श्रौतवैश्चितपुस्तकपाठः ।
(२) वक्ष्य इति श्रौतवैश्चितपुस्तकपाठः ।
(३) पौर्णमीदिने इति वैश्चितपुस्तकपाठः ।
(४) द्विजोदयाद्याद्यौ इति वैश्चितपुस्तकपाठः ।

आत्मनःपरलोकार्थं न [1]कुर्य्यान्निष्कृतिं यदि ।
सोऽनुभूय महत्पापं यमलोके तदाज्ञया ॥
पुनर्भूभागमासाद्य जायते कच्छपोमहान् ।
ततःप्रतिग्रहोदोषः पूर्व्वजानामिहाऽन्यतः ॥

कूर्म्मपुराणे,—

धृत्वा जलमयीं धेनुं द्विजोभोगपरायणः ।
अर्च्चितां प्रभुभिर्दत्तां[2] शास्त्रपूतेन वर्त्मना ॥
यागादिकं पराकृत्य पराकृत्य च निष्कृतिम् ।
पुण्यतीर्थे पुण्यदेशे पुण्यकालेषु पर्व्वसु ॥
निष्कारणतया लोभाद्यमलोकमुपागतः ।
महद्भयं तदा भुक्त्वा पुनर्भुवमुपाविशन् ॥
पिशाचजन्मतामेत्य जायते[3] खेददेहवान् ।
अतः प्रतिग्रहस्तस्य गर्हितोलोकवर्ज्जितः ॥

[ शिवपुराणे,—

मुखजो बाहुजाद् धृत्वा लावण्यमचलं भुवि ।
पिशाचत्वं मृतोयाति[4] खेदाक्तोजायते पुनः ॥

---

(१) अकृत्वा इति शीतवेष्टितपुस्तकपाठः ।
(२) पूतां इति शीतपुस्तकपाठः ।
(३) तद्गले इति शीतवेष्टितपुस्तकपाठः ।
(४) अवेसह इति वेष्टितपुस्तकपाठः ।

तस्य पापविशुद्धार्थं प्रायश्चित्तमिदं द्विजैः ।
दर्शितं लोकरक्षार्थं तदहं कथयामि वः ॥
विप्रानुज्ञामवाप्याऽऽशु पश्चात्तापसमन्वितः ।
स्नात्वा शुद्धनदीतोये गत्वा पर्व्वतगह्वरम् ॥
कण्टकैर्मुकुटं धृत्वा स्वमूर्द्धन्यात्मनः सदा ।
तिष्ठन् तत्र जपेदेनं सर्व्वपापापनुत्तये ॥
नारायणं हृदा ध्यायन् सर्व्वपापप्रणाशनम् ।
आधारं सर्व्वमन्त्राणां यावदस्तं गतो रविः ॥
तदा विरम्य सहसा संख्यां मनसि धारयन् ।
पलद्वयप्रमाणेन पिबेद्गोदुग्धमादरात् ॥
स्वपन्नारायणस्याऽग्रे स्थण्डिले केवले भुवि ।
ततः परेद्युरुत्थाय पूर्व्ववज्जपमादरात् ॥
एवं ऋतुद्वयं कृत्वा नियुतं विधिपूर्व्वकम् ।
रुद्राध्यायं पठेत् यद्वा उत विष्णोरनुज्ञया ॥
एतद्द्वयोरभावेऽपि प्रायश्चित्तं समाचरेत् ।
पूर्व्ववत्तज्जनार्द्दनं प्रायश्चित्तं विशुद्धिदम् ॥
अन्यथा निष्कृतिर्नास्ति लवणाचलसंग्रहे ।

नियुतं नमकचमकौ, आरण्यदशमाध्यायो नारायणं सर्व्वमन्त्राणां आकरकत्वात् । एवं लवणाचलप्रतिग्रहपापनिवृत्तिर्भवति ।

दशाध्यायं सकृत् जप्त्वा सर्व्वपापैः प्रमुच्यते ।

तदेवाह,—

अत्यशनादतिपानात् तथा चोग्रात्प्रतिग्रहात्

दम्भाद्वा वा यदि वा मोहात् पराकृत्यैव निष्कृतिं
क्षिप्त्वा क्षारोदके कूपे तदन्ते भुवमाविशन् ॥
अगाधे जायते कूर्म्मो ह्रदे जलपरिष्कृते ।
एतद्दोषोपशान्त्यर्थं प्रायश्चित्तं समाचरेत् ॥
(महापाप) भयाद्भूप त्याज्यो विप्रैः प्रतिग्रहः ]* ।

मत्स्यपुराणे,—

प्रतिगृह्य द्विजो मोहाद् धेनुं जलमयीं नृपात् ।
यागादिकं स्वशुद्धिं वा अकृत्वा भोगलोलुपः ॥
यमलोके महाघोरे तीर्त्वा क्षारोदकं बलात् ।
तदन्तेऽत्र समागत्य जायते कच्छपो जले ॥
एतद्दोषोपशान्त्यर्थं त्याज्यो विप्रैः प्रतिग्रहः ।
गण्डक्यां वाऽथ गौतम्यां कृष्णवेण्यां नदीजले ।
कावेर्यां तुङ्गभद्रायां चापाग्रे गन्धमादने ॥
आत्मनः सम्मतं तीर्थं यदेतेषु च[1] सम्भवेत् ।
अनुज्ञाप्य द्विजैः सार्द्धं गत्वा तत्र यतात्मवान्[2] ॥
निमित्तं कीर्त्तयित्वाऽथ स्नायाच्चीर्णव्रतो व्रजेत्मार्गतः ।
त्रिसहस्रं च त्रिशतं विंशत्युत्तरमेव च ॥

---

* [ ] एषः पाठः क्रीतकाशीपुस्तकयोर्नोपलब्धः ।
(१) पूर्व्वोक्तेष्वेषु सम्भवं इति केचित्पुस्तकपाठः ।
(२) गत्वा पुण्योदके तथा इति केचित्पुस्तकपाठः ।

एतत् कुर्य्याद्द्विशुद्धात्मा परिषत्सन्निधौ मुदा ।
एतत्पापविशुद्ध्यर्थं प्रायश्चित्तं द्विजन्मनाम् ॥
नाऽन्यथा शुद्धिमाप्नोति जलधेनुप्रतिग्रहात् ।

परिषत्सन्निधौ यथाशास्त्रं पूर्व्ववत् कृत्वा पश्चात् स्नानादिकं कृत्वा पञ्चगव्यं पीत्वा ब्राह्मणान् भोजयेत् ।

इति हेमाद्रौ जलधेनुप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ क्षीरधेनुप्रतिग्रहप्रायश्चित्तमाह ।

स्कान्दपुराणे,—

पुरा षण्मुख क्षीराब्धौ रमा जाता सधेनुका ।
सवत्सा क्षीरसम्पन्ना सर्व्वावयवसुन्दरी ॥
पोषयामास जलधिर्दुग्धधेनुं सवत्सकाम् ।
पुरुषोत्तमाय लक्ष्मीं तां प्रददौ सर्व्वसाक्षिणे ॥
न[1] प्रायच्छत्तु तां धेनुं पुत्रीवात्सल्यगौरवात् ।
ययाचे [2]जलधिं धेनुं ब्रह्मा पापमोचने ॥

---

(१) स प्रायच्छत् इति क्रीतलेखितपुस्तकपाठः ।
(२) जलधिः इति क्रीतपुस्तकपाठः ।

तथेति प्रददौ सिन्धुर्दुग्धधेनुं स पुण्यिनीम्[१]।
(दापयामास विप्राय ब्रह्महत्याविमोचनीम्।)
तां दुग्धधेनुमादाय पुनः प्रायात् स्वमालयम्॥
धिषणाय स वृत्तान्तं कथयामास देवराट्।
पुण्यकाल उपायाते दुग्धधेनं सुरूपिणीम्॥
दापयामास विप्राय ब्रह्महत्याविमोचने।
तदा प्रभृत्यसौ धेनुर्ब्रह्महत्याविनाशिनी॥
ददाति योनृपो[२] धेनुमर्च्चितां क्षणपर्व्वणि।
सर्व्वपापविनिर्मुक्तो विष्णुलोकं प्रयाति सः[३]॥
योविप्रः स्वर्च्चितां धेनुं ब्रह्महत्याघमोचनीम्।
रमासहोदरां[४] सिन्धुनिर्म्मितां दुग्धरूपिणीम्॥
प्रतिगृह्णाति वै लोभात् सम्प्राप्ते पुण्यपर्व्वणि।
स कालवशमापन्नस्त्वनुभूय महद्भयम्॥
तदन्ते भुवमासाद्य मृतदारोभवेद्भुवि॥

देवीपुराणे,—

पुण्यकालेषु पुण्यर्क्षे पुण्यतीर्थे जनाधिप!।
योराजा स्वर्च्चितां धेनुं निर्म्मितां दुग्धरूपिणीम्॥

---

(१) ददौ तस्मिन् श्लोकावधिकं इति केचितपुस्तकपाठः।
( ) इदमर्द्धं केचितपुस्तके नास्ति।
(२) राजा यः प्रददौ इति केचितपुस्तकपाटः।
(३) व्रजाप्यते इति क्षोतकेचितपुस्तकपाठः।
(४) तथेति प्रददौ इति केचितपुस्तकपाठः।

विप्राय वेदविदुषे प्रदद्यात् सोऽपि मुक्तिभाक् ।
'तादृग्दुग्धमयीं धेनुं द्विजोनिष्कारणाद्दहन् ॥
लभते निष्कृतिं' नाऽन्यां पञ्चचान्द्रायणादृते ।
ततः शुद्धिमवाप्नोति दुग्धधेनुप्रतिग्रहात् ॥

लिङ्गपुराणे,—

पुण्यकालेषु राजेन्द्र पुण्यतीर्थेषु' वा द्विजः ।
दुग्धधेनुं गृहीत्वाऽऽशु तथाभोगपरायणः ॥
तस्यैव निष्कृतिर्दृष्टा पञ्चभिश्चान्द्रभक्षणैः ।

याधानयागप्राप्तौ न प्रायश्चित्तं पञ्चगव्यप्राशनमेव । तदाह कूर्मपुराणे,—

द्विजो दुग्धमयीं धेनुं प्रतिगृह्य जनाधिपात् ।
यागादिकं प्रकुर्व्वीत पञ्चगव्यं पिबेत्ततः ॥
यकृत्वा द्रव्यलोभेन ग्रहणः पापभीस्तदा ।
पञ्चचान्द्रायणैःशुद्धो' नाऽन्यथा तीर्थसेवया ॥

इति हेमाद्रौ क्षीरधेनुप्रतिग्रहप्रायश्चित्तम् ।

---

(१) तादृशीं इति क्षीतवेष्टितपुस्तकपाठः ।
(२) तस्यैव निष्कृतिर्नास्ति इति क्षीतवेष्टितपुस्तकपाठः ।
(३) पर्व्वसु इति क्षीतपुस्तकपाठः ।
(४) शुद्धिः इति वेष्टितपुस्तकपाठः ।

## अथ मधुधेनुप्रतिग्रहप्रायश्चित्तमाह ।

स्कान्दपुराणे,—

अथापरं प्रवक्ष्यामि प्रायश्चित्तं विशुद्धये ।
मधुधेनुग्रहीतॄणां द्विजानां हितकाम्यया ॥
[1]निष्कारणं प्रवृत्तानां गोगीच्छूनां शृणुष्व मे ।
पुण्यकालेषु संक्रान्तौ व्यतीपातादिसम्भवे ॥
कल्पितां मृन्मयैः पात्रैरर्चितां राजवल्लभैः ।
मधुधेनुं सवत्सां च सर्वालङ्कारभूषिताम् ॥
गृहीत्वा ब्राह्मणो[2] लोभात् सद्यः पापमवाप्नुयात् ।
(ज्वालां तत्र प्रविश्याथ पुनर्भुवमुपागमन् ॥
मधुतृष्णा भवेयुस्ते यदि तन्निष्कृतिर्न चेत् ) ।
कथञ्चित् निष्कृतिर्दृष्टा तेषां पापपरात्मनाम् ॥
पञ्चचान्द्रायणैः शुद्धिर्न चाऽन्यैः शुद्धिरीरिता ।

शिवपुराणे,—

क्षौद्रधेनुः क्षुद्रजातैर्द्विजैर्न प्रतिगृह्यते ।
दैवाद्यदि च गृह्णाति[3] पञ्चभिश्चान्द्रभक्षणैः ॥

---

(१) निष्कारणे इति वेलिखितपुस्तकस्य पाठः ।
(२) यो द्विजः इति मौतमोलिखितपुस्तकपाठः ।
(—) अयं श्लोकः मौतकाशीपुस्तकयोः न दृष्टः ।
(३) लभ्यन्ते इति वेलिखितपुस्तकपाठः ।

एतद् विप्रप्रतिग्रहविषयम् । बाहुजेभ्यो द्विगुणं, ऊरुजेभ्यस्त्रिगुणं पादजेभ्यश्चतुर्गुणं, सङ्करजातिभ्यः पञ्चगुणं वेदितव्यं । तदाह—

ब्रह्मवैवर्त्ते,—

प्रायश्चित्तं द्विजातिभ्यः प्रतिगृह्य कथञ्चन ।
यावदुक्तं तदेवाऽत्र बाहुभ्योद्विगुणं स्मृतं[1] ॥
ऊरुजेभ्यस्त्रिधा प्रोक्तं पादजेभ्यश्चतुर्गुणम् ।
एतेभ्योव्यतिरिक्तेभ्यः पञ्चधा परिकीर्त्तितम् ॥

सर्व्ववर्णेभ्यः सर्व्वदानप्रतिग्रहीतॄणामिदं वेदितव्यं प्रायश्चित्तम् । कलौयुगे सङ्करजातयो बहवः तत्प्रतिग्रहस्य निषिद्धत्वात्प्रायश्चित्त बाहुल्यमुक्तं । प्रायश्चित्तविहीनाद्विजाः श्वेतमध्यस्थमक्षिकाजातिषु सम्भवन्ति । अतः प्रायश्चित्तमेव प्रतिग्रहीतॄणां साधनं न चाऽन्यत् । यस्य यस्य प्रतिग्रहे धर्म्मशास्त्रे प्रतिपदोक्तं यत् यत् प्रायश्चित्तं तत्तत् प्रतिग्रहे तत्तदेव कर्त्तव्यं द्विजन्मभिः, नाऽन्यथा शुद्धिरीरिता इति ।

इति हेमाद्रौ मधुधेनुप्रतिग्रहप्रायश्चित्तम् ।

---

(१) बाहुजेभ्यो द्विधास्मृतं इति क्वचित्पुस्तकपाठः ।

## अथ शर्कराधेनुप्रतिग्रहप्रायश्चित्तमाह ।

मार्कण्डेयपुराणे,—

धेनुं शर्करया कृत्वा सवत्सामजिनेः[1] शुभाम् ।
योराजा द्विजवर्य्याय दद्यात् पुण्यागमे मुदा ॥
अर्च्चितां गन्धपुष्पाद्यैर्बहुभिर्भूषणैर्युताम् ।
स गच्छेद्विष्णुभवनं यावदाचन्द्रतारकम् ॥

शिवधर्म्मोत्तरे,—

कृष्णाजिनेषु योधेनुं शर्कराभिरलङ्कृताम् ।
भूषितां गन्धपुष्पाद्यैर्विप्रायाऽध्यात्मवेदिने ॥
दद्यात् पुण्यतमे काले तीर्थेषु ग्रहणेषु च ।
न तस्य पुनरावृत्तिर्ब्रह्मलोकात् कदाचन ॥

विष्णुधर्म्मोत्तरे,—

कृत्वा शर्करया धेनुं पुण्यकालेषु पर्व्वसु ।
दद्याद्दक्षिणया सार्द्धं विप्रायाऽध्यात्मवेदिने ॥
स निस्तरति संसारं नावाऽब्धिं नाविकोयथा ।

तत्प्रतिग्रहे दोषमाह,—

नारदीये,—

यो गृह्णीयाद्विजो धेनुं पुण्यां शर्करयाऽन्विताम् ।
पुण्यकालेषु तीर्थेषु द्रव्यलोभपरायणः ॥

---

(१) अजिने इति केषुचित्पुस्तकपाठः ।

महान्तं नरकं भुक्त्वा स्थावरत्वं प्रयाति सः[1] ।
तस्यैवं निष्कृतिर्दृष्टा मुनिभिर्ब्रह्मवादिभिः ॥
स्नात्वा प्रातर्यथाचारं दन्तधावनपूर्व्वकम् ।
विभूतिं विल्वरूपञ्च जर्द्धमूलमतः परम् ॥
अर्पयित्वा पवमानं कृत्वा नित्यमतन्द्रितः ।
आसायं प्रातरारभ्य गणयेज्[2]जपसंख्यया ॥
फलाहारोऽत्र कर्त्तव्यः स्वपेद्देवसमीपतः ।
पुनः परेद्युरुत्थाय पूर्व्ववज्जपमाचरेत् ॥
यदैव संग्रहो धेनोः शर्कराभिः पृथग् द्विज ।
तदा पापान्यनेकानि प्रविशन्ति प्रतिग्रहे ॥
तत्पापशोधनार्थाय प्रायश्चित्तमिदं शुभम् ।
आधानं वा प्रकुर्व्वीत यागसाधनमुत्तमम् ॥
सर्व्वेषां सप्ततन्तूनामाधानं प्रथमं विदुः ।
वर्णानां च यथा विप्रो देवानामपि वासवः ॥
भृगुः ऋषीणां प्रवरो वाचां सत्यं यथा भवेत् ।
तथैव सर्व्वयज्ञानामाधानं मूलकारणम् ॥
प्रायश्चित्तमिदं वाऽपि आधानं वा द्विजश्चरेत् ।
ताभ्यां पापविनिर्म्मुक्तः प्रयाति परमं पदम् ॥

इति हेमाद्रौ शर्कराधेनुप्रतिग्रहप्रायश्चित्तम् ।

---

(१) अवाप्नुते इति लेखितपुस्तकपाठः ।
(२) गणयम् इति श्रीतर्कलेखितपुस्तकपाठः ।

## अथ दधिधेनुप्रतिग्रहप्रायश्चित्तमाह ।

स्कन्दपुराणे,—

शृणु षण्मुख वक्ष्यामि दधिधेनु[1] प्रतिग्रहे ।
प्रतिग्रहीतुर्विप्रस्य दोषोभवति सर्व्वदा ॥
तद्द्रव्यत्यागमात्रेण श्राधानं यज्ञमेव वा ।
कृत्वा शुद्धिमवाप्नोति कर्म्मार्हीजायते भुवि ॥

शिवधर्म्मोत्तरे,—

दधिधेनुमलङ्कृत्य गन्धवस्त्रादिभूषणैः ।
अभ्यर्च्च विधिवत्तत्तथा दद्याद्योविप्रपुङ्गवे ॥
न तस्य यमबाधाऽस्ति तद्गृहे वा प्रवेशनम् ।
तद्दर्शनं वा राजेन्द्र भवेज्जन्मनि जन्मनि ॥

ब्रह्मवैवर्त्ते,—

यो दद्यात्[2] पुण्यकालेषु पुण्यतीर्थेषु पर्व्वसु ।
कृष्णाजिने दधिमयीं धेनुं कृत्वा सवत्सकाम् ॥
अभ्यर्च्च गन्धवस्त्राद्यैर्विप्रायाऽध्यात्मवेदिने ।
न तं मृत्युरवाप्नोति न व्याधिर्न च तस्कराः ॥
अन्ते विष्णुपदं याति यावदिन्द्राश्चतुर्दश ॥

---

(१) दधिधेनुं इति कीतपुस्तकपाठः ।
(२) राजा इति लेखितपुस्तकपाठः ।

लैङ्गे,—

ब्राह्मणो धेनुमाराध्य दद्याद्दधिमयीं[1] शुभाम्।
न तस्य पुनरावृत्तिर्ब्रह्मलोकात् कदाचन॥

देवीपुराणे,—

प्रतिगृह्य द्विजो धेनुमतो दधिमयीं शुभाम्[2]।
प्रायश्चित्तं तदा कुर्य्यात् पूर्व्ववचनभागतः॥
अथवाऽऽधानकं कर्म्म यज्ञं वा बहुदक्षिणम्।
ऋणनिर्म्मोचनं कृत्वा शुद्धः स्या[3]त्तत्प्रतिग्रहात्।

मत्स्यपुराणे,—

शर्कराभिः कृतां धेनुमर्च्चितां सर्व्वभूषणैः।
पूजितां गन्धपुष्पाद्यैः पुण्यकालेषु पर्व्वसु॥
तीर्थेषु देवपूज्येषु प्रतिगृह्णाति यो द्विजः।
अकृत्वा निष्कृतिं तस्य सम्भवेदन्धमूषकः॥

देवीपुराणे,—

तद्दोषशमनं राजन् शृणु सर्व्वप्रयत्नतः।
प्रातः स्नात्वा नदीतोये नित्यकर्म्म समाप्य च॥
नित्यहोमञ्च कुर्व्वीत वृक्षमूलमुपाश्रितः।
श्रीरुद्रञ्च जपेत्तत्र यावदस्तमयं भवेत्॥

---

(१) दद्या कृष्णाजिने शुभाम् इति श्रीतर्कोल्लिखितपुस्तकपाठः।
(२) पुण्यदिनेऽपि च इति श्रीतर्कोल्लिखितपुस्तकपाठः।
(३) शुद्धोऽभूत् इति श्रीतपुस्तक-पाठः।

तदा विरक्तः प्रयतः[1] फलाहारं समाचरेत् ।
गृहं गत्वा स्वपेत्तात नारायणमनुस्मरन् ॥
पुनः परेद्युरुत्थाय पूर्व्ववज्जपमाचरेत् ।
अयुतं पूर्णतामेति[2] तावत् पाराय[3]णं चरेत् ॥
ततः शुद्धिमवाप्नोति विप्रोदध्नः प्रतिग्रहात् ।
( अयशक्तौ सुलभं तात ध्यानं यज्ञमेव वा ।
ततः शुद्धिमवाप्नोति विप्रोदध्नः प्रतिग्रहे ॥ )

इति हेमाद्रौ दधिधेनुप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ इक्षुरसधेनुप्रतिग्रहप्रायश्चित्तमाह ।

वामनपुराणे,--

यो राजा पुण्यकालेषु धेनुमिक्षुरसोद्भवाम् ।
अर्च्चितां गन्धपुष्पाद्यैर्भूषितां सर्व्वभूषणैः ॥
विप्राय वेदविदुषे शान्तायाऽथ कुटुम्बिने ।
दद्याद्दक्षिणया साकं स राजा विष्णुमन्दिरम् ॥

---

(१) मनसा इति क्रीतपुस्तकपाठः ।
(२) अयुतं पूर्णकामेति इति क्रीतपुस्तकपाठः ।
(३) पाराय माचरेत् इति लेखितपुस्तकपाठः ।
(—) अयं श्लोकः क्रीत-काशीपुस्तकयोर्न दृष्टः ।

गत्वा स्थित्वा चिरं कालं भुवि मण्डलतां व्रजेत् ।
तत्राऽपि ज्ञानमासाद्य दानधर्म्मपरायणः ॥
ज्ञात्वा धर्म्मानशेषेण अन्ते विष्णुमयोभवेत्[१] ।

महाभारते,—

शृणु धर्म्मं प्रवक्ष्यामि धेनुमिक्षु[२]रसोद्भवाम् ।
अर्च्चितां शास्त्रमार्गेण भूषितां बहुभूषणैः ॥
पुण्यकालेषु संक्रान्तौ अयनद्वितये तथा ।
अर्द्धोदये महापुण्ये ग्रहणे चन्द्रसूर्य्ययोः ॥
रचयित्वा दिने सम्यग् विप्रायाऽध्यात्मवेदिने ।
दक्षिणाभिश्च बह्वीभिर्दद्यात् फुल्लाननस्तदा ॥
मृतोवैकुण्ठमाप्नोति पुनरावृत्तिवर्ज्जितम् ।

नृसिंहपुराणे,—

कल्पितां राजपुरुषैरिक्षूद्भवरसेन ताम् ।
अर्च्चयित्वा विधानेन अर्च्चितान्तु द्विजन्मने ॥
दक्षिणाभिर्यथोक्ताभिर्दद्यान्मनसि निःस्पृहः ।
तस्य देवः [३]प्रसन्नःस्यात् प्रह्लादाय यथा पुरा ॥

(१) विष्णुसायुज्यतां व्रजेत् इति लेखितपुस्तकपाठः ।
(२) इक्षु धेनु रसोद्भवा इति लेखितकाशीपुस्तकपाठः ।
(३) प्रसन्नोऽभूदिति क्रीतलेखितपुस्तकपाठः ।

तत्प्रायश्चित्तमाह,—

ब्रह्माण्डे,—

पूर्व्वजोवाह्यजागृह्यां[1] धेनुमिक्षुरसोद्भवाम् ।
अकृत्वा निष्कृतिं पश्चात् आधानं वा क्रतुञ्च वा ॥
यमलोकमुपागम्य नरकानेकविंशतिम् ।
भुक्त्वा[2] भवति पूतात्मा गोमायुर्भवति क्षितौ ॥

मत्स्यपुराणे,—

विप्रोधेनुं रसमयीं दत्तां राजकुमारकैः ।
गृहीत्वा पुण्यकालेषु तन्निष्कृतिपराङ्मुखः ॥
यागादिकं पराकृत्य गोमायुर्भवति ध्रुवम् ।
तस्यैव निष्कृतिर्दृष्टा विष्णुना प्रभविष्णुना ॥
प्रातरारभ्य मेधावी स्नात्वा नित्यं समाप्य च ।
वृक्षमूलमुपागम्य पठन्नुपनिषत्त्रयम् ॥
[3]जपेत्समुद्वहन् संख्यां यावदस्तं गतो रविः ।
तावज्जपाद्[4] विरम्याऽथ फलाहारं समाचरेत् ॥
जपेद्देवसमीपे तु कृतं पापमनुस्मरन् ।
परेद्युः प्रातरुत्थाय पूर्व्ववज्जपमाचरेत् ॥

---

(१) दत्तां इति क्रीतपुस्तकपाठः ।
(२) पश्चात् इति क्रीतवेष्टितपुस्तकपाठः ।
(३) संख्यां समुद्वहन् सम्यक् इति क्रीतवेष्टितपुस्तकपाठः ।
(४) तावज्जपं इति वेष्टितपुस्तकपाठः ।

अयुतं पूर्य्यतामेति ततः शुचिरवाप्यते[1] ।

एतत्प्रायश्चित्तं यागादिकाकरणविषयं, तत्प्राप्तौ पञ्चगव्यप्राशन मात्रं न प्रायश्चित्तम् ।

इति हेमाद्रौ इक्षुरसधेनुप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ गुड़धेनुप्रतिग्रहप्रायश्चित्तमाह ।

मार्कण्डेयपुराणे,—

गुड़धेनुं गुड़मयीं कृत्वाऽलङ्कृत्य सर्व्वतः ।
पुण्यकाले पुण्यतीर्थे योराजा भक्तिमानिह[2] ॥
शुभां[3] सदक्षिणां दद्याद् विप्रायाऽध्यात्मवेदिने ।
पुनर्भुवमुपागम्य मण्डलाधिपतिर्भवेत् ॥
सोऽन्ते विष्णुपदं याति तत्रैव परिमुच्यते ।

गारुड़पुराणे,—

गुड़धेनुं समभ्यर्च्य गन्धवस्त्रादिभूषणैः ।
ब्राह्मणाय सुशीलाय योदद्यात् सोऽपि मुक्तिभाक् ॥

---

(१) शुचिभवाप्यते इति श्रीतर्कैश्चितपुस्तकपाठः ।
(२) गुड़निर्म्मितां इति श्रीतपुस्तकपाठः ।
(३) धेनुं इति वेश्चितकाशीपुस्तकपाठः ।

योविप्रस्तां तदा गृह्णन् परलोकपराङ्मुखः।
यमस्य वशमापन्नः कालसूत्रेण पीड़ितः॥
पुनर्भुवमुपागम्य जायते भिन्नजन्मवान।
यागादिकं ततः कृत्वा शुद्धिमाप्नोत्यनुत्तमाम्॥

कूर्म्मपुराणे,—

धेनुं गुड़मयीं गन्धवस्त्रादिभिरलङ्कृताम्।
पुण्यकाले पुण्यतीर्थे पुण्यक्षेत्रे नदीतटे॥
योगृह्णन् पृथिवीपालाद् ब्राह्मणोधनलोभतः।
यमलोकमुपागम्य पीड़ितोयमकिङ्करैः॥
भिन्नजातिर्भवेद्भूमौ[1] यागादिषु पराङ्मुखः।
प्रायश्चित्तमिदं कुर्य्यात् पश्चात्तापसमन्वितः॥
विप्रानुज्ञामवाप्याऽऽशु प्रातः स्नात्वा यथाविधि।
इदं करिष्ये नियमं प्रायश्चित्तं विशुद्धये॥
इत्युक्त्वा तपचातिष्ठेत् हेमन्ते शीतसङ्कुले।
जलाधारस्तथा तिष्ठेत् यावत् प्रातः पुनर्भवेत्॥
प्रातरारभ्य मेधावी [2]स्मरेन्नारायणं विभुम्।
चतुर्थे कालमायाते यावकं भोजनं चरेत्॥

---

(१) अभूद् इति श्रीतर्कवाचस्पतिपुस्तकपाठः।
(२) जपन्नारायणं इति श्रीतपुस्तकपाठः।

यावकमित्यत्र अल्पमात्रं यवान् पक्त्वा भुञ्जीयात्[1] ।

पुनरस्तं गते भानौ पूर्व्ववज्जपमाचरेत् ।

अपमृत्युञ्जयं मन्त्रं[2] न्यासञ्च ध्यानपूर्व्वकम् ॥

अनाधारो वहिरेव निराधारोवर्षति मति । संख्यां समुद्वहन् ( मनसि धारयन् ) ।

एवमृतुद्वयं नीत्वा पञ्चगव्यं पिवेत्ततः ।

एवं कृते [3]विशुद्धः स्यान्नाऽन्यथा शुद्धिमाप्नुयात् ॥

एतदाचरणाशक्तौ पूर्व्ववत् स्वधनचतुर्भागेन प्रायश्चित्तं कृत्वा शुद्धिमाप्नोति पुनः संस्कारादि ।

इति हेमाद्रौ गुड़धेनुप्रतिग्रहप्रायश्चित्तम् ।

---

(१) भोजयेत् इति क्रीतलेखितपुस्तकपाठः ।

(२) मन्त्रं इति लेखितपुस्तकपाठः ।

(—) अयं पाठः क्रीतलेखितपुस्तकयोर्नोपलब्धः ।

(३) विशुद्धोऽभूदन्यथा इति क्रीतलेखितपुस्तकपाठः ।

## अथ सामान्यधेनुप्रतिग्रहप्रायश्चित्तमाह ।

मत्स्यपुराणे,—

एतासां दशधेनूनां प्रत्यक्षा पापनाशनी ।
महापापविशुद्धार्थं ब्रह्मणा निर्म्मिता[1] पुरा ॥
राजा वा विप्रमात्रोवा दशनिष्काधिकोऽपि वा ।
धेनुमेनामलङ्कृत्य अभ्यर्च्य विधिपूर्व्वकम् ॥
पुण्यकालेषु पुण्यर्क्षे यो दद्याद्विप्रपुङ्गवे ।
स याति विष्णुभवनं देवैः सह नृपाधिप ॥

लिङ्गपुराणे,—

धेनुं यः समलङ्कृत्य पुण्यकालेषु पर्व्वसु ।
अभ्यर्च्य गन्धवस्त्राद्यैः प्रदद्याद्विप्रपुङ्गवे ॥
स याति ब्रह्मणः स्थानं यत्र गत्वा न शोचति ।
पश्चाद्भुवमुपागम्य स वै भवति धार्म्मिकः ॥

स्कन्दपुराणे,—

धेनुं विप्राय[2] यो दद्यात् स भवेन्मण्डलाधिपः ।

महाराजविजये,—

धेनुमेनामलङ्कृत्य पुण्यकालेषु पर्व्वसु ।
पुण्यर्क्षे पुण्यदिवसे व्यतीपाते च वैधृतौ ॥

---

(१) निर्म्मितं इति चैखितपुस्तकपाठः ।
(२) विप्रोमुख्याद्योयात् इति कीतर्कोचितपुस्तकपाठः ।

योऽदत्त्वाद्विप्रवर्य्याय स याति परमां गतिम् ।
पुनर्भुवमुपागम्य राजा भवति धार्म्मिकः ॥

स्कन्दपुराणे,—

धेनुं विप्रोऽनु गृह्णीयाद् वृथाभोगपरायणः ।
अकृत्वा निष्कृतिं लोभाद्व्याघ्रो भवति कानने ॥
तद्दोषपरिहारार्थं जपेद्रुद्रमथाऽयुतम् ।
तदा दोषविनिर्म्मुक्तः शुचिमाप्नोत्यनुत्तमाम् ॥

भविष्योत्तरे,—

[1]अलङ्कृतां शुभां धेनुं दद्याद्धेन्वनुयायिनीम् ।
गन्धपुष्पाक्षतैर्वस्त्रैः सर्व्वाभरणभूषिताम् ॥
दत्तां राजकुमारेण पुण्यकालेषु पर्व्वसु ।
प्रतिगृह्य द्विजो लोभादकृत्वा निष्कृतिं शुभाम् ॥
व्याघ्रो भवति दुष्टात्मा ग्रामं वाऽग्राममेव वा ॥
एतत्पापविशुद्ध्यर्थं रुद्रस्याऽयुतमुच्यते ॥
उपक्रम्य तदाग्नौ वा परेद्युर्वा ऽपरेऽहनि ।
स्नात्वा प्रातर्यथाचारं नित्यकर्म्म समाप्य च ॥
बहिः स्नानं समागम्य सन्ध्यां मनसि भावयन्[2] ।
[3]आरभ्य भान्वोदयात् यावदस्तमनं शुचिः ॥

---

(१) यो धेनुं वनमध्ये च इति कीलवेष्टितपुस्तकपाठः ।

(२) सम्यक्तम् इति वेष्टितपुस्तकपाठः समधिगतम् इति कीलपुस्तकपाठः ।

(३) आरभ्यमध्यकालम्भानो रक्तमेति दिवाकरः ' इति कीलवेष्टितपुस्तकपाठः ।

विरम्य नियतः पश्चात् फलाहारं प्रकल्पयेत्।
स्वपेद्वा स्वगृहे देवसमीपे स्थण्डिले व्रती॥
परेद्युरेवं कुर्व्वीत यावत् संख्या समाप्यते।
ततः शुद्धिमवाप्नोति यज्ञाधान[1]पराङ्मुखः॥

इति हेमाद्रौ साध्वावेनुप्रतिग्रहप्रायश्चित्तम्।

---

## अथार्द्रकृष्णाजिनप्रतिग्रहप्रायश्चित्तमाह।

स्कान्दपुराणे,—

शृणु पुत्र प्रवक्ष्यामि आर्द्रकृष्णाजिनं शुभम्।
तिलैरापूर्य्य योऽभक्त्या[2] दद्याद्विप्राय धीमते॥
स नरः पापनिर्म्मुक्तो ब्रह्मलोकं समश्नुते।
पश्चाद्भुवमुपागम्य सप्त जन्म भवेद्द्विजः॥
तत्राऽधीत्य श्रुतं सम्यग् ब्रह्मज्ञानमवाप्य च।
तेन ज्ञानेन महता निर्व्वाणं लभते परम्[3]॥

---

(१) यज्ञभागपराङ्मुख इति कीतवेचितपुस्तकपाठः।
(२) तद्वर्णं इति कीतवेचितपुस्तकपाठः।
(३) परमपदम् इति कीतवेचितपुस्तकपाठः।

भविष्योत्तरे,—

सूर्य्यसोमग्रहे राजन् मन्वादिषु युगादिषु ।
अयनद्वितये चैव व्यतीपाते च वैधृतौ ॥
संक्रमेषु च जन्मर्क्षे नदीतीरे सुरालये ।
स्वगृहे वाऽपि राजेन्द्र पुण्यक्षेत्रे च पर्व्वसु ॥
नरोयः सम्यगभ्यर्च्च्य आर्द्रकृष्णाजिनं दृढम् ।
तिलपूर्णं द्विजेन्द्राय अर्च्चिताय सुभूषणैः ॥
दद्याद् दक्षिणया सार्द्धं तस्य पुण्यफलं शृणु ।
यावन्त्यजिनरोमाणि यावन्तस्तत्र वै तिलाः ॥
तावद्युगसहस्राणि ब्रह्मलोकमवाप्नुयात् ।

लिङ्गपुराणे,—

तिलपूर्णं पुण्यकाले आर्द्रकृष्णाजिनं नरः ।
अभ्यर्च्च गन्धवस्त्राद्यैर्गन्धपुष्पाक्षतादिभिः ॥
योदद्याद्विप्रवर्य्याय स गच्छेद्‌ब्रह्मणः पदम् ।

तत्प्रतिग्रहेदोषमाह¹,—

स्कान्दपुराणे,—

आर्द्रकृष्णाजिनं राज्ञः पुण्यकाल उपागते ।
योविप्रः प्रतिगृह्णीयात् स सद्यः पतितोभवेत् ॥
नित्यं नैमित्तिकं कार्य्यं यागदिकमनन्तरम् ।
तदा नश्यन्ति कर्म्माणि इष्टापूर्त्तादिकानि च ॥

(१ दोषमार्द्रचर्माह इति मोलपुस्तकपाठः ।

तदा मृत्युवशं याति पुष्पभंगाद्यमालये।
महान्तं नरकं भुक्त्वा खोभवेत्[1] तदनन्तरम्॥

ब्रह्माण्डे—

तिलपूर्णं पुण्यकाले चर्म्माऽऽर्द्रं राजवल्लभात्।
प्रतिगृह्य द्विजोलोभात् सततन्तुपराङ्मुखः॥
यमलोकमुपागम्य चिरं नरकभाक् ततः।
नाना जन्माऽनुभूयाऽऽद्य ब्रह्मासोभवेद्भुवि॥
तस्यैवं निष्कृतिर्दृष्टा मुनिभिर्ब्रह्मवादिभिः।
अपमृत्यूत्तरणमार्ज्जनं कृत्वा तदनन्तरं प्रायश्चित्तम्।
(कर्त्तव्यं तदाह)
प्रातःस्नात्वा तिलैः सम्यगघमर्षणपूर्व्वकम्।
आर्द्रवासास्ततोगत्वा अनुज्ञाप्य द्विजन्मनाम्॥
प्रतिग्रहविशुद्ध्यर्थं अनुमर्हथ सज्जनाः।
इति प्रार्थ्य द्विजान् सर्व्वान् परिक्रम्य प्रणम्य च॥
तमुक्तक्रमतं कृत्वा शुद्धिमाप्नोत्यनुत्तमाम्।
प्रायश्चित्तेन पूतात्मा पुनःसंस्कारमाचरेत्॥
पञ्चगव्यं पिबेत् पश्चात् शुद्धोभवति नाऽन्यतः।

कृच्छ्रादिकाचरणेन प्रायश्चित्तं पुनः कर्म्मपूर्व्वकं कृत्वा तदङ्गप्रायश्चित्तेन पूतोभूत्वा यागादिकं कुर्य्यात्। अन्यथा पुनः कर्म्मणाम-

(१) खोजन्म इति श्रीतत्वेश्वितपुस्तकपाठः।
(—) एष पाठः श्रीतत्वामीपुस्तकयोर्नास्ति।

'सम्भवे यागादिकं न फलति । पुनः कर्म्मैव पापार्थिनां सर्व्व-धर्म्मसाधनम् । गोधेनुमलमुष्टिप्रक्षालनवत् । अतः पुनः कर्म्मैव बलवत्तरम् ।

इति हेमाद्रौ मार्गकृष्णाजिनप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ तिलकृष्णाजिनप्रतिग्रहप्रायश्चित्तमाह ।

मार्कण्डेयपुराणे,—

तिलैरापूर्य्य यश्चर्म्म दद्यात्[2] पुण्यागमे नृपः ।
न तस्य यमलोकोऽस्ति वैकुण्ठे वासमश्नुते ॥

कूर्म्मपुराणे,—

पुण्यकाले पुण्यदिने सार्द्रे कृष्णाजिने तिलान् ।
निक्षिप्य विप्रवर्य्याय योदद्यात् स तु पुण्यभाक् ॥

स्कान्दपुराणे,—

पूर्व्ववत् तिलसंयुक्तं ग्राम्यं चर्म्म द्विजातये ।
पुण्यकालेषु पुण्याहे योदद्यात् सोऽपि वै हरिः ॥

---

(१) कर्म्मणां सम्भवे इति लेखितपुस्तकपाठः ।

(२) सार्द्रं इति श्रीतलेखितपुस्तकपाठः ।

अजिनं योगु गृह्णीयात् शुष्कं विप्रस्तिलैर्युतम्।
अपमृत्युमवाप्नोति नारीत्वमाप्नुयादसौ॥

दानसागरे,—

पुण्यतीर्थेषु[1] पुण्येषु दिनेषु पृथिवीपते:।
तिलकृष्णाजिनं हृत्वा वृथाभोगपरायण:॥
यमलोकमवाप्नोति स्थित्वा पञ्चेन्द्रवत्सरम्[2]।
पुनर्नारीत्वमाप्नोति तिलचर्मप्रतिग्रहे॥

पादहीनं,—समस्त्यूर्द्ध्वपञ्चशतमन्त्रजप्यानि कृत्वा पुन: संस्कारं च पूर्व्ववत् कृत्वा शुद्धिमाप्नोति नाऽन्यथा।

इति हेमाद्रौ तिलकृष्णाजिनप्रतिग्रहप्रायश्चित्तम्।

---

## अथ योगव्रतादिषु कृष्णाजिनप्रतिग्रहप्रायश्चित्तमाह।

स्कन्दपुराणे[3],—

अर्द्धनारीश्वरे योगे योगे हरिहरात्मके।
लक्ष्मीनारायणे योगी व्रतेष्वन्येषु वस्तुषु॥

---

(१) पुण्यकालेषु इति क्रोतवेष्टितपुस्तकपाठ:।
(२) अब्दमष्टकं इति क्रोतपुस्तकपाठ:।
(३) मत्स्यपुराणे इति क्रोतवेष्टितपुस्तकपाठ:।

कृष्णाजिने[1] व्रताङ्गत्वाच्च दोषइति गोभिलः ।
तथाऽपि शृणु वक्ष्यामि प्रायश्चित्तं विशुद्धिदम् ॥

महानारदीये,—

योगेषु व्रतकालेषु चार्द्धनारीश्वरादिषु ।
योदद्यादजिनं विप्रे व्रतं तस्य फलप्रदम् ॥
पुरा नारायणोदेवो भोक्ता संहृत्य चाऽऽत्मनि ।
निधाय जलधौ शेते दीर्घकालमरिन्दम[2] ॥
तन्नाभौ शैवलं जज्ञे तत्राऽभूत् पङ्कजं महत् ।
हिरण्मयं हरिन्नालं रत्नकुङ्कुमकेसरम् ॥
सहस्रपत्रं तरुणं प्रतप्तकनकोज्ज्वलम् ।
तत्र यज्ञे विधाता च अस्तौषज्जगतां पतिम् ॥
हरिः प्रसन्नवदनोबभाषे कमलासनम् ।
[3]सृज विश्वमिदं भद्र देवान् यज्ञान् द्विजानपि ॥
धेनुश्च लोकरक्षार्थमालस्यं मा कुरुष्व च ।
इत्युक्त्वा भगवानीशस्तत्रैवाऽन्तरधीयत ॥
ब्रह्मा तदवधार्य्याऽथ सृष्टवान् विश्वमोजसा ।
देवान् द्विजान् (भावमात्रान् ततस्तान् साधकान् बहु ॥)

---

(१) कृष्णाजिनं इति केचित्पुस्तकपाठः ।
(२) पङ्कजं इति केचित्पुस्तकपाठः ।
(३) वद इति केचित्पुस्तकपाठः ।
(—) अयमंशः केचित्पुस्तके न दृश्यते ।

चरणौ स्रक्स्रुवौ दर्व्वीं भुवं शुद्धां तथाऽयुधम् ।
कृष्णाजिनञ्च मुषलं उलूखलमतः परम् ॥
पात्राण्यन्यानि विश्वात्मा ससर्ज्ज जगदीश्वरः ।
व्रतेषु यज्ञदानेषु ब्रह्मचर्य्यव्रतादिषु ॥
अजिनं दानपूर्व्वार्थं ददौ विप्राय चाऽऽदरात् ।
ततः प्रभृत्यदः सर्व्वं प्रसिद्धिमगमद्भुवि ॥
यस्त्वेतच्चर्म्म दानेषु व्रतेषु नियमेषु च ।
[1]विप्रसात् कुरुते सोऽपि ब्रह्मनिर्व्वाणमाप्नुयात् ॥

( तत्परिग्रहे प्रायश्चित्तमाह,—

मार्कण्डेयपुराणे,—

यागादिषु व्रतेष्वेतत् प्रतिगृह्य द्विजोत्तमः ।
प्रायश्चित्तं तदा कुर्य्यात् पुनःसंस्कारवर्ज्जितम् ॥
अयुते दशगायत्री अर्द्धनारीश्वरव्रते ।
तथा हरिहरे योगी लक्ष्मीनारायणे तथा ॥ )
उभयव्रतेषु दानेषु पुंमध्यत्वहरादिषु ?
पुनः संस्कारपूतात्मा शुद्धिमाप्नोति दैहिकीम् ।

लिङ्गपुराणे,—

प्रतिगृह्य द्विजो लोभात् भोगतृष्णापरायणः[2] ।
तिलपद्मं समुत्सृष्टं राजभिः पुण्यसद्मनि ॥

---

(१) प्रदानं इति क्रीतकैश्चितपुस्तकपाठः ।
(—) अयं पाठः क्रीतकाशीपुस्तकयो र्न दृष्टः ।
(२) परायण इति कैश्चितपुस्तकपाठः ।

पुनः कर्म्म प्रकुर्व्वीत ततः पश्चात् शृणुष्व मे ।
सम्यग्विप्रैरनुज्ञातः षडब्दं कृच्छ्रमाचरेत् ॥
ततः पापविशुद्धः[1] स्यान्न दानैर्वाऽन्यकर्म्मभिः[2] ।

द्विजोलोभपरायणो भोगेच्छया कृष्णाजिनं धृत्वा पुनःसंस्कारं कृत्वा पश्चात् परिषदुपगमनपूर्व्वकं प्राजापत्यकृच्छ्राणि षडब्द-माचरेत् पूतोभवति न दानैरन्यकर्म्मभिरिति ।

इति हेमाद्रौ योगव्रतकृष्णाजिनप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ रजतपद्मप्रतिग्रहप्रायश्चित्तमाह ।

मार्कण्डेय पुराणे,—

कमलं राजतं दद्याद्योराजा पुण्यसङ्गमे ।
अभ्यर्च्य विधिना ब्राह्मणाद्विप्रायाऽध्यात्मवेदिने ॥
न तस्य पुनरावृत्तिर्ब्रह्मलोकात् कदाचन ।

शिवपुराणे,—

निष्कामनतया राजा उद्दिश्य हरिमव्ययम् ।
हरं वा द्विजवर्य्याय दद्यात् पुण्यागमे सुधीः ॥

---

(१) पाप विशुद्धयर्थं इति केचितपुस्तकपाठः ।
(२) न दानैरन्यकर्म्मभिः इति केचितपुस्तकपाठः ।

सर्व्वपापविनिर्म्मुक्तः पुत्त्रपौत्त्रसमन्वितः[1] ।
इहैव विपुलान् भोगान् भुक्ता देवपदं व्रजेत् ॥

चतुर्व्विंशतिमते,—

योगृह्णाति रौप्य[2]पद्मं पुण्यकालेषु राजभिः ।
दत्तं सम्यगलङ्कृत्य तस्य शुद्धिरनुत्तमा ॥
प्रधानं सम्परित्यज्य कृत्वा चान्द्रायणद्वयम् ।
आधानं वा स्वर्ण तीर्त्वा तेन विप्रोनदोषभाक् ॥

आधानकरणे सर्व्वस्वदक्षिणया सह प्रायश्चित्तं पञ्चगव्यप्राशनं च ।

इति हेमाद्रौ रजतपद्मप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ प्रतिकृतिप्रतिग्रहप्रायश्चित्तमाह ।

स्कन्दपुराणे,—

क्षयः श्वासश्च गुल्मश्च शिरोवायुर्भगन्दरः ।
अर्शोरोगस्तथा शूलगण्डमाली शिरोभ्रमः ॥

एते महापातकजन्याः ।

---

(१) परिच्युत इति श्रीतवेश्चितपुस्तकपाठः ।
(२) यो दत्ता राजतं पद्मं इति श्रीतवेश्चितपुस्तकपाठः ।

वातव्याध्यश्मरी कुष्ठमेहोदरभगन्दराः ।
अर्शांसि ग्रहणी कुष्ठा महारोगाः प्रकीर्त्तिताः ॥

इत्युपपातकजन्याः ।

प्रमेह[1] मधुमेहो च ज्वरः शीतोष्णकः ।
कम्पश्च पक्षघातश्च चक्षुर्हानिस्तथैव च ॥

इत्येते सङ्करीकरणजन्याः[2] ।

अरुचिश्च तथा पित्तं हृच्छूलं शिरोभवः ।
सर्व्वाङ्गतापनं तद्वद्धिरत्वमनस्थिता ॥

इत्येते मलिनीकरणजन्याः ।

पार्श्वशूलं कर्णशूलं पादशूलं तथाङ्गुले[3] ।
कण्डूतिर्दर्दुरो रोगः कामला च तथा भ्रमः ॥

इत्येते अपात्रीकरणजन्याः ।

मन्दान्धत्वं गुदे शूलं नानारोगास्तु सज्वराः[4] ।
हिक्का चैवमजीर्णत्वं कण्ठशोषणमेव च ॥

इत्येते जातिभ्रंशकरजन्याः[5] ।

एते चान्ये च बहवो व्याधयः पापसम्भवाः ।
इह जन्मनि वा राजन् पूर्व्वजन्मनि वाऽर्ज्जिताः ॥

---

(१) प्रमेह मधुमेहश्च इति लेखितपुस्तकपाठः ।
(२) सङ्करीजन्या इति श्रीतलेखितपुस्तकपाठः ।
(३) तथाङ्गुलं इति लेखितपुस्तकपाठः ।
(४) ज्वरश्च इति श्रीतलेखितपुस्तकपाठः ।
(५) जाति भ्रंशजन्या इति श्रीतलेखितपुस्तकपाठः ।

व्याधयः पापमूलाः स्युः प्रत्यक्षनरकोऽस्त्वमी।
सर्व्वव्याध्युपशान्त्यर्थं कुर्य्युः प्रतिकृतिं बुधाः॥

ब्रह्महत्यादिजनितरोगनिवृत्त्यर्थम् यस्य यस्य पापस्य योयो रोगोजातस्तत्तन्निरासार्थं प्रधानदेवतास्तास्ताः कर्म्मविपाकेषु दर्शिताः तत्प्रतिकृतिप्रतिग्रहादिप्रस्य पापबाहुल्यम्। तत्परिग्रहे दोषं प्रायश्चित्तञ्चाऽऽह

वामनपुराणे—

कृष्णाजिनं प्रतिकृतिं मेषीं चोभयतोमुखीम्।
प्रकटं योनु गृह्णाति न भूयः पुरुषोभवेत्॥

एतदज्ञतयागस्याऽज्ञतप्रायश्चित्तस्य च ज्ञेयम्। उभयोरेवाऽत्र सम्भवेन स्त्रीत्वम्। तदाह,—

मार्कण्डेयपुराणे,—

द्विजः प्रतिकृतिं धृत्वा यागं वा निष्कृतिं तथा।
अज्ञात्वा द्रव्यलोभेन नारी[1] भवति सर्व्वथा॥

तत्प्रायश्चित्तमाह,—

कूर्म्मपुराणे,—

धृत्वा प्रतिकृतिं विप्रः समस्तन्तुपराङ्मुखः।
तत्प्रतिग्रहशुद्ध्यर्थं कुर्य्याच्चान्द्रायणत्रयम्॥
निरन्तरमहोरात्रं जपन्नारायणं विभुम्।
अपेक्ष देवतागारे स्थण्डिले केवले वसन्॥

(१) षण्ढो इति श्रीतर्केचित्पुस्तकपाठः।

कवलं भक्षयेत्प्रात रविर्मन्दायते यदा ।
एवं मासत्रये पूर्णे शुद्धोभवति पातकात्[1] ॥
आधानं वा प्रकुर्व्वीत ऋणनिर्म्मोचनं तथा ।
द्वयोरभावे लोभार्थं प्रायश्चित्तमिदञ्चरेत् ।
तत्राऽपि च पुनःकर्म्म शुद्धिमाप्नोति नाऽन्यथा ॥

इति हेमाद्रौ प्रतिकृतिप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ मृतशय्याप्रतिग्रहप्रायश्चित्तमाह—

कूर्म्मपुराणे—

जनस्य मरणे प्राप्ते[2] यमोमृतगणैः सह ।
एति तदा तु पापानि सञ्चीभूयोद्भवन्त्यतः ॥
भूतप्रेतपिशाचाद्या मृतशय्यावहिःस्थिताः ।
केचिद्दृष्टिपथं याताः केचित्प्रेता रसन्त्यलम्[3] ॥
म्रियमाणं ततोदृष्ट्वा कुशयन्ति तथा परे ।
मरणान्ते तथा राजन् तच्छय्यास्पृश्यता भवेत् ॥

---

(१) शुद्धोऽभूत्प्रतिग्रहात् इति श्रीतर्कवाचस्पतिपुस्तकपाठः ।
(२) कर्म्म इति श्रीत-पुस्तकपाठः ।
(३) र 'न्नगं इति श्रीतर्कवाचस्पतिपुस्तकपाठः ।

तत्पुत्रादिः स्थितां [1]शय्यां दिव्यायाऽध्यात्मवेदिने।
दद्याद्द्वादशमे दिवसे मृतः स्वर्गमवाप्नुयात्।
वस्त्रैर्भिर्दक्षिणाभिश्च तोषयेद्द्विजवल्लभम्॥

तत्प्रतिग्रहे दोषमाह—

मत्स्यपुराणे,—

विप्रोलोभपरीतात्मा मृततल्पं भजेद्यदि[2]।
नित्यं नैमित्तिकं काम्यं तदा[3] चरति सर्व्वथा॥
नित्यनैमित्तिकाभावात् पतितः स्यात् तदा द्विजः।
गर्भाधानादिसंस्काराः पुनः [4]कार्य्या द्विजातिभिः॥
ततः परं चरेत्कृच्छ्रं द्विशतं तप्तसंज्ञितम्।
ततः पूतोभवत्येव कर्म्मार्होलोकयोर्द्वयोः॥
अन्यथा निष्कृतिर्नाऽस्ति याधानक्रतुभिर्विना।
प्रधानं सम्परित्यज्य प्रायश्चित्तं समाचरेत्॥
अन्यथा [5]स्यात् स दुष्टात्मा उलूकोनिर्ज्जने वने।

एतद् यागप्रायश्चित्ताधकरणविषयं, उभयोरेकतरसम्भवे नोलूकत्वम्।

इति हेमाद्रौ मृतशय्याप्रतिग्रहप्रायश्चित्तमाह।

---

(१) अनैरिति इति केचित्पुस्तकपाठः।
(२) मन्मतल्पपरिग्रहात् इति केचित्पुस्तकपाठः।
(३) वद्य इति कोतपुस्तकपाठः।
(४) कुर्य्यात् इति कोतकेचित्पुस्तकपाठः।
(५) भवति इति केचित्पुस्तकपाठः।

## अथ गोचर्म्मप्रतिग्रहप्रायश्चित्तमाह।

लिङ्गपुराणे,—

गोचर्म्म विप्रवर्य्याय राजा धर्म्मपरायणः।
पुण्यकालउपायाते दद्याद्विधिवया सह॥
यावन्तः पांसवोभूमेराग्नीभूता भवन्ति हि।
तावद्युगसहस्राणि विष्णुलोके महीयते॥

गोचर्म्मप्रमाणमाह।

रत्नराजीये,—

गोचर्म्म विप्रवर्य्याय राजाधर्म्मपरायणः।
पुण्यकालउपायाते दद्याद्विधिवया सह।
गोशतस्य सवत्सस्य सञ्चारः स्वेच्छया [1]यतः।
स वेद् द्वादशधा याति गोचर्म्मेति विदुर्बुधाः॥

कूर्म्मपुराणे,—

अनर्गलतया यत्र[2] सञ्चारोगोशतस्य च।
रात्रौ यावान् प्रवेशः स्यात् सवत्सानां नृपोत्तम!॥
स तु द्वादशमानेन गोचर्म्मेति प्रकीर्त्तितः।
तं देशं विप्रवर्य्याय अर्च्चिताय कुटुम्बिने॥
यागासक्ताय योदद्यात् स वै नारायणः स्मृतः।
पुनर्भुवमुपागम्य मण्डलाधिपतिर्भवेत्॥

---

(१) भवेत् इति कौतवे चतपुस्तकपाठः।

(२) राजन् इति कौतकेचितपुस्तकपाठः।

लिङ्गपुराणे,—

पुण्यकालेषु पुण्यर्क्षे व्यतीपाते च वैधृतौ।
नदीतीरे पुण्यदिने दत्तं राज्ञा सुवर्मिणा॥
ये गृह्णन्ति द्विजा मोहाद्भक्षणयागादिकं विना।
सद्यः पतन्ति राजेन्द्र क्षत्रियाः कीर्त्तिसम्भवाः॥
नित्यकर्म्मपरिभ्रंशात्सूकरत्वमवाप्यते।
तेषां वै निष्कृतिर्नाऽस्ति यागेभ्योऽन्यैः परिग्रहात्।
तदभावे नरश्रेष्ठ व्रतं चान्द्रायणञ्चरेत्॥

त्रयस्त्रिंशन्मते—

पूर्व्वजोयदि गृह्णीयात् राजदत्तं सुपूजितम्।
गोचर्म्मेति पुनःस्नानं द्रव्यलोभेन पार्थिव॥
तस्य कर्म्माणि नश्यन्ति मृत्युरायाति तत्क्षणात्।
नरकाननुभूयाऽथ[1] सूकरोभवति क्षितौ॥
बहुसंस्कारपूतेभ्योयागादिभ्योन निष्कृतिः।
तस्योपनयनं भूयः कर्म्मभ्रंशो भवेन्नतः[2]।

पूर्व्वमुपनयनादिकं कृत्वा पश्चाद् यागः कर्त्तव्यः, तदभावे चान्द्रायणव्रतं कृत्वा दण्डमेखलाजिनाग्न्यस्थापनादिकं वर्ज्जयित्वा कल्पोक्तविधिना सर्व्वं पुनःसंस्कारं कूर्य्यात्, नाऽन्यथा शुद्धिरीरितेति।

इति हेमाद्रौ गोचर्म्मप्रतिग्रहप्रायश्चित्तम्।

---

(१) नरकाननुभवं कृत्वा इति ऋीतखोंचितपुस्तकपाठः।

(२) भवेद्वत इति वैचितपुस्तकपाठः। भवेत्तदा इति क्रीतपुस्तकपाठः।

## अथ शकटदानप्रतिग्रहप्रायश्चित्तमाह ।

मत्स्यपुराणे,—

स्थिते कर्कटके भानौ मकरस्थे दिवाकरे ।
माघमासे पूर्व्वपक्षे सप्तम्यां रविवासरे ॥
अयनद्वितये चैव मन्वादिषु युगादिषु ।
शकटं धान्यसंमिश्रं युगरज्जुसमन्वितम्[1] ॥
चतुर्भिश्चानडुद्भिश्च युक्तं वस्त्रैरलङ्कृतम् ।
योदद्याद्विप्रवर्य्याय न तस्य पुनरुद्भवः ॥

स्कान्दपुराणे,—

तीर्थेषु पुण्यकालेषु पुण्यवत्सु दिनेष्विह ।
योराजा शकटं दद्याद् विप्रायाऽध्यात्मवेदिने ॥
अनडुद्वाहवासंयुक्तं रज्जुधान्यपरिष्कृतम् ।
अर्च्चितं गन्धवस्त्राद्यैरुक्तदक्षिणया सह ॥
मातृतः पितृतश्चैव कुलमेकं समुद्धरन् ।
मेरुमुद्धृत्य[2] सद्यः स विष्णुलोकं प्रपद्यते ॥

लिङ्गपुराणे,—

---

(१) परिष्कृतं इति श्रीतर्कलङ्कारपाठः ।
(२) वहवा इति श्रीतर्कवेदान्ततर्कालङ्कारपाठः ।

प्रायश्चित्तमाह—

शकटं योनु गृह्णीयात् यागतीर्थपराङ्मुखः ।
पुण्यकालेषु पुण्यर्क्षे स भवेच्छकटधारकः[1] ।
एतत्पापविशुद्ध्यर्थं चरेचान्द्रायणाष्टकम्[2] ।
यागाद्यकरणे दोषः शकटस्य प्रतिग्रहे ॥
प्रधानं संपरित्यज्य प्रायश्चित्तं समाचरेत् ।

परिषदुपस्थानपूर्व्वकं सर्व्वप्रायश्चित्तं पूर्व्ववत् कुर्य्यात् ।

इति हेमाद्रौ शकटप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ उभयतोमुखीप्रतिग्रहप्रायश्चित्तमाह ।

स्कन्दपुराणे—

सूयमानां स्पृशन्[3] धेनुं परिक्रम्य प्रणम्य च ।
योदद्यादिहपवर्य्याय स वै विष्णुपदं व्रजेत् ॥
सायं वा प्रातरथवा सूयमानां विलोकयेत्[4] ।
शिरःपादौ यदा व्यक्तौ तदा दानं महत्तरम् ॥

---

(१) चक्रधारिणः इति श्रीतर्कषित पुस्तकपाठः ।

(२) चान्द्रायणाष्टकं इति श्रीतर्केषितपुस्तकपाठः ।

(३) यथाधेनुर्भवति श्रीतपुस्तकपाठः ।

(४) विलोकयन् इति श्रीतर्केषितपुस्तकपाठः ।

पितृनुद्दिश्य वा राजन्नुत विष्णुं हरञ्च वा ।
तत्तल्लोकमवाप्नोति पुनरावृत्तिवर्ज्जितम् ॥

महानारदीये—

सूयमाना यदा धेनुः सर्व्वपापक्षयकरी ।
तदा नरेण दातव्या विप्रायाऽध्यात्मवेदिने ॥
न तस्य पुनरावृत्तिर्ब्रह्मलोकात् कदाचन ।

शिवधर्म्मोत्तरे—

द्विमुखीं षट्पदां धेनुमनुव्रज्य प्रणम्य च ।
यो दद्याद्विप्रवर्य्याय स वै विष्णुपदं व्रजेत् ॥

महाभारते—

द्विमुखीं षट्पदां धेनुं विलोक्य जनवल्लभः ।
परिक्रम्य प्रणम्याऽथ द्विजायाऽध्यात्मवेदिने ॥
बह्वीभिर्दक्षिणाभिश्च दद्याद्यदि नरोत्तमः ।
यावन्ति पशुरोमाणि तावद्ब्रह्मपदं व्रजेत ॥

तत्प्रतिग्रहे दोषमाह—

देवीपुराणे—

द्विमुखीं षट्पदां धेनुं विप्रोलोभपरायणः ।
[1]प्रतिगृह्णाति चेल्लोभाद्यावल्लोमपरायणः ॥
तावद्युगसहस्राणि नारीत्वं [2]स व्रजेदिह ।

(१) प्रतिगृह्णाति द्विजो देवि इति श्रीतर्कपञ्चाननपुस्तकपाठः ।
(२) प्राप्नुयादिह इति श्रीतपुस्तकपाठः ।

कूर्मपुराणे—

षट्पदां विमुखीं धेनुं सोपस्करसदक्षिणाम्।
सूयमानां जनोधृत्वा याति मृत्युवशं क्षणात्॥
नरकानुभवं कृत्वा नारीजन्म समश्नुते।
केचित्संस्कारमिच्छन्ति उभयतोमुखीग्रहे॥
स्त्रीत्वाच्च दोषबाहुल्यात् प्रायश्चित्तविधानतः।
लक्षत्रयेण गायत्र्याः शुद्धिमाप्नोति देहिकीम्॥
यागादिश्चंशने तात प्रायश्चित्तमिदञ्चरेत्।
प्रायश्चित्तेन पूतात्मा प्रधानं सम्परित्यजेत्॥
अनेन विधिना शुद्धिर्नतीर्थैर्नजलादिभिः।

लक्षत्रयजपानन्तरं पुनः संस्कारं कृत्वा उभयतोमुखीप्रतिग्रहात् शुद्धिरिति तात्पर्य्यम्।

इति हेमाद्रौ उभयतोमुखीप्रतिग्रहप्रायश्चित्तम्।

---

## अथोत्क्रान्तिधेनुप्रतिग्रहप्रायश्चित्तमाह।

मार्कण्डेयपुराणे—

विप्रस्तूत्क्रान्तिकाले तु अविचार्य्य मद्वयम्।
तां धेनुं प्रतिगृह्याऽऽशु महापातकमश्नुते॥

देवीपुराणे—

उत्क्रान्तिधेनुमासीनां तन्मूल्यं वा यथार्हतः ।
[1]प्रतिगृह्य द्विजोलोभान्नीमं नरकमश्नुते ॥

कूर्मपुराणे—

द्विजो यः श्रुतिपम्पन्नः प्रतिग्रहपरायणः ।
उत्क्रान्तिकाले तवाम्नीं धेनुं धत्ते स दोषभाक् ॥
नरकाननुभूयाऽऽशु दरिद्रोभुवि जायते ।
अन्नवस्त्रपरिक्षीणः सदारोबहुलप्रजः ॥
किं करोमि क्व गच्छामि किं वा शरणमाश्रये ।
इति वर्त्तेत स नित्यमेतद् दारिद्र्यलक्षणम् ॥
दारिद्र्यं मरणात् कष्टं दरिद्रोन हि पूज्यते ।
वृथा जन्म दरिद्रस्य दरिद्रस्य गुणोवृथा ॥
तथाऽपि बालदारिद्र्यं क्षणमात्रं न शक्यते ।

तत्प्रायश्चित्तमाह—

भविष्योत्तरे—

उत्क्रान्तिधेनुमागृह्णन् प्रधानं सम्परित्यजेत् ।
लक्षद्वयेन गायत्र्याः शुद्धिमाप्नोत्यनुत्तमाम् ॥
नाऽन्यथा शुद्धिमाप्नोति दरिद्रत्वाच्च मुक्तिभाक् ।
दारिद्र्यजन्म धिग्रूपं धिग्दरिद्रं पुनः पुनः ॥

---

(१) प्रतिगृह्यद्विजाचस्तु सर्वेनरकमश्नुते इति क्रीतलेखितपुस्तकपाठः ।

(२) वृथारिपुं इति लेखितपुस्तकपाठः । वृथारूपं इति क्रीतपुस्तकपाठः ।

(३) भवेदिह इति क्रीतपुस्तकपाठः ।

दारिद्र्यजनकं धेनोर्ग्रहणं न प्रशस्यते।

इति हेमाद्रौ उत्क्रान्तिधेनुप्रतिग्रहप्रायश्चित्तम्।

---

## अथ वैतरणीधेनुप्रतिग्रहप्रायश्चित्तमाह।

कूर्म्मपुराणे,—

यमलोके महाघोरे सरिद्रूपा रक्तरूपिणी।
षष्टियोजनविस्तीर्णा शतयोजनमायता॥
सा नदी पापिभिर्दृष्टा ज्वलतीव सदा क्षया।
दृष्ट्वा पुण्यतमांश्चैव शान्तिमाप्नोति तत्क्षणात्॥
पापिनः पापकर्म्माणः पुण्यवान् पुण्यमाचरन्।
पापी नरकमाप्नोति पुण्यवान् पुण्यलोकवान्॥
पुण्यं सुखार्थी कुर्व्वीत दुःखार्थी पापमाचरेत्।

दुष्टप्रतिग्रहएव पापं तत्परित्यागएव पुण्यं, दुष्टप्रतिग्रहउत्क्रान्ति-वैतरण्यादिः। तेषां त्यागएव पुण्यम्। द्रव्यसम्पत्तौ तु पाप-बाहुल्यात् यागादिकरणे शक्यत्वात् परित्याज्यमेव सर्व्वथा।

मत्स्यपुराणे,—

दारिद्र्यं स्थिरतामेति वैतरण्याः प्रतिग्रहे।
सर्व्वेषामेव पापानां दारिद्र्यमधिकं विदुः॥

[1]दारिद्र्याद्दोषबाहुल्यात् त्यजेदेतत्प्रतिग्रहम् ।
दारिद्र्यादपरं पापं जगत्येह न विद्यते ॥

तत्प्रायश्चित्तमाह,—

स्कन्दपुराणे,--

प्रतिगृह्य द्विजो धेनुमग्रौवाक्ते जनाधिप ।
पिण्डनिर्व्वापणे काले दीय[2]मानां दरिद्र[3]कः ॥
प्रधानं सम्परित्यज्य स्नात्वा नित्यं समाहितः ।
लक्षद्वयं जपेद्देवीमितद्दोषोपशान्तये ।
नाऽन्यथा शुद्धिमाप्नोति दारिद्र्या[4]च्च विमुक्तिमान् ॥
इति हेमाद्रौ वैतरणीधेनुप्रतिग्रहप्रायश्चित्तम् ।

---

(१) दारिद्र्यदोषबाहुल्यादिति-श्रौतपुस्तकपाठः ।
(२) दीयमानात् इति केचित्पुस्तकपाठः ।
(३) दरिद्रवान् इति श्रौतकेचित्पुस्तकपाठः ।
(४) दारिद्र्यं इति श्रौतकाशीपुस्तकपाठः ।

## अथ मृत्युमहिषीप्रतिग्रहप्रायश्चित्तमाह ।

मार्कण्डेयपुराणे,—

प्रतिगृह्णाति यो विप्रो महिषीं मृत्युरूपिणीम्[1] ।
मृत्युनाम्नकरीन्द्रात्तु ग्रहीतुर्मृत्युदायिनीम्[2] ॥
[3]अर्चितां नीलवस्त्राद्यैर्धान्यैर्दक्षिणया सह ।
स साक्षान्मृत्युमाप्नोति षण्मासाभ्यन्तरे नृप ॥

स्कन्दपुराणे,—

विप्रो यो महिषीं धत्ते मृत्युदां पापनाशिनीम् ।
धान्यैर्गन्धाक्षतैर्वस्त्रैरर्चितां मृत्युरूपिणीम् ॥
सवत्सां रोगिभिर्दत्तां लोकेऽस्मिन्[4] भयवर्जितः ।
मृत्युमाप्नोति सहसा पश्चात् शूकरतां व्रजेत् ॥

ब्रह्माण्डे,—

भानुः कुजो भृगुश्चैव शनी राहुर्ग्रहास्त्वमी ।
द्वादशाष्टमजन्मस्था पञ्चैते यस्य देहिनः ॥

---

(१) विप्रो यो महिषीं गृह्णन् साक्षात् मृत्युस्वरूपिणीं इति क्रीतवेष्टित पुस्तकपाठः ।
(२) मृत्युदायिनीं इति वेष्टितपुस्तकपाठः ।
(३) अभ्यर्च्य इति क्रीतवेष्टितपुस्तकपाठः ।
(४) ब्राह्मण इति क्रीतवेष्टितपुस्तकपाठः ।

कुर्व्वन्ति प्राणसन्देहं स्थानभ्रंशं धनक्षयम् ।
तदा मृत्युवशं याति[1] पीड़ितोग्रहनायकैः ॥
ज्वरशूलवातपित्तश्लेष्मोल्वणमसूरिकाः ।
विषूचीग्रहणीपादहस्तशूलं महद्भयम् ॥
ज्वरातिसारोनिःशक्तिः मूर्ध्नि भ्रमणमेव च ।
कफो वा बहुमूत्रं वा रोगानृणां भवन्ति हि ॥
सर्व्वरोगविनाशाय मृत्यूत्तरणहेतवे ।
तदा योमहिषीं दद्यात् पूजितां वस्त्रभूषणैः ॥
मृत्युरूपाय विप्राय स सद्योरोगमुक्तिमान् ।
यस्तीयान्महिषीमेनां द्विजोद्रव्यातुरस्तु यः[2] ॥
मृत्युमायाति सहसा सूकरत्वमुपैति[3] सः ।

तत्प्रायश्चित्तमाह,—

गारुड़पुराणे,—

तदानीं वा परेद्युर्वा स्नात्वा शुचिरलङ्कृतः ।
नित्यंकर्म्मविशुद्धात्मा अपमृत्युविनाशनम् ॥
अयुतं नियुतं कृत्वा प्रत्यहं संख्यया नृप ।
अयुतेन विशुद्धःस्यान्महिषीं योऽनुमन्यते ॥

(१) याति इति श्रीतर्केखितपुस्तकपाठः ।
(२) तदा इति वेंखितपुस्तक पाठः ।
(३) अवाप्नते इति श्रीतर्केखितपुस्तकपाठः ।

पञ्चमासं दशाहं वा चीर्णमारभ्य बुद्धिमान् ।
चतुर्थकालमायाते हविर्भोजनमाचरेत् ॥

"अपमृत्युमपः'स्तुध"मित्यादिभिर्नवभिर्वाक्यैर्जपः ।

इति हेमाद्रौ मृत्युमहिषीप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ महिषीप्रतिग्रहप्रायश्चित्तमाह ।

वामनपुराणे,—

कृष्णाङ्गारचतुर्दश्यां कृष्णाष्टम्याममादिने ।
महिषीं विप्रवर्य्याय दत्त्वा नैति[1] यमालयम् ॥

स्कन्दपुराणे.—

युगादिषु चतुर्ष्वेषु कृष्णाष्टम्यां विषुवद्दिने ।
कृष्णाङ्गारचतुर्दश्याममायां भौमवासरे ॥
महिषीं समलङ्कृत्य वस्त्रगन्धादिभूषणैः ।
यो दद्याद्विप्रवर्य्याय यमपीड़ानिवृत्तये ॥

---

(१) कुर्मिलिति लिखितपुस्तकपाठः ।
(२) तत्र नास्ति इति मोतवेष्टितपुस्तकपाठः ।

यमस्तं पूजयेत्पश्चन् मृत्युत्थानाभिवन्दनैः ।
स्वर्गलोकं[1] स यात्याशु लोकोबन्धुजनं यथा ॥
ग्रहीतुः[2] पूर्व्ववत् पुत्र निष्कृतिः कथिता बुधैः ।
तेन शुद्धोभवेद्विप्रः पापादस्मात् प्रमुच्यते ॥

इति हेमाद्रौ महिषीप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ गोमुखजननधेनुप्रतिग्रहप्रायश्चित्तमाह ।

देवीपुराणे,—

अभुक्तगण्डनक्षत्रे लग्नसन्धिचतुर्द्दशे[3] ।
तथैव विषनाडीषु व्यतीपाते च वैधृतौ ॥
मातापित्रोस्तु ज्येष्ठस्य भ्रातुर्मरणसम्भवे ।
एतेषु [4]सम्भवो पुत्रः कुलनाशकरोभवेत् ॥

अभुक्तसंज्ञामाह,—

ज्योतिर्निदाने,—

अश्लेषामघामघयसन्धिः रेवत्यश्विनीसन्धिः इत्येते अभुक्ताः ।

---

(१) स्वर्गं लोकेन यात्याशु इति केचित्पुस्तकपाठः ।
(२) तस्यैव इति क्वचित्पुस्तकपाठः ।
(३) लग्नसन्धि चतुर्द्दशी इति क्वचित्पुस्तकपाठः ।
(४) सम्भव पुत्र इति केचित्पुस्तकपाठः ।

कुलीरसिंहयोर्मीनमेषयोः कीटचापयोः।

गण्डान्तमन्तरालं स्याद्घटिकाद्वितयं स्मृतम्”।

एतेषु पुत्त्रोजातःपितरं मातरं वा हन्ति, अश्लेषा चित्रा ज्येष्ठा मूला पुष्य विशाखा एतानि गण्डनक्षत्राणि द्वयोर्लग्नयोरन्तरालं लग्नसन्धिः चतुर्द्दशी अमावस्या चतुर्द्दशी अमा च सर्व्वमन्यत् स्पष्टम्।

एतद्दोषनिवृत्त्यर्थं जननं गोमुखे पुरा।

पश्चात् शान्तिं प्रकुर्व्वीत तत्तद्दोषोपशान्तये॥

सा धेनुर्विप्र भूलोके सर्व्वे दुष्कृतकारिणी।

स्वजातिप्रसवं त्यक्त्वा चान्यनारी प्रसूयते॥

तदा प्रभृत्यसौ धेनुः सर्व्वपापविवर्द्धिनी।

तस्मादेनां द्विजोधृत्वा सद्यः पातित्यमर्हति॥

मृतोनरकमाप्नोति पुलिन्देष्वभिजायते।

तस्योपनयनं भूयः कार्य्यं[1] चान्द्रायणत्रयम्॥

एषा निष्कृतिरस्येह नाऽन्यथा शुद्धिरिष्यते।

पूर्व्वं पुनःसंस्कारं कृत्वा तेन शुद्धोभूत्वा पश्चात् चान्द्रायणत्रयं कुर्य्यात् ततः पूतो भवति।

इति हेमाद्रौ गोमुखजननधेनुप्रतिग्रहप्रायश्चित्तम्।

---

(१) कुर्य्यादिति श्रीतवेचित पुस्तकपाठः।

अथाऽऽलिङ्गनदानप्रतिग्रहप्रायश्चित्तमाह ।

वामनपुराणे,—

धनार्थं मुख्यओयस्तु रोगिणं यदि गूहयेत्[1] ।
स रोगी भवति क्षिप्रं तदाऽधर्मस्ततः परम् ॥
उत पत्नी सुतोवाऽपि निधनं याति पार्थिव ! ।
तं कदा नाऽऽलपेद्विप्रोयदि निर्म्मागुणो महो ॥

गारुड़पुराणे,—

धनार्थं यदि विप्रोऽसौ महान्तं रोगिणं नरम् ।
आलिङ्गेत् सहसा भूमौ रोगी भवति निश्चयः ॥
यमलोकमुपागम्य भुक्त्वा तत्रैव वेदनाम् ।
पत्नीपुत्रवियोगी स्यात् षण्मासाभ्यन्तरे नृप ॥
तद्दोषपरिहारार्थं प्रायश्चित्तं समाचरेत् ।
सूक्तमेनं जपेन्नित्यं स्नात्वा शुचिरलङ्कृतः ॥
मासं वा पक्षमेकं वा दीक्षामारभ्य वाग्यतः ।
हविष्याशी भवेन्नित्यं जपेन्नारायणं स्मरन् ॥
परेद्युरेवं कुर्व्वीत अयुतं यदि पूर्य्यते ।
तदा विसृज्य नियमं ब्राह्मणान् भोजयेत्ततः ॥
एवं यः कुरुते सम्यक् प्रायश्चित्तं स शुद्धिभाक् ।

मुञ्चामित्वेत्यादिः प्रमु'ञ्चमेनमित्यन्तो मन्त्रो जप्यः ।

इति हेमाद्रौ आलिङ्गनदानप्रतिग्रहप्रायश्चित्तम् ।

---

[1] गूहयम् इति केचित्पुस्तकपाठः ।

## अथ दुष्टनक्षत्रशान्तिषु धेनुप्रतिग्रहप्रायश्चित्तमाह ।

मार्कण्डेयपुराणे,--

दुष्टर्क्षविषनाड़ीषु व्यतीपाते च वैधृतौ ।
अमाकृष्णचतुर्द्दश्योः पित्रोर्नक्षत्रयोस्तथा ॥
चन्द्रसूर्य्यग्रहे चैव यदा[1] पत्नी प्रसूयते ।
तदा शान्तिं प्रकुर्व्वीत तत्तद्दोषोपशान्तये ।
शान्त्यङ्गभूता या धेनुः सा देया विप्रपुङ्गवे[2] ॥

तस्मिन् दुष्टनक्षत्रे जातस्य शिशोर्दोषशान्त्यर्थं तत्तनक्षत्राधिदेवताप्रीत्यर्थं तत्तद्देववर्णा गौर्देया इति शान्त्यध्यायेऽभिहितं अलाभे कपिला दातव्या । तत्प्रतिग्रहे प्रायश्चित्तमाह ।

कूर्म्मपुराणे,—

दुष्टनक्षत्रजातस्य शान्तिकर्म्मणि यो द्विजः ।
आचार्य्यत्वं यदाकुर्य्यात् गोर्वापि प्रतिगृह्यते ॥
तस्यैव नरके वासः कालसूत्रे महत्तरे ।
तदन्ते भुवमासाद्य पापफलमवाप्नुयात् ॥
तद्दोषपरिहारार्थं प्रायश्चित्तं चरेत्तदा[3] ।
प्रायश्चित्तेन पूतात्मा शुद्धिमाप्नोति पार्थिव ॥

---

(१) यस्य इति श्रीतवेष्टितपुस्तकपाठः ।
(२) विप्रपुङ्गवैः इति वेष्टितपुस्तकपाठः ।
(३) विद्युद्वे इति श्रीतवेष्टितपुस्तकपाठः ।

स्वाध्यायदिवसे राजन्नुपविश्य सुखासने ।
तथा पारायणं प्रोक्तं दशरात्रमतन्द्रितः ॥
ततः परमुपोष्यैव पञ्चगव्येन शुध्यति ।

संहितामात्रं चाऽरण्यकं च, न पदक्रमादिः न वा परायत्तपठनम् । पश्चात् पञ्चगव्यं पीत्वा शुद्धिमाप्नोति नाऽन्यथा "वेदो नारायणः साक्षात्" इति स्मरणात् ।

इति हेमाद्रौ दुष्टनक्षत्रशान्तिधेनुप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ दुष्टनक्षत्रे प्रथमरजोदर्शनशान्तिधेनु-प्रतिग्रहप्रायश्चित्तमाह ।

मार्कण्डेयपुराणे,—

यस्य पत्नी नरश्रेष्ठ दुष्टर्क्षेष्विह पुष्पिणी ।
पत्युर्वाऽथ स्वयंवाऽथ षण्मासं मृत्युराविशेत् ॥

भरणी आर्द्रा पुनर्वसुः अश्लेषा मघा पुष्या ज्येष्ठा पूर्व्वाषाढ़ा पूर्व्व-भाद्रपदा इत्येतानि दुष्टनक्षत्राणि ।

प्रतिपत् द्वितीया चतुर्थी षष्ठी अष्टमी द्वादशी उभयत्र चतुर्दशी अमा च प्रथमार्त्तवे एता दुष्टतिथयः[1] । भानुवारः

---

(१) एतानिदुष्टदिनानि इति श्रीतर्कचितपुस्तकपाठः ।

भङ्गारकवारः मन्दवासर इति दुष्टवाराः। मेषलग्नं वृषभलग्नं सिंहलग्नं एतानि दुष्टलग्नानि। आश्विने प्रथमरजोदर्शनं दोषावहम्[1]। लग्नात् सप्तमलग्नं आश्विनस्थानं, तत्र दुष्टग्रहाश्चेत् जायापत्योरमङ्गलप्राप्तिरेतेषु नारीप्रथमरजोदर्शने एकैकं द्वयं त्रयं वा यदि प्राप्तं, तदा तत्तद्दोषपरिहारार्थं शान्तिकर्म्म। तत्राचार्य्योयोविप्रस्तस्य प्रायश्चित्तमाह।

पद्मपुराणे,—

> गृहस्थस्य तु[2] भार्य्यायाः प्रथमार्त्तवशान्तिषु।
> सर्व्वं प्रमुखतः कृत्वा कृत्वा धेनुप्रतिग्रहम्॥
> तत्तद्द्रव्यञ्च गृह्णाति भर्च्चितं वस्त्रभूषणैः।
> अनुभूय ततः पापं नित्यं याञ्चापरोभवेत्॥
> तद्दोषप्रशमायाऽलं षड़ब्दं कृच्छ्रमाचरेत्।
> प्रधानं सम्परित्यज्य देहशुद्धिं समाचरेत्॥
> स्त्रीणां रजस्वलापापं पञ्चधा परिकीर्त्तितम्।
> आ[3]चार्य्यत्वन्तु प्रथमन्त्वौद्वितीयमनन्तरम्।
> तृतीयं प्रतिमादानं चतुर्थं तत्रभोजनम्॥
> आर्त्विज्यं[4] पञ्चमं प्रोक्तमेतत्पापस्य लक्षणम्।
> आचार्य्ये तु षड़ब्दं स्यात् द्विगुणं धेनुसंग्रहे॥

---

(१) दोषावहमिति क्वीतकेचितपुस्तकाचार्नास्ति।

(२) यो द्विजोवस्य इति क्वीतकेचितपुस्तकपाठः।

(३) तदाचार्य्यस्य इति क्वीतकेचितपुस्तकपाठः।

(४) पञ्चमं ऋत्विजाप्रोक्तं इति क्वीतकेचितपुस्तकपाठः।

षड्भ्रं पादहीनं स्यात् प्रतिमायाः प्रतिग्रहे ।
तदर्द्धं भोजने प्रोक्तं तदर्द्धमृत्विजां स्मृतम् ॥

नारीप्रथमरजोदर्शने धेनुदानप्रतिग्रहे एतत्,। शान्तिप्रतिमा-प्रतिग्रहे च प्रायश्चित्तप्रस्तावे तदाचार्य्यस्य ऋत्विजां च संसर्गतो दोषगुणा भवन्ति इति न्यायात् प्रायश्चित्तस्य युक्तत्वात् ।

इति हेमाद्रौ प्रथमरजोदर्शने शान्तौ गोप्रतिग्रहे
होमे तदाचार्य्यर्त्विजां प्रायश्चित्तम् ।

---

## अथाद्भुतशान्तिप्रतिमाप्रतिग्रहे प्रायश्चित्तमाह ।

देवीपुराणे,—

अद्भुतेषु महत्स्वेषु दिव्येषु पृथिवीपते ।
आन्तरीक्षेषु भौमेषु शान्तिः कार्य्या सदा नरैः[1] ॥

अद्भुतानि यथा सूर्य्याचन्द्रमसोः परिवेषः । अकाले महेन्द्र-चापोद्भवः । यत्र क्वचन दिशि सूर्य्यमण्डलाकारवन्मेघकान्तिरत् पश्यते स तु प्रतिसूर्य्यः । मत्स्याकारध्वजवदाकाशे मेघविकारो दृश्यते स एव मत्स्यरः । गन्धर्व्वनगरं नाम व्योममार्गे वलयाकार-वदाकारो दृश्यते तद् गन्धर्व्वनगरम् । नभस्येषु वातोयदाजायते

---

(१) वर्षेत सर्व्वदा इति क्रोतशेखितपुस्तकपाठः ।

तत्चालनञ्चम् । अश्विन्यादिग्रहाणां संस्थानं यथादर्शनविपरीत-वद्दृश्यते तदद्भुतम् । नक्षत्राणि ध्वजाकारवत् क्वचिद्विभान्ति स तु ध्वजः अद्भुत इति दिव्या उत्पाताः । वायौ सरति सति पर्ज्जन्यः रक्तं पयो वा वर्षति, दुर्गन्धयुक्तो वा यदा वायुः विवाति, येन वा वायुना अकाले सौधवृक्षा अधो निपतन्ति, स एव वा वायुरद्भुतः[1] । वसन्तर्त्तौ मेघायदि सूर्य्यमावृत्य दिनद्वयं त्रयं वा तिष्ठन्ति सोऽप्यद्-भुत इत्यान्तरिक्षाः, आरामेषु वृक्षेषु क्षीरं रक्तं वा स्रवति, प्रति-मादयः कम्पन्ते तासु स्वेदोद्भवो वा, निरग्निर्धूमोद्भवः, आकस्मिको-ध्वनिः, वह्निःमस्वरतां मण्डूकानां बालोद्भवः, वायसाः श्वेतपक्षाः आकस्मिकोभूकम्पः, देवालयेषु धूमोद्भवः, अकाले वृक्षेषु फलोत्पत्तिः, अकालवृष्टिश्च देशभेदेनद्रष्टव्या, वृष्टिंविना तटाकानां जलागमः इति भौमा अद्भुताः । गृहेउत्पातायथा सुजनस्य दुर्गुणा महिषीयमलप्रसूः, [2]सर्व्वाएवनार्य्यः यमलौ सूयन्ते, सदन्तजननं आदौ जर्द्धदन्तजननमित्येते गृहे उत्पाताः शिथिलीमधुपटलोद्भवश्च उलूखलस्यमूषले वायसारोहणं, गृहे वायसप्रवेशः, स्वेनैव गृहोपरि उलूकगृध्रपिङ्गल्यारोहणं, स्वपुत्रदेहेषु अङ्गवैकल्यं. अश्वोदिवाजातः कदल्यारामे दक्षिणभागे कोशोद्भवः, नारीप्रसवसमये पादोत्पत्तिः मार्ज्जारमूषकादीनां प्रसवकाले वैपरीत्यजननं, श्वमार्ज्जारादीन [3]ध्वन्यादिविकार एते स्वगृहोद्भवा उत्पाताः । स्वस्थस्य मर्त्यस

(१) स एव मरुदद्भुत इति कीलखेखितपुस्तकपाठः ।

(२) नारीमोठं सर्वं इति कीलखेखितपुस्तकपाठः ।

(३) धान्यादिविकार इति कीतपुस्तकपाठः ।

शिरोहीनमङ्गं दृश्यते, सर्पबिम्बमण्डलं मेघावरणादिरहितेऽपि न दृश्यते, मनसि "दुष्टग्रहाः सञ्चरन्ती"ति सदा भ्रमः, सहृदयस्य गन्धः शोभं शुष्कायते ध्वनेर्विकारश्चेति लक्षारिष्टाः । इति दिव्यान्तरीक्षभौमस्वदेहोद्भवानि अद्भुतानि, एषु दिव्यान्तरीक्षभौमाद्भुतेषु दृष्टेषु तच्छान्तिः प्रजाभिः[1] प्रजानां संक्षोभभयात् राजपुरुषैर्वा कर्त्तव्या अन्यथा महान् दोषः । तच्छान्तिषु विप्रस्य प्रधानप्रतिग्रहे तत्प्रतिमाग्रहे च प्रायश्चित्तमाह ।

कूर्म्मपुराणे,—

अद्भुतेष्वेषु दृष्टेषु तच्छान्तिषु द्विजोत्तमः ।
आचार्य्यत्वं यदा कुर्य्यात् तदा पापं समश्नुते ॥
अल्पद्रव्ये प्रधानस्य प्रतिमास्तं परिग्रहे ।
यथोक्तप्रतिमादाने दोषाधिक्यं भवेत्तदा ॥
व्याघ्रोभवति देहान्ते सर्व्वप्राणिविहिंसकः ।
अतस्तद्दोषशान्त्यर्थं प्रायश्चित्तं समाचरेत् ॥
यथोक्तप्रतिमादाने सार्द्धं दक्षिणया[2] तथा ।
चान्द्रायणत्रयं कुर्य्यात् तदभावे प्रतिग्रहे ॥
अतोन्यूनं न सर्व्वत्र विप्रश्चान्द्रायणञ्चरेत् ।

प्रतिमाल्पत्वे दक्षिणाल्पत्वे च प्रायश्चित्तमाह ।

---

(१) प्रजानां इति केचित्पुस्तकपाठः ।

(२) दक्षिणामेन कल्पते इति केचित्पुस्तकपाठः ।

नृसिंहपुराणे,—

सम्पूर्णदक्षिणादाने कुर्य्याच्चान्द्रायणद्वयम् ।
नो चेद्दिजः प्रकुर्व्वीत एकं चान्द्रस्य भक्षणम् ॥
अतिन्यूनतया विप्रं प्राजापत्यं समाचरेत् ।
शेषाणामृत्विजां प्रोक्तं वेदमातुः शतं द्विजाः ॥ इति

इति हेमाद्रौ भद्रुतशान्तिप्रतिमाप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ छागप्रतिग्रहप्रायश्चित्तमाह ।

मार्कण्डेयपुराणे,—

द्विजः पर्व्वणि संक्रान्तावमायां पुण्यसङ्गमे ।
सकृच्छागं प्रगृह्याऽऽशु जनेभ्यः पापभूयसे ॥
सप्तजन्मसु नारी स्यात्[1] अन्ते उष्ट्रत्वमेति च ।

लिङ्गपुराणे,—

छागं यः प्रतिगृह्णीयात् विप्रोभोगपरायणः ।
सप्तजन्मसु नारीत्वमनुभूय मद्दुयम् ॥
उष्ट्रोभवति दुष्टात्मा भारवाही विगर्हितः ।

स्कान्दपुराणे,—

---

(१) नारीत्वं इति श्रीलबेचितपुस्तकपाठः ।

छागं रात्रौ द्विजो हत्वा मत्वा निष्कृतिं [1]शिवाम् ।
नारीत्वमनुभूयाऽथ क्रमेणोभुवि जायते ॥
तत्पापपरिहारार्थं प्रायश्चित्तमिदञ्चरेत् ।
पञ्चपर्व्वसु पञ्चैव कालान् अभुञ्जयन् व्रती ॥
ऋतुद्वयं जपेद्देव्या द्विलक्षं जपमुत्तमम् ।
अन्तर्दिनेषु सर्व्वेषु हविष्याशी जितेन्द्रियः ॥
ऋतुद्वयावशेषेषु जपश्च परिपूर्य्यते ।
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ॥
नाऽन्यथा शुद्धिमाप्नोति दानैर्ब्राह्मणभोजनैः ।

इति हेमाद्रौ छागप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ अनडुत्प्रतिग्रहप्रायश्चित्तमाह ।

मत्स्यपुराणे,--

त्रिषु जन्मसु पैशाच्यमनडुाहप्रतिग्रहात् ।
तदन्ते नरकं गत्वा [2]वानरत्वमुपेति च ॥

स्कन्दपुराणे,—

अनडुाहं द्विजो हत्वा गोधीधान्यसमन्वितम् ।
दत्तं दोषविमुक्त्यर्थं राजभिः पुण्यवर्त्तिभिः ॥

---

(१) शिवां इति केचित्पुस्तकपाठः ।

(२) वानरत्वमुपयाति इति केचित्पुस्तकपाठः ।

पर्व्वकाले तथा सूर्य्य-सोमग्रहणसम्भवे ।
अर्च्चितं गन्धपुष्पाद्यैर्वानरत्वमुपैति च ॥

लिङ्गपुराणे—

राजा वृषभमाराध्य गन्धवस्त्रादिभूषणैः ।
पुण्यकालेषु पुण्यर्क्षे विप्रायाऽध्यात्मवेदिने ॥
दद्याद्यदि ग्रहप्रीत्यै निष्कामनतयाऽ[1]थवा ।
न भवेद्‌दुष्टग्रहपीडाभिर्वह्नोनीरुग्भवेत् [2]सदा ॥
एवं वृषं द्विजोऽधृत्वा सद्‌द्रव्यं कारणं विना ।
सप्तजन्मसु पैशाच्यमनुभूय ततःपरम् ॥
महान्तं नरकं भुक्त्वा वानरोभुवि जायते ।

प्रतिग्रहप्रायश्चित्तमाह—

ब्रह्माण्डपुराणे,—

अनड्वाहं द्विजोधृत्वा निष्कारणतया मुने !
द्रव्यलोभेन मनुजः प्रायश्चित्तं समाचरेत् ॥
द्विजानुज्ञामवाप्याऽथ पराकान् विंशतिं चरेत् ।
परिपूतेन मनसा पञ्चगव्यं पिबेत्ततः ॥
ततः शुद्धिमवाप्नोति अनडुत्प्रतिग्रहात् । इति ।

इति हेमाद्रौ अनडुत्प्रतिग्रहप्रायश्चित्तम् ।

(१) अन्ये: इति श्रोतवेष्टितपुस्तकपाठः ।
(२) भवति वर्मदा इति श्रोतवेष्टितपुस्तकपाठः ।

## अथ तैलघटप्रतिग्रहप्रायश्चित्तमाह ।

स्कन्दपुराणे,—

शृणु वत्स तु वक्ष्यामि प्रायश्चित्तं सुखाप्तये ।
शनिपीडाविमुक्त्यर्थं प्रदत्तं राजवल्लभैः ॥
अर्चितं गन्धवस्त्राद्यैः प्रतिगृह्य द्विजोत्तमः ।
यमस्य सदनं गत्वा स्थित्वा तत्र चिरेण वै[1] ॥
तिलघाती भवेत् पश्चात् सर्व्वधर्म्मबहिष्कृतः ।
तद्दोषपरिहारार्थं यावकं कृच्छ्रमाचरेत् ॥

महानारदीये—

अयोघटं समाच्छाद्य नीलवस्त्रेण यत्नतः ।
अभ्यर्च्य गन्धपुष्पाद्यै[2]र्भक्त्या दद्याद्द्विजातये ॥
प्रतिगृह्य द्विजस्तन्तु[3] घटं तैलेन पूरितम् ।
यमलोके चिरं कालं स्थित्वा [4]तत्र चिरेण सः ॥
तिलघाती भवेत् पापी प्रायश्चित्तं न चेदिह ।
एतत्पापविशुद्ध्यर्थं यावकं मण्डले चरेत् ॥

---

(१) वर्द्धमिह इति वेष्टितपुस्तकपाठः ।
(२) ह्रार्न इति श्रीतवेष्टितपुस्तकपाठः ।
(३) द्विजोत्तम इति श्रीतवेष्टितपुस्तकपाठः ।
(४) तत्रैव कल्पयान् इति श्रीतवेष्टितपुस्तकपाठः ।

ततःपरं विशुद्धात्मा पञ्चगव्यं पिवेद्व्रती ।
ब्राह्मणान् भोजयित्वा तु शुद्धिमाप्नोति पौर्व्विकीम् ॥
नाऽन्यथा शुद्धिमाप्नोति प्रायश्चित्तं विना नृप ।

इति हेमाद्रौ तिलघटप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ कनकाज्यावेक्षणप्रतिग्रहप्रायश्चित्तमाह ।

कूर्म्मपुराणे—

दुष्टग्रहादिपीड़ायां जन्मनक्षत्रसङ्गमे ।
अष्टमे च कुजो यस्य शनिर्वा पापएव वा ॥
तदा तस्य महद्दुःखं भवेदेतस्य संग्रहे ।
तदा राजा प्रकुर्व्वीत कनकाज्यनिरीक्षणम् ॥
ब्राह्मणाय सुशान्ताय दरिद्राय कुटुम्बिने ।
बहुदक्षिणया दत्वा[१] तस्माद्दोषात् प्रमुच्यते ॥

---

(१) दानं इति केचित्पुस्तकपाठः ।

## अथ प्राच्याङ्गधेनुप्रतिग्रहप्रायश्चित्तमाह।

कूर्म्मपुराणे—

प्रायश्चित्ताङ्गिनी धेनुः सा प्राच्याङ्गमुदीरिता।
सर्व्वदा न प्रतिग्राह्या द्विजैर्धर्म्मपरायणैः॥

मत्स्यपुराणे—

प्राच्याङ्गधेनुदाता च सर्व्वपापविवर्ज्जितः।
स याति ब्रह्मणः स्थानं पुनरावृत्तिदुर्लभम्॥
धेनुं तां प्रतिगृह्णीयाद् द्विजोलोभपरायणः।
कर्त्तुः सर्वाणि पापानि सोऽप्रमाप्नोति निश्चितम्[1]।
महान्तं नरकं गत्वा सूनुजन्म समेति च[2]॥

लिङ्गपुराणे—

प्राच्याङ्गधेनुं गृह्णीयाद् द्विजः परमधार्म्मिकः।
स याति नरकं घोरं यमलोके महत्तरे॥
पश्चात् सूनुर्भवेत् सोऽपि यदि तां निष्कृतिं विना[3]।
प्राच्याङ्गधेनुं गृह्णीयाद् द्विजः परमधार्म्मिकः॥

[4]तत्प्रतिग्रहे प्रायश्चित्तमाह।

---

(१) निश्चित इति वेङ्कितकाशीपुस्तकपाठः।
(२) समाप्यते इति मोतवेङ्कितपुस्तकपाठः।
(३) तन्निष्कृतिं विना इति मोतपुस्तकपाठः।
(४) प्रतिग्रहप्रायश्चित्तमिति मोतपुस्तकपाठः।

रेणुकाखण्डे—

प्राच्याङ्गभूर्यदा धेनुः सा धेनुः पापदायिनी ।
[1]प्रतिग्रहीतुः सा सद्यः सर्व्वश्रेयोविनाशिनी ॥
ब्राह्मणैरभ्यनुज्ञातश्चरेच्चान्द्रायणत्रयम् ।
पश्चान्मनसि पूतात्मा पञ्चगव्यं पिबेत्ततः ॥
एवं शुद्धिमवाप्नोति [2]नाऽन्यथा शुद्धिरीरिता ।

इति हेमाद्रौ प्राच्याङ्गधेनुप्रतिग्रहप्रायश्चित्तम् ।

---

## अथोदीच्याङ्गधेनुप्रतिग्रहप्रायश्चित्तमाह ।

लिङ्गपुराणे—

द्विजो यः परितुष्टात्मा प्रायश्चित्ते नृपोत्तम ।
धेनुं द्वितीयां गृह्णीयाद्[3] उदीच्याङ्गपयस्विनीम् ॥
[4]तस्येह निष्कृतिर्नास्ति दानैस्तीर्थावगाहनैः ।

---

(१) प्रतिग्रहीतुरद्धैव इति लेखितपुस्तकपाठः ।
(२) नान्यत्र इति लेखितपुस्तकपाठः ।
(३) संस्पृशन् इति क्वाचित्कलेखितपुस्तकपाठः ।
(४) तस्यैव इति क्वाचित्कलेखितपुस्तकपाठः ।

चान्द्रायणद्वयं कुर्य्यात् पूर्व्ववद्राजवल्लभ ।
ततः शुद्धिमवाप्नोति परत्राऽमुत्र च ग्रहात् ॥

इति हेमाद्रौ उदीच्यादिधेनुप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ ग्रहमालिकाप्रतिग्रहप्रायश्चित्तमाह ।

लिङ्गपुराणे—

आदित्यादिग्रहाः सर्वे ह्येकराशौ स्थिताः सकृत् ।
अष्टमद्वादशस्थाः सुर्य्यस्य तस्य भयद्वयम् ॥
पंक्तिशोमिलिता यस्य तस्य मृत्युभयं भवेत् ।
सर्वभावे तु सर्वे च षड्वाऽष्टौ मेलयन्ति चेत् ॥
राज्यभ्रंशोवित्तनाशो भवेदावश्यकोनृप ।
दुष्टग्रहाश्चेद्राजेन्द्र द्वादशाष्टमजन्मगाः ॥
पूर्व्ववद्दुःखमाप्नोति ग्रहचक्रं समाचरेत् ।

देवीपुराणे—

यस्य राज्ञोजनस्याऽपि द्वादशाष्टमजन्मगाः ।
क्रूरग्रहाश्च पश्यन्ते मेलयन्त्येकराशितः ॥

तस्य राष्ट्रभयं विप्र अनन्तायोभवेदतः ।
शरीरपीड़ाबाहुल्यान्निमित्तैर्ज्वरसम्भवैः[1] ॥
शङ्खमाला प्रकर्त्तव्या राजभिर्दोषशान्तये ।
तस्याऽनुष्ठानमात्रेण तस्माद्दोषात् प्रमुच्यते ॥

[2]तत्प्रतिग्रहे प्रायश्चित्तमाह—

कूर्म्मपुराणे—

( शङ्खमालां न गृह्णीयाद् द्विजः पापभयादिह ।
गृह्णीयाद् यदि लोभात्मा यमलोकं समश्नुते ॥
स्थित्वा तत्र चिरं कालमनुभूय महद्भयम् ।
पुनर्भुवमुपागम्य गो...लोभवेदिह ॥ )[3]

आदित्यपुराणे—

भोगमोहपरीतात्मा निष्कारणतया द्विजः ।
शङ्खमालां प्रगृह्याऽऽशु यमालयमुपागतः ॥
नरकाननुभूयाऽथ जायते वानरोमहान् ।
तद्दोषपरिहारार्थं प्रायश्चित्तं समाचरेत् ॥
अतिकृच्छ्रद्वयं कृत्वा शुद्धिमाप्नोति पौर्व्विकीम् ।
पञ्चगव्यं पिवेत्पश्चात् नाऽन्यथा शुद्धिरिष्यते ॥

इति हेमाद्रौ शङ्खमालिकाप्रतिग्रहप्रायश्चित्तम् ।

---

(१) निमित्ते ज्वरसम्भवः इति श्रौतपुस्तकपाठः ।
(२) तत्प्रतिग्रहप्रायश्चित्तमिति श्रौतपुस्तके नास्ति ।
(३) (—) एतच्चिह्नस्थं श्रौतपुस्तके नोपलभ्यते ।

### अथ षड्ग्रहयोगे प्रतिग्रहप्रायश्चित्तमाह।

मार्कण्डेयपुराणे—

यस्य कस्य जनस्यापि जन्मराशौ जनेश्वर।
अष्टमे[1] द्वादशे वाऽपि सप्तमे समुदायके॥
नामलग्ने ग्रहाः सर्वे सम्मेलनमवाप्नुयुः।
तस्य रोगभयञ्चापि पत्नीपुत्रविनाशनम्॥
गृहनाशो राजभयं धननाशोऽपि वा भवेत्।
यस्मिन् दिने मेलयेयुरेते षड्ग्रहनायकाः॥
तस्मिन् दिने परेद्युर्वा अभुक्त्वा स्नानमाचरेत्।
पुण्याहवाचनं कृत्वा शान्तिकर्म समाचरेत्॥
सूर्यादिग्रहषट्कस्य प्रतिमास्ताः स्वरूपिणीः।
सवाहनाः सायुधाश्च पत्नीपरिजनावृताः॥
सुवर्णेन प्रमाणेन प्रत्येकं परिकल्पयेत्[2]।
तथाऽऽचार्यस्य वक्ष्यामि धेन्वा सह प्रतिग्रहे॥
प्रायश्चित्तं मुनिश्रेष्ठ सर्वपापविशोधनम्।
इह लोके परत्राऽपि तारकं गतिसाधनम्॥
अर्चितो गन्धपुष्पाद्यैस्तत्तन्मन्त्रैः पृथक् पृथक्।
यो द्विजः प्रतिगृह्णाति तन्निष्कृतिपराङ्मुखः॥

---

(१) दशमे इति मैथिलपुस्तकपाठः।
(२) प्रतिमा कल्पात् इति मैथिलपुस्तकपाठः।

स वै नरकमासाद्य चक्राङ्गोजायते भुवि।
तद्दोषोपशमायाऽलं स्वगृह्याग्नौ विधानतः॥
मासदोषानुपक्रम्य सहस्रं जुहुयात्तिलैः।
चतुर्थकालमायाति मूलाहारोविधीयते॥
स्वपेद्देवसमीपे तु नारायणमनुस्मरन्।
पुनः प्रातः समुत्थाय पूर्व्ववद्धोममाचरेत्॥
अयुतं पूर्णतामेति तद्दोषोपि परिऽस्वनि।
पञ्चगव्यविधानेन स्नात्वा तत्प्राशयेत्सुधीः॥
ब्राह्मणान् भोजयेत्पश्चात् यथाविभवपूर्व्वकम्।
अनेन शुद्धिमाप्नोति न शुद्धिस्त्वन्यकर्म्मभिः॥

सौम्यग्रहादुष्टग्रहैर्मिलितावेद्दुष्टग्रहफलदायिनः ततस्तेषां दान प्रतिग्रहे प्रायश्चित्तमिदं कथितम्।

इति हेमाद्रौ षड्ग्रहयोगे धेन्वा सह षड्ग्रहप्रतिमा-
प्रतिग्रहप्रायश्चित्तम्।

---

## अथ पञ्चग्रहादिमेलने प्रतिग्रहप्रायश्चित्तमाह ।

कूर्म्मपुराणे—

यस्य राज्ञः प्रभोर्वाऽपि जन्मर्क्षे नामभेऽपि वा ।
कालचक्रवशाद्राजन् सर्व्वभद्रावसानतः[1] ।
पञ्च ग्रहाः प्रमिलन्ते जन्मराशावथाऽष्टमे ।
चतुर्थे द्वादशे वाऽपि सप्तमे समुदायके ॥
धनहानिर्यशोहानिर्गृहपीडापहारणम् ।
देहपीड़ा भवेत्तस्य मासेऽर्धमासतोऽपि वा ॥
तस्मात्तेषां प्रकर्त्तव्यं शान्तिकर्म्म सुखाप्तये ।
तत्राचार्य्यो भवेद्यस्तु विद्वानपि विमूढ़धीः ॥
होमे जपे च पूजायां उपचारोभवेदिह ।
मन्त्रमुच्चार्य्य मनसा स्वाहान्ते जुहुयाद्धविः ॥
अङ्गुष्ठानामिकाभ्याञ्च समिन्मध्यं प्रगृह्य च ।
मन्त्रान्ते जुहुयाद्वह्नौ समिद्धोमोविधीयते ॥
अङ्गुल्यग्रे गृहीतान्तु [2]मुष्टिभिश्च तिलैर्युताम् ।
[3]समिधं जुहुयाद्वह्नौ मनसा मन्त्रमुच्चरन् ॥
स्वाहान्ते देवतोद्देशं कुर्य्याद्धोमफलाप्तये ।
मार्जनं भोजनं होमोदानमुत्तानपाणिना ॥

---

(१) सर्व्वभद्रप्रयाणतः, इति श्रौतपुस्तकपाठः ।

(२) मष्टिभिश्च इति श्रौतपुस्तकपाठः ।

(३) चाञ्जलिमिति श्रौतपेशिलपुस्तकपाठः ।

अर्च्चनं देवपूजासु प्रोक्षणं चार्घ्यमेव च ।
उत्तानपाणिना कार्य्यं नाधोरूपेण कारयेत् ॥
षष्टिवीजैर्धान्यहोमैराज्येन चतुरङ्गुलम् ।
कृत्वाऽऽहुतिं स्रुवे पूर्य्यं वह्नौ हुत्वा प्रदेशिकः ॥
अङ्गुल्यग्रेण यज्जप्तं यज्जप्तं मेरुलङ्घने ।
द्विधाचित्तेन यज्जप्तं तत्सर्वं निष्फलम्भवेत् ।

एते होमे नियमाः एतेषां व्युत्क्रमे महान् दोषः ।
स तु आचार्य्यमेव प्रविशति । तदाह—

कूर्म्मपुराणे—

पत्नी पापं पतिर्भुङ्क्ते शिष्यपापं गुरुस्तथा ।
राजा राष्ट्रकृतं पापं राजपापं पुरोहितः ॥
आचार्य्यऋत्विजां पापं ग्रामणीर्ग्रामसम्भवम् ।
आचार्य्यपापबाहुल्याद्दक्षिणाधेनुसंग्रहे[1] ॥
पापबाहुल्यमस्त्येव आचार्य्यस्य न संशयः ।
यद्याचार्य्यो भवेदस्मिन् प्रायश्चित्तं चरेद्[2] गुरुः ॥

षड्ग्रहपञ्चग्रहचतुर्ग्रहमेलने प्रायश्चित्ताङ्गभूते अयुतहोमे पुरुषसूक्तमन्त्रः । चतुर्भिर्वाक्यैरेकाहुतिः । प्रत्यहं संख्यां गणयन् जुहुयात् । होमपरिपूरणे पूर्ववदाचरेत् । एवं चतुर्ग्रहमेलने

(१) धेनुसंग्रहम् इति केचित् पुस्तकपाठः
(२) समाचरेदिति क्रोतचौबतपुस्तकपाठः

तदाचार्य्यस्य प्रायश्चित्तं, धेन्वकृतया च प्रायश्चित्तबाहुल्यम् । प्रायश्चित्ताकरणे पूर्वमुक्तं फलं प्राप्नोति ।

इति हेमाद्रौ पञ्चग्रहचतुर्ग्रहमेलने आचार्य्याणां तत्तत्प्रतिग्रहप्रायश्चित्तम् ।

---

## अथ राशिचक्र[1]प्रतिग्रहप्रायश्चित्तमाह ।

मार्कण्डेयपुराणे—

राशिचक्रं द्विजोलोभाद् राज्ञा दत्तं भजेद्यदि[2] ।
तस्येह निष्कृतिः प्रोक्ता[3] चान्द्रायणचतुष्टयात् ॥

कूर्म्मपुराणे—

राशिचक्रं द्विजो धृत्वा पूजितं वस्त्रभूषणैः ।
विना निमित्तैर्बहुभिः पापं मनसि धारयन् ॥
तन्निष्कृतिमकृत्वा तु नरकं कालचोदितः ।
अनुभूय महद्दुःखं चक्रवाकोभवेद्भुवि ॥

---

(१) राशिचक्रग्रहणे महदिदं प्रायश्चित्तमिति श्रौतवैदिकपुस्तकपाठः ।
(२) सुपूजितमिति श्रौतवैदिकपुस्तकपाठः ।
(३) नास्ति इति श्रौतवैदिकपुस्तकपाठः ।

लिङ्गपुराणे—

ब्रह्मविद्ब्राह्मणोलोभात् समन्ततनुपराङ्मुखः ।
भोगासक्तः प्रगृह्णाति राष्ट्रिचक्रं सुपूजितम् ॥
यथोक्तदक्षिणाभिश्च साकं राज्ञा विसर्ज्जितम् ।
तन्निष्कृतिं पराक्रम्य मृत्वा नरकमश्नुते ॥
तत्राऽनुभूय नरकं तिलयन्त्रं महद्भयम् ।
तदन्ते भुवमासाद्य चक्रवाकोभवेद्भुवि ॥
एतत्पापविशुद्ध्यर्थं क्रतुं सर्वस्वदक्षिणम् ।
आधानं नित्यहोमञ्च चरेत्पापविशुद्धये ॥
द्वाभ्यामशक्तितः पापमोचने देहशुद्धिदम् ।
चान्द्रायणैश्चतुर्मासान् चतुर्भिः पापमोचनम् ॥
कृत्वा लोके विशुद्धः स्यात् श्रौतस्मार्त्तेषु कर्म्मसु ।
नित्यं नैमित्तिकं काम्यं कृत्वा तत्फलमश्नुते ॥
अन्यथा दोषमाप्नोति न गतिः पापमोचने ।
तस्मादेतत्परित्याज्यं द्विजैर्लोकपरायणैः ॥

इति हेमाद्रौ राष्ट्रिचक्रप्रतिग्रहप्रायश्चित्तम् ।

---

(१) चान्द्रायणं इति केचित्पुस्तकपाठः ।
(२) विशुद्धोऽभूत् इति श्रीतकेचित्पुस्तकपाठः ।

## अथ नवग्रहमखे प्रतिग्रहप्रायश्चित्तमाह—

स्कन्दपुराणे—

अथातः संप्रवक्ष्यामि प्रायश्चित्तं द्विजन्मनाम् ।

ग्रहयज्ञे प्रधानत्वं यः करोति द्विजोत्तमः ॥

ग्रहाणां देवतानाञ्च [1]संग्रहः पापहृद्वये ।

होमकर्म्मसु पूजायां नियमातिक्रमे तथा ॥

एकग्रहस्य [2]संग्राहे स्वर्चितस्य सुखासने ।

देहान्ते नरकं याति इन्तुयन्नं मनश्रयम् ॥

सर्वेषां मण्डले पुत्र स्वर्चितानां नृभिः क्रमात् ।

प्रतिग्रहे महद्दुःखमनुभूय यमालये ।

तदन्ते भुवमासाद्य नीलजन्तुः प्रजायते ॥

प्रतिग्रहविशुद्ध्यर्थं पश्चात्तापपरायणः ।

ब्राह्मणैरभ्यनुज्ञातः षडब्दं कृच्छ्रमाचरेत् ॥

अन्यथा निष्कृतिर्नाऽस्ति उदासीनतया नृणाम् ।

एतद्विप्रप्रतिग्रहप्रायश्चित्तविषयं, राजप्रतिग्रहे द्विगुणं अन्त्यज-प्रतिग्रहे त्रिगुणं शूद्रप्रतिग्र चतुर्गुणं सङ्करजातिप्रतिग्रहे पञ्चगुणं चतुर्दशविधचाण्डालप्रतिग्रहे पातित्यमेव, चतुर्दशचाण्डालस्वरूपं पूर्वमुक्तं जातिभेदेन प्रतिग्रहे प्रत्येकं प्रायश्चित्तमाह ।

---

(1) पापग्रहे इति श्रीतपुस्तकपाठः ।

(2) संग्रहे इति श्रीतवेष्टितपुस्तकपाठः ।

कूर्म्मपुराणे—

सामान्यं यत्र यत्प्रोक्तं प्रायश्चित्तं द्विजोत्तमैः।
तदेव पूर्वजानां स्यात् प्रायश्चित्तं विशोधनम्॥
तद्द्विगुणं बाहुजानामूरुजानां त्रिधा स्मृतम्।
चातुर्गुण्यं पादजानां सङ्कराणां तु पञ्चधा॥
चतुर्द्दश्यविधानां तु संग्रहे पतितोभवेत्॥

सर्वप्रतिग्रहप्रायश्चित्तेषु एवमेव विवेचनीयम्।

इति हेमाद्रौ नवमखण्डे प्रतिग्रहप्रायश्चित्तम्।

---

## अथ धर्म्मविक्रयिणः सकाशात्प्रतिग्रहप्रायश्चित्तमाह—

लिङ्गपुराणे उत्तरखण्डे—

धर्म्मविक्रयिणः पुंसोनित्ये काम्ये तथा व्रतौ।
प्रतिग्रहे द्विजस्याऽस्य प्रायश्चित्तं विशुद्धये॥

नित्यं मातापित्रोर्मृताहादिः, काम्यं व्रतादिकं गङ्गास्नानादिकं च धर्म्मः अपिच नित्यं प्रातःस्नानसन्ध्यादिकम्। काम्यव्रतादिकं गङ्गास्नानादिकञ्च आरामास्थानकूपतटाकदेवालयधर्म्मनिक्षेप '[1]सर्व्वदावारितान्नदानपरोपकारवस्त्रहिरण्यरजतकांस्यात्मप्रतिषो-

---

(१) नित्यमपारितेत्यादि इति श्रीतर्केचितपुस्तकपाठः।

दानादिका धर्म्माः ख्याताः तेषां एकं वाऽपि विक्रीय योजीवेत् स तु धर्म्मविक्रयी, तद्विक्रयमात्रेण पातित्यं विप्रस्य सूचितं, तदाह—

कूर्म्मपुराणे—

सोमविक्रयिणश्चैव धर्म्मविक्रयिणस्तथा ।
स्मृतिविक्रयिणश्चैव पुनःसंस्कार उच्यते ॥

पद्मपुराणे—

[1]विक्रीय तु स्वधर्म्मान् यः पत्नीपुत्रान् विवर्धयेत् ।
सोऽक्षयं नरकं भुक्त्वा मातङ्गत्वमवाप्नुयात् ॥
तस्य वै निष्कृतिर्नाऽस्ति चान्द्रायणशतैरपि ।
अथवा शृणु राजेन्द्र त्रिःपरिक्रम्य क्ष्मातलम् ॥
एतेन विधिनाऽशुद्धः शुद्धिमाप्नोति दैहिकीम् ।
नाऽन्यथा शुद्धिरस्तीह पापस्यैतस्य भूमिप ।

तस्य तत्प्रतिग्रहीतुः प्रायश्चित्तं तावदाह—

विष्णुरहस्ये—

धर्म्मविक्रयिणोविप्रः प्रतिगृह्य धनादिकम् ।
दानं वा पर्वकालेषु स विप्रस्तत्समोभवेत् ।

चतुर्विंशन्मते—

शुद्ध्योधर्म्मविक्रेतुः पर्वकालेषु वै सकृत् ।
अणुमात्रं सुवर्णं वा दानं ग्रा धर्म्मचोदितम् ॥

---

(१) विक्रयित्वा इति श्रीतवैचिततडकाषपाठः ।

प्रतिग्रहं यमं गत्वा नरकाननुभूय च ।
तदन्ते भुवमासाद्य खले मातङ्गमश्नुते ॥
तद्दोषोपशमायालं प्रायश्चित्तं समाचरेत् ।
पालाशसमिदाज्याग्नैः सहस्राणि पृथक् पृथक् ॥
सहस्रं हावयेन्नित्यं प्रातःस्नानादिपूर्व्वकम् ।
"अच्युताये"ति समिधं "अनन्ताये"ति वै घृतम् ॥
चरुं गोविन्दनाम्नाऽथ अयुतेन विशुध्यति ।
समिधोदशसाहस्रमाज्यहोमस्तथैव च ॥

चतुरयुतसंख्या यदा पूर्य्यते तदा होमाद् विरामः दीक्षामध्ये फलाहारः कर्त्तव्यः अधःशयनादिकं पूर्व्ववत्, तदन्ते पञ्चगव्य-प्राशनं, सम्यगुपोष्य प्रातरेव पञ्चगव्यं पीत्वा शुद्धिमाप्नोति नाऽन्यथा । एतदल्पसुवर्णप्रतिग्रहविषयम् ।

सुवर्णमात्रे द्विगुणं शतअर्हन्तु तत्समः तत्प्रायश्चित्तं च यथाविधि कुर्य्यात् पुनः संस्कारश्च ।

इति हेमाद्रौ 'धर्म्मविक्रयिणः प्रतिग्रहप्रायश्चित्तम् ।

---

(१) वेदविक्रयिण इति लिखितपुस्तकपाठः ।

## अथ सोमपान-प्रायश्चित्तमाह—

देवीपुराणे—

सोमं पिबेद् द्विजोयस्तु अज्ञातकुलनामभिः ।
सार्द्धं यज्ञेषु मोहात्मा स तथाज्ञाग्रणः स्मृतः ॥
व्यर्थनामधेयः सूतक्रोधगुडपर्वतादिवत् ।
तस्यैव निष्कृतिर्नास्ति पुनःसंस्कारणादृते ॥
पश्चाच्चान्द्रायणं कुर्याद् वापयित्वा शिरोरुहान् ।

एतदज्ञातकुलगोत्रनामहोढभिः सह सोमभक्षणविषयं स्वबन्धुभिः सह पाने तु प्रायश्चित्तमाह—

कूर्मपुराणे—

बन्धुभिः सह [१]सङ्गम्य पीत्वा सोमं महाक्रतौ ।
स्वमन्त्रोच्चारणं कृत्वा त्रिवारं शुद्धिमाप्नुयात् ॥

स्वमन्त्रः "नेष्टरीक्षोतरी" यत्र कर्मणि नियुक्तस्तत्र ये मन्त्रास्तान् विरुच्चार्य्य पश्चात् शुद्धिमाप्नोति सबान्धवः ।

स्कान्दपुराणे—

सकुल्यश्च सनाभिश्च सपिण्डश्च [२]सगोत्रजः ।
मातुलस्तस्य पुत्रश्च भ्रातुकोदुहितुः पतिः ॥

---

(१) वोवेत इति क्रीतवेष्टितपुस्तकपाठः ।
(२) सगोत्रवान् इति पाठान्तरम् ।

श्वशुरः सहपुत्रश्च भागिनेयस्तदात्मजः।
पितुर्मातुःस्वसुः पुत्राः पितुर्मातुः स्वसुः सुताः॥
पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः।
मातुः पितुः स्वसुः पुत्राः मातुर्मातुःस्वसुः सुताः।
मातुर्मातुलपुत्राश्च विज्ञेयामातृबान्धवाः॥

समानं कुलं यस्य स सकुल्यः [1]त्रिपुरुषादूर्द्धः समाना नाभिर्यस्य स सनाभिः ज्येष्ठकनिष्ठभ्रात्रादिः समानः पिण्डो यस्य स सपिण्डः ज्येष्ठकनिष्ठपितृव्यस्तत्पुत्रः समानं गोत्रं यस्य स सगोत्रः पञ्चमादूर्द्धमिते स्वबान्धवाः एतैः सह सोमभक्षणे स्वमज्ञं पुनस्तेषां चावृत्य न दोषः। अज्ञातबन्धुभिः सह भक्षणे चान्द्रायणं कृत्वा पुनः संस्कारः तेभ्यस्तेभ्यः प्रतिग्रहे दोषमाह।

लिङ्गपुराणे—

अज्ञातश्रोतृभिः सार्द्धं यः कुर्य्यात् सोमभक्षणम्।
तस्मात्सुवर्णदानञ्च प्रतिगृह्य द्विजोत्तमः॥
प्राजापत्यं चरेत्कृच्छ्रमणुमात्रसुवर्णतः।
पूर्व्वोक्तेन प्रमाणेन षड़ब्दं कृच्छ्रमाचरेत्॥
उपोष्य रजनीमेकां भुक्त्वा शुद्धिमवाप्नुयात्।
उपोष्य पञ्चगव्यञ्च पीत्वा शुद्धिमवाप्नुयात्॥

इति हेमाद्रौ सोमपानप्रतिग्रहप्रायश्चित्तम्।

---

(१) बहुमनुष्यादिति काशीपुस्तकपाठः।

## अथ पुरोडाशभक्षणे प्रायश्चित्तमाह ।

देवीपुराणे—

यज्ञेषु साधुवृत्तेषु धर्म्मजातधनेषु च ।
तत्रैव भक्षयेन्मेध्यं पशुं धर्म्मार्थमादरात् ॥
ब्राह्मणो ब्रह्मवित् पूतः पशुं यद्यभिचारयेत् ।
तस्यैव निष्कृतिर्भूप वेदपारायणं स्मृतम् ॥

एतद् बन्धुकृतविषयं, अन्यत्र भक्षणे द्विगुणं, अश्रोत्रिययज्ञे पशु-पुरोडाशभक्षणे त्रिगुणं, शूद्रद्रव्ययष्ट्टयज्ञेषु पशुभक्षणे त्रिगुणं पुनः संस्कारश्चैतदेवाह ।

स्वबन्धुकृतयज्ञेषु प्राप्तं यत्पशुभक्षणम् ।
पारायणं विशुद्धिः स्याद् अन्यत्र द्विगुणं भवेत् ।
पुनः संस्कारकृत्पूतः शुद्धोभवति सर्व्वदा ॥

तत्प्रतिग्रहे दोषमाह—

लिङ्गपुराणे—

पशुं भक्षयतो [1]मोहाद् द्विजस्याऽकृतनिष्कृतेः ।
प्रतिगृह्य सुवर्णं वा स्नात्वा न संपरिग्रहेत् ॥
अस्नात्वा कृच्छ्रमात्रेण स्नानेनैव द्वयं स्मृतम् ।
अन्नभुक् पञ्चगव्येन शुद्धिमाप्नोति पूर्व्वजः ॥

---

(१) बल इति केचित्पुस्तकपाठः ।

अल्पसुवर्णप्रतिग्रहे प्राजापत्यं सर्वमात्रप्रतिग्रहे द्विगुणं पञ्चभक्ष्ये पञ्चगव्यात् शुद्धिः ।

इति हेमाद्रौ पञ्चपुरोडाशभोक्तुः प्रतिग्रहप्रायश्चित्तम् ।

---

## अथाऽयाज्ययाजिनः प्रतिग्रहीतुः प्रायश्चित्तमाह ।

स्कन्दपुराणे—

याजयन् यजनेऽयोग्यान् विप्रोऽत्यर्थमादरात् ।
अन्यथाभावमाप्नोति न कर्म्माहों भवेदिह ॥

यजनेऽयोग्यो याजने अनर्हः ।

कूर्म्मपुराणे—

देवलकश्च गणको व्रात्यो दुःशीलवान् जनः ।
शूद्रापतिः कर्म्महीनः लोकोकुत्सितवृत्तिमान् ॥
महापातकिनः सङ्गी क्षयरोगी भगन्दरी ।
दुश्चर्म्मा शूद्रसेवी च भिषक्शूद्रान्नभक्षकः ॥
तुलातुलादिसंग्राही मर्य्यादाघातकस्तथा ।
ग्रामदाही ग्रामचौरः तथा दुःसङ्गवान् जनः ॥

एते अनर्हाः देवलको जीवनार्थं ग्रामदेवार्चकः, गणको ग्राम-

राष्ट्रेषु धनधान्यादिकं लेखयेद् वर्त्तयेत् स गणकः व्रात्यो गायत्री-जपनाशकः। तदेवाह—

[1]देवलः—

अग्नोवेदपरित्यागी व्रात्योगायत्रीजपनाशकः। इति—

सन्ध्यादिनित्यकर्म्माणि त्यक्त्वा सर्व्वदावर्त्तयन् [2]इत्यर्थः, शूद्रापतिः स्पष्टः, कर्म्महीनः विहितकर्म्म परित्यज्य व्यवहारकमनुवर्त्तयन्, कुत्सितवृत्तिः परेषामन्नपचनादिकं, महापातकिनस्तत्संयोगीच स्पष्टः, क्षयरोगीभगन्दरीदुश्चर्म्मणा कर्म्मस्वनर्हत्वात्, सदाशूद्रसंसर्गी, भिषक् रसविक्रयी, शूद्रान्नभोजी शूद्रकृतेषु सत्रेषु नित्यतुलादीनिग्टह्णीत्वा तत्प्रायश्चित्ते पुनःसंस्कारे च पराङ्मुखः तुलादिसंग्रही, मर्य्यादाघातकः पितरं ज्येष्ठभ्रातरं त्यक्त्वा आन्दोलिकाद्यारोहणं [3]यः करोति, ग्रामदाही ग्रामणीश्च स्पष्टः, दुःसंसर्गवान् दुर्जनैः आततायिभिः संसर्गवान्, एते न कर्म्मार्हाः एतेषां यज्ञयाजने प्रायश्चित्तमाह—

वामनपुराणे—

अनर्हेषु च यो विप्रो कारयेल्लोभतः क्रतुम्।
स प्रायश्चित्तहीनश्चेद् भुवि पाषण्डतां व्रजेत्[4]॥

पाषण्डानाम वेदशास्त्रानुसारिणो विप्रान् दृष्ट्वा निन्दन्ति

---

(१) मनुरिति कौतलेखितपुस्तकपाठः।
(२) कौतलेखितपुस्तकयोर्न दृष्टः।
(३) कौतपुस्तके नास्ति।
(४) पाषण्डवान् भवेदिति पाठान्तरम्।

पिता माता तत्पिता वा येन मार्गेण वर्त्तयति—तन्मार्गमुत्सृज्य तप्तमुद्रादिधारिणो ये विप्रास्ते पाषण्डाः। तदेवाह—

मनुः—

अधर्म्माणाञ्च व्रात्यानां भिषजामाततायिनाम्।
यज्ञेषु ये याजयन्ति तान् पाषण्डान् भणन्त्यहो॥

शिवपुराणे—

महापातकिनाञ्चैव भिषक्शूद्रोपजीविनाम्।
यज्ञेषु ये प्रवर्त्तन्ते ते पाषण्डाः प्रकीर्त्तिताः॥

तेषां प्रायश्चित्तमाह—

लिङ्गपुराणे—

अनर्हाणान्तु ये यज्ञे ते पाषण्डा उदाहृताः[1]।

कूर्म्मपुराणे—

अनर्हाणामध्वरेषु ये ब्रह्मक्षत्त्रिजादयः।
तेषां पापविशुद्धार्थं षडब्दं कृच्छ्रमीरितम्॥
केशानां वपनं कृत्वा पुनः संस्कारमाचरेत्।
पञ्चगव्यं पिबेत्पश्चात् शुद्धोभवति नाऽन्यथा॥

एतेभ्यः प्रतिग्रहे दोषमाह—

लिङ्गपुराणे—

अनर्हाणामध्वरेषु सोमपानादिकञ्चरेत्।
तस्मात्प्रतिग्रहं कृत्वाऽप्रायश्चित्तादरौरवे॥

---

(१) चिह्नितपुस्तके नास्ति।

एतत्पापफलं भुंक्ते एवं चान्द्रायणञ्चरेत् ।
प्रायश्चित्ते कृते पश्चाद् यतोदोषोन विद्यते ॥
चान्द्रायणं सुवर्णस्य तदर्धं पादमाचरत् ।
चान्द्रायणं यदाऽप्रार्त्तं गायत्रीशतमाचरेत् ॥
एतत् प्रायश्चित्तं कृत्वा तत्प्रतिग्रहे शुद्धोभवति नान्यथा ।

इति हेमाद्रौ अयाज्ययाजकप्रतिग्रहीतुः प्रायश्चित्तम् ।

---

अथ तप्तमुद्राधारिभ्यः प्रतिग्रहे प्रायश्चित्तमाह ।

वायुपुराणे—

ब्राह्मणो यदि मोहात्मा तापयेदग्निमुद्रया ।
न कर्मार्हो भवेदत्र स वै पापण्डसंज्ञकः ॥

नारदीये—

ब्राह्मणस्य तनुर्ज्ञेया सर्ववेदमयी यतः ।
सा तु सन्तापिता येन किं वच्यामि महौजसः ॥
चक्राङ्कितततनुर्विप्रो(1) राजन् लिङ्गाङ्कितोऽपिवा ।
अपेत्य पौरुषं सूक्तमन्यथा रौरवं व्रजेत् ॥

---

(1) यत इति पाठान्तरम् ।

लिङ्गपुराणे—

चक्राद्यङ्को तापयित्वा यस्तु देहे समङ्कयेत्[1] ।
स जीवन्नुणपस्त्याज्यः सर्वधर्मबहिष्कृतः ॥

आदित्यपुराणे—

देवेषु यज्ञभागेषु [2]यो नेच्छेदधिकारिताम् ।
स तापयित्वा चक्रादीन् धारयेत्स्वभुजद्वये ॥
ब्राह्मणो यदि मोहेन धारयेत्तप्त[3]मुद्रिकाः ।
तस्य दर्शनमात्रेण कुर्य्यात् सूर्य्यावलोकनम् ॥

वह्निपुराणे—

पूर्व्वजः स्वतनुं दग्ध्वा शङ्खचक्रादिभिः पृथक् ।
तस्य वै निष्कृतिर्नास्ति स्नानदानजपादिभिः ॥
तस्य निष्कृतिरत्यन्ता पाराशर्य्येण चोदिता ।
केशानां वापयित्वाऽथ पुनः कर्म्म समाचरेत् ॥
गर्भगोलात्समुद्धृत्य गर्भाधानादिपूर्व्वकम् ।
षोढात्वस्यैव कृच्छ्राणां प्रायश्चित्तमुदीरितम् ॥

परिषदुपस्थानपूर्वकं षडब्दं कृच्छ्रान् कृत्वा शुद्धिमाप्नोति, प्रायश्चित्ताकरणे तेभ्यः प्रतिग्रहे प्रायश्चित्तमाह ।

---

(१) पदह्यते इति श्रीतलेखितपुस्तकपाठः ।

(२) यो नाग्नोऽधिकारितामिति पाठान्तरम् ।

(३) यदि मुद्रिका इति लेखितपुस्तकपाठः ।

कूर्म्मपुराणे—

अज्ञात्वा मुखजो यत्र मुद्रादग्धेभ्य आदरात् ।
सुवर्णमात्रं गृह्णीयात्[1] प्राजापत्यं समाचरेत् ॥
तदर्धार्धं पुनः कृत्वा [2]दिनमात्रमुपोषणम् ।
कृत्वा शुद्धिमवाप्नोति शुद्धिर्नाऽन्यत्र दृश्यते ॥

इति हेमाद्रौ तप्तमुद्राधारिणां तत्प्रतिग्रहीतॄणाञ्च प्रायश्चित्तम् ।

---

## अथ लिङ्गधारिणां प्रायश्चित्तमाह ।

देवीपुराणे—

लिङ्गं द्विजोमुदाधृत्वा स्वदेहे भयवर्जितः ।
स एव नरकस्थायी यावदाभूतसंप्लवम् ॥

स्कान्दपुराणे—

द्विजो यदि स्वदेहेतु लिङ्गं चक्रादिकं तथा[3] ।

---

(१) संग्राही इति श्रोतवेष्टितपुस्तकपाठः ।
(२) अन्नमात्रमिति वेष्टितपुस्तकपाठः ।
(३) चक्रादिधारणमिति वेष्टितपुस्तकपाठः ।

धारयेत् कामतस्तेन पातकित्वमवाप्नुयात्[1] ।
स भुक्त्वा नरकाननुयान् अन्ते मातङ्गतां व्रजेत् ॥

शिवपुराणे--

द्विजो यः स्वतनौ धृत्वा लिङ्गं शूद्रार्पितं मुदा ।
तस्यैव निष्कृतिर्नास्ति संस्कारैर्बहुभिर्नृप ॥

पद्मपुराणे--

शृणु राम महाबाहो लिङ्गचक्रादिधारिणाम् ।
शूद्रधर्मरतानाञ्च तेषां नास्ति पुनर्भवः ॥
विप्रस्यैतद्विगर्हत्वात् प्रायश्चित्तमुदीरितम् ।
पश्चात्तापसमायुक्तः प्रायश्चित्तमिदञ्चरेत् ॥
यथार्थप्रमाणं [2]तदा पूर्ववत् धनपरित्यागे च ।

इति हेमाद्रौ लिङ्गधारिणां प्रायश्चित्तम् ।

---

(१) केषुचित्पुस्तके नास्ति ।
(२) तदेति केषुचित्पुस्तके नास्ति ।

## अथ पुनः संस्कारे गायत्रीप्रदातुः प्रायश्चित्तमाह ।

कूर्म्मपुराणे—

न पिता न गुरुर्भ्राता पितृव्यश्च पितामहः ।
न दद्याद्देवीं गायत्रीं पुनः संस्कारकर्म्मणि ॥
मोहाद्दत्त्वा तु गायत्रीं षड़ब्दं कृच्छ्रमाचरेत्[१] ।
तेभ्यो गृह्णन् द्विजो यस्तु सुवर्णं पादमेव वा ॥
स प्रतिग्रहशुद्ध्यर्थं प्राजापत्यं समाचरेत् ।
यदा प्रतिग्रहस्तेषु तुलादिषु महत्स्वपि ॥
दानेषु पुत्रवात्सल्यं सन्त्यजेद्बुद्धिमान् पिता ।
नित्यनैमित्तिकानीह कर्म्माणि विफलान्यथ ॥
कर्म्मभ्रंशात् पिता तस्य न जपेद् वेदमातरम् ।
कृते प्रतिग्रहे मूल्यैरन्यगोत्रं द्विजोत्तमम् ॥
अभ्यर्च्य गन्धवस्त्राद्यैस्तस्माद्देवीं समभ्यसेत् ।
ब्रह्मोपदेशं होमेन सर्व्वस्तेन समभ्यसेत् ॥

लिङ्गपुराणे—

पिता भ्राता पितृव्यश्च तुलादीनां प्रतिग्रहे ।
पुत्राय धनवात्सल्यान् न दद्याद्वेदमातरम् ।
अभ्यसेद्विधिना राजन् पादपूर्व्वमतन्द्रितः ॥

---

(१) अयं पाठः केचितक्रीतपुस्तकयोर्नोपलभ्यः ।

गारुड़पुराणे—

योविप्रोधनलोभेन गायत्रीं वेदमातरम् ।
तुलाप्रतिग्रहीतॄणां दद्यात्तस्य न निष्कृतिः ॥
पश्चात्तापसमायुक्तस्त्वयुतं जपमाचरेत् ।
अन्यथा दोषमाप्नोति जपहोमसुरार्चनैः ॥
विदित्वा यो द्विजो मोहात् प्रायश्चित्तपराङ्मुखः ।
स पापमनुभूयाऽऽशु चटकोभुविजायते ॥

इति हेमाद्रौ पुनःसंस्कारे गायत्रीप्रदातुः प्रायश्चित्तम् ।

---

## अथ परार्थं गायत्रीजपकर्तॄणां प्रायश्चित्तमाह ।

ब्रह्माण्डपुराणे,—

यथार्थं[1] शृणु राजेन्द्र परार्थं जपतानरः ।
होमार्थं द्रव्यलोभोर्थं सर्वे पापकृतां व्रजेत् ॥

गारुड़पुराणे—

ब्राह्मणो धनलोभेन परार्थं वेदमातरम् ।
जप्त्वा नरकमाप्नोति तं कदा नालपेद्बुधः ॥

---

(१) परार्थं इति श्रीतर्कभूषितपुस्तकपाठः ।

कूर्म्मपुराणे—

वेदमाता च गायत्री जपतां पापनाशनी ।

परार्थं तां [1]जपेद्यस्तु स नरो मातृघातकः ॥

लिङ्गपुराणे—

पादपूर्णं जपेद्यस्तु गायत्रीं शुद्धमानसः ।

सवै नारायणः साक्षाद् द्विबाहुरिति विश्रुतः ॥

महाभारते—

वेदमाता तु गायत्री लोकमाता च जाह्नवी ।

तयोर्यदि द्विजोभक्त्या नित्यं सेवेत बुद्धिमान् ॥

तयोरेकां परित्यज्य परार्थं जनवल्लभ ।

स दिवाकीर्त्तितुल्यः स्यात् मृत्वा नरकमश्नुते ॥

तदन्ते भुवमासाद्य पादलम्बी दिवान्ध्यवान् ।

तस्य निष्कृतिरत्रैव दृष्टा [2]श्रुतिपरायणैः ॥

दशकृज्जपतोदेव्याः परार्थं कृच्छ्रमीरितम् ।

शतं परार्थंजपतः पराकं परिकीर्त्तितम् ॥

सहस्रसंख्ययाऽन्यार्थं शुद्धर्थं चान्द्रमाचरेत् ।

अयुतं नियुतं वाऽपि परार्थं धनलोभतः ॥

जपतस्तस्य कर्म्माणि सद्यः शीर्य्यन्ति देहतः ।

तस्योपनयनं भूयः चान्द्रायणचतुष्टयम् ॥

---

(१) जपेदिति केचित्पुस्तकपाठः ।

(२) मुनिपरायणैरिति पाठान्तरम् ।

औपासनाग्नेः सन्धानं गायत्रीदानमेव च।
केशानां वपनं कृत्वा पञ्चगव्यन्ततः परम्॥
परार्थं यावतीसंख्या गायत्रीं प्रणवात्मिकाम्।
पुनःस्वार्थं जपेत्पश्चात् ततः शुद्धिमवाप्नुयात्[1]॥
एवं कृत्वा द्विजः शुध्येदन्यथा जलकाकवत्।
तस्य जन्म वृथा लोके नामधारणमात्रकम्॥

इति हेमाद्रौ परार्थं गायत्रीं जपतां प्रायश्चित्तम्।

---

## अथ ग्रामप्रतिग्रहप्रायश्चित्तमाह।

मार्कण्डेयपुराणे—

मुख्यजः स्वात्मभोगार्थं ग्रामं राज्ञो लभेत चेत्[2]।
वृत्तिस्थानिं[3] द्विजातीनां तद्वृत्तिं वा न संस्मरेत्॥
नरकं कालसूत्राख्यं चिरं गत्वा ततोभुवि।
विड्वराहो भवेत्सोपि सर्व्वधर्म्मवहिष्कृतः॥

ग्रामलक्षणमाह—

(१) अवाप्यते इति क्रीतकेषितपुस्तकपाठः।
(२) प्रतिपद्ये इति क्रीतकेषितपुस्तकपाठः।
(३) वृत्तिदानमिति क्रीतकेषितपुस्तकपाठः।

चतुर्विंशतिमते—

दशागारञ्जनपदः शतागारं जनालयः ।
शतजर्द्धन्तु पल्ली स्यात् सहस्रं ग्राम उच्यते ॥
ततः परं राजधानी सौधप्राकारशोभिता ।

जनपदादीनां प्रतिग्रहे हत्तिदानकृत्त्याद्यभावे प्रत्येकं दोषं प्राय-श्चित्तञ्चाह—

कूर्म्मपुराणे—

अकृत्वा निष्कृतिं यागं हत्तिदानं द्विजन्मनाम् ।
जनपदं योनुगृह्णीयात् ताम्रचूडोभवेद्भुवि ॥
जनालयप्रतिग्राहे चण्डालादिविभूषिते ।
प्रतिग्राही[1] द्विजोयस्तु स भवेद्वायसोभुवि ॥
पल्लीप्रतिग्रहे राजन् नानावर्णसमाकुले ।
नरकं त्वनुभूयाऽथ खरजन्म भवेद्भुवि ॥
अब्दं षडब्दं चान्द्रञ्च तप्तकृच्छ्रशतत्रयम् ।
प्रायश्चित्तमिदं राजन् यथाक्रममुदीरितम् ॥
हत्तिदानकृत्वभावे प्रायश्चित्तं विशोधनम् ।
तयोर्य्येकसम्भवस्तदा पञ्चगव्यं ब्राह्मणभोजनञ्च ।

इति हेमाद्रौ जनपदादिप्रतिग्रहप्रायश्चित्तम् ।

---

(1) प्रतिग्रहश्च इति पाठान्तरम् ।

लिङ्गपुराणे—

एकं वा द्वितयं वाऽपि कुष्माण्डं योऽनुमन्यते ।
तिलाज्यमिश्रितं स्वर्णवस्त्रमाल्यविभूषितम् ॥
मकरे संक्रमे राजन् कार्त्तिक्यां पूर्णिमादिने ।
दत्तं जनैर्दक्षिणया साकं तस्य शृणुष्विदम् ॥
प्रधानं सम्परित्यज्य सचैलं स्नानमाचरेत् ।
गायत्रीञ्च जपेत्पश्चात् सहस्रं पादपूरणे ॥
द्वयोः प्रतिग्रहे राजन् द्विसहस्रं जपेत्सुधीः ।
बाहुल्ये संख्यया तस्मात् तावत्संख्या प्रशस्यते ॥
तदेव स्वर्णरूपस्य प्रतिगृह्य द्विजोत्तमः ।
तदा प्रधानं सन्त्यज्य गायत्रीलक्षमाचरेत् ।
एवञ्चैव विशुद्धोऽभूदन्यथा शुद्धिमाप्नुयात् ॥

इति हेमाद्रौ कुष्माण्ड प्रतिग्रहप्रायश्चित्तम् ।

---

८१० अथ दशदानप्रतिग्रहे प्रायश्चित्तमाह ।

कूर्म्मपुराणे—

प्रायश्चित्ते व्रते शान्तौ प्रतिष्ठासु मुनीश्वराः ।
तटाकारामग्रामाणां तत्तत्पुण्यप्रपूर्त्तये ॥
दशदानानि विप्रेभ्यः देयानि फलसंख्यया ।

दशदानानि यथा—

गोभूतिलहिरण्याज्यवासोधान्यगुडानि च ।
रजतं लवणञ्चैव दशदानान्यनुक्रमात् ॥

एतत्प्रतिग्रहे प्रायश्चित्तम् । सुखासये तत्तदङ्गत्वाच्च दोषबाहुल्यम् । अतः प्रतिग्रहीतॄणां प्रायश्चित्तमाह ।

लैङ्गे—

धेनुप्रतिग्रहे भूमेश्चान्द्रमेकं विशोधनम् ।
तिलप्रतिग्रहे तसकृच्छ्रत्रयमुदीरितम् ॥
पराकं मुनिभिः प्रोक्तं सुवर्णस्य प्रतिग्रहे ।
रजतस्य विशुद्ध्यर्थं यावकं कृच्छ्रमीरितम् ॥
लवणे पञ्चसाहस्रं जपेद्होमनुक्रमात् ।

एतत्प्रायश्चित्तं यस्य दानस्य यावत्परिमाणमुक्तं परिभाषायां, तावत्पूर्णञ्चेदेतदुक्तं प्रायश्चित्तं, असामर्थ्यञ्चेत् तत्र द्रव्यस्य प्रतिग्रहे

ज्ञात्वा सहस्रं जपेत्, अश्वादिप्रतिग्रहेष्वेव गो-प्रतिग्रहे पूर्ववत्प्रायश्चित्तं कुर्य्यात् सुवर्णदानेऽपि तथैव योजनीयम्।

इति हेमाद्रौ दशदानप्रतिग्रहप्रायश्चित्तम्।

---

## अथ चतुर्विंशतिमूर्त्तिप्रतिग्रहप्रायश्चित्तमाह।

स्कन्दपुराणे,—

ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः।
विप्रद्रोहः प्रजाक्षोभ आत्माऽकालाघमार्जनम्॥
उपेक्षाऽप्यापिनाधूर्त्ता पुण्यकालागूयनस्तथा।
चापल्यं परनारीषु परद्रव्येषु लिप्सुता॥
स्वजातिं सम्परित्यज्य अन्यजातेः परिग्रहः।
द्विजिह्ववार्त्ताश्रवणं प्रवृत्तिस्तत्र सर्व्वदा॥
हिंसा पशुमृगादीनां मातापित्रोश्च हिंसनम्।
निषिद्धमृगमांसानां भक्षणं कुक्कुटस्य च॥
तथा दुर्जनसंसर्गः सज्जनत्याग एव च।
पुण्यकालेषु पुण्यर्क्षे न दानं श्रोत्रियेषु च॥
गीतनर्त्तनचापल्यं सदा निष्ठुरभाषणम्।
अग्निसाक्षिषु दारेषु सत्स्वन्यत्र परिग्रहः॥

उपवासदिने भुक्तिस्तथा ताम्बूलभक्षणम् ।
पाषण्डजनसंसर्गो देवब्राह्मणदूषणम् ॥
तीर्थे देवालये क्वाऽपि ष्ठविश्वासः सदा भवेत् ।
एवमादीनि पापानि राज्ञां पापरतात्मनाम् ॥
विचार्य्य सहसा बुद्ध्या ब्रह्मलोके पितामहः ।
कृपया परया तेषां लोकानां हितकाम्यया ॥
चतुर्विंशतिमूर्त्तीनां दानं पापापनुत्तये ।
कल्पयामास विश्वात्मा ददौ राज्ञां मुदा तदा ॥
कुरुध्वं पुण्यकालेषु दानान्येतानि सर्व्वदा ।
उत्तिष्ठथ महापापात् नाऽऽलस्यं कर्त्तुमर्हथ ॥
ओमित्युक्त्वा तदा वाक्यं मान्धातृप्रमुखा नृपाः ।
अकुर्व्वन् विप्रमुख्येभ्यो दानान्येतानि पंक्तिशः ॥
तदा प्रभृति लोकेऽस्मिन् राजानः पुण्यसञ्ज्ञके ।
कुर्वन्ति दानमखिलं विमुक्ताः पापराशिभिः ॥
कलौ युगे विशेषेण राजानोदानशालिनः ।
भवेयुस्ते महद्भ्यश्च पापेभ्यो मुक्तिमाप्नुयुः ॥
चतुर्विंशतिमूर्त्तीनामेकामेकां यथेच्छया ।
स्वर्णेन यदि कुर्व्वीत स राजा सुखमश्नुते ॥

कूर्म्मपुराणे—

चतुष्पलप्रमाणेन मूर्त्तिं केशवरूपिणीम् ।
सुवर्णेनैव यो राजा निर्म्मितां लक्षणान्विताम् ॥

विप्राय वेदविदुषे दरिद्राय कुटुम्बिने।
अर्च्चितां गन्धवस्त्राद्यैः पूजितां सामभिः पृथक्॥
दद्यात्पुण्यदिने प्राप्ते स याति परमाङ्गतिम्।
केशवं पलमानेन सुवर्णेन विचक्षणः॥
पूजयित्वा विधानेन दद्याद्विप्राय धीमते।
स्वर्गं विमानमारुह्य अप्सरोगणसेवितः॥
[1]प्राप्नोति वैष्णवस्थानं पुनरावृत्तिदुर्लभम्।
केशवं प्रतिगृह्णीयात् सौम्यं विप्रोधनातुरः॥
दत्तं नृभिर्विधानेन निष्कारणतया नृप।
अज्ञात्वाऽऽधानमपि वा कुर्य्यात्स्वोदरपोषणम्॥
तस्यैवं निष्कृतिर्दृष्टा स्नात्वा नित्यं समाप्य च।
एकः स्थानमुपाविश्य नामत्रयजपं चरेत्॥
मासं दीक्षामुपाश्रित्य भुञ्जन् यावकमुत्तमम्।
प्रत्यहं खण्डिते क्षुद्रा मासमात्रं शुध्यति॥
जपेन्मन्त्रतः पूतः शुद्धोभवति सर्व्वदा।

एतद्दानस्य सौम्यत्वात् आधानाभावे क्षणमात्रं नामत्रयं जपेत्पूतो भवति। एवं नारायणादीनां मूर्त्तीनां प्रतिग्रहे आधानाद्यकरणे क्षणमात्रं नामत्रयेण शुद्धिः। अथवा इष्टापूर्त्तादिकं कृत्वा न प्रायश्चित्तं तटाकारामदेवालयाद्यर्थं न स्वोदरपोषणार्थं प्रतिग्रहः।

इति हेमाद्रौ चतुर्विंशतिमूर्त्तिप्रतिग्रहप्रायश्चित्तम्।

---

(१) प्रमेरे इति पाठान्तरम्।

## अथ दशावतारप्रतिमाप्रतिग्रहप्रायश्चित्तमाह ।

मार्कण्डेयपुराणे—

मत्स्यः कूर्मोवराहश्च नरसिंहोऽथ वामनः ।
रामो रामश्च रामश्च बुद्धः कल्किस्तथैव च ॥
अयन्त्योर्दिवसे वाऽपि षष्ठे पुष्यागमेऽपिवा ।
अयनोत्थानद्वादश्योर्मन्वादिषु युगादिषु ॥
दशरूपाणि कृत्वैव सुवर्णेन विचक्षणः ।
[1]पलद्वयसुवर्णेन प्रत्येकं प्रतिमाचरेत्[2] ॥
मत्स्यावतारमालिख्य पूजयित्वा विधानतः ।
दद्याद्ध्यात्मविदुषे तस्य पुण्यं निशामय ॥
मातृतः पितृतश्चैव कुलकोटिसमन्वितः ।
वैकुण्ठे [3]वसतिं कृत्वा ततोनिर्वाणमश्नुते ॥
एवमन्यावतारान् यस्तत्तदुक्तदिनेषु च ।
दद्याद्यदि च विप्राय पूर्ववत् पुण्यमश्नुते ॥
अर्चितान् प्रभुभिर्दत्तान् विप्रोभोगपरायणः ।
प्रतिगृह्याऽऽत्मभोगार्थं [4]जायते भुवि निन्दितः ॥

---

(१) यत्र इति केचित्पुस्तकपाठः ।
(२) प्रतिमाप्नुवे इति केचित्पुस्तकपाठः ।
(३) निर्वृतिमिति केचित्पुस्तकपाठः ।
(४) च विप्र इति कौतकेचित्पुस्तकपाठः ।

आधानं वा तटाकादीन् यज्ञत्वा देववञ्चकः।
स याति नरकं घोरं कालसूत्र[1]मवाङ्मुखः॥

चतुर्विंशमते—

सौम्यःप्रतिग्रहस्त्वेष इति[2] बुद्धा विचारयन्।
अशन[3]च्छादने दद्यो वृथा भोगपरायणः॥
न कुर्य्याद् धर्मनिलयं योविप्रस्तत्र संस्पृशेत्।
तस्मात् पापनिवृत्यर्थं निष्कृतिं पापमोचनीम्॥
प्रातःस्नात्वा यथाकालं नित्यकर्म समाप्य च।
शालग्रामे तथा राजन् प्रतिमायां विधानतः॥
पञ्चामृतैः पञ्चगव्यैर्मध्ये मध्ये निवेदनम्।
अभिषिच्य पुनर्देवं पञ्चवारं दिने दिने॥
चतुर्थकाले पर्य्यङ्के स्वपेत् स्थण्डिलदेशतः।
परेद्युः प्रातरुत्थाय पूर्ववद् विधिमाचरेत्॥
एवं मासं व्रतं कृत्वा पञ्चगव्यं पिबेत्ततः।
गोदानं तत्र कुर्वीत प्रायश्चित्तोपपत्तये॥

एकैन द्रव्येणाऽभिषिच्य ततो जलेन स्नापयित्वा मध्ये धूपदीपनैवेद्यान्तं कृत्वा पुनरन्येन द्रव्येण सर्वं पूर्ववत्कुर्य्यात्। एतत् प्रायश्चित्तं दशावतारप्रतिमाप्रतिग्रहे वेदितव्यम्। [4]एकावतारप्रतिग्रहे

(१) कालसूत्रं पराङ्मुख इति वेष्टितपुस्तकपाठः।
(२) इह इति क्रीतपुस्तकपाठः।
(३) अशनाच्छादने इति क्रीतपुस्तकपाठः।
(४) एकप्रतिग्रहे इति क्रीतवेष्टितपुस्तकपाठः।

दिनद्वयं प्रत्येकाभिषेकश्च, द्वये त्रयेऽप्येवं दिनसंख्याक्रमेणाभिषेच-नीयं एतद्दानप्रतिग्रहस्य सौम्यप्रतिग्रहत्वात्प्रायश्चित्ताल्पत्वम् ।

इति हेमाद्रौ दशावतारप्रतिमाप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ रामलक्ष्मणप्रतिमाप्रतिग्रहप्रायश्चित्तमाह ।

स्कन्दपुराणे—

द्विजो यो भोगलोभार्थं पत्नीपुत्रवशङ्गतः ।
चातुर्मास्ये पुण्यकाले गृह्णीयाद्रामलक्ष्मणौ ॥
अर्चितौ गन्धवस्त्राद्यैः स्वर्णरूपावरिन्दमौ ।
कल्पोक्तविधिना राजन् प्रतिगृह्णन् सुखाप्तये ॥
तेनाऽधानं तटाकादीन् कृत्वा मुक्तिपदं व्रजेत् ।
अन्यथा दोषमायाति प्रायश्चित्ती भवेत्सदा ॥

एतदुक्तप्रतिग्रहविषयं तद्व्यतिरिक्तप्रतिमाप्रतिग्रहे न त्वाधानादिकं तदुक्तद्रव्यप्रतिमाप्रतिग्रहे तत्तदकरणे तु प्रायश्चित्तमाह—

लिङ्गपुराणे—

द्विजो यस्तूक्तमार्गेण प्रतिमां चेत् प्रतिग्रहेत् ।
धर्मादिकं पराकृत्य प्रायश्चित्तमिदं चरेत् ॥

चैत्रशुक्लनवम्यान्तु [1]ह्यालोषसि जितेन्द्रियः ।
नित्यकर्म्म विधायाऽऽशु गन्धपुष्पनिवेदनैः ॥
तथैवाष्टसु यामेषु पूजयेद्रामलक्ष्मणौ ।
परेद्युः प्रातरुत्थाय पूर्व्ववत् स्नानमाचरेत् ॥
अभ्यर्च्य विधिवद्भक्त्या ततो होमं समाचरेत् ।
स्वगृह्याग्निं प्रतिष्ठाप्य आज्यभागान्तमाचरेत् ॥
तिलैश्च विरजा[2]होमं कृत्वा शुद्धिमवाप्नुयात् ।
ब्राह्मणान् भोजयेत्पश्चात् यथाविभवसारतः ॥

अत्र सुवर्णप्रतिमाप्रतिग्रहे नवम्यामेकवारं पूजयित्वा परेद्यु-र्विरजाहोमं कुर्य्यात् । एतेन महापातकनिवृत्तिर्भवति ।

इति हेमाद्रौ रामलक्ष्मणप्रतिमाप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ श्रीमूर्त्तिप्रतिग्रहप्रायश्चित्तमाह—

देवीपुराणे—

विद्यमानधनो विप्रः स्वकिञ्चन इवार्जने ।
योऽर्च्चितान्तु[3] शिलां शालग्रामरूपां शिलोच्चतिम् ॥

---

(१) उषः स्नात्वा इति श्रीतलेखितपुस्तकपाठः ।
(२) विरजो होममिति लेखितपुस्तकपाठः ।
(३) अर्च्चयित्वा इति श्रीतपुस्तकपाठः ।

प्रतिगृह्य महायत्नात् तत्पूजाविमुखो यदि।
विक्रयेद्यदि पापात्मा भवेत् स्थूणाघुणःखलः॥

लिङ्गपुराणे—

शालग्रामशिलां विप्रः प्रतिगृह्य प्रयत्नतः।
तद्दर्शनं पराकृत्य विक्रयेद्यदि मूढधीः॥
स वै नरकभुक् पापी घुणस्तम्भे प्रजायते।
तस्य पापविशुद्ध्यर्थं प्रायश्चित्तं निदर्शितम्॥
पञ्चरात्रमुषःस्नात्वा प्रातःसन्ध्यादिकं चरेत्।
पञ्चगव्यं पिवेत्पश्चात् पञ्चमन्त्रैः पुनः क्रमात्॥
पृथक् पृथक् प्राशयित्वा शुद्धो भवति निश्चयः।
पलमेकं तु गोमूत्रं पलार्धं चैव गोमयम्॥
क्षीरमष्टपलं दद्यात् त्रिपलं दधिसेचनम्।
सर्पिरेकपलं ग्राह्यं पञ्चरात्रमतन्द्रितः॥
गायत्र्या चेति गोमूत्रं गन्धद्वारेति गोमयम्।
आप्यायस्वेति वै क्षीरं दधिक्राव्णेति वै दधि॥
देवस्येति च मन्त्रेण पिवेदाज्यमनुत्तमम्।
एतेन शुद्धिमाप्नोति विक्रयित्वा शिलां द्विजः॥
नोचेदिदं न (1)कर्त्तव्यं तत्पूजा सर्वपापहा।
सा शिला यत्र गेहस्था गयाक्षेत्रन्तु तद्गृहम्॥

---

(1) न मन्तव्यमिति क्रीतवेष्टितपुस्तकपाठः।

शालग्रामशिलां [1]भक्त्या तुलसीकोमलैर्दलैः ।
अर्च्चयेद्यदि मूढात्मा सर्वपापात्प्रमुच्यते ॥
एतत्प्रायश्चित्तं तु विक्रेतुरेव न प्रतिग्रहीतुः ।

इति हेमाद्रौ श्रीमूर्त्तिप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ चक्रपाणिप्रतिग्रहीतुः प्रायश्चित्तमाह—

लिङ्गपुराणे—

चक्रपाणिं द्विजो यस्तु प्रतिगृह्य समर्च्चयेत् ।
तस्याध्यं काशिकाक्षेत्रं तद्गृहं द्वारकोपमम् ॥
तत्तीर्थं गङ्गया तुल्यं तत्पीत्वा मनुजो भुवि ।
सर्वपापविनिर्मुक्तः [2]स याति परमं पदम् ॥
चक्रपाणिं द्विजो मोहात् प्रतिगृह्यैव विक्रयेत् ।
स मातृघातकः प्रोक्तः सर्वकर्म्मसु गर्हितः ॥
ब्रह्मस्वं हयं कन्यां देवं धेनुं द्विजोयदि ।
विक्रीणाति[3] महत्पापं मवाप्नोति सुदारुणम् ॥

---

(१) भक्तु इति श्रीतपुस्तकपाठः ।
(२) प्रयाति इति वेष्टितपुस्तकपाठः ।
(३) विक्रयिता इति श्रीतवेष्टितपुस्तकपाठः ।

चक्रपाणिविक्रये शालग्रामविक्रयप्रायश्चित्तवत् सर्वं कुर्य्यात् ।

इति हेमाद्रौ चक्रपाणिप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ शिवलिङ्गप्रतिग्रहविक्रयप्रायश्चित्तमाह—

स्कान्दपुराणे—

मारकतं स्फाटिकं लिङ्गं शिलारूपं द्विजोत्तमः ।
प्रतिगृह्य प्रयत्नेन उभयोस्तारकं द्विजाः ॥
अविक्रीय गृहे स्थाप्य पूजयेद् यो[1] दिने दिने ।
तस्य पुण्यं निगदितुं मया ब्रह्मन् न शक्यते ॥
लिङ्गं शिलोद्भवं शुद्धं पद्मसूत्रानुमोदितम् ।
पूजयेद्यदि पूतात्मा स पापात्परिमुच्यते ॥
शिवरात्र्यां चतुर्दश्यां चातुर्मास्यव्रतादिषु ।
प्रतिगृह्य समर्थोऽपि विक्रयेद्यदि पापधीः ॥
तत्कुलं नाशमायाति यमलोकमवाप्य च[2] ।

लिङ्गविक्रेतुः प्रायश्चित्तमाह—

---

(१) पूजयित्वा इति क्रीतपुस्तकपाठः ।
(२) अवाप्यते इति क्रीतशेषितपुस्तकपाठः ।

मार्कण्डेयपुराणे—

संपाद्य बहुभिर्यत्नैः प्रतिगृह्य नरोत्तमात् ।
विक्रयित्वा द्विजो मोहात् कालकूटं समश्नुते ॥
न तस्य पुनरावृत्तिर्यमलोकात् कदाचन ।
सोऽरण्यं निर्जनं गत्वा स्नात्वा प्रातर्यथाविधि ॥
लौकिकाग्निं प्रतिष्ठाप्य समिद्धेऽग्नौ हुनेद्धविः ।
अयुतं प्रत्यहं पापी चरुणाऽऽज्यतिलैः सह ॥
त्र्यम्बकेणैव मन्त्रेण नियमासनपूर्वकम् ।
यावदस्तमयं याति संख्या तावत् प्रपूर्यते ॥
फलाहारं तदा कुर्य्यात् जपेदेवमनुस्मरन् ।
एवं कुर्य्यात् पञ्चरात्रं पञ्चायुतमतन्द्रितः ॥
पञ्चगव्यं पिबेत्पश्चात् शुद्धो भवति नान्यथा ॥

इति हेमाद्रौ शिवलिङ्गप्रतिग्रहविक्रयप्रायश्चित्तम् ।

---

## अथ शङ्खप्रतिग्रहतद्विक्रयप्रायश्चित्तमाह ।

कूर्मपुराणे—

प्रतिगृह्य द्विजः शङ्खं देवपूजार्थमादरात् ।
सलक्षणं च शङ्खस्य पुण्यकालेषु पर्वसु ॥

विक्रयेद्यदि मोहात्मा यमलोकं समश्नुते ।
शङ्खदर्शनमात्रेण सर्वपापैः प्रमुच्यते ॥
तं विक्रयित्वा मोहेन स पापी न भवेत् किमु ।
तस्यैव निष्कृतिरियं कथिता मुनिवल्लभैः ॥
[1]ज्ञात्वा हरिदिने शुद्धे क्षतं पापमनुत्तरं ।
उपविश्य शुचौ देशे विष्णोर्नाम्ना सहस्रकम् ॥
प्रातरारभ्य [2]नियतो यावत्सूर्य्योदयोभवेत् ।
तावज्जपित्वा नामानि परेद्युरुदये त्यजेत् ॥
स्नात्वा पुनस्तु द्वादश्यां पञ्चगव्यं पिबेन्मुदा ।
पारणं च ततः कुर्य्यात् शुद्धिमाप्नोति पौर्विकीम् ॥

इति हेमाद्रौ शङ्खविक्रयप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ घण्टाविक्रयप्रायश्चित्तमाह ।

लिङ्गपुराणे—

प्रतिमाञ्च द्विजो घण्टां धूपपात्रञ्च साधनम् ।
पेटिकां देवपात्रञ्च स्नानपात्रं तथैव च ॥

---

(१) भूत्वा इति श्रीतपुस्तकपाठः ।
(२) वक्ता इति वैदिकपुस्तकपाठः ।

समर्थः प्रतिष्ठाद्यादौ धनार्थं विक्रयेदिमान्।
स वै नरकमासाद्य [1]दंशगोपो हि जायते॥

स्कन्दपुराणे—

धूपपात्रञ्च घण्टाञ्च स्नानपात्रं च पेटिकाम्।
दीपसाधनपात्राणि समर्थः प्रतिष्ठया च॥
विप्रो धनविमो[2]हार्थी विक्रयेद्यदि मूढधीः।
स वै नरकमासाद्य दंशगोपो हि जायते॥
तस्य निष्कृतिरुद्दिष्टा मुनिभिः सत्यवादिभिः।
प्रातःस्नात्वा[3] शुचिर्भूत्वा देवागारं विशेत्ततः[4]॥
उपविश्य तदग्रे तु रक्तवस्त्राद्यलङ्कृतः।
पालाशसमिधस्तत्र निक्षिपेच्छतसंख्यया॥
स्थण्डिलाग्निं प्रतिष्ठाप्य चाज्यभागान्तमाचरेत्।
यावद्भानुः सायमेति तदाऽऽहारं समाचरेत्॥
स्वपेद्देवसमीपे तु पुनःप्रातःप्रबोधयेत्।
तत्रापि पूर्ववत्कृत्वा मण्डलं यत्र पूर्य्यते॥
तदा विरम्य नियमात् पञ्चगव्यं पिबेत्ततः।
घण्टादिविक्रये तात प्रायश्चित्तमिदं स्मृतम्॥

---

(१) निरयगोप इति केचित्पुस्तकपाठः।
(२) धनविद्यागार्थी इति केचित्पुस्तकपाठः।
(३) उत्थाय इति मौलकेचित्पुस्तकपाठः।
(४) विशेषत इति केचित्पुस्तकपाठः।

तस्मात् न प्रतिगृह्णीयाद् धर्म्मं वा जलमेव वा।
यदि मोहात् प्रतिग्राही पञ्चगव्यं पिबेत्ततः॥

इति हेमाद्रौ घण्टाविक्रेतुः प्रायश्चित्तम्।

---

## अथ ताम्रप्रतिग्रहप्रायश्चित्तमाह।

देवीपुराणे—

ताम्रपात्रं द्विजो यस्तु पुण्यकालेषु पर्वसु।
प्रभुमात्राद् वृथाग्राही स वै नरकमश्नुते॥
तदन्ते भुवमासाद्य वृषहृषणवान् भुवि।

कूर्म्मपुराणे—

ताम्रं यदि द्विजो लोभाद् विभ्रयात् कारणं विना।
पुण्यकालेषु पुण्यर्क्षे व्यतीपाते च वैधृतौ॥
[1]मृत्वा नरकमाप्नोति वृषदण्डः स जायते।

मत्स्यपुराणे—

पुण्यकालेषु संक्रान्तौ व्यतीपाते च वैधृतौ।
ताम्रं द्विजो राजदत्तं कुर्य्यंदानमथापि वा॥

---

(१) भूत्वा इति श्रोतवेचित्तपुस्तकपाठः।

प्रतिग्रहश्च महद्दुःखं चवाप्य च भुवःस्तले।
दुःखदश्चो भवेत् सोऽपि तस्मादेतत्परित्यजेत्॥
प्रायश्चित्तमिदं कृत्वा शुद्धिमाप्नोति पौर्विकीम्।
तद्द्रव्यस्य चतुर्भागं ब्राह्मणाय निवेदयेत्॥
तेन मुक्तोभवेत्पश्चात् पञ्चगव्यं पिबेत्ततः।
यन्नं जलं वा दानं वा शुद्धिमिच्छन् न संग्रहेत्॥
यदेवैतत् समुत्पन्नं पञ्चगव्यं पिबेत्ततः॥

इति हेमाद्रौ ताम्रप्रतिग्रहप्रायश्चित्तम्।

---

## अथ कांस्यप्रतिग्रहप्रायश्चित्तमाह।

देवीपुराणे—

धनिष्ठापञ्चकायुते अर्धोदयमहोदये।
पुण्यकालेषु यः कांस्यं प्रगृह्णीयाद् द्विजोयदि॥
रौरवं नरकं घोरं अनुभूय जनेश्वर!।
तदन्ते भुवमासाद्य चाण्डाल भवेत सः[1]॥

लिङ्गपुराणे—

---

(१) भवेत्सदा इति भीजलप्रतपाठः।

अष्टाशीतिपलं कांस्यं तदर्धं वा तदर्धकम् ।
पुण्यकाले द्विजो लोभात् प्रतिगृह्य धनातुरः ॥
यमलोकमुपागम्य नरकान्ते भुवःस्थले ।
तत्कांस्यप्रेतफलभुक्[१] पापो भवति निश्चयः ॥
तत्पापपरिशुद्ध्यर्थं तच्चतुर्थांशमादरात् ।
दद्याद् द्विजातये तात तस्मात् पापात् प्रमुच्यते ॥
तेनाऽन्नं वा सुवर्णं वा जलं वा वस्त्रमेव वा ।
प्रतिगृह्णाति चेद्[२] दैवात् पञ्चगव्यं पिबेत्ततः ॥

इति हेमाद्रौ कांस्यप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ तिलपात्रप्रतिग्रहप्रायश्चित्तमाह ।

मार्कण्डेयपुराणे—

विष्णुप्रीत्यै यमप्रीत्यै म्रियमाणा ग्रहे तथा ।
प्राणानामनु[३]प्राप्त्यर्थं रोगशान्त्यर्थमादरात् ॥

---

(१) अयं पाठः श्रीतर्कभूषितपुस्तकयोर्न दृश्यते ।
(२) अभिभूय वशा इति श्रीतर्कभूषितपुस्तकपाठः ।
(३) पादर्धिं इति श्रीतपुस्तकपाठः ।

तिलपात्रं प्रभोर्धृत्वा चर्चितं तिलपूरितम्।
द्विजोलोभेन महता प्रतिगृह्य धनातुरः॥
तत्पापफलमासाद्य जायते हरिरेव सः।
मण्डूको भवेत्॥
तद्दोषपरिहारार्थमयुतं जपमाचरेत्।

एतदल्पद्रव्यविषयं, यथाशास्त्रकल्पिततिलपात्रप्रतिग्रहे विशेषमाह

ताम्रे त्रिंशत्पले पूर्वं प्रस्थमात्रतिलैः सह।
पूजिते गन्धवस्त्राद्यैर्दक्षिणाभिर्यथोक्ततः॥
प्रतिग्रहे द्विजः पापशुद्धर्थं शास्त्रचोदिते।
नियुतेन जपेद्देव्याः संख्यापूर्वमतन्द्रितः॥
शुद्धोभवति दुष्टात्मा पापादस्मान्नराधिप।

पञ्चगव्यं पूर्ववत् तत्राशजलधान्यसंग्रहे विप्रस्य पूर्ववत्प्राय-श्चित्तम्।

इति हेमाद्रौ तिलपात्रप्रतिग्रहप्रायश्चित्तम्।



## अथाऽऽज्यावेक्षणप्रतिग्रहप्रायश्चित्तमाह ।

निरीक्षिताज्यं यो ऽश्नते कांस्यपात्रस्थितं मुदा ।
तस्याऽलक्ष्मीर्भवेन्नित्यं निर्भाग्यो भुवि जायते ॥
तद्दोषपरिहारार्थं प्रधानं संपरित्यजेत् ।
स्नात्वा तदाग्नीमन्यत्र सहस्रं जपमाचरेत् ॥
उपोष्य रजनीमेकां पञ्चगव्यं पिबेत्ततः ।

एतदल्पाज्यप्रतिग्रहविषयं महाज्याधाराधिकस्य(?)निरीक्षितस्य प्रतिग्रहे अयुतगायत्र्या शुद्धिः ।

इति हेमाद्रौ तिलपात्रप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ हरिहरयोगे हरिहरप्रतिमाप्रतिग्रहप्रायश्चित्तमाह ।

मार्कण्डेयपुराणे—

खरसंवत्सरे राजन् कार्त्तिके पूर्णिमादिने ।
योगो हरिहरो नाम सर्वपापप्रणाशनः ॥

---

(१) स्नात्वा इति केषुचित्पुस्तकपाठः ।
(२) जायते भुवमिति क्कचित्पुस्तकपाठः ।

क्रतुकोटिसमायोगो गङ्गास्नानायुतैः समम्।
महापातकसङ्घातदावानलसमोऽसुने ॥
तत्र स्नानानि दानानि पितृश्राद्धं महत्तरम्।
योगे तत्र तदा राजन् मुच्यते वा नरेश्वरः ॥
हरिहरं स्वर्णमयं गन्धवस्त्राक्षतादिभिः।
पूजयित्वा जागरित्वा विप्रायाऽध्यात्मवेदिने ॥
ददाति यदि पूतात्मा मुक्तिमाप्नोति पार्थिव।

लिङ्गपुराणे—

योगे हरिहरे राजन् स्नात्वा वा जनाधिप।
योवा कोवा धनी लोके पूजयित्वा हरिं हरम् ॥
जागरित्वा तदा रात्रिं परिस्तुर्विधिपूर्वकम्।
अर्चयित्वा द्विजाग्र्याय दद्याद्दक्षिणया सह ॥
तस्य पुण्यफलं वक्तुं मया ब्रह्मन न शक्यते।
न तस्य पुनरावृत्तिर्ब्रह्मलोकात् कदाचन ॥
मुक्तिस्थानानि चत्वारि कलौ पापरतात्मनाम्।
अवमानपरिग्राही न च लौकिकसाधनः ॥
परित्यजन् लोकवार्त्तां परिव्राड्मुक्तिभाक्सदा।
अन्तकाल उपायाते मनसाऽन्यं न संस्मरेत् ॥
नारायणं समुच्चार्य्य स वै मुक्तिपदं व्रजेत्।
ब्रह्मज्ञानं सदाशास्त्रं वेदान्तं परिशीलयन्[1] ॥

---

(१) पर्व्वलोकवर्जिते वेष्वितपुस्तकपाठः।

स एव मुक्तिभाग् विप्रो न इयं संभ्रमन् मुदा।
उत योगं हरिहरं साधयेद्यदि पुण्यवान्॥
स एव मुक्तिमायाति यो वा को वा भुवःस्थले।
स्थावरत्वमवाप्नोति तस्मादेतत्परित्यजेत्॥

कूर्मपुराणे—

योगी हरिहरे विप्रः प्रतिग्रह्य धनातुरः।
स तु पापं महद् घोरं मनुभूय तदा तदा॥
स्थावरत्वं [1]व्रजेल्लोके यावदाभूतसंप्लवम्।
प्रायश्चित्तमिदं राजन् मुनिभिः परिकीर्त्तितम्॥
[2]अन्यं धर्मं परित्यज्य ब्रह्मस्थानमुपागमत्।
तैरनुज्ञामवाप्याऽथ कुर्य्याच्चान्द्रायणद्वयम्॥
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति।
तेन शुद्धिमवाप्नोति न दानैर्ब्राह्मणार्चनैः॥

इति हेमाद्रौ हरिहरयोगी हरिहरप्रतिग्रह प्रायश्चित्तम्।

---

(१) भवेत् इति केचित्पुस्तकपाठः।
(२) चान्यं इति कोतपुस्तकपाठः।

अथार्द्धनारीश्वरयोगे प्रतिग्रहप्रायश्चित्तमाह ।

ब्रह्मपुराणे—

खरसंवत्सरो[1] माघपूर्णिमायोगयुग्यदा ।
तत्राऽपि भगवान् शम्भुरर्द्धनारीश्वरोऽव्ययः ॥
पूजनीयो नृभिः पापमोचने नाऽन्यसाधनः ।
तत्र दानं महापुण्यं स्नानं वा विप्रभोजनम् ॥
पितृनिर्वापणं वाऽपि दीपो वा देवतालये ।
होमो वा तिलसंमिश्रः सर्वपापापनुत्तये ॥
[2]मनोज्ञां प्रतिमां कृत्वा सौवर्णीं लक्षणान्विताम् ।
पूजयित्वा प्रदोषे तां जागरित्वा निशामिमाम् ॥
परेद्युः पुनरभ्यर्च्य पूर्ववद्विधिपूर्वकम् ।
यो दद्याद् विप्रवर्य्याय पूर्ववन्मुक्तिभाग्भवेत् ॥
मनुष्यजन्म धिक् कष्टं मलमूत्रविगर्हितम् ।
सर्वं पापालयं ज्ञेयमस्थित्वङ्मांसपूरितम् ॥
मनुष्य[3]जननाद्राजन् पाषाणत्वं वरं सदा ।
अतःस्वार्जितवित्तेन योगमेनं समाचरेत् ॥

---

(१) संवत्सरे इति श्रीवङ्गकपाठः ।
(२) सौवर्णामिति श्रीतर्कचिह्नितपुस्तकपाठः ।
(३) जननादिति श्रीतर्कचिह्नितपुस्तकपाठः ।

स याति ब्राह्मणः स्थानं नरः कश्मलपूरितः ।
अत्र योऽब्राह्मणो लोभाद्‌ दया 'कुर्य्यात्‌ प्रतिग्रहम्‌ ॥
स एव नरकस्थायी यावदाभूतसंप्लवम्‌ ।
एतस्मात्त्रिवदानं हि तथा तस्य परिग्रहे ॥
प्रायश्चित्ती भवेत्सोऽपि यागादिकमथापि वा ।
उभयोर्यदि लोभेन नरकं प्रतिपद्यते ॥
तस्य वै निष्कृतिर्दृष्टा पूर्ववच्चर्यमाचरेत्‌ ।

वस्त्रीनारायणधन्यावच्छोयोमादिवद्धत्तरायणयोगेषु प्रतिग्रहे त्वेवमेव प्रायश्चित्तं विवेचनीयं न चाऽन्यथा ।

इति हेमाद्रौ चर्मनारीनरयोनि प्रतिग्रहप्रायश्चित्तम्‌ ।

---

## अथ दुर्ज्जनप्रतिग्रहप्रायश्चित्तमाह ।

लिङ्गपुराणे—

वेदमार्गं परित्यज्य सदा वेश्यापरायणः ।
कर्म्महीनो दयाहेतो देवब्राह्मणनिन्दकः ॥
सन्ध्यादिनित्यकर्म्माणि त्यक्त्वा ग्राममथाचरेत्‌ ।
दयाहिंसा मृगादीनां सन्तापीयतितापुषु ॥

---

(१) अथा इति भीतलेखितपुस्तकपाठः ।

पत्नीपुत्रपितृश्राद्धदेवताराधनं त्यजेत् ।
परवित्तं परक्षेत्रं परदारापहारणम् ॥
वेदशास्त्रपुराणेषु कथासु महतीषु च ।
अविश्वासी हेतुवादं चार्व्वाकीयं पठंस्तथा ॥
इदं पापमिदं पुण्यं इदं वै विप्रसाधनम् ।
अयं परोपकारश्च अयं विष्णुः शिवोऽव्ययः ॥
उपवासव्रतादीनां जपादीनामवास्तवम् ।
कथामेकां पूर्व्वतश्च पश्चादेकां तथा वदन् ॥
कर्णमूले गन्धरेखां शिरोग्रीवश्च वक्षगम् ।
नासिकाग्रे ललाटे वा तिलकं वा प्रकाशयेत्[1] ॥
शुक्लं कपोतं धूम्रं वा धारयेत् श्वेतमेव वा ।
चाण्डालादिषु संसर्गं ताम्बूलं भक्षयेन्मुदा ॥
पर्व्वकाले पितृश्राद्धे सोमसूर्य्यग्रहेऽपि वा ।
द्विभुक्तः पापरतो गच्छेत्[2] नारीं पराङ्गनाम् ॥
अवेद्यवधमेध्यस्य अभोज्यं भक्षयेन्मुदा ।
पश्चार्द्धे भोजनं त्यक्त्वा पितृमातृसुतैः सह ॥
भोजनं कुरुते विप्रः पापमार्गं न चिन्तयन् ।
अयं दुर्ज्जनसंज्ञः स्यात् तं कदा नाऽऽलपेद्बुधः[3] ॥

---

(१) प्रकाशयन्निति श्रीतपुस्तकपाठः ।
(२) गम्यामिति श्रीतर्कचित्रपुस्तकपाठः ।
(३) सदा इति श्रीतर्कचित्रपुस्तकपाठः ।

शकटं पञ्चहस्तेन शतहस्तेन वाजिनम् ।
हस्तिनं शतहस्तेन दुर्ज्जनं दूरतस्त्यजेत् ॥
अतो दुर्ज्जनसंसर्गः परित्याज्यः मुमुक्षुभिः ।
पुण्यकालेषु पुण्याहे नदीतीरेषु सर्व्वदा ॥
अन्नं वा सलिलं वापि हिरण्यं धान्यमेव वा ।
[1]गृह्णन् नरकमाप्नोति तस्मादेतत् परित्यजेत् ॥
यदि दैवात् समुत्पन्नस्तस्माद् राजन् परिग्रहः ।
तदा मन्यवि संभूय ह्येयं तज्जनवल्लभ ॥
स्नात्वा सचैलं सहसा प्राजापत्यं समाचरेत् ।
सुवर्णमात्रे द्विगुणं धने पादं धने तथा ॥

इति हेमाद्रौ दुर्ज्जनप्रतिग्रहप्रायश्चित्तम् ।

---

## अथाततायिप्रतिग्रहप्रायश्चित्तमाह ।

विष्णुपुराणे—

अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः ।
क्षेत्रदारापहर्त्ता च षड़ेत आततायिनः ॥

---

(१) महानरकमिति क्वचित्पुस्तकपाठः ।

एतत्प्रतिग्रहं ज्ञात्वा विप्रो नरकमाप्नुयात्।
वृश्चिकं दुर्ज्जनं सर्पं भिषजञ्चाततायिनम्॥
पापिष्ठं दुर्भगं ब्रात्यं नग्नमुत्कृत्तनासिकम्।
प्रातर्न पश्येदेतांस्तु दृष्ट्वा पश्येद्दिवाकरम्॥
चन्दनं रोचनं हेमसद्दूर्वां दर्पणं मणिम्।
गुरुमग्निं तथा सूर्य्यं प्रातः पश्येत् प्रयत्नतः॥
अग्निचित् कपिला [1]पत्नी राजा भिक्षुर्महोदधिः।
दृष्टिमात्रात् पुनन्त्येते तस्मात् पश्येत नित्यशः॥
[2]भर्त्तृघ्नीं पुष्पिणीं नारीं पुत्रहीनां निराश्रयाम्।
सवाहनयतिं दृष्ट्वा सचेलं स्नानमाचरेत्॥
पतितं कुष्ठिनं चार्त्तं दुर्ज्जनं चाऽऽततायिनम्।
हरिं सर्पं मृतं स्पृष्ट्वा सचेलं स्नानमाचरेत्॥
एतत्प्रतिग्रहे राजन् पूर्वमुक्तं मनीषिभिः।
प्रायश्चित्तं तथा कुर्य्याद्दानं जलैः [3]सह॥
नाऽन्यथा शुद्धिमाप्नोति दानैर्वा बहुभिर्नरः।

इति हेमाद्रौ आततायिप्रतिग्रहप्रायश्चित्तम्।

---

(१) सती इति क्रीतपुस्तकपाठः।
(२) भ्रातृघ्नीमिति क्रीतपुस्तकपाठः।
(३) अत्रं तथा इति क्रीतवेचितपुस्तकपाठः।

अथ पाषण्डप्रतिग्रहप्रायश्चित्तमाह ।

मार्कण्डेयपुराणे—

शूद्रधर्मरतो वाऽपि तमसुद्राङ्कितस्तथा ।
लिङ्गधारी तु मुण्डजः शुष्कतर्कानुवादवान् ॥
विष्णुदेवं द्विजं पाषण्डं माध्वं पतिव्रताम् ।
उपोषणादिकं त्यक्त्वा आत्मभोगपरायणः ॥
शिवं द्वेष्टि परं द्वेष्टि देवपूजां व्रतं तथा ।
दानं वा नियमं वापि कुर्वाणं द्वेष्टि यो नरः ॥
एते पाषण्डिनः प्रोक्ताः दुर्जनेष्वेषु भागशः ।
पाषण्डिनश्चेद्गृह्णीयाद् द्विजो भोगपरायणः ॥
कुर्याद्दैवविशुद्ध्यर्थं प्राजापत्यद्वयं सदा ॥

हिरण्यादिसम्भवे पूर्ववद् द्रष्टव्यम् ।

इति हेमाद्रौ पाषण्डप्रतिग्रहप्रायश्चित्तम् ।

## अथ कुण्डगोलकयोः प्रतिग्रहप्रायश्चित्तमाह ।

लिङ्गपुराणे—

'जीवितश्च पतिं त्यक्त्वा कुमारं सूयतेऽन्यतः ।
स पुत्रः कुण्डसंज्ञः स्याल्लोकद्वयवहिष्कृतः ॥
सा माता जारिणी नाम स पुत्रः पतितो भवेत् ।
मृते भर्त्तरि या नारी सूते पुत्रं तथाऽन्यतः ॥
स निन्द्यगोलको नाम सर्व्वधर्म्मवहिष्कृतः ।
न नामकरणं वाऽपि न मौञ्जीबन्धनं तथा ॥
कुण्डगोलकनामानौ दर्शनात् पापवर्द्धिनौ ।
दर्शनात् स्पर्शनान्नित्यकीर्त्तनात् पुण्यहारिणौ ॥
नित्यनैमित्तिके काम्ये स्नानदानजपादिषु ।
नैतयोर्दर्शनं कार्य्यं स्नुतं शृण्वन्नेव वा ॥
सन्त्यजेद्दर्शनं ज्ञात्वा श्रवणं शृण्वन्तथा ।
विरम्य भोजनात् पश्चान्मार्त्तण्डमवलोकयेत् ।
एतयोः पापयोर्यस्तु द्विजः संस्कारकर्म्मसु ॥
याजयेत्तं सकृत् कुर्य्यात् स विप्रस्तत्समो भवेत् ।
तस्योपनयनं भूयः केशानां वपनं तथा ॥
प्रायश्चित्तं तदा कुर्य्यात् षडब्दं विधिपूर्व्वकम् ।
त्यक्त्वा प्रतिग्रहे राजन् सुवर्णं धान्यमादरात् ॥

---

(१) जीवने च इति जीवानन्दपाठः ।

अन्नं वा जलमात्रं वा प्रायश्चित्तमिदं चरेत् ।
सुवर्णसंग्रहे ताभ्यां प्राजापत्यद्वयं चरेत् ॥
धान्ये तदर्द्धमर्द्धं स्याद् अन्नतोयप्रतिग्रहे ।
एवं शुद्धिमवाप्नोति अन्यथा वै न निष्कृतिः ॥
कुण्डगोलकयोः केचित् प्रायश्चित्तं वदन्ति हि ।
पराशरादयः सर्व्वे इति यत्तदसाम्प्रतम् ॥

इति हेमाद्रौ कुण्डगोलकप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ वेश्याप्रतिग्रहप्रायश्चित्तमाह ।

लिङ्गपुराणे—

वेश्याजनात्तथा[१] राम पैठवे पुण्यपर्व्वसु ।
ग्रामं सुवर्णं रजतं प्रतिगृह्य द्विजो यदि ॥
तेन जीवेन्महापापी मृत्वा नरकमाप्नुयात् ।
नदीतीरे पुण्यकाले पैठवेषु च पर्व्वसु ॥
वेश्याप्रतिग्रहं कुर्व्वन् द्विजश्चाण्डालतां व्रजेत् ।
अन्ते नरकमासाद्य सर्व्वधर्म्मबहिष्कृतः ॥

---

(१) प्रतिपदे इति श्रीतर्कवागीशधृतपाठः ।

महाभारते—

दशसूनासमश्चक्री दशचक्रिसमोध्वजी।
दशध्वजिसमा वेश्या दशवेश्यासमो नृपः॥
वेश्याप्रतिग्रहः सर्वो दानमर्थं वचस्तथा।
एतानि तस्य पुण्यानि हरन्ति क्षणमात्रतः॥
तस्माद्विप्रैः परित्याज्यो वेश्यायाः सम्परिग्रहः।
यदि प्रतिग्रहो राम प्रायश्चित्तं शृणुष्व मे॥
केशानां वपनं कृत्वा संस्कारं पुनराचरेत्।
प्राजापत्यत्रयं कुर्य्यात् तत्कुलानां परिग्रहे॥
सुवर्णमाषसंग्राहे षडब्दं कृच्छ्रमाचरेत्।
धने अन्ने च वस्त्रे च प्राजापत्यं समाचरेत्॥

एतत् सकृत्प्रतिग्रहविषयं अभ्यासे द्विगुणं अत्यन्ताभ्यासे चतुर्गुणं संवत्सरादूर्द्ध्वं तत्सम इति सूचितम्।

इति हेमाद्रौ वेश्याप्रतिग्रहप्रायश्चित्तम्।

---

## अथ भर्तृघ्नी प्रतिग्रहप्रायश्चित्तमाह ।

कूर्म्मपुराणे—

भर्त्तारं हन्ति या नारी खड्गदाहादिभिर्वधैः ।
परप्रेरणया (१)वाऽपि सा नारी भर्तृघातिनी ॥

शिवधर्म्मोत्तरे—

या नारी बहुभिर्विप्रं प्रतिहन्ति विषादिभिः ।
राजासन्नाऽप्यतो विप्रः कदा तां नाऽवलोकयेत् ॥

चतुर्विंशतिमते—

खड्गदाहेन पाषाणरज्जुबन्धादिभिर्गृहे ।
भर्त्तारं हन्ति या पापा कर्म्मणा दिवि पीड़या ॥
यमदूतैस्सदा बद्धा पीड़िता यमकिङ्करैः ।
क्रोशन्ती स्वकृतं कर्म्म निन्दन्ती जनकं स्वकम् ॥
कर्म्मणा मनसा वाचा भर्त्तारं याऽवमन्यते ।
तदाशां या परित्यज्य तस्याः प्रोक्ताऽप्यधोगतिः ॥
भर्तृघ्नी ब्रह्महन्ता च उभयं याति रौरवम् ।
ततः प्रतिग्रहस्ताभ्यो भर्तृघ्नाः पापशङ्कया ॥
दोषं बुद्धा यदा विप्रः तस्याः कुर्य्यात् प्रतिग्रहम् ।
महान्तं नरकं गत्वा भवेद्भुवि तपोदरः ॥

---

(१) चापि इति श्रीतर्केभिन्नपुस्तकपाठः ।

पुण्यकालेषु संक्रान्तौ व्यतीपाते च वैधृतौ ।
तत्प्रतिग्रहणं कुर्य्यात् तदा पापविशुद्धये ॥
सुवर्णे रजते वस्त्रे धने जलपरिग्रहे ।
[1]तप्तं तदर्द्धं पादोनं क्रमात्कृत्वा विशुध्यति ॥

एतदज्ञानविषयं ज्ञात्वा प्रतिग्रहे द्विगुणं अभ्यासे त्रिगुणं एवं वत्सरादूर्द्धं सोऽपि तत्समः ।

इति हेमाद्रौ भर्त्तृघ्नीप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ व्यभिचारिणीप्रतिग्रहप्रायश्चित्तमाह ।

लिङ्गपुराणे—

चिटभाषणं दृष्टिहासो निर्लज्जत्वं बहिःस्थितिः[2] ।
एतानि पञ्च नारीणां व्यभिचार उदाहृतः ॥

मैथुनञ्चाष्टविधम्—

स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम् ।
सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ॥
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ।

---

(१) चान्द्रमिति काशीस्थपुस्तकपाठः ।
(२) लज्जाविलोपनं इति मैथिलपुस्तकपाठः ।

कृते तु स्मरतो[1]ऽधर्मस्त्रेतायां दर्शनाद् भवेत् ।

द्वापरे स्पर्शनात्प्रोक्तः[2] कलौ सम्पर्कतः क्रमात् ॥

अष्टविधमैथुनमिति कलियुगव्यतिरिक्तविषयं कलियुगे स्मरणादिकं सम्भवत्येव, क्रियानिर्वृत्तिः साक्षात्संसर्गः, स एव हि दोषः । रजोदर्शनाच्छुद्धिः । तदेवाऽऽह—

वामनपुराणे—

स्त्रीणां स्मरणजं पापं मासि मासि रजःस्रुतेः ।

नश्यते [3]हीनसंसर्गाद् गर्भे त्यागोविधीयते ॥ इति—

कूर्मपुराणे—

स्त्रीणामहरहः पापं स्मरणाद् दृष्टितस्तथा ।

नष्टत्वं याति राजेन्द्र मासि मासि रजःस्रवात् ॥

परसंसर्गजोदोषो न शौचत्वमवाप्नुयात् ।

तदपि शौचतां याति गर्भे त्यागोविधीयते ॥

अथ साक्षाद्व्यभिचारः स्त्रीणां यदा सम्भवति पतिः स्वयमेव [4]पश्यति न तु वार्त्तामात्रेण । तदाऽऽह—

कात्यायनः—

स्वानुभूतं सुदृष्टश्चेत् प्रष्टव्यं न तु निश्चयः ।

तथाऽपि यत्नतो रक्षेद् गर्भे त्यागो विधीयते ॥

---

(१) धर्म इति कीतकेचितपुस्तकपाठः ।

(२) धर्म इति कीतकेचितपुस्तकपाठः ।

(३) पुरुषसंगमं इति केचितपुस्तकपाठः ।

(४) स्पर्शति इति केचितपुस्तकपाठः ।

तद्गर्भसम्भवे नारी यदा भर्त्राऽपि त्यक्ता तदा तत्प्रतिग्रहे दोषमाह।

लिङ्गपुराणे—

व्यभिचारे स्वयं दृष्टे त्याजिता या धवादिभिः।

तस्याः प्रतिग्रहस्त्याज्योमुमुक्षैः पापभीरुभिः॥

तथाऽपि दैवात् प्राप्नुयात् सुवर्णं धान्यमेव वा।

प्राजापत्यं चरेत्स्वर्णे तदर्द्धं धान्यसम्भवे।

पादञ्चरेत्ततः पश्चाद् घृततोयादिसम्भवे॥

इति हेमाद्रौ व्यभिचारिणीप्रतिग्रहप्रायश्चित्तम्।

---

## अथ चाण्डालप्रतिग्रहप्रायश्चित्तमाह।

देवीपुराणे—

चाण्डालादेर्द्विजोमोहात् प्रतिगृह्य धनादिकम्।

तेन तत्कर्मक्रियते तत्सर्वं तदवासिदम्॥

भोक्तारोनरकं यान्ति [1]कर्त्ता चाण्डालतां व्रजेत्।

चाण्डालेन कृतं वस्त्रं वर्ज्जयेत् पुण्यकार्य्येषु॥

स्नाने दाने जपे होमे स्वाध्याये पितृतर्पणे।

तस्य अरणमात्रेण तत्सर्वं निष्फलं भवेत्॥

---

(१) दाता इति क्वचित्पुस्तकपाठः।

तदाह—

आपस्तम्बः—

"चाण्डालोपस्पर्शने सम्भाषायां दर्शने च दोषः, तत्र प्रायश्चित्तं अवगाहनमपामुपस्पर्शनं, सम्भाषायां ब्राह्मणसम्भाषा, दर्शने ज्योतिषां दर्शन"मिति ।

चाण्डालान् [1]नैव गृह्णीयाद् विप्रोधर्म्मपरायणः ।
तस्यैव निष्कृतिर्नाऽस्ति चान्द्रायणचतुष्टयात् ॥
सकृत्प्रतिग्रहे तावत् प्रायश्चित्तं विशोधनम् ।
अभ्यासे त्रिगुणं प्रोक्तं तत्समस्तं ततः परम् ॥

इति हेमाद्रौ चाण्डालप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ परिवित्तिपरिवेत्तृप्रतिग्रहप्रायश्चित्तम् ।

मार्कण्डेयपुराणे—

अनूढ़े भ्रातरि ज्येष्ठे यवीयान् परिणयेद्यदि ।
पूर्व्वजः परिवित्तिः स्यात् परिवेत्ता द्वितीयजः ।
परिवित्तस्तु तत्पुत्रो द्वितीयः परिविन्नवान् ॥

---

(१) प्रतिगृह्णीयादिति क्वचित्पुस्तकपाठः ।

कूर्म्मपुराणे—

ज्येष्ठो यद्यङ्गहीनः स्यात् मूकोऽपस्मारवान् यदि ।
तदनुज्ञामवाप्याऽथ तद्वर्षं परिकल्प्य च ॥
स्नातकादि व्रतं कृत्वा कदस्याऽथ विवाह्य च ।
द्वितीयः परिणयेत्तत्र चान्यथा पतितोभवेत् ॥
एवं न शास्त्रदोषः स्याद् यद्दो भवति लौकिकः ।
तौ तत्पुत्रौ तयोर्दाराः पतिताः स्युर्न संशयः ॥
दाने नित्यव्रते काम्ये न कर्मार्हा भवन्ति ते ।
तस्मादेतत् परित्याज्यं दर्शनस्पर्शनं तथा ॥
परिग्रहः परित्याज्यः विप्रैर्धर्मपरायणैः ।
तथापि लोभवान् विप्रः कुर्य्याच्चेत् तत्प्रतिग्रहम् ॥
न तेन शुद्धिमाप्नोति सुराभाण्डोदकं यथा ।
यागार्थं भरणार्थं वा कुरुते यः[1] परिग्रहम् ॥
पराकत्रयमात्रेण स शुध्येत तदन्ततः ।
यागार्थं धनवाहुल्ये तत्तदर्द्धगतं चरेत् ।
पराकस्वल्पमात्रेण धनवस्ते तदर्धतः ॥

इति हेमाद्रौ परिवेत्रादिप्रतिग्रहप्रायश्चित्तम् ।

---

(१) द्विजो बलात् इति श्रीतवेष्टितपुस्तकपाठः ।

# अथ पुस्तकादिप्रतिग्रहप्रायश्चित्तमाह ।

स्कन्दपुराणे—

शास्त्रं पुराणं काव्यञ्च स्मृतिं नाटकमेव वा ।
दद्याद्दै पुण्यकालेषु व्यतीपाते च वैधृतौ ॥
द्विजायाऽध्यात्मविदुषे फलकं ताम्रलेख्यकम् ।
सप्तजन्मसु विद्वान् स्यात् सर्व्वशास्त्रार्थतत्त्ववित् ॥

कूर्मपुराणे—

पुराणं धर्म्मशास्त्रञ्च स्मृतिं काव्यं सनाटकम् ।
पुण्यकालेषु संक्रान्तौ ग्रहणे चन्द्रसूर्य्ययोः ॥
यो दद्याद् विप्रवर्य्याय स भवेत् सर्व्वशास्त्रवित् ।
द्विजोयः प्रतिगृह्णाति द्रव्यलोभात्[1] सरस्वतीम् ॥
सोऽपि जन्मान्तरे राजन् विद्यावान् सम्प्रजायते ।
प्रतिग्रहधनार्थं तु विक्रयित्वाऽऽत्मजीवनम् ॥
कुर्य्याद्यदि स पापात्मा प्राजापत्यत्रयं चरेत् ।
उपोष्य रजनीमेकां पञ्चगव्यं पिबेच्छुचिः ।
अन्यथा दोषमाप्नोति व्रात्योभवति भूतले ॥

इति हेमाद्रौ पुस्तकादिप्रतिग्रहप्रायश्चित्तम् ।

---

(१) लोभेन इति श्रीतर्कचिन्तामणिपुस्तकपाठः ।

## अथ व्रात्यादिभ्यो यज्ञोपवीतादिप्रतिग्रह-
## प्रायश्चित्तमाह ।

ब्रह्माण्डपुराणे—

अनध्याये तु यत्सूत्रं यत्सूत्रं स्त्रिया कृतम् ।
यत्सूत्रं द्रावणभूतं क्रीतं यच्छूद्रसूत्रकम् ॥
व्रात्यादिभिस्तथा दत्तं तत्सूत्रं परिवर्जयेत् ।
संभिन्नं ग्रन्थिसंयुक्तं स्थूलं सूक्ष्मं च गार्हितम् ॥
प्रमाणहीनमधिकं न योज्यं तद्द्विजातिभिः ।
नाभेरूर्ध्वमनायुष्यं नाभ्यधस्तात्तपःक्षयः ॥
तस्मान्नाभिसमं कुर्य्यादुपवीतं विचक्षणः ।
एकाहुतं गार्हपत्यं द्वितीयं दक्षिणाभिधम्[1] ॥
तृतीयं चाऽऽहवनीयं स्याद् वेदिर्देवमयी शुभा ।
ग्रन्थिस्तस्य परं ब्रह्म विदितं विप्रपुङ्गवैः ॥
नित्यनैमित्तिकादीनि कर्म्माणीह समाचरेत ।
दिने दिने क्रतुफलं सम्प्राप्नोति न संशयः ॥
एतद्धर्म्मार्गवर्त्तिभ्यः प्रतिग्राह्य द्विजातयः ।
अयत्नतो तदा[2] कुर्य्युस्तत्तद् भवति[3] निष्फलम् ॥

---

(१) दक्षिणाततम् इति केचित्पुस्तकपाठः ।
(२) यथा इति कतिचित्पुस्तकपाठः ।
(३) आप्नोति इति कतिचित्पुस्तकपाठः ।

पूर्व्वब्रह्मचर्योपेतमुपवीतं द्विजोत्तमः ।
धृत्वा नित्यं यदा कुर्य्यात् तदाऽऽनन्त्याय कल्पते ॥
पूर्व्वोक्तेभ्यश्च व्रात्येभ्यः प्रतिगृह्योपवीतकम् ।
कुर्य्याद्यदि द्विजः कर्म्म महादोषमवाप्नुयात् ॥
तद्दोषोपशमायाऽलं प्राजापत्यं समाचरेत् ।
अन्यद् धृत्वा सुखी भूयाद् अन्यथा दुःखवान् भवेत् ॥

इति हेमाद्रौ उपवीतप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ नटविटगायकेभ्यः प्रतिग्रहप्रायश्चित्तमाह ।

मार्कण्डेयपुराणे—

नटश्च विटवृत्तिश्च गायकः परिहासकः ।
चारणाश्च पठंते न कर्म्मार्हाः कलौ युगे ॥
देवागारे राजगृहे वृत्तिं प्राप्य दिने दिने ।
कुमारीं भगिनीं चाऽन्यां नर्त्तयेद्यः स नाटकः ॥
गेहधर्म्मं परित्यज्य नित्यं नैमित्तिकं तथा ।
विहरेत्[1] परनारीभिर्यः पुमान् स विटः स्मृतः[2] ॥

---

(१) विहरेच्च इति केचित्पुस्तकपाठः ।

(२) परनारीभिः स पुमान् विटवृत्तिमान् इति कतिपयपुस्तकपाठः ।

हरीश्वरकथां त्यक्त्वा प्रबन्धान् [1]कविकल्पितान् ।
पठन् योवर्त्तयेन्नित्यं स गायक इतीरितः ॥
मातरं भगिनीं श्वश्रूं श्वशुरं पितरं गुरून् ।
देवं वह्निं तथा धेनुं यः सदा परिहासयेत् ॥
यं सदा वर्ज्जयन्तीह साधवः साधुवत्सलाः ।
परिहासजनः सोऽपि तं कदा नाऽवलोकयेत् ॥
अवाच्यं वा सुवाच्यं वा सदा दुर्भाषणं वदन् ।
सर्व्वान् साधून् समालोक्य चाटवाक्यैर्विहासयन् ॥
यः[2] सर्व्वधर्म्मसन्त्यागी स चार्व्वाक इतीरितः ।
एतेभ्यो यदि योविप्रो गृह्णीयाद्[3]धनमुत्तमम् ॥
स कुर्य्याद्[4] देहशुद्ध्यर्थं प्राजापत्यं विशोधनम् ।
उपोष्य रजनीमेकां पञ्चगव्यं पिबेत्ततः ।
प्रायश्चित्तमिदं प्रोक्तं सर्व्वपापप्रणाशनम् ॥

इति हेमाद्रौ नटविटगायकप्रतिग्रहप्रायश्चित्तम् ।

---

(१) पुरुषकल्पितान् इति श्रीतवेष्टितपुस्तकपाठः ।
(२) स इति वेष्टितपुस्तकपाठः ।
(३) गृह्णीत्वा इति वेष्टितपुस्तकपाठः ।
(४) कुर्व्वीत इति श्रीतवेष्टितपुस्तकपाठः ।

## अथाऽऽभीरप्रतिग्रहप्रायश्चित्तमाह ।

सूतप्रोक्ते—

ब्राह्मणः प्रतिगृह्णीयात् सर्व्वत्राऽऽभीरवर्ज्जितम ।
तस्य वै निष्कृतिर्नाऽस्ति आभीरेभ्यः[1] प्रतिग्रहे ॥

स्कन्दपुराणे—

भाषान्तरं न जानन्ति स्वभाषायां न संवदेत् ।
असौ विप्रस्त्वयं वेद इदं पापमिदं फलम् ॥
कुटीरे वर्त्तुलाकारे सदा धेनुप्रपोषकाः ।
तत्क्षीरादीनि विक्रीय जीवयन्ति सदा भुवि ॥
स आभीर इतिख्यातः सर्व्वकर्म्मबहिष्कृतः ।
तस्माद्धेनुं वा धान्यं वा पुण्यकाले उपागते ॥
प्रतिगृह्य द्विजोलोभात् पञ्चाब्दरकमश्नुते ।
तद्दोषपरिहारार्थं प्राजापत्यद्वयं चरेत् ।
अन्यथा दोषमाप्नोति न तस्मात् मुच्यतेऽधुना ॥

इति हेमाद्रौ आभीरप्रतिग्रहप्रायश्चित्तम् ।

---

(1) आभीराणां इति केचित्पुस्तकपाठः ।

## अथ चातुर्म्मास्यव्रतोद्यापनेषु प्रतिग्रह-प्रायश्चित्तमाह ।

मार्कण्डेयपुराणे—

वर्ज्जंञ्च जीरकताम्बूलं गोधूलिस्नानमाचरेत् ।
गोमूत्रोदकसंस्नानं सन्ध्यायां मौनमेव च ॥
शिवविष्ण्वोश्च स्मरणं पुराणपठनं तथा ।
पुराणश्रवणं शास्त्रपठनं तुलसीदलैः ॥
विष्णुपूजां तथाशम्भोर्विल्वपत्रैश्च नामभिः ।
अधःशय्यां पत्रभुक्तिं ब्रह्मसूत्रं सचन्दनम् ॥
तुलसीदलदानञ्च दूर्व्वाधारणमेव च ।
विष्णुक्रान्तं तथा धार्य्यं भानुचन्दनमेव च ॥
श्रीमूर्त्तिदानं द्वादश्यां सूर्य्यार्घ्यं प्रत्यहं तथा ।
सृष्टान्नभोजनं विप्र प्रातःस्नानं तथैव च ॥
सहस्रनामपठनं विष्णोर्वा शङ्करस्य च ।
अखण्डदीपदानञ्च शाकत्यागं चरेत्तथा[1] ॥
श्रावणे वर्ज्जयेत् शाकं दधि भाद्रपदे त्यजेत् ।
आश्विने वर्ज्जयेत् क्षीरं कार्त्तिके द्विदलं त्यजेत् ॥
ताम्बूलं पल्लवं पुष्पं फलं कोशं च जीरकम् ।
शिम्बुं वीजञ्च निर्य्यासं दशधाशाकमुच्यते ॥

---

(१) तथैव च इति श्रीतर्कचिन्तामणिपाठः ।

धात्रीफलं सदा ग्राह्यं विष्णुप्रियकरं महत् ।
शाकत्यागस्तथा विष्णोस्त्रिदिने पाप[1]वर्ज्जिते ॥
क्षीराब्धिपूजा राजेन्द्र दिवानिद्राविवर्ज्जनम् ।
पञ्चगव्यप्राशनञ्च द्वादशद्वादशीदिने ॥
तथा तैः स्नपनं शम्भोर्हरेर्वा प्रत्यहं व्रतम्[2] ।
रुद्रवर्त्तीव्रतं तद्वद् गोष्ठे वृन्दावनेऽपि वा ॥
प्रतिमासं चतुर्थ्यान्तु गणनाथस्य पूजनम् ।
प्रतिपक्षे तृतीयायां गौरीपूजामहाव्रतम् ।
द्वादश्यां प्रत्यहं वाऽपि गोदानं पापनाशनम् ॥

एतानि चातुर्म्मास्यव्रतानि ।

एतेषां च व्रतानां च महत्सूद्यापनेषु यः ।
प्रगृह्णाति द्विजोलोभात् तत्तद्दानं सुखामये ॥
तत्तद्दानफलं भोक्तुं यमलोकमवाप्नुयात् ।
एतत्पापविशुद्ध्यर्थं प्रायश्चित्तमुदाहृतम् ॥
गवां प्रतिग्रहे चान्द्रं सुवर्णे तप्तमेव च ।
प्राजापत्यं तथा वस्त्रे चक्रे गव्यं पिबेत्ततः ॥

---

(१) निर्ज्जिते इति केचित्पुस्तकपाठः ।
(२) व्रती इति केचित्पुस्तकपाठः ।

एतेषां द्रव्यबाहुल्ये पूर्वं प्रायश्चित्तम् यदुक्तं, अल्पे तदर्द्धं, अत्यन्ताल्पे पादः, अतोऽन्यूनं वा ग्राह्यम्।

इति हेमाद्रौ चातुर्म्मास्यव्रतोद्यापनेषु प्रतिग्रहप्रायश्चित्तम्।

---

## अथ कार्त्तिकमासव्रतोद्यापने प्रतिग्रहे प्रायश्चित्तमाह।

स्कान्दपुराणे—

नवलक्षार्च्चनं शम्भोर्विष्णोर्वा शङ्करस्य च।
[1]पूर्णिमायां वृषत्यागो नक्तव्रतमनुत्तमम्॥
सर्व्वशाकपरित्यागो दम्पत्योर्भोजनं तथा।
आकाशदीपं द्वारि च शिखरे दीपमेव च॥
अखण्डदीपं कार्त्तिक्यां धात्रीपूजनमेव च।
धात्रीदानं तथा कुर्य्यात् [2]न तुलस्यर्च्चनं तथा॥
प्रातःस्नानं मासपूर्णं शिवविष्ण्वोः प्रपूजनम्।
ताम्बूलदानं कार्त्तिक्यां फलदानं महाफलम्॥
पुराणपठनञ्चैव पुराणश्रवणं तथा।
वेदपारायणञ्चैव धर्म्मशास्त्रं तथैव च॥

---

(१) तत् पौर्णम्यां इति श्रोतवेष्टितपुस्तकपाठः।
(२) विप्रैस्तुलस्यर्च्चनमेव च इति वेष्टितपुस्तकपाठः।

प्रत्यहं सायमाकाशदीपदानं पापनाशनम् ।
पञ्चगव्याभिषेकञ्च पञ्चगव्यस्य भक्षणम् ॥
स्मरणं कीर्त्तनं शम्भोर्हरेर्नामसहस्रकम् ।
प्रत्यहं शाकदानञ्च ब्रह्मपर्णेषु भोजनम् ॥
पाषण्डजनसंसर्गं पाषण्डालापनं तथा ।
वर्ज्जयेत् सर्व्वदा विप्रः कार्त्तिके तु विशेषतः ॥
परान्नं परशय्याञ्च परवस्त्रं पराङ्गनाम् ।
सर्व्वदा वर्ज्जयेत् प्राज्ञः कार्त्तिके तु विशेषतः ॥
कार्त्तिके वर्ज्जयेत् क्षौद्रं मृषावादं विवर्ज्जयेत् ।
सालग्रामशिलावारिस्नानं पापप्रणाशनम् ॥
हविष्याशी[1] पत्रभोजी चान्द्रायणफलं लभेत् ।
अव्रतेन [2]चिपेद्यस्तु मासं दामोदरप्रियम् ॥
पुमान् मोहपरीतात्मा सूकरेष्वभिजायते ।
न कार्त्तिकसमोमासो न देवः केशवात्परः ॥
तावुभौ यदि सन्त्यज्य वर्त्तते स तु पातकी[3] ।
गोपीचन्दनदानञ्च तुलसीदानमेव च ।
प्रत्यहं धान्यदानञ्च शुचित्वं कार्त्तिके[4] सदा ॥

---

(१) हविष्यान्नमिति वेष्टितपुस्तकपाठः ।
(२) अपेदिति वेष्टितपुस्तकपाठः ।
(३) अन्यत्र पापधीरिति मोतवेष्टितपुस्तकपाठः ।
(४) सदा इति वेष्टितपुस्तकपाठः ।

एतानि कार्त्तिकव्रतानि ।

उद्यापनेषु सर्व्वेषां व्रतानां पुण्यकर्मसु ।
प्रतिगृह्य द्विजोयस्तु वर्त्तयेदात्मपोषणम् ॥
महादोषमवाप्नोति यमलोके भयङ्करे ।
प्रायश्चित्तमिदं तस्य दर्शितं विप्रपुङ्गवैः ॥
दीपप्रतिग्रहे चान्द्रं पराकं स्वर्णसंग्रहे ।
वस्त्रे कांस्ये तथा ताम्रे प्राजापत्यं विशोधनम् ।
धने जले च स्पृष्टे च तदर्द्धं परिकीर्त्तितम् ॥

द्रव्याधिक्येऽल्पे वा पूर्व्ववत्तारतम्येन द्रष्टव्यम्

इति हेमाद्रौ कार्त्तिकमासव्रतोद्यापनेषु प्रतिग्रहप्रायश्चित्तम् ।

---

## अथ माघमासव्रतोद्यापनेषु प्रतिग्रहप्रायश्चित्तमाह ।

लिङ्गपुराणे—

तिलहोमश्च तद्दानं तत्स्नानं तर्पणं तथा ।
तन्दुलिश्च तथाऽऽदानं षड्विधं पापनाशनम् ॥
मार्त्तण्डोदयवेलायां स्नानं सर्व्वा(१)घनाशनम् ।
पुराणपठनञ्चैव पुराणश्रवणं तथा ॥

---

(१) सर्व्वकृच्छ्रनाशनमिति केचित्पुस्तकपाठः ।

वदरीफलदानञ्च तिलपिष्टं महाफलम् ।
तथाऽन्यफलदानञ्च पूजनं शङ्करे हरौ ॥
सालग्रामशिलातीर्थं प्रत्यहं धारयेन्मुदा ।
सूर्य्यार्घ्यंचन्दनञ्चैव तुलसीपूजनं तथा ॥
सालग्रामशिलादानं मासमेकं निरन्तरम् ।
चन्दनं विप्रमुख्यानां तथा ब्राह्मणभोजनम् ॥
गोदानं प्रत्यहं विष्णोः प्रीतये पापनाशनम् ।
तिलतण्डुलदानञ्च गुड़दानमतःपरम् ॥
सहस्रनामपठनं शिवविष्णोर्निरन्तरम् ।
वस्त्रदानं तथा माघे जम्बीरफलमेव च ॥
गोपीचन्दनदानञ्च भ्रातॄणां गन्धपूजनम् ।
पुस्तकस्य प्रदानञ्च पुस्तकाराधनं तथा ॥
विदुषः पूजनं पापनाशनं पुण्यदायकम् ।
चूतपल्लवपुष्पैश्च पूजनं प्रत्यहं हरेः ॥
सुवासिनीस्तथा माघे भोजयेद्विधिवन्मुदा ।
अखण्डदीपदानञ्च स्वगृहे देवसन्निधौ ॥
देवालये च राजेन्द्र दीपदानं सुपुण्यदम् ।
चूतकोशप्रदानञ्च तथा लवणमेव च ॥
ताम्बूलदानं विप्राणामेकं वा बहुशोऽपि वा ।
मिष्टान्नदानं विप्राणां द्वयोरेकस्य वाऽपि च[1] ॥

---

(1) विप्रयोरेकस्यैव वा इति केषुचित्पुस्तकपाठः ।

तथा च किंशुकैः पुष्पैरुभयोरेव पूजनम्।
किंशुकैर्लिङ्गपूजा च तथा दानं विशेषतः॥

इति माघमासव्रतानि।

व्रतेष्वेतेषु सर्व्वेषु प्रतिगृह्णाति यो द्विजः[1]।
स गच्छेद् यमसान्निध्यं महाभीतिप्रदं नृणाम्॥
प्रायश्चित्तमिदं राजन् सर्व्वपापप्रणाशनम्।
धेनुप्रतिग्रहे विप्रस्तप्तकृच्छ्रत्रयं चरेत्॥
सुवर्णप्रतिमायाञ्च प्राजापत्यद्वयं चरेत्।
ताम्रकांस्यतिलानाञ्च विकारे कृच्छ्रमाचरेत्॥
धान्ये जले च वस्त्रे च तदर्द्धं कृच्छ्रमाचरेत्।

एतेषां व्रतानामुद्यापनेषु प्रतिग्रहे प्रधानत्यागसाधनाभावे प्रायश्चित्तं वेदितव्यं नोचेत्प्रायश्चित्तमेव नास्ति।

इति हेमाद्रौ माघमासव्रतोद्यापनप्रतिग्रहप्रायश्चित्तम्।

---

(१) विप्रो यः प्रतिगृह्णाति च इति क्षीतवेश्चितपुस्तकपाठः।

## अथ वैशाखमासव्रतप्रतिग्रहे प्रायश्चित्तमाह।

मार्कण्डेयपुराणे—

प्रवालशय्या पुष्पाणामुशीराणां सुरेश्वर।
पुष्पप्रवालव्यजनं व्यजनं वेणुसम्भवम्॥
छत्रं पुष्पं तथा गन्धं पादुकाद्वयमेव वा।
दध्यन्नं फलसंयुक्तं तथा चैव गुड़ोदकम्॥
तथैव चम्पकाकोषमुशीरं शर्करां तथा।
लवङ्गमेलकञ्चैव जातीकुसुममेव च॥
कर्पूरशीतलं तोयं सैकतं जलसेकजम्।
हिमाम्बुदानं पुष्पाणां द्विपटीं कुसुमाचिताम्॥
तक्रं जम्बीरनीरेण युक्तं लवणसंयुतम्।
प्रातःस्नानञ्च वैशाखे तथा माधवपूजनम्॥
वसन्तमाधवप्रीत्यै दद्युरेतानि पार्थिव।
एतेषां दानमात्रेण नरोयातीन्द्रसम्पदम्॥
ततस्तु भुवमासाद्य मण्डलाधिपतिर्भवेत्।
वैशाखे प्रत्यहं स्नात्वा द्वादश्यां पूर्णिमादिने॥
सर्व्वपापविमुक्त्यर्थं कुर्य्याद्दानञ्च पर्व्वसु।
व्रतस्योद्यापनं कुर्य्याद् व्रतस्य परिपूर्त्तये॥
उद्यापनेषु सर्व्वेषु यः कुर्य्यात् तत्प्रतिग्रहम्।
स सर्व्वनरकान् भुक्त्वा पिकोभूयात्ततः परम्॥

धेनुप्रतिग्रहे राजन् तत्प्रधानं परित्यजेत्।
कुर्य्याचान्द्रायणं सम्यक् शय्यायां द्विगुणं स्मृतम्॥
पुष्पप्रवालोदरशय्यास्वेवम्।
सुवर्णे राजते धान्ये पूर्व्ववत्सुसमाहितः।
ततोऽर्द्धार्द्धप्रमाणेन प्रायश्चित्तं विशोधनम्॥
प्रायश्चित्तमकृत्वा तु न शुद्धः पूर्व्वजोऽन्यतः।
तस्मात् प्रतिग्रहस्त्याज्यः सात्त्विकेषु व्रतेष्वपि॥

इति हेमाद्रौ वैशाखमासव्रतप्रतिग्रहे प्रायश्चित्तम्।

---

## अथ नानाविधफलप्रतिग्रहप्रायश्चित्तमाह।

मार्कण्डेयपुराणे—

कदली मातुलङ्गञ्च नारिकेलफलं तथा।
खर्ज्जूरं पनसञ्चैव द्राक्षाफलमनुत्तमम्॥
चूतं कपित्थं जम्बीरं जम्बूदाडिममेव च।
क्षीरपूर्व्वं फलञ्चैव एरण्डकफलं तथा॥
फलानि यानि लोकेऽस्मिन् नाना नामानि पार्थिव।
यो दद्यात्तानि सर्व्वाणि रामीशस्य फलाप्तये॥

ब्रह्महत्यादिपापानां नाशनार्थं विनाश्यति[1] ।
वस्त्रेण वेष्टितं राजन् दक्षिणाभिर्यथेच्छया ॥
हेमन्ते शैशिरे वाऽपि सर्व्वपापैः प्रमुच्यते ।
तत्फलानि द्विजोयस्तु प्रतिगृह्य धनातुरः ॥
आधानं वा तदा कार्य्यं द्वयं कुर्य्याद्विशेषतः[2] ।
ततोदोषात् प्रमुच्येत नाऽन्यथा पापमश्नुते ॥
तत्कर्म्मफलनाशश्च फलदानं महत्तरम् ।
तस्मात्पापविशुद्ध्यर्थं प्रायश्चित्तमुदाहृतम् ॥
राशीभूतं फलं दिव्यं गृहीत्वा द्विजनायकः ।
अकृत्वा निष्कृतिं तस्य आधानं धर्म्मसाधनम् ॥
प्रधानं सम्परित्यज्य विप्रानुज्ञामवाप्य च ।
केशानां वपनं कृत्वा षडब्दं कृच्छ्रमाचरेत् ॥
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ।
नाऽन्यथा शुद्धिमाप्नोति फलवाहुल्यसंग्रहे ॥
केचिदिच्छन्ति संस्कारं नित्यकर्म्मविनाशनात् ।
यदाऽभूद्राशिसंपाद्यः फलानां फलनाशनः ॥
नित्यकर्म्माणि नश्यन्ति तदा फलसुखेच्छया ।
शास्त्रोपदेशः कर्त्तव्योगायत्रीदानमेव च ॥

एतदल्पफलप्रतिग्रहविषये न, किन्तु राशीकृतनानाफलप्रतिग्रह-कर्त्तुः, ब्रह्महत्यादिपापविनाशनार्थं दानं, तस्य पापान्यशेषाणि

(१) द्विजर्षभ इति श्रौतकेचितपुस्तकपाठः ।
(२) चिनीर्यंत इति केचितपुस्तकपाठः ।

ब्राह्मणमाविशन्ति ततः पुनः संस्कारः प्रायश्चित्तबाहुल्यं च, एक-द्रव्यप्रतिग्रहे त्वेवं प्राजापत्यकृच्छ्रमात्रं राशिप्रतिग्रहे प्रतिपदोक्त-प्रायश्चित्ताद्यसम्भवेऽप्युभयमनुष्ठेयम्।

इति हेमाद्रौ रात्र्युक्तनानाफलप्रतिग्रहप्रायश्चित्तम्।

---

## अथ मकरसंक्रमणव्रतेषु प्रतिग्रहप्रायश्चित्तमाह।

मार्कण्डेयपुराणे—

मुद्गदीपं तिलैर्दीपं[1] सधान्यं माषदीपकम्।
तथाच लावणं दीपं महादीपमनन्तरम्॥
शृङ्गिबेरं तथा कन्दं हरिद्रादानमेव च।
अन्यानि सन्ति दानानि कानिचित् प्रथितानि च॥
एषु व्रतेषु पूर्वेषु व्रतोद्यापनमाचरेत्।
मोक्षदीपं महापुण्यं नरकोत्तारणं नृणाम्॥
दीपाहृते यथा राजन् परिपाका भवन्त्यधः।
नावन्नधान्यमाषाणां[2] दानं दद्यात द्विजातये॥

---

(१) मुद्गदीपतिलानाञ्च इति श्रीतर्कंचिक्तपुस्तकपाठः।

(२) माषाणि इति जोंकतपुस्तकपाठः।

पारणां तत्र कुर्व्वीत व्रती व्रतफलाप्तये ।
तत्पात्रं यो द्विजोमोहा[1]द्द्रव्यधान्यसमन्वितम् ॥
उद्यापने प्रगृह्णीयाद् द्रव्यं लोके सुखाप्तये ।
तस्यैव यमलोकः स्याद् यावदाभूतसंप्लवम् ॥
दीपपात्राणि यावन्ति सवर्त्तीनि सधान्यकम् ।
उद्यापने तु तावान् स्याद् यमलोकश्च शाश्वतः ॥

लिङ्गपुराणे—

महादीपावसानेषु तत्पात्रं यो द्विजोवहेत् ।
तस्यैव यमलोकः स्यात् शाश्वतः पुष्पनाशनः ॥
महादीपफलं यावत् तावद्युगसहस्रकम ।
यमलोकमवाप्नोति पुनरावृत्तिदुर्लभम् ॥

भविष्योत्तरे—

योद्विजोदेवतागारे महादीपव्रतेषु च ।
तत्पात्राणि प्रगृह्णीयाद् वृथा यागादिकं विना ॥
तस्यैव नरके वासो यावच्चन्द्रदिवाकरौ ।
पश्चात्तापसमायुक्तः प्रायश्चित्तं करोम्यहम् ॥
इति सङ्कल्प्य मनसा प्रायश्चित्तं समाचरेत् ।
गोधूलिरजसा स्नायात् तदात्मा ऽघमर्षणम् ॥
ब्राह्मणैरभ्यनुज्ञातस्तमत्रकृच्छ्रचतुष्टयम् ।
कृत्वा शुद्धिमवाप्नोति चान्द्रायणमथाऽऽचरेत् ॥

---

(१) हृत्वा इति श्रौतपुस्तकपाठः ।

(२) यदा मोहात् प्रतिगृह्य इति श्रौतवेङ्कितपुस्तकपाठः ।

गुडदीपतिलागाव एकं तप्तं समाचरेत्।
तिलदीपे पराकः स्यात्लवणे चान्द्रभक्षणम्।
प्राजापत्यं धान्यदीपे पञ्चगव्यं समन्ततः॥
सर्व्वदीपप्रतिग्रहे पञ्चगव्यप्राशनं प्रायश्चित्तानन्तरं कर्त्तव्यम्।

इति हेमाद्रौ मकारसंक्रमणे प्रतिग्रहप्रायश्चित्तम्।

---

## अथ कारणं विना स्वसतीत्यागिनः प्रायश्चित्तमाह।

लिङ्गपुराणे—

स्वसतीं यो द्विजोमोहात् त्यजेच्चेत्कारणं विना।
तस्यैव निष्कृतिर्नास्ति नपुंसकभवाद्दते॥

कूर्म्मपुराणे—

यस्त्यजेत्कुलजां साध्वीं लोकवार्त्तापरायणः।
तस्य वै(१) निष्कृतिर्नास्ति नपुंसकभवाद्दते॥

सतीत्यागे हेतुमाह—

अप्रजां दशमे वर्षे स्त्रीप्रजां द्वादशे तथा।
मृतप्रजां पञ्चदशे सद्यस्त्वप्रियवादिनीम्॥

---

(१) न तस्य इति केचित्पुस्तकपाठः।

अप्रियवादः साक्षात्, व्यभिचारः स्वदृष्टः । अप्रियाणि तु बहूनि—प्रत्यहं निष्ठुरवचनं नाऽभ्युत्थानं न च पादप्रक्षालनादिकं सर्व्वदा शठता दारिद्र्यानागमनिन्दादौर्मनस्यपूर्वं भर्त्तरि न प्रीतिः एवमप्रियवचनानि च, तेषु सत्सु न सतीत्यागः कलियुगात्, कलियुगे-व्यभिचारः साक्षात् स्वयमेवदृष्टश्चेत् तदा त्याज्या । तदाऽह—

गौतमः—

स्वानुभूतं सुदृष्टश्चेत् प्रष्टव्यं न तु निग्रहः ।
न प्रमाणं लोकवार्त्ता जनवादोमृषा क्वचित् ॥

इति हेमाद्रौ कारणं विना स्वसतीत्यागप्रायश्चित्तम् ।

---

## अतो वार्त्ता श्रवणमात्रेण न त्याज्या वृथा त्यागे प्रायश्चित्तमाह ।

मार्कण्डेयः,—

दारव्यतिक्रमी लोके निष्कारणतया द्विजः ।
खराजिनं वहिर्लोम धृत्वा भिक्षाटनं चरेत् ॥
दारसंत्यागिनो भिक्षामिति वार्त्तां वदन् सदा ।
सप्तागाराणि भिक्षार्थं पर्य्यटेत्तद्दतु[1]त्रयम् ॥
ततः शुद्धिमवाप्नोति नाऽन्यथा रघुनन्दन ।

(१) वर्षमिति केचित्पुस्तकपाठः ।

भर्तृसंत्यागेन महापातकेन विना स्त्रीणामप्येवं प्रायश्चित्तं षण्मासात्ततः शुद्धिमवाप्नोति। महापातकोपेतस्तु भर्त्ता त्याज्यएव नाऽन्यथा[1] तदाह,—

भागवते,—

दुर्वृत्तो वा जडत्तो वा रोगी शून्योऽधनोऽपिवा।
स्त्रीभिः पतिर्न सन्त्याज्यो लोकेप्सुभिरपातकी॥

पातकं ब्रह्महत्यादिकं, व्याभिचारादिदोषान्[2] दृष्ट्वा तु न त्याज्यः तदाह,—

आपस्तम्बः,—

दारपरित्यागी खराजिनं बहिर्लोम परिधाय दारव्यति क्रमिणे भिक्षामिति सप्तागाराणि चरेत्। सा वृत्तिः षण्मासान् स्त्रियाश्च भर्तृव्यतिक्रमे कृच्छ्रद्वादशरात्राभ्यासस्तावत्कालमिति अतो निष्कारणात् पत्नीत्यागो दोषहेतुः।

इति हेमाद्रौ वार्त्ताश्रवणमात्रेण न त्याज्या वृथात्यागे प्रायश्चित्तम्।

---

(१) नाऽन्यत्र इति श्रीतवेष्टितपुस्तकपाठः।

(२) गुणान् इति वेष्टितपुस्तकपाठः।

## अथाऽश्वप्रतिग्रहप्रायश्चित्तमाह।

मार्कण्डेयपुराणे,—

सोमसूर्य्यग्रहे वाऽपि व्यतीपाते च वैधृतौ।
संक्रमे विषुवे चैव मन्वादिषु युगादिषु॥
अश्वप्रतिग्रहे राजन् निष्कारणतया द्विजः।
यमलोकमुपागम्य भुक्त्वा तत्रैव वेदनाः॥
पुनर्भवमुपागम्य पुंस्त्व[1]मुक्तो हरिर्भवेत्।

लिङ्गपुराणे,—

अश्वप्रतिग्रहे विप्रः पुण्यकालेषु पर्व्वसु।
कारणेन विना राम यमलोकमुपागतः॥
पश्चाद् भवति भूलोके मण्डुकः पुच्छसंयुतः।
स चेद्विक्रयमापन्नः पातकाच्च विमुच्यते॥

अश्वविक्रये दोषमाह

कूर्म्मपुराणे—

मेरुमन्दरपापानि सुबहूनि महान्ति च।
वज्रजापी हरेत्तानि न कन्याहयविक्रयी॥
हृत्वाऽश्वं विक्रयेद्यस्तु वृथाभोगेच्छया नृप।
उभयोः सम्भवे तात षडब्दं कृच्छ्रमाचरेत्॥
प्रतिग्रहे तदर्द्धं स्याद् विक्रये पूर्णमाचरेत्।

---

(1) पुच्छयुक्त इति कौतवेचितपुस्तकपाठः।

गारुड़पुराणे—

पापानि सन्ति यानीह तावन्ति भुवि पार्थिव।
वद्रथापी हरेत्तानि न कन्याहयविक्रयी॥
तथाऽश्वं प्रतिगृह्याऽऽदौ विक्रीणाति द्विजो यदि[1]।
तयोः पापविशुद्ध्यर्थं षडब्दं कृच्छ्रमाचरेत्॥
नो चेत्तदर्द्धं कुर्व्वीत सम्भवे पूर्णमाचरेत्।
अश्वविक्रयिणः पापं देहमाहत्य तिष्ठति॥
प्रायश्चित्तविशुद्धात्मा तत्पापान्मुच्यते ध्रुवम्[2]।

इति हेमाद्रौ अश्वप्रतिग्रहप्रायश्चित्तम्।

---

## अथ महिषीप्रतिग्रहप्रायश्चित्तमाह।

लिङ्गपुराणे—

महिषीं यस्तु गृह्णाति[3] कुटुम्बभरणाय वै।
पुण्यकालेषु संक्रान्तौ व्यतीपाते च वैधृतौ॥

---

(१) द्विजो विक्रीय तं पुनः इति मौतकेचितपुस्तकपाठः।
(२) मुच्यतेऽधुना इति केचितपुस्तकपाठः।
(३) यो विप्रो महिषीं हत्वा इति मौतकेचितपुस्तकपाठः।

स याति नरकं घोरं कालसूत्रं सुदारुणम् ।
पश्चाद्भवति पापात्मा वायसः कृष्णवर्णवान् ॥

गारुडपुराणे—

महिषीं यस्तु गृह्णाति द्विजोमहति सद्भुमे ।
स याति नरकं घोरमनुभूय महद्भयम् ॥
पश्चाद्दांचो भवेत् पापी चौरत्वीभात् प्रतिग्रहे ।
तस्मादेतत् परित्याज्यं महिषीग्रहणं द्विजैः ॥
प्रायश्चित्तेन पूतात्मा तरेद्दोषमिमं जनः ।

तत्प्रतिग्रहे प्रायश्चित्तमाह—

सौवर्णमहिषीमात्मभोगार्थं प्रतिगृह्य च ।
तस्य पापस्य शुद्ध्यर्थं पराकं कृच्छ्रमाचरेत् ॥
विक्रये द्विगुणं कृत्वा तस्मात् पापात् प्रमुच्यते ।
पञ्चगव्यं पिबेत् पश्चात् तत्तन्मन्त्रपुरःसरम् ॥

इति हेमाद्रौ महिषीप्रतिग्रहप्रायश्चित्तम् ।

## अथ सौम्यधेनुप्रतिग्रहप्रायश्चित्तमाह ।

कूर्म्मपुराणे—

धेनुं यः [1]प्रतिगृह्णाति निमित्तैर्बहुभिर्विना ।
पुण्यकाले पुण्यतीर्थे वस्त्रादिभिरलङ्कृताम् ॥
सवत्सां दोहसंयुक्तां मुक्ताहारोपशोभिताम् ।
ताम्रपृष्ठीं स्वर्णशृङ्गीं स्वर्णघण्टोपशोभिताम ।
सुभूषां साधुवृत्ताय धेनुं दाता सुखाप्तये ।
महापापफलं भुक्त्वा नरकायोपपद्यते ॥
तस्माद्धेनुस्तु न ग्राह्या द्विजैरध्यात्मवेदिभिः ।

लिङ्गपुराणे,—

पुण्यकालेषु यो धेनुं समभ्यर्च्य द्विजातये ।
दद्यादीश्वरतुष्ट्यर्थं स वै नारायणः स्मृतः ॥
धेनवो ब्रह्मणा सृष्टा यज्ञार्थे यागसाधनाः ।
महापातकहारिण्यः पुण्यकर्म्मफलप्रदाः ॥
विप्राधाना: सदा सर्व्वा धेनवोलोकपूजिताः ।
ताः [2]प्रगृह्णाति योविप्रो द्रव्यार्थी पापसंग्रही ॥
नरके नियतिस्तस्य धेनुरोमाणि सन्ति हि ।

अतः प्रायश्चित्तमाह—

---

(१) पूर्व्वंजो दृत्वा इति श्रौतवैर्षितपुस्तकपाठः ।
(२) प्रवश्य द्विजो वस्तु इति वैर्षितपुस्तकपाठः ।

नागरखण्डे—

धेनुप्रतिग्रहीता यः पुण्यकालेषु पर्व्वसु ।
होमार्थमभिषेकार्थं न तेन स ह दोषभाक् ॥
उभयोरप्यभावे च प्राजापत्यत्रयं चरेत् ।
उभयोर्यदि संप्राप्तिः पञ्चगव्यं पिबेत्ततः ॥
ततः शुद्धिमवाप्नोति नाऽन्यथा[1] रघुनन्दन ।

उभयमुखीधेनुप्रतिग्रहवत् दुष्टप्रतिग्रहप्रायश्चित्तमुक्तं अन्यत्र च प्रायश्चित्तबाहुल्यं दोषाधिक्यात् ।

इति हेमाद्रौ सौम्यधेनुप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ सन्न्यासिनः प्रतिग्रहप्रायश्चित्तमाह ।

स्कन्दपुराणे नागरखण्डे—

सर्व्वसङ्गविहीनस्य धर्म्मार्थत्यागिनोयतेः ।
परब्रह्मणि सक्तस्य निस्पृहस्येह वस्तुषु ॥
तस्य प्रतिग्रहं यस्तु द्विजोलोभपरायणः ।
[2]कुर्य्यात् तस्माद्वाऽप्याजीवेत् स वृथा ब्राह्मणः स्मृतः ॥

---

(१) अन्यत्र इति श्रीतर्कभेचितपुस्तकपाठः ।
(२) ज्ञात्वा इति श्रीतर्कवेचितपुस्तकपाठः ।

महाराजविजये—

परब्रह्मणि निष्ठस्य सर्व्ववस्तुष्वसङ्गिनः ।
सर्व्वसङ्गविहीनस्य धर्म्मार्थत्यागिनोयतः ॥
शुश्रूषयाऽपि राजेन्द्र सुवार्त्ताभिर्द्विजोयदि ।
अन्नमात्रं [1]प्रगृह्णाति न तस्येह परा गतिः ।
प्रतिगृह्य यदा जीवेत् स्याद् वृथा जन्म तस्य हि ॥

महाभारते—

अन्नं वा शाकमात्रं वा रूपकं वस्त्रमेव वा ।
प्रगृह्णाति द्विजोयस्तु स पापी नरकं व्रजेत् ॥
तस्य दोषस्य नाशार्थं प्राजापत्यं तु रूप्यके ।
अतः परं तु चान्द्रं स्याद् अन्नमात्रे ह्युपोषणम् ।
परेद्युः पञ्चगव्यस्य पीत्वा शुद्धिमवाप्नुयात् ॥

स्त्रीणामप्येवम्—

इति हेमाद्रौ सन्न्यासिनः प्रतिग्रहप्रायश्चित्तम् ।

---

(१) रूपकं वा इति केचित्पुस्तकपाठः ।

अथ पतितस्य यतेः प्रतिग्रहप्रायश्चित्तमाह ।

देवलः—

स्नानादिनित्यकर्म्माणि ब्रह्मविद्यामथापि वा ।
दण्डादीन् वा परित्यज्य प्रवर्त्तेत यदा यतिः ॥
नानागृहेषु भिक्षार्थमव्यवहारिषु वत्सलः ।
ग्रामार्थं शिष्यरक्षार्थं धनार्ज्जनपरायणः ॥
[1]परिव्राट् पतितः स स्यात् न तं सम्भाषयेत् क्वचित् ।
नमस्कारं न कुर्व्वीत यदि कुर्य्यात् स पातकी ॥

गौतमः—

दण्डहीनो वृथा दण्डी धृत्वा काषायमात्रकम् ।
पत्तने वर्त्तयन् पापी व्यवहारपुरःसरः ॥
शिष्यसम्पादनार्थाय धनार्ज्जनपरायणः ।
प्रणवं सम्परित्यज्य छत्रोपानद्धृग्व्रतिः ॥
स विप्रैर्न नमस्कार्य्यः न भिक्षापात्रतां व्रजेत्[2] ।
मायावी स तु दुष्टात्मा नववेषोवृथा यतिः ॥

पराशरः—

अन्नदानं गृहस्थाय ताम्बूलं ब्रह्मचारिणे ।
यतये काञ्चनं दत्त्वा तद्दाता नरकं व्रजेत् ॥

---

(१) परित्यज्य इति केषुचित्पुस्तकपाठः ।

(२) न भिक्षाशनपात्रताम् इति कतिपुस्तकपाठः ।

सुरापूरितभाण्डञ्च पटश्चर्मसंपूरितः ।
धर्म्महीनस्तु सन्न्यासी त्रयस्त्वेते वृथा कृताः[1] ॥
एकरात्रं यतिस्त्यक्त्वा स्वधर्मान् वर्त्तयेद्यदि ।
तस्यैव निष्कृतिर्नास्ति इहलोके परत्र च ॥
तस्मात् यतेर्हिजोयस्तु प्रतिग्रह्य धनादिकम् ।
जीवेद्यदिह पापात्मा चान्द्रं तस्य विशुद्धये ॥
द्रव्यप्रतिग्रहे चान्द्रं कार्यं चाऽन्यस्य संग्रहे ॥
क्षेत्रप्रतिग्रहे तात महाचान्द्रमुदीरितम् ।
वस्त्रादिसंग्रहे विप्रोमहासान्तपनं चरेत् ॥

जीवाभिधम्—

इति हेमाद्रौ पतितयतिप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ मठपतेः सन्न्यासिनः प्रतिग्रहप्रायश्चित्तमाह ।

देवलः—

सर्व्वसङ्गपरित्यागी यतिर्यदि मठाधिपः ।
तस्यैव निष्कृतिर्नास्ति चाण्डालान्नगर्हितात् ॥

---

(१) वृथा वृथा इति श्रीतर्कालङ्कारपुस्तकपाठः ।



59-4

मार्कण्डेयपुराणे—

यति यस्तु महाराज सर्व्वसङ्गापरिग्रहः ।
भोगासक्तोयदालोके चाधिपत्यं करोति च ॥
तस्यैव निष्कृतिर्नास्ति यमलोकात् सुदारुणात् ।
तदन्ते भुवमासाद्य दीर्घाकोर्ष्णो भवेन्महान् ॥

अथवा योगिनामेव कुले भवति धीमतामिति गीतावाक्यस्य नाऽत्र विरोधः शङ्क्यः, कुले भवति धीमतामिति तु योगभ्रष्टस्य उक्तं मठपतेर्यतेर्यथाकालमपैव । तदाह—

अङ्गिराः—

सर्व्वसङ्गविहीनस्य यतेर्भवति माठकम् ।
तस्य वै अधमाल्लोके चण्डालात् कुलगर्हितात् ॥
तस्माद् यतेर्द्विजो यस्तु प्रतिग्रहपरायणः ।
तस्यैवे निष्कृतिरियं वक्तव्यं विधिपूर्व्वकम् ॥
कृत्वा शुद्धिमवाप्नोति नाऽन्यथा शुद्धिरस्ति हि ।

स्त्रीणामप्येवम् । चेत्रवस्त्राटिसंग्रहे पूर्व्ववत् ।

इति हेमाद्रौ मठाधिपतिसन्न्यासिनः प्रतिग्रहप्रायश्चित्तम् ।

---

## अथ पापपुरुषस्य प्रतिग्रहप्रायश्चित्तमाह ।

देवलः—

मनुजानां नाभिरन्ध्राद् अधोभागे षडङ्गुले ।
आश्रित्य तत्र पापीयान् पुरुषो वर्त्तते सदा ॥

मार्कण्डेयः—

नृणां कुबेरधोभागे नाभिदेशे षडङ्गुले ।
पापाख्यः पुरुषः सम्यग् आश्रित्य हृदि वर्त्तते[1] ।

गौतमः—

नृणां नाभिरधोभागे पापपुरुषः सदा वसन् ।
पापानि वर्द्धयन् धर्मं भक्षयन् सर्व्वमङ्गलम् ॥
तस्यैव नाशकरणं दानं दद्यात् सुखाप्तये ।
तद्दानं ब्राह्मणो धृत्वा तदा यायात् पिशाचताम् ॥

मरीचिः—

पापपुरुषं द्विजो धृत्वा तदा भूयात् पिशाचकः[2] ।
तद्दोषपरिहारार्थं ततः स्नात्वा यथाविधि ॥
नाभिमात्रजले स्थित्वा पिधायाऽऽर्द्रेण वाससा ।
पुरुषसूक्तं जपेत् पश्चात् यदा मन्दायते रविः ॥

---

(१) वर्द्धते इति केचित्पुस्तकपाठः ।
(२) पिशाचताम् इति कोशकेचित्पुस्तकपाठः ।

धृत्वा वै तावतीं संख्यां मनसा प्रत्यहं मुदा।
वन्याहारं तथा कुर्य्यात् फलाहारमथापि वा॥
स्वपेद्देवसमीपे तु नारायणमनुस्मरन्।
परेद्युः पूर्व्ववत्कृत्वा मासमात्रेण शुध्यति॥
अयुत जपसंख्या स्यात् पुनः संस्कारतः शुचिः।
पञ्चगव्यं पिवेत् पश्चात् पापादस्मात् प्रमुच्यते॥

इति हेमाद्रौ पापपुरुषप्रतिग्रहप्रायश्चित्तम्।

---

## अथ पतितप्रायश्चित्तमाह।

देवलः—

पतितस्तु द्विधाप्रोक्तो महापातकसङ्गवान्।
नित्यकर्मपरित्यागी द्वितीयः सन्निरूप्यते।

पूर्व्वस्य महापातकप्रायश्चित्तमुपदिष्टं द्वितीयस्य तु विशेषमाह।

देवलः—

नित्यकर्मपरित्यागात् नानायोनिनिवेशनात्।
गीतवाद्यानुरागाच्च कुण्डगोलकसङ्गमात्॥
देवद्विजविरोधाच्च नानासन्नादिभोजनात्।
परस्याग्रधयुद्धेन मल्लयुद्धेन वारतः॥

द्यूतासक्तः सदाकोपी हास्यवीणाविनोदवान्।
गन्धताम्बूलवस्त्राद्यै र्देवादीनामनर्पितैः॥
विटगायकसंयुक्तः पतितोऽसौ[1] द्वितीयकः।
महापातकसंसर्गात् महापतित उच्यते॥

तस्य महापतितस्य मरणान्ता निष्कृतिः क्वचित्तु दयया मुनिभिर्द्दत्तयुतगोदानैर्निष्कृतिरुक्ता कर्म्मभ्रष्टस्य पतितस्य तु प्रायश्चित्तमाह।

मरीचिः—

पूर्व्वोक्तलक्षणैर्युक्तः पतितः कर्म्महीनवान्।
पश्चात्तापसमायुक्तः [2]कुर्य्यात् कार्यं विशुद्धये॥
चिदिने तु पराकः स्यात् पक्षे तप्तं विधीयते।
मासे चान्द्रं ततः पश्चाद् वर्षादूर्द्धं न निष्कृतिः॥
असौ पर्व्वतदत्तयुक्तः सर्व्वथा वर्ज्यते जनैः।
कर्म्मभ्रंशस्य नास्तीह वर्षादूर्द्धं सताङ्गतिः॥

यत्र यत्र धर्म्मशास्त्रेषु पतितप्रायश्चित्तमित्युक्तं तत्रापीदमेव योजनीयं पञ्चमहापातकसंसर्गी महापतितो मरणान्तप्रायश्चित्ती अयन्तु दोषबाहुल्यादपि मनुपदोक्तं प्रायश्चित्तं कृत्वा शुद्धिमाप्नोति।

इति हेमाद्रौ कर्म्मभ्रंशपतितस्य प्रायश्चित्तम्।

---

(१) पतितो वो द्वितीयक इति केचित्पुस्तकपाठः।

(२) प्राजापत्यमिति क्वोतकेचित्पुस्तकपाठः।

## अथेदानीं रहस्यकृतब्रह्महत्याप्रायश्चित्तमाह ।

देवलः—

'स याति नरकं घोरं मत्सराद्द्रव्यलोभतः ।

यो विप्रो ब्राह्मणं हन्ति रज्जुदण्डादिपीडनैः ॥

मार्कण्डेयः—

अरण्ये सङ्कटे यत्नात् कण्ठनिष्पीडनादिभिः ।

हन्याद् विप्रं द्विजो यस्तु [2]स महानरकं व्रजेत् ॥

रहसि कृतं पापं दशधाच चतुर्धा च प्रकटितं भवति । तदाह—

मनुः—

आदित्यचन्द्रावनिलोऽनलश्च

द्यौर्भूमिरापो हृदयं मनश्च ।

अहश्च रात्रिश्च उभे च सन्ध्ये

धर्मश्च जानन्ति नरस्य वृत्तम् ॥

तथाच श्रुतिः "भूतान्याक्रोशन् ब्रह्महन्निति अतो रहसि पापं न कारयेत्" ।

गालवः—

रहः पापं न कुर्वीत कर्मणा मनसा गिरा ।

यदि कुर्याद्विमोहेन प्रकाशाद् द्विगुणं भवेत् ॥

तस्यैव निष्कृतिर्नास्ति जन्मभिर्बहुभिर्नृप ।

---

(१) अरण्ये सङ्कटे राजन् इति मीतवेष्टितपुस्तकपाठः ।

(२) महान्तं इति वेष्टितपुस्तकपाठः ।

गौतमः—

पूर्व्वजो रहसि स्थाने विप्रं हन्याद्धनातुरः ।
अथवा मन्त्ररागान्धस्तस्य नास्तीह निष्कृतिः ॥
ब्रह्महत्यासमं पापं द्विजानां नाऽस्ति नारद ।
पापराड् ब्रह्महत्यैव यक्ष्मरोगो यथा रुजाम्[1] ॥
कुष्ठराजस्तु वेश्या स्यात् तुला स्यात् दानराट् तथा ।
अतोरहसि विप्रस्य न कुर्य्यात् हिंसनं बुधः ॥

पराशरः—

रहसि द्विजहत्या या सर्व्वेषां कुलनाशिनी ।
आत्मनश्च महत्पापं कलिपुरुषस्य नाशिनी ॥
उभयोर्लोकयोर्हन्ति सर्व्वपापविवर्द्धिनी ।

तत्प्रायश्चित्तमाह—

देवलः—

विप्रहत्यां रहः कृत्वा पश्चात्तापपरायणः ।
तटाकं वा ह्रदं गत्वा प्रातः स्नानं समाचरेत् ॥
मनसा नित्यकर्म्माणि अर्घ्यदानं समन्त्रकम् ।
कृत्वा जलमुपागम्य कण्ठदघ्नजले वसन् ॥
आर्द्रेण वाससाऽऽच्छाद्य मूर्द्धानं स्वेन पाणिना ।
प्राङ्मुखोदङ्मुखो वाऽपि जपन्नारायणात्मकम् ॥

सहस्रशीर्षमित्यनुवाकः ।

---

(१) यक्ष्मरोगश्च रोगवान् इति क्वचित्पुस्तकपाठः ।

प्रत्यहं यावती संख्या मनसा तां निधाय वै ।
जपेदस्तं यदा भानुस्तावत् पर्य्यन्तमाचरेत् ॥
तत्तीरे च कुटीं[1] कृत्वा नारायणपरायणः ।
प्रत्यहं कवलं भुञ्जन् नारायणनिवेदितम् ॥
स्वपेच्च स्थण्डिले तत्र ग्रामग्रामसमीपतः ।
पुनः प्रभाते विमले पूर्व्ववन्नियमं चरेत् ॥
एवं ऋतुत्रयं कृत्वा पुनः संस्कारपूर्व्वकम् ।
शुद्धिमाप्नोति राजेन्द्र तन्मध्ये म्रियते शुचिः ॥
अन्यथा दोषमाप्नोति क्षयरोगी भवेद्भुवि ।
तस्य वै निष्कृतिर्नास्ति जन्मजन्मनि भूमिप ॥

इति हेमाद्रौ रहस्यकृतब्रह्मवधप्रायश्चित्तम् ।

---

अथ रहस्यकृतसुरापानप्रायश्चित्तमाह ।

देवलः—

रहसि ब्राह्मणः पीत्वा मद्यमेकादशं स्मृतः[2] ।
न तस्य पुनरावृत्तिर्यमलोकात् कदाचन ॥

---

(१) चिखरं इति वेङ्कितपुस्तकपाठः ।
(२) यदि इति श्रीतवेङ्कितपुस्तकपाठः ।

मरीचिः—

मद्यमेकादशं प्रोक्तं गौड्यादि [1]महाभयम् ।
तेषां मध्ये द्विजोमोहाद् रहस्येकं पिबेद्यदि ॥
तस्येह निष्कृतिर्दृष्टा [2]मरणान्ता न चाऽन्यथा ।
रहस्येतानि मद्यानि ज्ञात्वा पीत्वा पतेद्द्विजः ॥

पतेत् [3]प्रायश्चित्ती भवेदिति—

महाभारते—

शृणु धर्मज्ञ यत्नेन मद्यं रहसि यः पिबेत् ।
तस्य वै निष्कृतिर्नोऽस्ति मरणान्तं विना[4] नृप ! ॥

भविष्योत्तरे—

स्वगृहे पठ्यतेऽरण्ये मद्यमेकादशं स्मृतम् ।
तन्मध्ये ब्राह्मणो यस्तु रहस्येकं पिबेद्यदि ।
सद्यः पतति दुष्टात्मा मरणान्तं न निष्कृतिः ॥

जावालिः—

गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा ।
तालजन्तिलजञ्चैव खार्ज्जूरं नारिकेलजम् ॥
द्राक्षाजं पानसञ्चैव मैरेयं च सवल्कजम् ।
मद्यमेकादशं प्रोक्तं मुनिभिस्तत्त्वदर्शिभिः ॥

---

(१) महद्भयं इति श्रीतवेंचितपुस्तकपाठः ।

(२) मरणान्तं इति वेंचितपुस्तकपाठः ।

(३) प्रायश्चित्ती भवेदिति पाठः श्रीतवेंचितपुस्तकयोर्न दृष्टः ।

(४) नृणां इति श्रीतवेंचितपुस्तकपाठः ।

एतेषां यः पिबेदेकं रहसि द्विजनायकः ।
तस्य वै निष्कृतिर्नाऽस्ति मरणान्ताद्विना नृप ॥
कथञ्चिन्निष्कृतिर्दृष्टा मुनिभिः शास्त्रवर्त्मसु ।
अरण्ये निर्ज्जने देशे स्नानं कृत्वा यथाविधि ॥
सन्ध्यादिनित्यकर्म्माणि पूर्व्ववन्मनसा चरेत् ।
नवं कुटीरमासाद्य सम्यग्ज्ञात्वाऽग्नौ विधानतः ॥
कूष्माण्डैर्जुहुयादग्नौ यावदस्तं गतो रविः ।
तावन्निरस्य तां होमसंख्यां मनसि धारयन् ॥
अश्नन् तप्तपयः पीत्वा स्वपेद्देवसमीपतः ।
ततः प्रातः समुत्थाय पूर्व्ववन्नियमं चरेत् ॥
एवं ऋतुत्रयं कृत्वा पुनः कर्म्म ततः परम् ।
कृत्वा शुद्धिमवाप्नोति गोपहोमोभवत्यथ ॥
अथवा राजदण्डेन [1]मृतः शुद्धिमवाप्नुयात् ।

ऋतुत्रयेऽयुतकूष्माण्डहोमस्तदन्ते गव्यहोमः ऋतुत्रयावसाने पुनः संस्कारः, पञ्चगव्यञ्च पीत्वा शुद्धिमवाप्नोति ।

इति हेमाद्रौ रहस्यज्ञातसुरापानप्रायश्चित्तम् ।

---

(१) हत्वा इति श्रीतर्केचिह्नितपुस्तकपाठः ।

## अथ रहस्यकृतसुवर्णस्तेयप्रायश्चित्तमाह।

देवलः—

रहोमुषित्वा पारक्यं सुवर्णं मुनिपुङ्गव!।
राज्ञा मिथ्या प्रकर्त्तव्याऽऽमरणान्तं द्विजोत्तम॥

मरीचिः—

योहरेद् रहसि स्वर्णं पारक्यं मुख्यजः सकृत्।
तस्य वै निष्कृतिर्नाऽस्ति कुम्भीपाकादिना क्वचित्[1]॥

हारीतः—

पारक्यं रहसि स्वर्णं द्विजो हृत्वा पतेत्सदा।
न तस्य निष्कृतिर्दृष्टा मुनिभिर्धर्मशालिभिः

सुवर्णादिप्रमाणं तु सुवर्णस्तेयप्रकरणेऽभिहितम्।

गालवः—

योहरेद्[2] रहसि स्वर्णं द्विजो रौप्यमथाऽपि वा।
तस्य वै निष्कृतिर्नाऽस्ति कुम्भीपाकनिमज्जनात्॥
काचिन्निष्कृतिर्दृष्टा मुनिभिर्धर्मवत्सलैः।
परमं निर्जनं गत्वा तत्र स्नात्वा यथाविधि॥
निर्माय पर्णशिविरं तत्र संस्थाप्य पावकम्[3]।
समिद्भिः प्रज्वलं कृत्वा स्वात्मार्थं परिकल्प्य च॥

---

(१) मवहूराहिति मौतवेष्कितपुस्तकपाठः।
(२) हृत्वा इति मौतवेष्कितपुस्तकपाठः।
(३) तत्र स्थाप्य कृतागमनमिति वेष्कितपुस्तकपाठः।

अहीनमनो जपेन्मन्त्रं कृष्णस्य द्वादशाक्षरम् ।
प्रातरारभ्य मध्याह्ने जपसंख्या च यावती ।
तावतीं मनसि स्थाप्य तमर्न्विं धारयेद्बुधः ॥
तण्डुलैरल्पमात्रैश्च गोजक्षीरैः पचेत्तपी ।
पूर्वं निवेद्य देवाय पश्चादद्यात् स्वयं मुदा ॥
स्वपेद्देवसमीपे तु नारायणपरायणः ।
ततः प्रातः समुत्थाय पूर्ववन्नियमस्थितः ॥
जपेत्पूर्ववदासीनो हुताग्निसमीपतः ।
एवं मासद्वयं कृत्वा नवलक्षजपं तथा ॥
पद्मगर्भविधानेन पुनः संस्कारमाचरेत् ।
पञ्चगव्यं पिबेत्पश्चात् शुद्धोभवितुमर्हति ॥
नाऽन्यथा शुद्धिमाप्नोति बहुभिस्तीर्थमज्जनैः ।
लोकसाहाय्यकरणैर्न शुद्धोभवति द्विजः ॥
गङ्गा सेतुः प्रयागश्च गङ्गासागरसङ्गमः ।
गौतमी कृष्णवेणी च कावेरी च महानदी ॥
दर्शनात् स्वर्गदा नृणां कामाभोक्षप्रदायिकाः ।
ता नद्योऽपि [1]महापापकृतं विप्रमनिष्कृतिम् ॥
न पुनन्तीह राजेन्द्र सुराभाण्डमिवापगाः ।
रहः कृतं महत्पापं प्रायश्चित्तेन शुध्यति ॥

---

(१) जहतु पापं इति केचित्पुस्तकपाठः ।

सा शुद्धिर्न चतीर्दोनैर्मैर्मत्रप्रायकैरपि।
अतः रहः कृतस्य पापस्य प्रायश्चित्तमेव नाऽन्या निष्कृतिः।

इति हेमाद्रौ रहस्यकृतसुवर्णस्तेयप्रायश्चित्तम्।

---

## अथ रहस्यकृतगुरुदारगमनप्रायश्चित्तमाह।

देवलः—

योरत्नोजननीं गच्छेत्[1] तत्सपत्नीमथाऽपिवा।
प्रजावतीं गुरोर्दारान् विप्रः कामातुरो यदि॥
स्वमुष्कं रहसिच्छित्वा पूर्ववद्दक्षिणामुखः।
गच्छन् मृत्वा विशुद्धः [2]स्याद् अन्यथा पतितोभवेत्॥

महाभारते—

शृणु धर्मज वक्ष्यामि पापमेतत्महत्तरम्।
योविप्रोरहसि स्थाने मातरं तत्सखीमपि॥
गुरोः पत्नीं भ्रातृजायां गच्छेत् कामातुरः सकृत्।
छित्वा स्वमुष्कं हस्तेन असिना तीक्ष्णधारया॥

---

(१) गत्वा इति श्रीतर्कवेङ्कितपुस्तकपाठः।
(२) अथुरिति वेङ्कितपुस्तकपाठः।

हुत्वाऽग्नौ निराहारोदधिर्वा दिवमन्वियात्[1] ।

यावताऽस्तमयं जग्मात्तावच्छुद्धिमवाप्नुयात्[2] ॥

नाऽन्यथा स विशुद्धः स्याद् ब्रह्मैव वसन् द्विजः ।

गौतमः—

स्वमातरं रहोगत्वा पुत्रः कामातुरः सकृत् ।

तत्पत्नीं गुरोर्दारान् भ्रातृपत्नीमथाऽपि वा ॥

क्षुरेण स्वयं छित्वा मुष्कद्वयमसंहितः[3] ।

निधाय स्वाञ्जलौ गोष्ठं गच्छेद्यमदिशं शुभाम् ॥

यदा मृतो निराहारस्तदा शुद्धिमवाप्नुयात् ।

प्रायश्चित्तमिदं तस्य मुनिभिः परिकीर्त्तितम् ॥

चरस्थं निर्जनं गत्वा तत्र स्नात्वा विधानतः ।

कुटीरं पूर्ववत् कृत्वा तत्र मौनमुपाश्रितः ॥

यवैरञ्जलिमानैश्च पाचयेद् दृढतोघटाम् ।

यवागूं तां पुनः पात्रे हुत्वाऽग्निं ज्वालयेत्[1] तथा ।

दारुमय्या स्रुचा हुत्वा शुद्धयामन्त्रपूर्वकम् ॥

यवागू राजन्यस्य व्रतम् । "क्रूरं च वै यवागूः क्रूरएव" इति मन्त्रेण त्रिसप्तकेन हुत्वा होमं समाप्य होमावशेषितां यवागूं स्वयं पिबेत् । तदाह—

---

(१) अन्वगादिति श्रीतर्कवेचितपुस्तकपाठः ।

(२) यावता त्वन्तं विप्रस्तावच्छुद्धिमवाप्नुते इति श्रीतर्कवेचितपुस्तकपाठः ।

(३) प्रत्यवेक्षया इति श्रीतर्कवेचितपुस्तकपाठः ।

गौतमः—

रहोमात्रगमः पश्चा यवैरञ्जलिपूरितैः।
तद्यवागूं हुतत्यागे निधायाऽग्निसमीपगः॥
समिद्भिरग्निं प्रज्वाल्य स्रुचा पात्राग्निमिश्रया।
चवशिष्टां यवागूञ्च स्वयं पीत्वा स्वपेद्व्रती॥
परेद्युः प्रातरुत्थाय पूर्ववत्कर्म्माचरेत्।
एवं मासद्वयं कृत्वा शुद्धिमाप्नोति पातकी।
नाऽन्यथा शुद्धिमाप्नोति मलमुष्टियैंथा कृषाम्॥

इति हेमाद्रौ रहस्यकृतगुरुदारगमनप्रायश्चित्तम्।

---

## अथ चान्द्रायणादिकृच्छ्रलक्षणमाह—

देवलः—

ब्रह्महत्या सुरापानं स्तेयं गुर्व्वङ्गनागमः।
तत्संयोगश्च पञ्चैते महापातकमीरितम्॥

एतेषां पञ्चानां मरणान्तप्रायश्चित्तं, न कृच्छ्रादिकम्। गोवधो गुर्व्वधिक्षेपोऽवकीर्णत्वापनादिश्च—एतदुपपातकं कृच्छ्र-चान्द्रायणादिभिः परिशोध्यम्।

तिलानां धान्यराशीनां विक्रयस्तन्मद्यसूनाष्ठ एतन्मलिनीकरणं कृच्छसाध्यम् ।

कन्यापहरणञ्चैव धेनुभूहरणादिकम् ।
मलिनीकरणन्त्वेतत् कृच्छसाध्यं प्रयत्नतः ॥
चाण्डालीगमनादीनि अपात्रीकरणानि च ।
कृच्छैर्विंशोधनीयानि विप्रैर्दोषपराङ्मुखैः ॥
दुरन्नभोजनञ्चैव दुष्टभक्षणमेव च ।
दुष्टशाकादिकञ्चैव जातिभ्रंशकरं भवेत् ॥
एतदतिकृच्छसाध्यं तथा दुर्मरणादिकम् ।
प्रकीर्णकं कृच्छसाध्यं गर्भाधानादिकर्मणाम् ॥

तत्कालातिक्रमे कृच्छैरेव विशोधनम् । तुलादिप्रतिपत्तीनां अप्रशस्तसम्प्रदानं, कृच्छैः क्वचिन्निवारणञ्च तेषां कृच्छाणां लक्षणमाह—

मार्कण्डेयः—

यवमध्यश्च मन्दः स्यात् यतिकृच्छ्रोमहत्फलम् ।
महचान्द्रमिति प्रोक्तं पञ्चधा तत् प्रकीर्त्तितम् ॥
प्राजापत्यं तप्तकृच्छ्रं पराकं यावकं तथा ।
ततः सान्तपनं कृच्छ्रं महासान्तपनं तथा ॥
उदुम्बरञ्च पर्णञ्च फलकृच्छ्रमतःपरम् ।
कृच्छ्रं माहेश्वरञ्चैव ब्रह्मकृच्छ्रं तथैव च ॥
धान्यं सर्वमयं कृच्छ्रं दश भेदाः प्रकीर्त्तिताः ।

तेषां स्वरूपमाह—

पराशरः—

यवमध्यस्य कृच्छ्रस्य स्वरूपं [1]प्रवदाम्यहम्।
यत्कृत्वा सर्व्वपापेभ्योमुच्यते मनुजोत्तमः॥
शुक्लप्रतिपदाऽऽरभ्य व्रती नियमपूर्व्वकम्।
प्रातःस्नात्वा यथाचारं दन्तधावनपूर्व्वकम्॥
धौतवस्त्रं परीधाय नित्यकार्य्यं समाप्य च।
जपेत् तावन्महामौनी यावन्मन्दायते रविः॥
तदा हरिं समाराध्य गन्धपुष्पादिभिः शुभैः।
मयूराण्डप्रमाणेन ग्रासं कृत्वा व्रती तथा॥
विष्णवे तं निवेद्याऽऽशु तं ग्रासं भक्षयेत् स्वयम्।
एकवारमशक्यत्वात् द्विधा कृत्वैव भक्षयेत्॥
उत्तरापोशनं कृत्वा वह्निर्गत्वाऽथ वाग्यतः।
प्रक्षाल्य पाणी तोयेन गण्डूषैर्द्वादशात्मकैः॥
पादौ प्रक्षाल्य चाऽऽचम्य पुनर्गत्वा स्वमालयम्।
स्वयमेव पुनः कृत्वा शुद्धिं गोमयवारिभिः॥
पुनः प्रक्षाल्य पाणी च देवं नत्वाऽथ संविशेत्।
पाषण्डादिं न पश्येच्च न [2]भाषेत कदाचन॥
सायं सन्ध्यामुपास्याऽथ[3] सायं होममथाऽऽचरेत्।
स्वपेच्च स्थण्डिले देवसमीपे नियतो व्रती॥

---

(१) प्रवदाम्यहमिति केचित्पुस्तकपाठः।
(२) सम्भाषेत इति कौतचेचित्पुस्तकपाठः।
(३) उपासित्वा इति केचित्पुस्तकपाठः।

ततः प्रातः समुत्थाय परेद्युः स्नानमाचरेत् ।
पूर्व्ववन्नियमं कृत्वा भक्षयेदेकवृद्धितः ॥
एकोत्तरवृद्ध्या राजन् वृद्ध्या प्रतिदिनं बुधः ।
भक्षयेत् कवलान् दिव्यान् यावत्ता 'पूर्णिमादिनम् ॥
दशमे चैककवलान् भुक्त्वा तत्र व्रती क्रमात् ।
एकैकं ह्रासयेद् ग्रासं कृष्णपक्षे व्रती मुदा ॥
पूर्व्ववन्नियमात्मामी यदा मासः प्रवर्त्तते ।
तत्राऽपि भक्षयेदेवं हरिध्यानपरायणः ॥
व्रतान्ते गौः प्रदातव्या व्रतस्य परिपूर्त्तये ।
पञ्चगव्यं पिबेत् पश्चाद् यवमध्यमदाहृतम् ॥
एतदाचरणेनैव ब्रह्महत्यां व्यपोहति ।
इतराणि च पापानि नश्यन्तीति किमद्भुतम्

मयूराङ्कव्रतमाह—

देवलः—

यत्समाव्रतीर्यांश्चैस्तण्डुलैः पाचयेद्धविः ।
तावदर्थं मयूराङ्कमिति सन्तोवदन्ति हि ॥
इदं चान्द्रायणं कृत्वा यवमध्यं सुपावनम् ।
ब्रह्महत्यादिभिः पापैर्मुक्तोभवति तत्क्षणात् ॥
यवमध्यमिदं चान्द्रं कार्त्तुं यस्तदुपक्रमेत् ।
तस्य पापानि नश्यन्ति किं पुनर्व्रतचारिणाम् ॥

---

(१) मौर्णमी इति श्रीतवैचितपुस्तकपाठः ।

विष्णुप्रियकरञ्चैतत्सर्व्वदुःखप्रणाशनम्।
नारीणां विधवानाञ्च यतीनां ब्रह्मचारिणाम्॥
गृहस्थानां विशेषेण महापातकनाशनम्।

वृद्धिक्षयौ चन्द्रस्य वर्त्तेते, चन्द्रस्य शुक्लपक्षे वृद्धिः कृष्णपक्षे क्षयः तन्नामधेयमेतद्यवमध्यलक्षणम्।

इति हेमाद्रौ यवमध्यचान्द्रायणप्रकारः।

---

## अथ पिपीलिकाचान्द्रायणलक्षणमाह।

देवलः—

पूर्व्ववत् कृष्णपक्षस्य प्रतिपद्दिवसे व्रती।
प्रातःस्नानं नदीतोये दन्तधावनपूर्व्वकम्॥
कृत्वा धौतं परीधाय सन्ध्यावन्दनमाचरेत्।
ब्रह्मयज्ञादिकान् कृत्वा देवपूजापरायणः॥
पठेदुपनिषद्वाक्यं नारायणमथाऽपि वा।
सहस्रनाम विष्णोर्वा गजेन्द्रस्यैव मोक्षणम्॥
अपेक्षारायणधिया यदा मन्दायते रविः।
तदैव देवतापूजां पुरुषसूक्तविधानतः॥

कृत्वा पञ्चदश ग्रासान् निवेद्य परमात्मने ।
ततस्तान् भक्षयेत् पश्चात् मौनव्रतपरायणः ॥
प्रक्षाल्य पूर्व्ववत् पाणी गण्डूषादीन् प्रकल्पयेत् ।
स्वयमेव पुनः कृत्वा शुद्धिं गोमयवारिणा ॥
पुनः प्रक्षाल्य तं पाणिं देवं नत्वाऽथ संविशेत् ।
पाषण्डादीन् न पश्येच्च न भाषेत[1] कदाचन ॥
सायं सन्ध्यामुपास्याऽथ सायं होममथाऽऽचरेत् ।
स्वपेच्च स्थण्डिले देवसमीपे नियतोव्रती ॥
ततः प्रातः समुत्थाय परेद्युः स्नानमाचरेत् ।
पूर्व्ववन्नियमं कृत्वा भक्षयेदेकग्रासतः ॥
एकह्रासतया भक्षेत् कवलान्तानशेषतः ।
अमायां कवलैकाशी पूर्व्ववन्नियतोव्रती ॥
परेद्युः प्रतिपद्दिवसे कृत्वा नियममादरात् ।
ग्रासमेकं तदा भुक्त्वा पूर्व्ववद्विधिपूर्व्वकम् ॥
द्वितीयायां द्वयं भक्षेत् तृतीयायां त्रयं तथा ।
एकवृद्धितया राजन् यावता [2]पूर्णिमादिनम् ॥
तावत् पञ्चदशं भुक्त्वा व्रतशेषं समापयेत् ।
व्रतान्ते गौः प्रदातव्या व्रतस्य परिपूर्त्तये ॥

(१) सम्भाष्य इति श्रोतक्षेचितपुस्तकपाठः ।
(२) पौर्णमी इति क्षेचितपुस्तकपाठः ।

पञ्चगव्यं पिबेत् पश्चात्सम्यगभ्युदाहृतम्।
एतदाचरणेनैव ब्रह्महत्यां व्यपोहति॥
इतराणि च पापानि नश्यन्तीति किमद्भुतम्।

अत्रापि ग्रासपरिमाणं मयूराण्डवदुक्तं पिपीलिकामध्यचान्द्रायण-फलं पूर्ववद् वेदितव्यम्। व्रतोपक्रमकाले महतामनुज्ञामवाप्य पुण्याहवाचनं कृत्वा सङ्कल्पकाले मन्त्रमिवमुदीरयेत्।

देवलः—

गृहीतेऽस्मिन् व्रते देव पञ्चत्वं यदि मे भवेत्।
तदा भवतु सम्पूर्णं त्वत्प्रसादात् जगद्गुरो॥

इति सङ्कल्पमन्त्रः—

इति हेमाद्रौ पिपीलिकामध्यचान्द्रायणविधिः।

---

## अथ यतिचान्द्रायणस्वरूपमाह।

देवलः—

यतिचान्द्रायणं वक्ष्ये सर्व्वपापप्रणाशनम्।
सर्व्वपातित्यशमनमगम्यागमनाशनम्॥

पतितपापानि—

आपस्तम्बः—

स्तेयमाभिशस्त्यं पुरुषवधो ब्रह्मवधो गर्भशातनं मातुः पितुर्वा योनिसम्बन्धे स्त्रीगमनं सुरापानं असंयोगिसंयोगो गुरुदारगमनं तत्सखीगमनं गमनञ्चान्येषां परतल्पानामिति पतनीयहेतवः। अथाऽशुचिकराणि शूद्रस्त्रीणां गमनमनार्य्यस्त्रीणाञ्च, प्रतिषिद्धानां मांसभक्षणं शुनो मनुष्यस्य च, कुक्कुटशूकराणां ग्राम्याणां क्रव्यादानां च, मनुष्याणां मूत्रपुरीषप्राशनं शूद्रोच्छिष्टाशनमगमनं भार्य्याणां एतान्यपि पतनीयानीत्येके अथाऽधर्म्महेतवः।

क्रोधोऽमर्षौ रोषो लोभो मोहो दम्भो मृषोद्यमनल्पाशापरिवादाव-सूया काममन्यू आनात्म्यमयोग इति एतेषां पूर्व्वोक्तानां पातित्य-दायिनामशुचिकराणां धर्म्मनाशहेतूनां यतिचान्द्रायणं विशोधनं तदेवाऽऽह।

मनुः—

स्तेयादिसर्व्वपापानां तथैवाऽशौचिनामपि।
धर्म्मनाशकराणाञ्च यतिचान्द्रायणं परम्।
एतस्याऽऽचरणेनैव सर्व्वपापं प्रणश्यति।
यतिचान्द्रायणं नाम यतिलोकप्रदायि यत्॥

तत्स्वरूपमाह—

गौतमः—

मासादौ प्रतिपद्दिवसे प्रातर्विप्रो यथाविधि।
कृत्वा मूत्रपुरीषे तु शौचं कुर्य्याद्यथाविधि॥

दन्तान् संशोध्य यत्नेन अपामार्गस्य शाखया ।
स्नानं कृत्वा नदीतोये तटाके वा ह्रदेऽपि वा ॥
कृत्वा चोक्तमशौचञ्च नित्यकर्म्म समापयेत् ।
औपासनादिकं कृत्वा देवपूजामथाऽऽचरेत् ॥
सङ्कल्पमेवं कुर्व्वीत पूर्व्ववृत्तमनुस्मरन् ।
तावज्जपेन्महाविष्णुं यावन्मन्दायते रविः ॥
कुक्कुटाण्डप्रमाणेन पञ्चैव कवलान् सुधीः ।
भक्षयेद्विष्णवे दत्त्वा पूर्व्ववत्क्षालयेत् करौ ॥
पादौ प्रक्षाल्य पश्चाच्च द्विराचम्य शुचिर्भवेत् ।
सायं सन्ध्यामुपासीत जपेन्नारायणं ततः ॥
ततः प्रातः समुत्थाय सर्व्वं पूर्व्ववदाचरेत् ।
तावत्तोपोषणं [1]कुर्य्याद् यावच्छुक्लाष्टमी भवेत् ॥
तत्रैव पूर्व्ववत् पिण्डान् भक्षयेत् पञ्च संख्यया ।
पूर्णिमायां तथाऽष्टम्यां तथाऽमायां यथाक्रमम् ॥
भक्षयेत् [2]पूर्व्ववत् पञ्च कवलान् भक्तिपूर्व्वतः ।
अधःशायी भवेन्नित्यं गन्धताम्बूलवर्ज्जितः ॥
मासान्ते गौः प्रदातव्या व्रतस्य परिपूर्त्तये ।
पञ्चगव्यं पिबेत् पश्चाद् यतिचान्द्रायणं स्मृतम् ॥

---

(१) कृत्वा इति श्रीवैचितपुस्तकपाठः ।
(२) पञ्च चैव इति वैचितपुस्तकपाठः ।

अनेन विधिना यस्तु यतिचान्द्रायणं परम् ।
[1]कुर्य्यात् पापविशुद्धात्मा [2]स याति परमां गतिम् ॥
विधवा वा यतिर्वाऽपि व्रतं पापापनाशनम् ।
महीत्वा कुरुते सम्यक् सर्व्वपापैः प्रमुच्यते ॥

इति हेमाद्रौ यतिचान्द्रायणचरणविधिः ।

---

## अथ शिशुचान्द्रायणलक्षणमाह ।

देवलः—

शृणु राम महाबाहो सर्व्वपापहरं परम् ।
शिशुचान्द्रायणं नाम सर्व्वर्षिगणसेवितम् ॥
पुरा तृहालको नाम मातुर्गर्भाद्विनिर्गतः ।
नाभिनालमुपादाय स्वाध्यायी पर्य्यटन् महीम् ॥
गर्भाष्टमे समायाते स्वगोत्रेचाऽचरद् व्रतम्[3] ।
तदा प्रभृत्यसौ योगी सायाह्ने भैक्षमाचरन् ॥

---

(१) कृत्वा इति क्वचित्पुस्तकपाठः ।
(२) प्राप्नुयादिति क्वचित्पुस्तकपाठः ।
(३) स्वगोत्रेच व्रतं चरेदिति क्वचित्पुस्तकपाठः ।

श्रोत्रियाणां द्विजातीनां त्रिषु वेश्मसु सञ्चरन्।
कवलत्रयमानीय प्रक्षाल्य शुचिभिर्जलैः॥
भागत्रयं तदा कृत्वा भागमेकं हरेर्ददौ।
द्वितीयमग्नौ निक्षिप्य तृतीयं चाऽऽत्मनि न्यसेत्॥
रात्रौ स्वपेत् स्थण्डिलेऽसौ गन्धपुष्पादिवर्ज्जितः।
[1]प्रत्यहन्त्वेवमकरोद् यावत्पुत्रसमागमम्॥

तावित्रेतोत्पत्तिपर्य्यन्तं इत्यर्थः।

तदा प्रभृति लोकेऽस्मिन् शिशुचान्द्रायणं स्मृतम्।
कलौ युगे विशेषेण महापातकनाशनम्।
महापापविशुद्धः [2]स्यात् कृत्वैतद्व्रतमुत्तमम्॥

गौतमः—

शिशुचान्द्रायणं मासमेकं व्याप्य निरन्तरम्।
कृत्वा शुद्धिमवाप्नोति महापातकवानपि॥

जाबालिः—

शिशुचान्द्रायणं कुर्य्याद् द्विजोयः पापमुक्तये।
स सद्यः पापनिर्मुक्तः लभते परमां गतिम्॥

तत्प्रकारमेवाह—

देवलः—

(१) पूर्वं वै प्रत्यहं कुर्य्यादिति श्रीतत्त्वेचिन्तपुस्तकपाठः।
(२) भवेदिति श्रीतत्त्वेचिन्तपुस्तकपाठः।

मासादौ प्रतिपद्दिवसे 'प्रातःस्नानं समाचरेत्'[1] दन्तधावनस्नानधौतवस्त्रपरिधानसन्ध्यावन्दनादिकं पूर्व्ववत् कृत्वा चतुर्थे यामे ।

घटे पर्णपुटे वाऽपि अपश्यन् पापिनःखलान् ।
श्रोत्रियाणां द्विजातीनां त्रिषु वेश्मसु सञ्चरेत् ॥
कवलत्रयमानीय प्रक्षाल्य शुचिभिर्जलैः[2] ।
भागत्रयं तदा कृत्वा भागमेकं हरौ क्षिपेत् ॥
द्वितीयमग्नौ निक्षिप्य अवशेषं स्वयं हरेत् ।
प्रक्षाल्य पूर्व्ववद्धस्तौ द्विराचम्य शुचिर्भवेत् ॥
रात्रौ स्वपेद्धरेरग्रे स्थण्डिले गन्धवर्ज्जितः ।
पुनः परेद्युरेवं हि कुर्य्यात् पापविशुद्धये ॥
एवं मासव्रतं कृत्वा मासान्ते गौर्यथाऽर्हतः ।
देया विप्राय विदुषे[3] पञ्चगव्यं पिवेत्ततः ॥
एवं [4]कुर्य्यान् नरो यस्तु सर्व्वपापैः स मुच्यते ।
शिशुचान्द्रायणं सम्यक् कुर्य्याद् यः पूर्व्वजः शुचिः ।
सर्व्वान् कामानवाप्नोति स याति विष्णुमन्दिरम् ॥

इति हेमाद्रौ शिशुचान्द्रायणविधिः ।

---

(१) प्रपेदे इति केचित्पुस्तकपाठः ।
(२) पूर्व्वस्नानं इति केचित्पुस्तकपाठः ।
(३) द्विजैरिति केचित्पुस्तकपाठः ।
(४) यत्नतो इति केचित्पुस्तकपाठः ।

## अथ महाचान्द्रायणलक्षणमाह ।

देवलः—

शृणु राम प्रवक्ष्यामि महाचान्द्रायणं परम् ।
ब्रह्महत्यादिपापानां शोधनं सर्व्वमङ्गलम् ॥
गुरुद्रोहे च यत् पापं यत् पापं परवञ्चने ।
यत् पापं पुत्रहत्यायां यत् पापं पशुमारणे ॥
पित्रोरब्दपरित्यागे विष्णुद्रोहे च यद्भवेत् ।
यत् पापं शिवनिन्दायां यत् पापं चक्रधारणे ॥
यत् पापं शिवनिर्म्माल्यभक्षणे तस्य धारणे ।

लिङ्गधारण इत्यर्थः ।

चाण्डालीगमने पापं यत् पापं विधवागमे ।
परस्त्रीषु च यत् पापं यत् पापं परभोजने ॥
यत् पापं वृषलीसङ्गे यत् पापं कुण्डगोलयोः ।
शूद्रापत्येषु यत् पापं यत् पापं पारदारके ॥
यत् पापं पर्व्वसंसर्गे यत् पापं धेनुविक्रये ।
यत् पापं रजकीसङ्गे यत् पापं यतिनिन्दया ॥
यत् पापं विप्रनिन्दायां कन्याया दूषणेऽपि च ।
एवमादीनि पापानि गुरूणि च लघूनि च ॥
आर्द्राणि च प्रशुष्कानि यानि पापान्यनेकशः ।
तेषां नाशकरञ्चेदं महाचान्द्रं [1]महाफलम् ॥

---

(१) अक्षरफलमिति क्रीतलेखितपुस्तकपाठः ।

यत् श्रुत्वा मुच्यते पापैः गुरुभिर्लघुभिस्तथा ।

तत्प्रकारमाह—

देवलः—

शुक्लप्रतिपदि स्नात्वा पूर्व्ववच्छुद्धतोयतः ।
पूर्व्ववन्नियमं कृत्वा चतुर्थे काल आगते ॥
विष्णुपूजापरोभूत्वा पूर्व्वं सङ्कल्पमाचरेत् ।
पूर्व्ववन्मन्त्रमुच्चार्य्य निराहारः स्वपेत्तदा ॥
ततः प्रभात उत्थाय स्नात्वाऽचम्य यथाविधि ।
पूर्व्ववन्नित्यकर्म्माणि समाप्य विधिपूर्व्वकम् ॥
चतुर्थकाल आयाते पूर्व्ववद्देवमर्च्चयेत् ।
तदोपोष्य यथा पूर्व्वं पूर्व्ववन्नियतः स्वपेत् ॥
एवं [1]कुर्य्यात् प्रतिदिनं राका यावत् प्रवर्त्तते ।
तत्राऽपि पूर्व्ववत् कृत्वा नित्यकर्म्माणि सर्व्वशः ॥
तत्रैव भक्षयेत् पञ्चदश ग्रासान् व्रताप्तये ।
तत्राऽपि हरिसान्निध्ये स्वपेत्कन्यादिवर्ज्जितः ॥
उपोषणं प्रकर्त्तव्यं अमा यावत् प्रवर्त्तते ।
तत्रापि पूर्व्ववत् पिण्डान् भक्षयेत् पूर्व्वसंख्यया ॥
शुक्लप्रतिपदि स्नात्वा गोर्देया व्रतपूर्त्तये ।
पञ्चगव्यं पिबेत् पश्चात् मन्त्राचान्द्रमुदीरितम् ॥

---

(१) प्रतिप्रतिदिनमिति मौतकेचितपुस्तकपाठः ।

अशक्त: सर्व्वलोकानामशक्यागो महत्तर:।
कृते धर्म्माश्रिता: प्राणा: त्रेतायां लोकसाश्रया:॥
द्वापरे रक्तमाश्रित्य कलावन्नाश्रिता: सदा।
महाचान्द्रस्य महिमा कथितोऽयं मयाऽनघ॥
यत् कृत्वा मुच्यते पापैर्महद्भिरपि पातकै:।

इति हेमाद्रौ महाचान्द्रायणविधि:।

---

## अथ पञ्चविधानां प्रत्याम्नायमाह।

देवल:—

अथ वक्ष्यामि राजेन्द्र महापातकनाशनम्।
प्रत्याम्नायं हि चान्द्रस्य विष्णुलोकप्रदायकम्॥
अशक्तत्वाद् दुर्ब्बलत्वात् तथाऽऽयुर्नाशहेतुत:।
भक्तिश्रद्धाविहीनत्वात् बालस्त्रीनास्तिकादपि॥

चान्द्रायणव्रतारम्भे—

पुरा देवेन्द्रसदने वेधा: प्राह पुरन्दरम्।
चान्द्रायणेऽप्यशक्तश्चेत् प्रत्याम्नायं कुरुष्व वै॥
शुक्लप्रतिपदि स्नात्वा नित्यकर्म्म समाप्य च।
सङ्कल्पं पूर्व्ववत् कृत्वा करिष्येऽहमिदं व्रतम्॥

इति सङ्कल्प्य मनसा पूर्ववद्विधिपूर्व्वकम् ।
गावोदेयाः प्रयत्नेन पञ्चाशत् स्वर्णपूरणीः ॥
सवत्सा बहुक्षीरिण्यो विप्रेभ्योजलपूर्व्वकम् ।
अनेन कृतवान् चान्द्रं शास्त्रमार्गेण धेनुदः ॥

मार्कण्डेयः—

अशक्तोयदि चान्द्रस्य भवषे राजवल्लभ ।
प्रत्याम्नायं तदा कुर्य्यात् सवत्सा गाः स्वलङ्कृताः ॥
पञ्चाशत् संख्यया (१)दद्यात् (२)पूतः पापान्नसंशयः ।

गौतमः—

चान्द्रायणस्य विप्रोऽसौ प्रत्याम्नायं समाचरेत् ।
अर्च्चिता गन्धपुष्पाद्यैर्भूषिताः स्वर्णभूषणैः ॥
पञ्चाशन्नाः प्रयत्नेन विप्रेभ्यश्च (३)समुत्सृजेत् ।
प्रत्याम्नायैर्हरिः साक्षात् सन्तुष्टः स्यान्न संशयः ॥
अशक्तो चान्द्रविषये प्रत्याम्नायं तदा चरेत् ।
एतेन शुद्धिमाप्नोति चान्द्रायणफलं लभेत् ॥

महाचान्द्रस्य प्रत्याम्नायस्तु शतं गावो देयाः तथाच महाचान्द्रायणफलं प्राप्नोतीत्यर्थः ।

इति हेमाद्रौ चान्द्रायण प्रत्याम्नायः ।

---

(१) पूत इति क्षौतलेखितपुस्तकपाठः ।
(२) सर्व्वपापादिति लेखितपुस्तकपाठः ।
(३) पृथक् पृथक् इति लेखितपुस्तकपाठः ।

## अथ प्राजापत्यकृच्छ्रलक्षणमाह ।

देवलः—

त्रिदिनं च दिवाऽश्नीयात् त्रिदिनं रात्रिभोजनम् ।
अयाचितं स्यात् त्रिदिनं निराहारोदिनत्रयम् ॥
कृच्छ्रमेतद्विजानीयाद्गोदानं गव्यभक्षणम् ।
ब्रह्महत्यादिपापानामेतत् कृच्छ्रं विशोधनम् ॥

मार्कण्डेयः—

एकभक्तेन नक्तेन तथैवाऽयाचितेन च ।
उपवासेन चैकेन दानं गव्यस्य भक्षणम् ॥
एतत् त्रिरावृतं येन कृच्छ्रं स्यात् परिपूरणम् ।
ब्रह्महत्यादिपापानामितरेषां विशुद्धिदम् ॥

गौतमः—

प्राजापत्यकृच्छ्रमिदं सर्व्वपापप्रणाशनम् ।
त्रिदिनं स्याद् दिवाभुक्तिस्त्रिदिनं रात्रिभोजनम् ॥
अयाचितञ्च त्रिदिनं त्रिदिनं वायुभक्षणम् ।
गोदानं पञ्चगव्यान्ते शुद्धिमाप्नोत्यनुत्तमाम् ॥

तदाह—

आपस्तम्बः—

त्र्यहं नक्ताशी दिवाशी ततस्त्र्यहं त्र्यहमयाचितव्रतं त्र्यहं नाऽश्नाति किञ्चनेति ।

कृच्छ्रद्वादशरात्रस्य विधिः—

जाबालिः–

ब्रह्महत्यादिपापानामितरेषां मुनीश्वराः ।
तुलादिदानगम्यानां पापानां साधनं कृणाम् ॥
प्रजापतिरिदं साक्षात् सृष्टवान् देवसन्निधौ ।
सर्व्वलोकोपकाराय सर्व्वपापापनुत्तये ॥
दिनत्रयं दिवा भुक्तिस्तथा रात्रौ दिनत्रयम् ।
पञ्चगव्यं ततः पश्चाद् गौरिका च विशोधनी ॥
एवं कुर्य्याद् द्विजोयस्तु सर्व्वपापाद् [1]स मुच्यते ।

इति हेमाद्रौ प्राजापत्यव्रतलक्षणम् ।

---

## अथ एतदाचरणाशक्तानां प्रत्याम्नायानाह ।

तदाह लिङ्गपुराणे—

ईश्वरः—

प्राजापत्ये तु [2]गौरिका द्वादशब्राह्मणार्च्चनम् ।
समुद्रगनदीस्नानं संहितामात्रमुच्यते ॥

---

(१) नामेकाविति श्रोतवेष्टितपुस्तकपाठः ।
(२) विप्रान्द्विजान् इति वेष्टितपुस्तकपाठः ।

प्राणायामाश्च द्विशतं अयुतं जप उच्यते ।
तिलहोमाः सहस्रं स्यात् प्रत्याम्नायस्तु सप्तधा ॥

गारुडपुराणे—

यत् प्रोक्तं मुनिभिः कृच्छ्रमिति शास्त्रेषु गौरवात् ।
सर्व्वमेतद्विजानीयात् द्वादशाहोभिरीरितम् ॥

यत्र यत्र मुनिभिः कृच्छ्रमित्युक्तं तत्र तत्र प्राजापत्यमेव द्वादशरात्रसाध्यं चान्द्रायणं विना सर्व्वकृच्छ्रेषु योजनीयम् । तदेवाऽऽह—

गौतमः—

कृच्छ्रं द्वादशरात्रं स्यात् मुनिभिः परिभाषितम् ।

इति हेमाद्रौ व्रताचरणाशक्तानां प्रत्याम्नायः ।

---

## प्रत्याम्नायेषु होमेषु स्नानदक्षिणादाने गोदाने कृच्छ्रदानेषु च मन्त्रौ ।

गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्द्दश ।
यस्मात् तस्मात् शिवं मे स्याद् अतः शान्तिं प्रयच्छ मे ॥
यज्ञसाधनभूता या विश्वस्याऽघप्रणाशिनी ।
विश्वरूपधरो देवः प्रीयतामनया गवा ॥

इति सर्व्वत्र गोदानेषु प्रत्याम्नायगोदानेषु च मन्त्रौ ।

तत्रापि दक्षिणा देया यथा वित्तानुसारतः ।
एवं क्रमानुरोधस्तु प्रत्याम्नायमनुत्तमम् ॥
[1]आचरन् फलमाप्नोति प्राजापत्यस्य कृच्छ्रतः ।

प्राजापत्यकृच्छ्रप्रत्याम्नाययोरभावे तन्मूल्यमाह ।

देवलः—

गवामभावे निष्कं स्यात् तदर्द्धं पादमेव वा ।
पादं दरिद्रः [2]कुर्व्वीत धनिकः पूर्णमाचरेत् ॥
अन्यथा तत्फलं नाऽस्ति प्राजापत्यं न सिध्यति ।

निष्कशब्दो द्विविधः वराहस्तदर्द्धञ्चेति मुख्यः पक्षो वराहः कनीय-[3]स्तदर्द्धमङ्गीकृतमस्माभिः । तदाऽऽह

मार्कण्डेयः—

प्रभूणां पूर्व्वपक्षः स्यात् उत्तमः परिकीर्त्तितः ।
मध्यमाचरणं नाऽस्ति प्रभूणां तत्फलञ्च वा ॥
मध्यमानां वराहः स्यात् उत्तमः पक्ष उच्यते ।
उत्तमं यः परित्यज्य मध्यमं समुपाश्रितः ॥
[4]न दानफलमस्याऽस्ति मध्यमे[5] मध्यमं भवेत् ।
कनीयांस्तु वराहार्द्धः उत्तमः परिकीर्त्तितः ॥

---

(१) तन्मूर्ल्यफलमिति श्रीतवेष्टितपुस्तकपाठः ।
(२) दरिद्रः कुरुते पादमिति वेष्टितपुस्तकपाठः ।
(३) कनीयान् इति श्रीतवेष्टितपुस्तकपाठः ।
(४) च इति वेष्टितपुस्तकपाठः ।
(५) मध्यमो मध्यममिति वेष्टितपुस्तकपाठः ।

तस्य वै मध्यमं नास्ति न तत्कृच्छ्रफलं भवेत् ।
अकिञ्चनानां सर्व्वेषां [1]शुद्ध्यर्थं गोरुदाहृता ॥
अतोहीनं न कर्त्तव्यं गोमूल्येषु हि सर्व्वदा ।
एवं यः कुरुते दानं उत्तमाधममध्यतः ॥
तत्फलं समवाप्नोति नाऽन्यथा फलमस्ति हि ।

सर्व्वत्र सर्व्वेषां गोदानप्रत्याम्नायमूल्येषु एवं वेदितव्यं उत्तम-मध्यमलघुभावेन। उत्तमः प्रभूणां मध्यमं कुर्य्यान्मध्यमः किञ्चिज्जनः कनीयांसं कुर्य्याद् अकिञ्चनस्य कनीय एवोत्तमः पक्षः अतः स्वशक्तिपुरःसरतया प्रत्याम्नायं कुर्य्याद् अन्यथा न फलमाप्नोतीत्यर्थः ।

इति हेमाद्रौ प्राजापत्यकृच्छ्रस्य गोदानप्रत्याम्नायः ।

---

(१) तदर्थं इति कामीपुस्तकपाठः ।

## अथ समुद्रगनदीस्नानप्रत्याम्नायमाह ।

देवलः—

समुद्रगा नद्यः—

भागीरथी च यमुना नर्मदा च सरस्वती ।
गोदावरी कृष्णवेणी तुङ्गभद्रा पिनाकिनी ॥
मलहारी भीमरथी वञ्जुला भवनाशिनी ।
चन्द्रभागा चैव कावेरी ताम्रपर्णी महानदी ॥
धनुष्कोटिः प्रयागश्च गङ्गासागरसङ्गमः ।

समुद्रगनदीस्नानं प्रत्याम्नायः

एताः पुण्यतमा नद्यो दर्शनात् पापहारिकाः ।
स्पर्शनात् मोक्षदाः नृणां स्नाने मुक्तिप्रदाः स्मृताः ॥

विंशत्योजनगा महानदी समुद्रगा । एतासु स्नानमात्रेण मनुजः पूतो भवति । प्राजापत्यस्य कृच्छ्राचरणेऽसमर्थस्य तत् प्रत्याम्नायगोदानाचरणे च अशक्तस्य नदीस्नानरूपमेव कलौ युगे समीचीनं अतो नदीस्नानमेव वयं प्रत्याम्नाय ब्रूमः—

गङ्गायां मौसलं स्नानं प्राजापत्यसमं विदुरिति भविष्योत्तरोक्तत्वाद् गङ्गास्नानं विशुद्धिदं इति । पञ्चविधाः गङ्गाः स्कन्दपुराणे—

भागीरथी गौतमी च कृष्णवेणी पिनाकिनी ।
चन्द्रभागा चैव कावेरी पञ्च गङ्गाः प्रकीर्तिताः ॥
अन्याः समुद्रगा नद्यो नृणां पापापहारिकाः ।

एतासु महानदीषु स्नातृणां एताः परिमाणदाः[1] पृथक् पृथक् फलमाह ।

गौतमः—

समासस्य च या सिन्धुर्यावद्योजनमात्रगा ।
तामुद्दिश्य यदा [2]गन्ता स्नानाय दर्शनाय वा ॥
यावन्ति योजनानीह तावत्कृच्छ्रफलं लभेत् ।
परार्द्धं योऽनुगच्छेद्वा स्नानमात्रफलं लभेत् ॥
भृतिं गृहीत्वा यो गच्छेन् न तस्योभयमस्ति हि ।
विष्णुपादोद्भवा गङ्गा दशकृच्छ्रफलप्रदा ॥
यमुना च तथा नृणां दशकृच्छ्रफलप्रदा ।
गौतमी श्रीकृष्णवेणी सप्तकृच्छ्रफलप्रदा ॥
पिनाकिनी च कावेरी अष्टकृच्छ्रफलप्रदा ।
तुङ्गभद्रा भीमरथी सप्तकृच्छ्रफलप्रदा ॥
वञ्जुला भवनाशाय ऋतुकृच्छ्रफलप्रदा ।
फाल्गुणी ताम्रपर्णी च सप्तकृच्छ्रफलप्रदा ॥
चापाग्रे स्नानमात्रेण अब्दकृच्छ्रफलप्रदा ।
श्रीशैलसङ्गमे चैव गङ्गासागरसङ्गमे ॥
विंशत्कृच्छ्रफलं स्नानं यतो नद्यश्च पावनाः ।

प्राजापत्यकृच्छ्राम्नाय नदीस्नानप्रकारमाह,—पूर्व्ववत् पुनाह

---

(१) परिस्नातृणामिति केषुचित्पुस्तकपाठः ।

(२) गन्तुः इति कतिपयकेषुचित्पुस्तकपाठः ।

आचमनं सङ्कल्पादिकं कृत्वा सूक्तं पठन् नदीस्नानाभिमुखो भूयात् नदीं गत्वा कर्त्ता पूर्व्वं स्नात्वा स्नातान् विप्रान् गन्धपुष्पाक्षतैरभ्यर्च्य मया परिषत्सविधौ सङ्कल्पितस्य सर्व्वप्रायश्चित्तस्य समग्रफलावाप्त्यर्थं पारिषन्निर्णीतं प्राजापत्यकृच्छ्रप्रत्याम्नायस्नानरूपं अब्दं द्व्यब्दं त्र्यब्दं चतुरब्दं पञ्चाब्दं षडब्दं षड्गुणितं षडब्दं षड्गुणितं त्रेधावर्त्तितं '(१)षडब्दम्' यथा सङ्कल्पितं तत्र प्राजापत्यकृच्छ्रप्रत्याम्नायभूतमब्दादि संख्याकमहं स्वयं वा ब्राह्मणैः वा महानदीस्नानरूपं आचरिष्ये इति सङ्कल्प्य ब्राह्मणान् प्रेषयेत्। ऋत्विजस्तु यजमानगोत्रनक्षत्रराशि-शाखानामधेयानि षष्ठ्यन्तेन समुच्चार्य्य एतेन अमुकगोत्रेणामुक-नक्षत्रेणामुकराशौ जातेनाऽमुकशाखाध्यायिनाऽमुकनामधेयेन परि-षत्सविधौ सङ्कल्पितस्य सर्व्वप्रायश्चित्तस्य परिषन्निर्णीतस्य प्राजा-पत्यकृच्छ्रप्रत्याम्नायपरिकल्पितानि महानदीस्नानानि मौषलवत् आचरिष्याम। इति ऋत्विक्सङ्कल्पः।

महानद्यां नदीमुखः सन् मन्त्रवर्ज्जं मौषलमज्जनवत् स्नानं कृत्वा तटमागत्य पुनर्द्विराचम्य धौतवस्त्रं परिधाय तदभावे द्वादशसंख्यया हस्तावधूननं कृत्वा आच्छाद्य द्विराचम्य पूर्व्ववत् स्नायात् एवं सङ्कल्पाब्दादिसंख्या भवति। यजमानः स्नातेभ्य ऋत्विग्भ्यः निष्कं वा तदर्द्धं वा पादं वा स्नानफलस्वीकरणार्थं दद्यात्। निष्कशब्दोदेवमानेन वराहद्वयं ऋषिमानेन तदर्द्धं

(१) षडब्दमित्यधिकं वेष्टितपुस्तके नास्ति।
(२) वेन इति शोधितवेष्टितपुस्तकपाठः।

मानुपमानेन तदर्द्धं ग्राहयति प्रभूणामुक्तप्रकारमेव समर्थस्य मध्यमं भकिञ्चनस्य तदर्द्धं सुवर्णप्रमाणं यथोक्तं तत्तथैव नाऽन्यत्।

गौतमः—

गङ्गायां [1]मौषलं स्नानं प्राजापत्यसमं विदुः।

एतत् पञ्चगङ्गास्नानविषयं इतरासु समुद्रगनदीषु प्रतिस्नानं सङ्कल्पः कुल्यायां तटाकपुष्करिण्यादिषु पृथक् सङ्कल्पः खण्डानुवाकपठनम्। सूर्य्याभिमुखः सन् सम्मार्जनान्ते तटं गत्वा धौतवस्त्रादिकं धृत्वा अष्टोत्तरशतं गायत्रीं जप्त्वा प्राजापत्यकृच्छ्रात्मक[2]व्रतफलमाप्नोति स्नानमेव कृच्छ्रफलदं तेभ्यश्च पूर्व्ववत् दक्षिणा देया। एवं अब्दादि संख्यया स्नात्वा पूतो भवति।

इति हेमाद्रौ प्राजापत्यकृच्छ्रप्रत्याम्नायनदीस्नानम्।

---

## अथ प्राजापत्यकृच्छ्रप्रत्याम्नायपरिकल्पितद्वादशब्राह्मणभोजनविधिमाह।

देवलः—

प्राजापत्यस्य कृच्छ्रस्य प्रत्याम्नायममुं शृणु।
यं कृत्वा मुच्यते पापैर्महद्भिरपि नारद॥

---

(१) स्नानमिति वेखितश्रौतपुस्तकपाठः।
(२) कृच्छ्रात्मकं भवति इति वेखितपुस्तकपाठः।

पूर्व्ववत् सङ्कल्पादिकं कृत्वा द्वादशब्राह्मणान् निमन्त्रयेत्।

पराशरः—

प्राजापत्यस्य कृच्छ्रस्य प्रत्याम्नायं द्विजार्च्चनम्।
कृत्वा शुद्धिमवाप्नोति प्राजापत्यफलं लभेत्॥
विप्रान् शान्तान् सपत्नीकान् वेदशीलपुरस्कृतान्।
सदाचारान् शुचीन्नित्यं कृच्छ्रार्थं तान्नियोजयेत्॥

तदाह आपस्तम्बः—

शुचीनमन्त्रवतः सर्व्वकृत्येषु भोजयेत् देशतः कालतः शौचतः सम्यक् प्रतिगृह्णीतान् इति।

एवं विप्रान् निमन्त्र्याऽथ भोजयेद्बहुविस्तरैः।
तेभ्यश्च दक्षिणा देया यथा वित्तानुसारतः॥
एवं यः कुरुते सम्यक् प्राजापत्यफलं लभेत्।

इति हेमाद्रौ प्राजापत्यकृच्छ्रप्रत्याम्नायद्वादशब्राह्मणार्च्चनम्।

---

## अथ तत्प्रत्याम्नाय वेदपारायणप्रकारमाह।

देवलः—

प्राजापत्यस्य कृच्छ्रस्य वेदपारायणं भवेत्।
प्रत्याम्नायं प्रशंसन्ति शाखामात्रं सुधारणम्॥

पारायणेन भगवान् [1]परितुष्टोभवेत् तदा।
फलं सम्पूर्णकृच्छ्रस्य प्रददाति न संशयः॥
प्रातःकाले शुचिर्भूत्वा नित्यकर्म्म समाप्य च।
स्वगृहे देवतागारे नद्यां वा देवतालये॥
प्राङ्मुखोदङ्मुखो वाऽपि सङ्कल्पं पूर्व्वमाचरेत्।
पारायणादौ प्रणवं कृत्वा पारायणं पठेत्॥
दिशस्त्वनवलोक्यैव असम्भाष्यैव पापिनः।
मौनव्रतं समागम्य पठेद्वेदं शनैः शनैः॥
शीघ्रपाठी शिरःकम्पी तथा [2]लिखितपाठकः।
गद्गदी स्वरहीनश्च पञ्चैते पाठकाधमाः॥
ततः शनैः शनैर्विद्यामभ्यसेदात्मशुद्धये।
यावत् समाप्तिर्भवति तावत् कृच्छ्रफलं लभेत्॥
स्वयमेव पठेद्वेदं उत्तमं परिकीर्त्तितम्।
प्रत्याम्नायोमध्यमः स्याद् भृतके निष्फलं भवेत्॥

इति हेमाद्रौ संहितामात्रप्रत्याम्नायः।

---

(१) कृतकृत्य इति केचित्पुस्तकपाठः।
(२) लिखति इति केचित्पुस्तकपाठः।

---

## अथाऽयुतगायत्रीजपरूपप्रत्याम्नायमाह ।

देवलः—

प्राजापत्यस्य कृच्छ्रस्य प्रत्याम्नायोजपोमहान् ।
अयुतं वेदमातुश्च [1]सर्व्वपापप्रमोचदः ॥
प्रातः स्नात्वा [2]यथाचारं दन्तधावनपूर्व्वकम् ।
अग्निहोत्रालये देव-गृहे वाऽपि नदीतटे ॥
गोष्ठे वृन्दावने देशे जपेदयुतसंख्यया ।
पर्वभिर्जपमालाभिः कुशग्रन्थिभिरेव वा ॥
स्वयं मौनमुपास्थाय दिशश्चाऽनवलोकयन् ।
जपेन्महापापजालदहनार्थं दिने दिने ॥
अव्यग्रचित्तः प्रजपेद् अन्यथा दोषमश्नुते ।

मार्कण्डेयः—

सन्दिग्धस्तु हतोमन्त्रो व्यग्रचित्तोहतोजपः ।
अब्रह्मण्यं हतं श्राद्धम् अनाचारं कुलं हतम् ॥
अतोमनसि जप्तव्यं मानसं कोटिरुच्यते ।
[3]अयुते च जपे पूर्णे प्राजापत्यफलं लभेत् ॥
अकृत्स्नमेण यज्जप्तं यज्जप्तं मेरुलङ्घने ।
द्विधाचित्तेन यज्जप्तं तत्सर्व्वं निष्फलं भवेत् ।

---

(१) सर्व्वपापैः प्रमुच्यते इति श्रीतर्केचितपुस्तकपाठः ।
(२) यथाचारमिति केचितपुस्तकपाठः ।
(३) अयुतजाले इति श्रीतर्केचितपुस्तकपाठः ।

पराशरः—

हस्तस्याऽनामिका[1]पर्व्वमध्यादारभ्य यत्नतः।
तद्द्वितीयं कनिष्ठायाः पर्व्वत्रयमनुक्रमात्॥
अनामिकोर्द्ध्वपर्व्वादि [2]मध्यमातर्ज्जनीद्वयम्।
पर्व्वत्रयं तदा ज्ञात्वा तथैवाऽक्रम्य पूर्व्ववत्॥
मेरुरङ्गुष्ठएवस्यात् तस्य [3]नैव क्रमं चरेत्।
पर्व्वभिर्गणयेन्नित्यं[4] गायत्रीं नाऽन्यचेतसा[5]॥
एकैकेन शतं प्रोक्तं गणनं मुनिभिः परैः।
अयुतेन जपेनाऽऽशु प्राजापत्यफलं लभेत्॥

जपतोनास्ति पातकमिति स्मरणाच्च।

इति हेमाद्रौ प्राजापत्यकृच्छ्रप्रत्याम्नायायुत-
गायत्रीजपविधिः।

---

(१) मध्यपर्व्वादिति केचित्पुस्तकपाठः।
(२) मध्यमायाश्च तर्ज्जनी इति केचित्पुस्तकपाठः।
(३) नास्ति इति केचित्पुस्तकपाठः।
(४) नयवेद्वस्तु इति क्वचित्केचित्पुस्तकपाठः।
(५) नान्यमेधया इति केचित्पुस्तकपाठः।

अथ तिलहोमसहस्ररूपप्रत्याम्नायमाह ।

देवलः—

प्राजापत्यस्य कृच्छ्रस्य प्रत्याम्नायविधिस्त्वयम् ।
होमस्तिलैरकोटैश्च घृताक्तैः पापनाशकृत् ॥
मृत्युञ्जयेन मन्त्रेण न्यासध्यानपुरःसरम् ।
मन्त्रान्ते जुहुयादग्नौ चाहुतीर्बीजपूरणैः ॥
सहस्रहोमं कृत्वाऽपि पूतोभवति तत्क्षणात् ।
स्वयं वा ऋत्विगेको वा तिलहोमसहस्रकम् ॥
कुर्य्यान्मौनेन मेधावी प्राजापत्यफलं लभेत् ।
अल्पमात्रैस्तिलैर्होमः सर्व्वपापविनाशकृत् ॥
प्राजापत्यस्य कृच्छ्रस्य प्रत्याम्नायोमहत्तरः ।

इति श्रीहेमाद्रौ प्राजापत्यस्य कृच्छ्रस्य प्रत्याम्नायस्तिलहोमः ।

---

## अथ प्राजापत्यस्य कृच्छ्रस्य प्राणायामशतद्वय-
## प्रत्याम्नायमाह ।

देवलः—

प्राजापत्यस्य कृच्छ्रस्य प्रत्याम्नायोमहत्तरः ।
धर्म्मशास्त्रोक्तमार्गेण प्राणायामशतद्वयम् ॥
महापातकयुक्तो वा युक्तोवा सर्व्वपातकैः ।
पूतो भवति संसाध्य प्राणायामशतद्वयम् ॥
जपसङ्कल्पहोमेषु सन्ध्यावन्दनकर्म्मसु ।
प्राणायामांस्त्रिरेविप्रस्तदाऽऽनन्त्याय कल्पते ॥

मार्कण्डेयः—

वामेनाऽऽपूरयेद्वायुं पूरणात् पूरकः स्मृतः ।
सम्पूर्णंकुम्भवत्तिष्ठेत् कुम्भनात् कुम्भकः स्मृतः ॥
सर्व्वमारेचयेद्वायुं रेचनाद् रेचकः स्मृतः ।
वायुमापूरयन् रन्ध्राद् गायत्रीं मनसा स्मरन् ॥
पूरके कुम्भके चैव रेचके तां जपेत् त्रिधा ।
एवं त्रिवारं जप्येन सर्व्वैका तन्निवेदियम् ॥

पराशरः—

वामेन वायुमापूर्य्य गायत्रीं मनसा स्मरन् ।
सम्पूर्णंकुम्भवत् तिष्ठेत् पुनस्तामनुवर्त्तयन् ॥
रेचयन् सर्व्वरन्ध्रेण पुनस्तामेव संस्मरेत् ।
एवं पूरणकुम्भाभ्यां रेचकेन सहाऽमुना ॥

यो वर्त्तयेत् त्रिधा ब्रह्मन् प्राणायामइतीरितः ।
श्राद्धे जपे च होमे च सन्ध्याकर्म्मसु सर्व्वदा ॥
योवर्त्तयेत् प्रतिदिनं परब्रह्म स उच्यते ।
एवं व्रतद्वयं [1]कुर्य्यात् पूर्व्वोक्तविधिना द्विजः ॥
प्राजापत्यस्य कृच्छ्रस्य प्रत्याम्नायोनिगद्यते ।
सर्व्वपापविनिर्म्मुक्तः स याति परमं पदम् ॥

इति श्रीहेमाद्रौ प्राजापत्यकृच्छ्रप्रत्याम्नायः ।

---

## अथ तप्तकृच्छ्रलक्षणमाह ।

देवलः—

वार्य्युष्णं त्रिदिनं विप्रो [2]दुग्धमुष्णं दिनत्रयम् ।
त्रिदिनं घृतमुष्णञ्च पीत्वा शुद्धिमवाप्नुयात् ॥

मार्कण्डेयः—

त्र्यहमुष्णं पयस्तप्तं घृतमुष्णं दिनत्रयम् ।
कृत्वा शुद्धिमवाप्नोति [3]ब्रह्महाऽपि द्विजर्षभः ॥

---

(१) कृत्वा इति क्वचित्लेखितपुस्तकपाठः ।
(२) पयोष्णमिति लेखितपुस्तकपाठः ।
(३) ब्रह्महत्या द्विजर्षभ इति लेखितपुस्तकपाठः ।

गौतमः—

उष्णं पयः पयस्तप्तमुष्णं घृतमनुत्तरम् ।

चतुर्णामपि पापानां पावनं मुनिभिः स्मृतम् ॥

आपस्तम्बः—

त्र्यहमुष्णं पिबेद्वारि त्र्यहमुष्णं पयः पिबेत् ।

त्र्यहमुष्णं पिबेत् सर्पिरेतत्तप्तं विधीयते ॥

पलसंख्यामाह—

जावालिः—

षट्पलन्तु पिबेद्वारि त्रिपलन्तु पिबेत् पयः ।

पलमेकं पिबेत् सर्पिरेतत्तप्तं विधीयते ॥

ग्रन्थान्तरे—

त्र्यहमुष्णं पिबेद्वारि त्र्यहमुष्णं पयः पिबेत् ।

त्र्यहमुष्णं पिबेत्सर्पिर्वायुभक्षोदिनत्रयम् ॥

वायुभक्ष इति उक्तमनुक्तं वा द्वादशदिने परिपूर्णार्थं कर्त्तव्यं यत्र यत्र कृच्छ्रमिति मुनिभिरुपदिष्टं तत्र तत्र द्वादशदिनं वेदितव्यम् ।

तदाह—

वृहस्पतिः—

मुनिभिः कृच्छ्रमित्युक्तं शास्त्रेषु द्विजवल्लभ ।

तत् कृच्छ्रं द्वादशाहोभिः साध्यं देवविदुर्विदम् ॥

यत्र यत्राऽब्दमित्युक्तं कृच्छ्रेषु तत्र त्रिंशत् संख्या ।

तदेवाऽऽह—

मरीचिः—

प्राजापत्येषु कृच्छ्रेषु शब्दमित्युच्यते बुधैः ।
त्रिंशत्संख्यां विजानीयात् प्राजापत्यस्य लक्षणम् ॥

प्राजापत्यस्य कृच्छ्रस्य । संवत्सरे कृच्छ्रगणनायां त्रिंशत् कृच्छ्राशीत्येव बोद्धव्यम् । रजस्वलासंस्पर्शादिषु तप्तकृच्छ्रमेव विशुद्धिदं सर्व्वेषां पापानामपि ।

सर्व्वेषामेव पापानां तप्तकृच्छ्रं विशोधनम् ।
अतः परममित्युक्तं मुनिभिस्तत्त्वदर्शिभिः ॥

इति हेमाद्रौ तप्तकृच्छ्रलक्षणम् ।

---

## अथ तप्तकृच्छ्रप्रत्याम्नायमाह ।

देवलः—

तप्तकृच्छ्रस्य महतः प्रत्याम्नायो मनीषिभिः ।
अशक्तानाञ्च कृपया कर्त्तुमुक्तः पुराऽनघाः ॥
तमेवाहं ब्रवीम्यद्य शृण्वन्तु द्विजसत्तमाः ।
कलौ युगे विशेषेण अशक्तागाश्रयं गताः ।

परासरः—

कृते चर्माश्रिताः प्राणाः त्रेतायां कीकसाश्रिताः ।

[1]द्वापरे [2]स्नाय्वाश्रितास्त्वस्थि कलावन्नाश्रिता मताः ॥

इति कलौयुगे द्वादशरात्रसाध्यकृच्छ्राणि आचरितुमशक्तान् जनान् निरीक्ष्य परमकृपालवो महर्षयः प्रत्याम्नायानुक्तवन्तः तानेवाऽऽह ।

गौतमः—

[3]अशक्तस्य तप्तकृच्छ्रस्य ब्रह्महत्यानिवारणे ।

तुलाप्रतिग्रहीतॄणां [4]साधनाय महामुने ॥

[5]प्रत्याम्नायस्तथा चेमं यदा देवसभागतः ।

स्वयम्भूः कृपया नृणां गवां विंशतिमादरात् ॥

सवत्सां बहुदुग्धां च प्रदद्यात्तु द्विजातये ।

द्विजातिभ्य इति जातावेकवचनम् ।

मरीचिः—

[6]प्रत्याम्नाये तु कृच्छ्रस्य तप्तस्य ब्रह्मरूपिणः ।

दद्याद्द्विजातये सम्यक् गवां विंशतिमादरात् ॥

---

(१) इदमर्धं काशीपुस्तके नोपलभ्यते ।

(२) त्वस्थिमांसाश्रिता इति श्रौतवैदिकपुस्तकपाठः ।

(३) अकृततप्तकृच्छ्रस्य इति वैदिकपुस्तकपाठः ।

(४) शोधनाय इति वैदिकपुस्तकपाठः ।

(५) प्रत्याम्नायस्तदा प्रोक्त इति श्रौतवैदिकपुस्तकपाठः ।

(६) पापनाशस्य इति वैदिकपुस्तकपाठः ।

पराशरः—

'अग्नौ तप्तकृच्छ्रस्य विप्रायाऽध्यात्मवेदिने।
सालङ्कारां सवत्सां च प्रदद्याद्विंशतिं गवाम्॥
शुद्धिमाप्नोति राजेन्द्र तप्तकृच्छ्रफलं लभेत्।
अतो द्विजातिभिः कार्य्यः प्रत्याम्नायस्त्वशक्तितः॥
पञ्चगव्यं पिबेत् पश्चात् प्रत्याम्नाय इतीरितः।

तुलादिप्रतिग्रहीतॄणां तत्र प्रायश्चित्ताकरणविषये इयमेव गतिः।

इति हेमाद्रौ तप्तकृच्छ्रप्रत्याम्नायः।

---

## अथ पराककृच्छ्रलक्षणमाह।

देवलः—

अथ वक्ष्यामि कृच्छ्रस्य पराकस्य महात्मनः।
सर्व्वदोषनिवृत्तस्य सर्व्वशास्त्रानुवर्त्तिनः॥
पराकः कृच्छ्र इत्युक्तो विष्णुना प्रभविष्णुना।
यस्याऽऽचरणमात्रेण सर्व्वपापैः प्रमुच्यते॥
ब्रह्महत्या सुरापानं स्तेयं गुर्व्वङ्गनागमः।
सङ्कलीकरणञ्चैव जातिभ्रंशकरं तथा॥

---

(१) अङ्कतत्तप्तकृच्छ्रस्य इति केषाञ्चित्पुस्तकपाठः।

उपपातकमित्येतद् बहुधा परिकीर्त्तितम् ।
तुला हिरण्यगर्भश्च ब्रह्माण्डोऽयं घटस्तथा ॥
तथा कल्पतरुश्चैव गोसहस्रमनन्तरम् ।
हिरण्यकामधेनुश्च हिरण्याश्वस्तथैव च ॥
हिरण्याश्वरथश्चैव हेमहस्तिरथस्तथा ।
पञ्चलाङ्गलकश्चैव धरादानमतःपरम् ॥
विश्वचक्रं कल्पलता सप्तसागरमेव च ।
रत्नधेनुश्च महती महाभूतघटस्तथा ॥
कालपुरुषं कालचक्रं राशिचक्रमनन्तरम् ।
कोटिलक्षतिलैर्होमो द्विमुखी सुरभिस्तथा ॥
आर्द्रकृष्णाजिनश्चैव शकटं पर्व्वसङ्क्रमे ।
छागादिपञ्चकश्चैव तथैव दश धेनवः ॥
तथा दशमहादानं अचलाः सप्तनामकाः ।
रहस्यकृतपापानि ब्रह्महत्यादिकानि च ॥
पापानां नवधोक्तानामितरेषां मुनीश्वराः ।
तुलादिर्व्रतहीनानां पराकः कृच्छ्रनामकः ॥
सर्व्वपापहरो नृणां देवर्षीणां प्रियङ्करः ।
सर्व्वेष्वयं तु कृच्छ्रेषु महान् मोक्षः स्वयम्भुवा ॥

गौतमः—

प्रत्यहं घृतमात्रञ्च द्वादशाहं नवोद्भवम् ।
पीत्वा पलं द्विजः शुध्येत् पराक इति विश्रुतः ॥

सर्व्वपापप्रशमनः सर्व्वोपद्रवनाशनः ।
सर्व्वलोकप्रदीपश्चाह भगवानाह विश्वराट् ॥

व्यासः—

प्रत्यहं गोघृतं विप्रः द्वादशाहं पलं मुदा ।
पीत्वा शुद्धिमवाप्नोति पापेभ्योनाऽन्यथा [1]क्वचित् ॥

लौगाक्षिः—

द्वादशाहं घृतं तप्तं पलमात्रं गवामिह ।
[2]पीत्वा शुद्धिमवाप्नोति सर्व्वपापैः प्रमुच्यते ॥

पराको नाम तप्तेन गोघृतेन पलमानेन द्वादशरात्रं चतुर्थकाले नियमानन्तरं पीत्वा द्विजः शुद्धिमवाप्नोति, अयमेव पराकः ।

इति हेमाद्रौ पराकव्रतलक्षणम् ।

---

(१) द्विज इति श्रौतवैदिकपुस्तकपाठः ।
(२) द्विज इति वैदिकश्रौतपुस्तकपाठः ।

## अथ पराककृच्छ्रप्रत्याम्नायमाह ।

देवलः—

प्रत्याम्नायं पराकस्य वक्ष्याम्यहमनुत्तमम् ।
सर्व्वपापोपशमनं महापापनिकृन्तनम् ॥

व्यासः—

'पराको नाम यत् कृच्छ्रं तत्कर्त्तुं मनुजोत्तमः ।
अशक्तस्तस्य कृच्छ्रस्य प्रत्याम्नायं समाचरेत् ॥
तस्याऽऽचरणमात्रेण पराकस्य फलं लभेत् ।
प्रत्याम्नाये गवां दद्याद् दशपञ्च सवत्सकाम् ॥
सर्व्वपापविनिर्म्मुक्तः स याति परमं पदम् ।
महापातकजालानि उपपातकमेव च ॥
तत्सर्व्वं नाशयत्याशु तूलराशिमिवाऽनलः '

मरीचिः—

प्रत्याम्नायं पराकस्य दश पञ्च गवां द्विजः ।
दद्यात् पापविशुद्ध्यर्थं सर्व्वश्रेयोऽभिवृद्धये ॥

---

(१) पराकमिति क्वचित्पुस्तकपाठः ।

महापातकयुक्तो वा युक्तो वा सर्व्वपातकैः ।
प्रत्याम्नायेन कृच्छ्रस्य पराकस्य जनाधिप ॥
सर्व्वकृच्छ्रफलं प्राप्य प्रयाति परमं पदम् ।

पराककृच्छ्राचरणासमर्थस्य तत् प्रत्याम्नाये पञ्चदशधेनूः विप्रेभ्यः पृथक् पृथक् दत्त्वा शुध्यतीति वाक्यार्थः ।

इति हेमाद्रौ पराककृच्छ्रप्रत्याम्नायः ।

---

अथ यावककृच्छ्रलक्षणमाह ।

देवलः—

अथाऽतः संप्रवक्ष्यामि कृच्छ्रं यावकसंज्ञितम् ।
तस्याऽऽचरणमात्रेण ब्रह्महत्या विमुच्यते ॥

मरीचिः—

शृणुध्वं ऋषयः सर्व्वे यावकं कृच्छ्रमीरितम् ।
विप्रदाने च यत् पापं यत् पापं ब्रह्मदाहने[1] ॥

---

(१) ब्रह्मदाहके इति लेखितपुस्तकपाठः ।

शस्त्रधारे च यत् पापं यत् पापं विप्रवञ्चने ।
विधवाव्रतलोपे च यतिसन्न्यासिनोरपि ॥
ब्रह्मस्वस्य सदाचारत्यागे यत् पापमुच्यते ।
अनृते चैव यत् पापं तपोविक्रयतस्तथा ॥
[1]यद्दानकीर्त्तने पापं यत् पापं गुरुवञ्चने ।
यत् पापं विप्रनिन्दायां यत् पापं मातृभर्त्सने ॥

भगिनीपित्रोरप्युपलक्षणम्—

यत् पापं धेनुनिन्दायां यत् पापं शिवभर्त्सने ।
यत् पापं विष्णुनिन्दायां यत् पापं देव[2]कुत्सने
अज्ञानभोजने पापं अनध्यायेषु पाठने ।
दुःसङ्गतेश्च यत् पापं यत् पापं धनगर्व्वितः ॥
यत् पापं वेश्या[3]संसर्गे यत् पापं दानमोचने ।
यत् पापमृतुसन्त्यागे यत् पापं भाण्डविक्रये
सकेशस्नानरहितविधवाकान्नभोजने ।
पुनर्भुक्ता सताम्बूला यदा निन्दापरायणा ॥

---

(१) दानस्य कीर्त्तनात् इति केचित्पुस्तकपाठः ।
(२) तत्र इति केचित्पुस्तकपाठः ।
(३) अथवा तत्र इति केचित्पुस्तकपाठः ।

विधवा[1] कुरुते पापं पतिद्वेषपरायणा।
पुत्रश्चेत् पितृविद्वेषी सदा विप्रः परान्नभुक्॥
कुचेलः सर्व्वदा तिष्ठन्नदन्तक्षालितानन:।
बह्वाशी निष्ठुरं वक्ता विप्रदानेषु विघ्नकृत्॥
एतेषां पावनार्थाय यावकं कृच्छ्रमीरि[2]तम्।

पराशरः—

सर्व्वपापविशुद्ध्यर्थं यावकं कृच्छ्रमीरितम्।
तदाचरणमात्रेण विप्रोभवति शुद्धिमान्॥
चन्द्रतन्त्रयवान् पक्त्वा स्वच्छाम्भो व्रती शुचिः।
तद्यवागूं पिबेत्कृत्वा[3] ब्रह्मपत्रपुटे वशी।
यवाभावे व्रीहयो वा श्यामाकास्तस्य मानतः॥
तदन्नं व्रतिने दत्त्वा यवागूं विश्ववेऽर्पयेत्।
नित्यकर्म्मादिकं कृत्वा पूर्व्ववत् शुचिमानसः॥

पूर्व्ववदित्यत्र प्रातःस्नात्वा नित्यकर्म्मादिकं कृत्वा यावन्मन्दायते रविः तावत्पर्य्यन्तं पूर्व्ववत् विभूतिविश्वरूपादिकं पठन् नारायणमनुस्मरन् यवागूं पिबेत्। तदाऽऽह—

---

(१) यदाभवति वा नारी इति श्रीतवेष्टितपुस्तकपाठः।
(२) आचरेदिति श्रीतवेष्टितपुस्तकपाठः।
(३) वनाद्रा इति वेष्टितपुस्तकपाठः।

गौतमः—

ब्रह्मपत्रपुटे राजन् धृत्वा स्वयमतन्द्रितः।
तावता मनसा विष्णुं स्मरेत् मन्दायिते रवौ[1]॥
यवागूं विष्णवे दत्त्वा पश्चात् पीत्वा स्वयं मुदा।
पूर्व्ववत्क्षालनं ज्ञात्वा पादपाण्योर्यथाक्रमम्॥
द्विराचम्य शुचिर्भूत्वा स्वपेन्नारायणाग्रतः।
अजस्रं धारयेदग्निं यावत् कृच्छ्रं समाप्यते॥
परेद्युरेवं कुर्व्वीत द्वादशाहोभिरीरितम्।
तदन्ते गौः प्रदातव्या पञ्चगव्यं पिबेत्सदा।
एवं [2]कुर्य्याद् द्विजोयस्तु सद्यः पापात् स मुच्यते[3]॥

इति हेमाद्रौ यावककृच्छ्रलक्षणम्।

(१) मन्दायते रविरिति श्रीतलेखितपुस्तकपाठः।
(२) कृत्वा इति श्रीतलेखितपुस्तकपाठः।
(३) प्रमुच्यते इति लेखितपुस्तकपाठः।

## अथ यावककृच्छ्रप्रत्याम्नायमाह ।

देवलः—

कृच्छ्रस्य यावकस्याऽस्य प्रत्याम्नायमिमं शृणु ।
सकृत् [1]कुर्य्याद् द्विजोयस्तु स सद्यः पापमुक्तिमान् ॥
प्रत्याम्नायं प्रवक्ष्यामि यावकस्य महात्मनः ।
सर्व्वपापप्रशमनं सर्व्वकृच्छ्रफलं नृणाम् ॥
गावो दश प्रदातव्याः प्रत्याम्नायप्रकल्पिताः ।
सवत्सा दुग्धसम्पन्नाः सुशीलाः समलङ्कृताः ॥
विप्रेभ्यः प्रतिदातव्या व्रतिना तु पृथक् पृथक् ।
पञ्चगव्यं ततः पश्चात् पिबेद्देहविशुद्धये ॥
एतत् कृच्छ्रस्य तु फलं यावकस्य सुखाप्तये ।

गौतमः—

यावकस्य महापापहारिणः फलदायकम् ।
सर्व्वपापोपशमनं महत् पुण्यप्रदायकम् ॥
सम्पूर्णवस्त्राभरणैः स्वरशृङ्गारशोभिना ।
सवत्सा युवती साध्वी गवां संख्या दश स्मृता ॥
पयस्विन्योद्विजाग्रेभ्यः प्रदातव्याः फलाप्तये ।
पञ्चगव्यं पिबेत् पश्चात् शुद्धोभवति मानवः ॥

---

(१) कृत्वा इति श्रीतर्केचिन्तपुस्तकपाठः ।

एवं कृते नरः सम्यग् यावकस्य स्वरूपिणीम्।
गवां सङ्ख्यां द्विजाग्र्याय दत्त्वा फलमवाप्नुयात्॥

इति हेमाद्रौ यावककृच्छ्रप्रत्याम्नायः।

---

## अथ सान्तपनकृच्छ्रलक्षणमाह।

देवलः—

कृच्छ्रसान्तपनस्याऽस्य लक्षणं सर्व्वपापहम्।
श्रीशैलं काशिकाक्षेत्रं गयाक्षेत्रं महत्तरम्॥
प्रयागं यमुनां सिन्धुं गङ्गासागरसङ्गमम्।
तथा सप्तनदीसङ्गं गौतमीं पापहारिणीम्॥
कृष्णावेणीं तुङ्गभद्रां हेमकूटं त्रिलोचनम्।
मार्कण्डेयं सिंहगिरिं तथा धर्म्मपुरीं स्वयम्॥
साक्षाद्रामजयावाटीं मल्लिकार्ज्जुनमेव च।
अहोबलं नृसिंहञ्च तथैव भवनाशिनीम्॥
पिनाकिनीं नदीं तीरे वैद्यनाथं हरं तथा।
वेङ्कटाद्रिं स्वर्णमुखीं कालहस्तीश्वरं तथा॥
साक्षाद्वरदराजञ्च वरभूतं स्वयम्भुवम्।
एकाम्रञ्च तथा लिङ्गं सर्व्वतीर्थमहत्तरम्॥

मध्यार्ज्जुनेशं पापघ्नं कुम्भकोणं तदुद्भवम् ।
श्रीरङ्गं वा महाक्षेत्रं जम्बूनाथमतः परम् ॥
कावेरीं पापशमनीं मधुराविषये शृणु ।
सुन्दरेशञ्च तत्पत्नीं तथैवौघवतीं नदीम् ॥
तथाग्नेयदिशो भागे पर्व्वतो गन्धमादनः ।
रामलिङ्गं धनुष्कोटिं सर्व्वतीर्थपुरस्कृताम् ॥
तथैव दर्भशयनं तत्रत्यञ्च महत्सरः ।
ताम्रपर्णीमहाक्षेत्रं तत्रत्या विष्णुदेवता ॥
अनन्ताख्यं महाक्षेत्रं सुब्रह्मण्यं महत्तरम् ।
एतानि पुण्यक्षेत्राणि द्रष्टुः पापहराणि च ॥
निरोगी सुखजो यस्तु एतेषामेकमेव च ।
न स्नायाद्वा न पश्येद्वा कोऽन्यस्तस्मादचेतनः ॥
धर्म्महीनस्य मर्त्यस्य कर्म्महीनस्य पापिनः ।
अजागलस्तनमिव तस्य जन्म निरर्थकम् ॥
यो मर्त्यो जन्मदिवसात् षष्टिवर्षप्रवर्त्तनात्[1] ।
पुरा न पश्येत्[2] श्रीशैलं तन्मध्ये स तु गर्दभः ॥

द्विजन्मा यः स्वजन्मदिवसादारभ्य षष्टिवर्षमध्ये श्रीशैलपापाघ-वेङ्कटाचलवरदराजश्रीरङ्गादिकं नास्तिकतया न पश्यन् तिष्ठेत् स सर्व्वपापभोगानन्तरं गर्दभोभवेदिति वामनपुराणोक्तश्रवणात् तदाऽऽह—

(१) षष्टिवर्षं प्रवर्त्तते इति श्रीतवेचितपुस्तकपाठः ।
(२) न पश्येद् यदि इति वेचितपुस्तकपाठः ।

मरीचिः—

श्रीशैलं वेङ्कटाद्रिञ्च काञ्चीं श्रीरङ्गनायकम् ।
रामेशञ्च धनुष्कोटिं स्वभावात् षष्टिवर्षगः ॥
न पश्येन्नास्तिकतया गर्द्दभो भुवि जायते ।
तस्यैव निष्कृतिर्नास्ति कृच्छ्रसान्तपनादिना[1] ॥

बृहस्पतिः—

पुण्यालयान् पुण्यनदीर्न पश्येत् षष्टिवर्षगः ।
महान्तं नरकं गत्वा पश्चाद् रासभतां व्रजेत् ॥
तस्य दोषोपशान्त्यर्थं कृच्छ्रं सान्तपनं चरेत् ।
पञ्चगव्यं पिबेत् पश्चाद् दोषादस्मात् प्रमुच्यते ॥

तल्लक्षणमाह—

देवलः—

प्रत्यहं शास्त्रविधिना[2] द्वादशाहं पयः पिबेत् ।
शुद्धिमाप्नोति राजेन्द्र त्यागिनामपि दुर्लभाम् ॥

प्रजापतिः—

पूर्व्ववत् प्रातरारभ्य स्नानं सङ्कल्पमेव च ।
नित्यकर्म्म तथा कृत्वा पूर्व्वोक्तं मनसा स्मरेत् ॥

विभूत्यादिकमित्यर्थः ।

---

(१) कृच्छ्र इति शीतवेष्टितपुस्तकपाठः ।
(२) मासमभ्यस्य इति शीतवेष्टितपुस्तकपाठः ।

यावच्चन्द्रायते भानुस्तावत्तोदुग्धमाहरेत्[1] ।
विष्णवे तन्निवेद्याऽथ पयोमात्रं पिबेद्व्रती ॥
स्वपेद्देवसमीपे तु गन्धताम्बूलवर्ज्जितः ।
ततः प्रभातवेलायां एवं कृत्वा महाव्रतम् ॥
द्वादशाहोभिरेतैश्च शुद्धोभवति पूर्व्वजः ।
पञ्चगव्यं पिबेत् सान्तपनं मुनिभिरीरितम् ॥

इति हेमाद्रौ सान्तपनकृच्छ्रलक्षणम् ।

---

## अथ सान्तपनकृच्छ्रप्रत्याम्नायमाह ।

देवलः—

प्रत्याम्नायं प्रवक्ष्यामि कृच्छ्रस्यैतस्य पापहम् ।
सर्व्वपापोपशमनं धर्म्मकामार्थसिद्धिदम् ॥
व्यासेन कथितं पूर्व्वं कृष्णायाऽमिततेजसे ।
परस्वहारिणो ये च परदाररताश्च ये ॥
मद्यपानरता ये च अगम्यागामिनश्च ये ।
असच्छास्त्ररता ये च ये च दुष्टप्रतिग्रहाः ॥

---

(१) आहरादिति कचित्पुस्तकपाठः ।

मिथ्याभिवादिनो ये च ये च मित्रविभेदिनः।
दीपनिर्व्वापिणो ये च याचकुमारकभेदिकाः॥
दिवा कपित्थच्छायासु रात्रौ चलदलेषु च।
तमालवृक्षच्छायासु रात्रौ वा यदि वा दिवा॥
स्वपतां पापनाशाय प्रत्याम्नायो महत्तरः।
सदा निष्ठुरवक्तारः सदा याञ्चापरायणाः॥
परान्ननिरता ये च नित्यकर्म्मविरोधिनः।
तेषामियं विशुद्धिः स्यात् प्रत्याम्नायः परात्परः॥

गौतमः—

सर्व्वपापविशुद्ध्यर्थं सर्व्वदोषविवर्ज्जितम्।
प्रत्याम्नायं तदा कुर्य्यात् यदा पापसमुद्भवः॥
सान्तपनस्य कृच्छ्रस्य प्रत्याम्नायः स्मृतो दश।
गावोऽलङ्कारसंयुक्ताः सक्षीराः साधुवत्सयः॥

मरीचिः—

प्रत्याम्नायं प्रशंसन्ति गवां दश मुनीश्वराः।
सान्तपनस्य कृच्छ्रस्य सर्व्वपापापनुत्तये॥

व्यासः—

सान्तपनाख्य कृच्छ्रस्य मुनिभिः परिकीर्त्तितः।
[1]प्रत्याम्नायः प्रयच्छेत्तु दश गाः समलङ्कृता इति॥

इति हेमाद्रौ सान्तपनकृच्छ्रप्रत्याम्नायः।

---

(१) इदमर्द्धं श्रीतवेष्टितपुस्तकयोर्नोपलभ्यम्।

## अथ महासान्तपनकृच्छ्रलक्षणमाह ।

देवलः—

महासान्तपनं नाम कृच्छ्रं सर्व्वफलप्रदम् ।
पुरा पुरन्दरः साक्षाद् गौतमस्य सतीं व्रजन् ॥
तेन पापेन महता स पापमलदूषितः ।
वृक्षमूलमुपागम्य वृक्षभावमुपाश्रितः ॥
तदा प्रसन्नवरदश्चक्रपाणिः सवाहनः ।
दृष्ट्वा पुरन्दरं प्राह दयया भक्तवत्सलः ॥
एतत्पापविशुद्ध्यर्थं महासान्तपनं चर ।
गुरुदारांस्तु यो गच्छेच्चाण्डालीगमनं चरेत् ॥
स्वदारागमनं [1]कुर्य्याद् भगिनीं यः प्रवर्त्तयेत् ।
चरेद्वा रजकीं ग्रामे ग्रामचाण्डालदारगः ॥
विप्रश्चाण्डालदारेषु रेतः सिक्त्वा द्विजाधमः ।
एतेषां निष्कृतीराम महासान्तपनं परम् ॥
[2]सत्यस्याऽभाषणे पापं असत्यानाञ्च भाषणे ।
परदत्तापहारे च स्वदत्तापहरे तथा ॥
असूयानिरतिश्चैव सदा भैषज्यवर्त्तनम्[3] ।
व्रतकाले श्राद्धकाले पश्येद् देवार्च्चने यदि ॥

---

(१) कृत्वा इति श्रोतवैखितपुस्तकपाठः ।
(२) असत्यभाषणे इति वैखितपुस्तकपाठः ।
(३) भैषज्यवर्त्तिनी इति वैखितपुस्तकपाठः ।

पापकं पतितं व्रात्यं तुलास्वज्ञातनिष्कृतिम्।

षोड़शमहादानमध्ये यत्र यत्र प्रतिग्रहः प्राप्तः तत्र तत्राऽऽ-चार्य्याद्यामिकवचनं, तुलास्विति बहुवचनं प्राक् प्रदर्शितम्।

तदाऽऽह—

मरीचिः—

चाण्डालं पतितं व्रात्यं तुलास्वज्ञातनिष्कृतिम्।
न स्परेत् कर्म्मकाले तु न पश्येद्वै कदाचन॥
एतेषां पापराशीनां महासान्तपनं परम्।

गालवः—

द्विदिनं समुपोष्यैव द्विदिनं पूर्व्ववत् पयः।
पूर्व्ववन्नियमं कृत्वा द्वादशाहेन शुध्यति॥

पराशरः—

माषमात्रं पिवेत् क्षीरं द्विदिनं समुपोषयेत्।
एवं कुर्य्याद् द्वादशाहं पूर्व्ववन्नियमाश्रितः॥

मनुः—

पूर्व्ववत् प्रातरारभ्य द्विजोनियमपूर्व्वकम्।
यदा मन्दायते भानुः तदा नियमसुत्सृजेत्॥
माषमात्रं पिवेत् क्षीरं विष्णवे तन्निवेदितम्।
द्विनद्वयं पयः पीत्वा द्विदिनं समुपोषयेत्॥
स्वपेच्च पूर्व्ववद्देवसमीपे व्रतमाचरन्।
एवं द्वादशरात्रञ्च कृत्वा शुद्धिमवाप्नुयात्॥

द्विनद्वयम्नपोभवं दिनद्वयं पयोभक्षं एवं क्रमाद् द्वादशाहोभिः महासान्तपनं स्मृतम् ।

इति हेमाद्रौ महासान्तपनकृच्छ्रलक्षणम् ।

---

## अथ महासान्तपनप्रत्याम्नायमाह ।

देवलः—

महासान्तपनकृच्छ्रस्य प्रत्याम्नायं शृणुष्व मे ।
यदाऽऽचरणमात्रेण विप्रः पापात् प्रमुच्यते ॥

महाराजविजये—

महासान्तपनस्याऽस्य प्रत्याम्नायो महानयम् ।
तस्याऽऽचरणमात्रेण महासान्तपनं परम् ॥

चतुर्विंशतिमते—

महासान्तपनं नाम कृच्छ्रं पापहरं परम् ।
ब्रह्महत्यादिशमनमुपपातकनाशनम् ॥
कृच्छ्रस्यैतस्य विप्रः स्यात् चर्तुं सर्व्वमशक्तिमान् ।
प्रत्याम्नायं प्रकुर्व्वीत 'तदा कृच्छ्रफलाप्तये ॥

---

(१) वर्म्म इति केचित्पुस्तकपाठः ।

गावो देयाः प्रयत्नेन विप्रेभ्यः षोड़शाऽमलाः।
अलङ्कृता सुपुष्पाद्यैर्वस्त्राभरणभूषिताः॥
सुशाध्याश्च पयस्विन्यः सवत्साः पापहारिकाः।

पराशरः—

महासान्तपनस्याऽस्य प्रत्याम्नायं विदुर्बुधाः।
गावः षोडश विप्रेभ्यो देयाः सम्यक् सुखाप्तये॥
अलङ्कृताश्च वस्त्राद्यैः पयस्विन्यः पृथक् पृथक्।
सवत्साः साधुशीलिन्यः प्रत्याम्नाय उदीरितः॥

इति हेमाद्रौ महासान्तपनकृच्छ्रप्रत्याम्नायः।

---

## अथ कायकृच्छ्रस्वरूपमाह।

देवलः—

प्राजापत्यं तप्तकृच्छ्रं पराकं यावकं तथा।
ततः सान्तपनं कृच्छ्रं महासान्तपनं तथा॥
कायकृच्छ्रं तथा प्रोक्तमतिकृच्छ्रं विशुद्धिदम्।
उदुम्बरश्च पर्णश्च फलकृच्छ्रमतः परम्॥
कृच्छ्रं माहेश्वरश्चैव ब्रह्मकृच्छ्रं तथैव च।
धान्यं सर्वमयं कृच्छ्रं दश पञ्चैव कीर्त्तितम्॥

पूर्व्वं त्रयोदशकृच्छ्राणीत्युक्तं इदानीं लिङ्गपुराणोक्तत्वात् अति कृच्छ्रकायकृच्छ्राभ्यां सह पञ्चदशधा भवति, सर्व्वेषां एव उपकारकत्वात लिखितम् ।. कायकृच्छ्रातिकृच्छ्रलक्षणं लिङ्गपुराणोक्तं विशिनष्टि ।

कायकृच्छ्रं प्रवक्ष्यामि महापातकशुद्धये ।
उपपातकशुद्ध्यर्थं मुनिभिः परिकीर्त्तितम् ॥

विष्णुपुराणे—

तुलाधेनुसहस्रे च षष्टमाब्दं द्विजोत्तम ।
दाता प्रतिग्रहीतारमन्योन्यं नाऽवलोकयेत् ॥
यदि दैवाद् भनुप्राप्तं तीर्थेषु च महोत्सवे ।
तदा तद्दोषशान्त्यर्थं कायकृच्छ्रं समाचरेत् ॥
द्वितीये जपकृत्पूतः सहस्रं विधिपूर्व्वकम् ।
उभयोर्दानयो राजा तथा ब्रह्मसदस्ययोः ॥
[1]चत्वार्य्येव तु वर्षाणि तन्मुखं नावलोकयेत् ।

दातुः कायकृच्छ्रमितरयोर्ब्रह्मसदस्ययोश्चतुःसहस्रगायत्रीजप अन्यथा तु दोषः ।

वृहस्पतिः—

दातुः प्रतिग्रहीतुश्च कायकृच्छ्रं अपीमहत् ।
अन्योन्यालोकने राजन्नहादानं निष्फलं भवेत् ॥

---

(१) तत्वार्य्येव इति लेखितपुस्तकपाठः ।

न निष्कृतिमलब्ध्वाऽवेचेतेत्यर्थः सर्व्वत्र महादानप्रतिग्रहेषु दातृप्रतिग्रहीत्रोर्ब्रह्मसदस्ययोरेवमुक्तं वेदितव्यं प्रायश्चित्तम् ।

लाङ्गले पञ्चसंख्ये च विश्वचक्रे महत्तरे ।
सप्तमाब्दं तथा राजा तन्मुखं नाऽवलोकयेत् ॥
सप्तसागरदाने च चर्म्मधेनोः प्रतिग्रहे ।
महाभूतघटे चैव तुलावन्नाऽवलोकयेत् ॥

उक्तेषु सप्तप्रतिग्रहेषु दात्राचार्य्यब्रह्मसदस्यानां प्राग्वत्काय-कृच्छ्रादिकं वेदितव्यम् ।

हिरण्यगर्भे ब्रह्माण्डे 'दातुः कायं हि पूर्व्ववत् ।
अन्योन्यलोकने राजा न दानफलमश्नुते ॥

आचार्य्यब्रह्मसदस्यानां पूर्व्ववत् ।

कल्पपादपदाने च तथा कल्पलताग्रहे ।
षडब्दं तन्मुखं राजा विप्रो वा नाऽवलोकयेत् ॥

कायकृच्छ्रं गायत्रीजपः संख्या क्रमेण वेदितव्या ।

हिरण्यधेनुदाने च हिरण्याश्वप्रतिग्रहे ॥
पूर्व्ववत् ऋतुसंख्याब्दमन्योन्यं नाऽवलोकयेत् ॥

कृच्छ्रादिकं पूर्व्ववत् ।

हिरण्याश्वरथे चैव हेमहस्तिरथे तथा ।
अष्टमाब्दं यदा 'न स्याद् अन्योन्यं नाऽवलोकयेत् ॥

---

(१) दाता इति श्रीतवेचितपुस्तकपाठः ।
(२) दैवादिति वेचितपुस्तकपाठः ।

पूर्व्ववत् जप्यादिकम् ।

धरादाने कालपुरुषे कालचक्रे तथैव च ।
तिलगर्भे राशिचक्रे पञ्चमाब्दं न लोकयेत् ॥
यदि दैवात् समुत्पत्तिरतिलङ्घ्य चरेद्दशी ।
पुनः संस्कारसहितः पटगर्भविधानतः ॥
अन्यथा दोषमाप्नोति दाता [1]न फलमश्नुते ।
कोटिहोमे लक्षहोमे पापपुरुष [2]प्रतिग्रहे ॥
आचार्य्यस्य मुखं दाता युगाब्दं नाऽवलोकयेत् ।

तत्राऽप्यतिलङ्घ्यं दातुः । इतरेषां पुनः संस्कारः ।

श्वेताश्वे सूतमब्धायां गजदानप्रतिग्रहे ।
[3]अब्दं तु तन्मुखं दाता पूर्व्ववन्नाऽवलोकयेत् ॥
प्रायलङ्घ्यं चरेद्दाता इतरे पटगर्भतः ।
कपिलादिमुखीदाने दासीग्रहपरिग्रहे ॥
अब्दमेकं द्विजं दाता पूर्व्ववन्नाऽवलोकयेत् ।
पर्णलङ्घ्यं ततः प्रोक्तमितरेषां हि पूर्व्ववत् ॥
आलिङ्गने तैलघटे महापुरुषभोजने ।
षण्मासं नाऽवलोकेत पर्णलङ्घ्यं हि पूर्व्ववत् ॥
तुलादिमहदानेषु स्नत्विजोहोदकानपि ।
तदाःखाब्दाऽवलोकेत फललङ्घ्यमुदाहृतम् ॥

---

(१) विषकर्मिति केषाञ्चित्पुस्तकपाठः ।
(२) विप्रके इति केषाञ्चित्पुस्तकपाठः ।
(३) ष्मब्दं इति कस्योपुस्तकपाठः ।

मासत्रयमित्यर्थः

सर्व्वेषां ऋत्विजां प्रोक्तं सततं अप्यमादरात्।

चाण्डालस्त्रीधेनूनामनड्वाहादिसंग्रहे॥

महिषीच्छागवस्तानां मासमेकं निरन्तरम्।

ऋत्विजां व्रतगायत्री दाता धेनुं समाचरेत्॥

सात्त्विकदानेषु तु चतुर्व्विंशतिमूर्त्यादिषु दाता अवलोकयेत् तेन न दोषः।

गालवः—

चतुर्व्विंशति मूर्त्यादिदानेषु द्विजवल्लभ।

दशावतारदानेषु अर्द्धनार्य्यादिषु प्रभुः॥

मुखावलोकने दातृग्रहीत्रोर्न तु दोषभाक्॥

अर्द्धनारीश्वरलक्ष्मीनारायणप्रतिमोमामहेश्वरप्रतिमादानेषु कृष्णाजिनतिलविरहितेषु दातृप्रतिग्रहीत्रोर्मुखावलोकनं न दोषहेतुः। कृष्णाजिनतिलदानप्रतिमाप्रतिग्रहे तु विशेषमाह।

आवालिः—

दशक्षेत्रेषु योगेषु तुलिमत्सु नृपोत्तमः।

तिलाजिनप्रदानेषु वत्सरं नाऽवलोकयेत्॥

उत्क्रान्तिवैतरिण्योश्च तथा प्रतिज्ञती नृप।

चक्रप्रतिग्रहे तात एकाहे भोजने तथा॥

उपशान्तिषु सर्व्वत्र तथा महिषसंग्रहे।

कर्त्ता नाऽवलोकयेद्विप्रं कायस्थक्रमवाचरेत्॥

षण्मासमयतो, शिशूनां जनन मूलादयः षभुक्ताः तस्मादयः उपनयवापि तेषु स्त्रीणां प्रथमार्त्तवं तत्र शान्तयस्तु उग्राः, कायकृच्छ्रलक्षणमाह ।

मरीचिः—

चत्वारिंशदहानि ग्रासाःस्युरेकैकं प्रत्यहं व्रती ।
निराहारस्तथा तेषु चतुर्थे तेषु भोजनम् ॥
तदन्ते व्रतिभिर्देया गौरिका चान्द्रभक्षणम् ।
कायकृच्छ्रमिदं प्रोक्तं मुनिभिस्तत्त्वदर्शिभिः ॥

आपतिः—

चतुर्विंशःस्तु ग्रासाःस्युः निराहारस्तथा पुनः ।
चतुर्थे ग्रासभक्षः स्यात् कायकृच्छ्रमिदं परम् ॥

मरीचिः—

ग्रासायं प्रातरारभ्य स्नात्वा विप्रो यथाविधिः ।
अभ्यर्च्य विष्णुं गन्धाद्यैरविरक्तं गतो यदा ॥
तदा ग्रासं समश्नीयात् विष्णुर्पितमसुं सुधीः ।
प्रक्षाल्य पूर्व्ववत् सर्व्वं द्विराचम्य शुचिस्तथा ॥
स्वपेद्देवसमीपे तु नारायणमनुस्मरन् ।
पुनः प्रातः समुत्थाय स्नात्वा नियमपूर्व्वकम् ॥

ततः परं निराहारस्तथा 'ग्रेवाह्नभोजनम् ।
गोदानं व्रतपूर्त्यर्थं पञ्चगव्यं पिवेत्ततः ॥
कायकृच्छ्रमिदं देव द्विजानां पावनं स्मृतम् ।

इति हेमाद्रौ कायकृच्छ्रलक्षणम् ।

---

## अथ कायकृच्छ्रप्रत्याम्नायमाह ।

देवलः—

शृणु राम प्रवक्ष्यामि कायकृच्छ्रस्य धीमतः ।
प्रत्याम्नायं महापुण्यं शृण्वतां पापनाशनम् ॥
दश गावः प्रदातव्याः सवत्सा भूषिता नृभिः ।
पयस्विन्यः सुशीलाश्च सर्वशृङ्गोमहत्तराः ॥
एतस्य कायकृच्छ्रस्य प्रत्याम्नायो 'मुनीरितः ।

गालवः—

सर्व्वपापहरस्याऽस्य कायकृच्छ्रस्य वै नृप ।
प्रत्याम्नाया दश गवां सवत्साः साधु'वृत्तयः ॥

---

(१) चतुर्थे इति श्रौतवैष्णवपुस्तकपाठः ।
(२) महर्षिभिरिति श्रौतवैष्णवपुस्तकपाठः ।
(३) दक्षिणाम् इति वैष्णवपुस्तकपाठः ।

भलक्षाययुताः साध्वाः पयसा परिपूरिताः[1] ।
एतदाचरणेनैव कायकृच्छ्रफलं लभेत् ॥

अपरः—

कायकृच्छ्रस्य सर्व्वस्य सर्व्वपापहरस्य च ।
राज्ञां प्रतिग्रहीतॄणां सर्व्वपापहरं परम् ॥
स्नात्वा पुण्यदिने विप्रः सुसङ्कल्प्यैव पूर्व्ववत् ।
विप्रानभ्यर्च्य गन्धाद्यैर्दद्यद्धेनूः पृथक् पृथक् ॥
दद्यात्प्रत्याम्नायभूताः सर्व्वपापापनुत्तये ।
एतस्याऽऽचरणे पूर्णं कायकृच्छ्रफलं लभेत् ॥

इति हेमाद्रौ कायकृच्छ्रप्रत्याम्नायः ।

---

## अथाऽतिकृच्छ्रलक्षणमाह ।

देवलः—

अथाऽतिकृच्छ्रं वक्ष्यामि सर्व्वपापोपशान्तये ।
सर्व्वकृच्छ्रव्रतं नृणां शृणु राम प्रयत्नतः ॥
अतिकृच्छ्रस्य माहात्म्यं वर्णितुं केन शक्यते ।
पुरा हि कौशिको नाम महर्षिर्धर्मपरायणः ॥

---

(1) परिपूर्णकाम् इति केचित्पाठाः ।

वशिष्ठात्मजघात्यासीत् कस्मात् कारणतः प्रभो।
तस्य हत्याविनाशार्थं कृच्छ्रमाह प्रजापतिः॥
ब्रह्महत्या गुरोर्हत्या भ्रूणहत्या महत्तरा।
कन्याहत्या सतीहत्या तथा हत्या महत्यपि॥
वीरहत्या धेनुहत्या गजाश्वमहिषीवधः।
तृणकाष्ठद्रुमच्छेदः प्रशारामादिभेदनम्॥
तटाककूपकासारभेदनं देववेश्मनाम्।
गृहदाहो द्विजक्षेत्रहरणं पापवर्द्धनम्॥
धान्यारामादिदहनं दाहनं महिषीगवाम्।
शृङ्खलाकूलविच्छेदस्तथा तेषां विमर्द्दनम्॥
शुकचाषभुजङ्गानां मीनहंसशुनामपि।
कुक्कुटानाञ्च काकानां हिंसनं मृगमारणम्॥
दारुच्छेदः कपाटस्य पापौघानां विभेदनम्।
दाहनं वनपर्णानामार्द्राणामिह[1] भूमिप॥
सर्व्वासामेव हिंसानामतिकृच्छ्रं विशोधनम्।
सर्व्वकृच्छ्रप्रदश्चैव सर्व्वोपद्रवनाशनम्॥

गालवः—

अतिकृच्छ्रस्य महतः तत्प्रकारमिहोच्यते।
अश्माषान् यवान् शुभ्रान् श्यामाकांस्तण्डुलानपि॥
एकैकं द्रव्यमामादाय व्रतादौ पूर्व्ववच्चरेत्।

(१) इव इति केचित्पुस्तकपाठः।

स्नानसङ्कल्पादिमित्यर्थः—

भागत्रयं तदा ज्ञात्वा तण्डुलान् पूर्व्वमानतः ।
व्रतादौ मध्यमदिने व्रतान्ते पारयेत् त्रयम् ॥
व्रतादौ भक्षयेद्ग्रासं पूर्व्ववत् व्रतमाचरन् ।
चतुर्थकाल आयाते प्रक्षाल्याऽङ्गानि पूर्व्ववत् ॥
स्वपेद्देवसमीपे तु नारायणपरायणः ।
ततः प्रभाते विमले सन्ध्यादीन् पूर्व्ववच्चरेत् ॥
निराहारस्तदा भूत्वा यावत् सायं दिनं ऋतुम् ।
तत्रैव भक्षयेद्ग्रासं द्वितीयाऽर्द्धं विचक्षणः ॥
तत्रापि पूर्व्ववत् ज्ञात्वा द्वादशे दिवसे शुभम् ।
तृतीयार्द्धं तदा भुक्त्वा गौरेका विप्रसात्कृता ॥
ब्रह्मकूर्चं ततः पीत्वा शुद्धिमाप्नोति पूर्व्वजः ।
अतिकृच्छ्रमिदं सर्व्वमुक्तं मुनिभिरादरात् ॥
एतस्याऽऽचरणेनैव सर्व्वदोषात् प्रमुच्यते ।

इति हेमाद्रौ अतिकृच्छ्रलक्षणम् ।

---

अथातिकृच्छ्रप्रत्याम्नायमाह ।

देवलः—

अतिकृच्छ्रस्य कृच्छ्रस्य प्रत्याम्नायो मनीषिभिः ।
प्रोक्तः सर्व्वहितार्थाय सर्व्वपापप्रणाशनः ॥
सङ्करीकरणानाञ्च कन्याधेन्वादिविक्रये ।
तिलतण्डुलधान्यानां फलानां रसविक्रये ॥
महापातकभूतानां शोधनं पापनाशनम् ।

प्रत्याम्नायमाह—

मार्कण्डेयः—

प्रत्याम्नायमिमं राजन् वक्ष्यामि शृणु पार्थिव ।
यदाचरणमात्रेण अतिकृच्छ्रफलं लभेत् ॥
दश गावः प्रदातव्या वस्त्राद्यैः समलङ्कृताः ।
साधुवत्साः पयस्विन्यो विप्रेभ्यश्च पृथक् पृथक् ॥

मनुः—

अतिकृच्छ्रस्य महतः प्रत्याम्नायं शृणुष्व मे ।
विप्रेभ्यो दशगावस्ताः पूर्व्ववत् पूजिता अमूः ॥
स्वर्णशृङ्गादिभिः सम्यक् भूषयित्वा पृथक् पृथक् ।
शुचिभिश्च प्रदातव्या साधुभ्यो[1] वेदवित्तमैः ॥

---

(१) विप्रेभ्य इति श्रीतर्कालङ्कारपुस्तकपाठः ।

इदमुक्तेन मार्गेण क्वत्वा कृच्छ्रफलं लभेत् ।

इति हेमाद्रौ अतिकृच्छ्रप्रत्याम्नायः ।

---

## अथ उदुम्बरकृच्छ्रलक्षणमाह ।

देवलः—

उदुम्बरस्य कृच्छ्रस्य लक्षणं वच्मि तत्त्वतः ।
कृच्छ्रं महत्तरं भूप सर्व्वपापहरं परम् ॥
पितृमातृपरित्यागे सोदराणां हि बालिशान् ।
भगिनीभागिनेयादीन् गर्भिण्यातुरबान्धवाः ॥
बालांश्च कुलवृद्धांश्च अतिथीनागतान् प्रभो ।
सामर्थ्ये सर्व्वबन्धूनां त्यागो दोषो महत्तरः ॥
ब्रह्महत्यामवाप्नोति यश्चोपेक्षापरायणः ।
मातरञ्च स्वसारञ्च अनाथां गतभर्त्तृकाम् ॥
पुत्रीमनाथां विधवां यस्त्यजेत् कारणं विना ।
पितृभगिनीं मातृभगिनीमपुत्रां गतभर्त्तृकाम् ॥
अबलां यस्त्यजेच्छक्तः[1] स वै नरकमश्नुते ।

---

(१) परित्यक्ता इति केचित्पुस्तकपाठः ।

महाभारते—

पिता रक्षति कौमारे भर्त्ता रक्षति यौवने ।
पुत्रस्तु स्थाविरे सा वै न स्त्री स्वातन्त्र्यमर्हति ।
उन्मत्तं पितरं क्लीवं काणं बधिरमेव च ।
(१)श्रेयोर्थी यत्नतोरक्षेद् भक्तवस्त्रादिभिः सदा ॥

गौतमः—

परक्षणीयान् यो रक्षेद् रक्षणीयान् परित्यजेत् ।
स वै नरकमाप्नोति पशुयोनिषु जायते ॥

वेश्यादासी तज्जातरस्तत्पुत्राः कुण्डगोलकाः विटगायका-श्चार्व्वाकास्त्वरक्षणीयाः, अनाथा गतभर्त्तृका निष्पुत्रा पितृव्य ज्येष्ठभ्रात्रादयो निष्पुत्रा निर्धनाः काणकुब्जादयः एते यत्नतो रक्ष्याः, एतेषां परित्यागे दोषः, तत्प्रायश्चित्तमाह—

मार्कण्डेयः—

सामर्थ्ये सति यस्त्यजेदेतान् बन्धुजनान् स्वकान् ।
काकयोनिं समासाद्य दुःखी भूयात् पुनः पुनः ॥
मासं पक्का पञ्चगव्यं षण्मासं पर्णकृच्छ्रकृत् ।
वत्सरौदुम्बरं प्रोक्तमथचान्द्रायणं परम् ॥

उदुम्बरकृच्छ्रलक्षणमाह—

पराशरः—

प्रस्थद्वयं तण्डुलानां श्यामाकांश्च यवानपि ।
दशधा विभज्यैवं प्रत्यहं पाचयेद्व्रती ॥

---

(१) धर्मार्थी इति केचित्पुस्तकपाठः ।

उदुम्बरैः शुष्कपर्णैः पाचयेन्नान्यदारुभिः ।
उदुम्बरैश्च पर्णैश्च चार्द्रैः पत्रपुटं मुदा ॥
तत्र निक्षिप्य तं ग्रासं विश्वावे पूर्व्वमादिशेत् ।
चतुर्थकाल आयाते पूर्व्ववन्नियमं चरेत् ॥
भक्षयेदुत्तमं ग्रासं मौनव्रतपरायणः ।
पादौ प्रक्षाल्य पाणी च द्विराचम्य विधानतः ॥
सायाह्निकं ततः क्वत्वा स्वपेन्नारायणाग्रतः ।
पुनः प्रभाते विमले द्वितीयं पूर्व्ववच्चरेत् ॥
ग्रासपचननियमादिकमित्यर्थः ।
एवं द्वादश ग्रासांश्च द्वादशाहःसु भक्षयेत् ।
तत्राऽपि गौः प्रदातव्या पञ्चगव्यं पिबेत्ततः ॥
एवमौदुम्बरं क्वच्छ्रं क्वत्वा शुद्धिमवाप्नुयात् ।

इति हेमाद्रौ उदुम्बरक्वच्छ्रलक्षणम् ।

---

## अथ उदुम्बरक्वच्छ्रप्रत्याम्नायमाह ।

देवल —

उदुम्बरस्य क्वच्छ्रस्य प्रत्याम्नायं परं शृणुम् ।
यस्याऽऽचरणमात्रेण सम्पूर्णफलमश्नुते ॥

मार्कण्डेयः—

प्रत्याम्नायः पुरा राम जामदग्न्येन भाषितः।
मातृहत्याविशुद्ध्यर्थं किमुताऽन्यस्य पापिनः॥

महाराजविजये—

कृच्छ्रस्यौदुम्बरस्याऽस्य प्रत्याम्नायोमहानयम्।
सर्व्वपापविशुद्ध्यर्थं सृष्टवान् पद्मभूः पुरा॥

चतुर्व्विंशतिमते—

उदुम्बरस्य कृच्छ्रस्य प्रत्याम्नायं शृणुष्व नः।
अष्टौ गावः प्रदातव्याः सालङ्काराः सदक्षिणाः।
हेमशृङ्ग्यो रौप्यखुराः कांस्यदोहनसंयुताः॥
ताम्रपृष्ठ्यः स्वर्णघण्टाः वस्त्राभरणभूषिताः।
द्विजेभ्यश्च प्रदातव्याः सर्व्वलक्षणलक्षिताः॥
सर्व्वपापविनिर्म्मुक्तः सम्पूर्णं फलमश्नुते।

कृच्छ्राचरणासमर्थस्तु तत्प्रत्याम्नायकरणे सम्पूर्णकृच्छ्रफलमाप्नोति।

इति हेमाद्रौ उदुम्बरप्रत्याम्नायः।

---

## अथ पर्य्यङ्कप्रकुलक्षणमाह।

देवल:—

पर्य्यङ्कप्रकं द्विजश्रेष्ठाः शृणुध्वं परमं शुभम्।
सर्व्वपापप्रशमनं सर्व्वदोषोपशान्तिदम्॥
ब्रह्महा क्षयरोगी स्यात् सुरापी श्यावदन्तकः।
स्वर्णस्तेयी तु कुनखी दुश्चर्म्मा गुरुतल्पगः॥
अन्नहर्त्ता भवेद् गुल्मी शाकस्तेयी तु दर्दुरः।
स्तेयिनो धान्यराशीनां कण्डूतिः सततं द्विजाः॥
ताम्रस्तेयी दीर्घहस्तः प्रमेही पर्व्वमैथुनी।
शिरोव्रणी ज्ञानहीनः पित्तवान् त्रपुसीसहा॥
गजघर्म्मा नागहन्ता अश्वहन्ता महाव्रणी॥
कण्ठभूषणहारी स्याद् गण्डमाली महान् भुवि।
रक्तप्रमेही मनुजो पुष्पवत्यङ्गनागमः॥
भगिनीगमनादश्मी मधुमक्षी भवेन्नरः।
मातुः सपत्नीं भगिनीं गच्छेत् कामातुरो नरः॥
स पापमनुभूयाऽऽशु रोगी भूयाद्भगन्दरी।
स्वसारं यः पुमान् गच्छेज्जायते मूत्रकृच्छ्रवान्॥
धेनुहन्ता महापापी अर्शोरोगी भवेद्भुवि।
गोवत्सहननान्मर्त्त्यः स भूयादर्शसो[1] भुवि॥

---

(1) अर्शवान् इति केचित्पुस्तकपाठः।

शिवनिर्म्माल्यभुक्पापी जायते क्रिमिवान् सदा।
अजीर्णरोगी [1]ह्रठकृद् गृहदाही मसूरिमान्॥
अजीर्णखलजाद् दोषाज्जातनं श्वासकासवान्।
स्रवद्गर्भा भवेत् सा तु बालकं हन्ति या विषैः॥
अन्यमालिङ्गते नारी सा वै स्फोटस्तनी भवेत्।
चोरं मुष्णाति या नारी तेन हीनाऽन्यजन्मनि॥
पतिव्रतापहारी च हृदयव्रणरोगवान्।
विधवासङ्गजाद्दोषात् शिश्नदेशव्रणी भवेत्॥
पुष्पस्तेयी वक्रनासः कोशस्तेयी तु [2]पाटवान्।
गन्धस्तेयी तु दुर्गन्धः कामुकः सन्ततज्वरी॥
विवाहविघ्नकर्त्ता जायते कृष्णविन्दुकः।
तटाकारामभेदी च सदा दुःखी भवेन्नरः॥
इत्येवमादयो दोषाः महानरकदा नृणाम्।
एतेषां शोधनार्थाय पर्णकृच्छ्रं समाचरेत्॥
महापातकजालानां लघूनान्तु द्विजन्मनाम्।
आर्द्राणाञ्चैव शुष्काणां पर्णकृच्छ्रं विशोधनम्॥

पर्णकृच्छ्रलक्षणमाह.—

पराशरः,—

पर्णकृच्छ्रस्य पर्णानि भक्ष्माणि द्विजोत्तमः।
द्वादशाहाब्दपर्य्यन्तं नित्यं शुचिरलङ्कृतः॥

---

(१) ग्रठकृदिति शौतवेङ्कितपुस्तकपाठः।

(२) पेटवान् इति वेङ्कितपुस्तकपाठः।

पूर्व्ववद्विष्णुमभ्यर्च्य रविरस्तं गतो यदा ।
त्रिभिः पत्रैः ब्रह्मभूतैः ज्ञात्वाऽथैव पुटत्रयम् ॥
[1]त्रिषु वेश्मसु विप्राणां वेदाध्ययनशीलिनाम् ।
भिक्षापात्रं समानीय त्रिषु पत्रपुटेष्विह ॥
एकं पुटस्थं देवाय विप्रायैकं समर्पयेत् ।
अवशिष्टं तदश्नीयात् हरिनामपरायणः ॥
स्वपेद्देवसमीपे तु सञ्चिन्त्य मनसा हरिम् ।
ततः प्रभातवेलायां पूर्व्ववत् सकलं चरेत् ॥
विप्राय देया गौरेका पञ्चगव्यं पिबेत्ततः ।
पर्णकृच्छ्रमिदं भूप शोधनं पापकर्म्मणाम् ॥
यस्याऽऽचरणमात्रेण चान्द्रायणफलं लभेत् ।

इति हेमाद्रौ पर्णकृच्छ्रलक्षणम् ।

---

## अथ पर्णकृच्छ्रप्रत्याम्नायमाह ।

देवलः,—

पर्णकृच्छ्रस्य राजर्षे प्रत्याम्नायं वदामि ते ।
पूर्वपापोपशमनं सर्व्वोपद्रवनाशनम् ॥

---

(१) त्रीणि वेश्मानि इति शीतकैचितपुस्तकपाठः ।

सर्व्वकामप्रदं नृणां सर्व्वकृच्छ्रफलप्रदम् ।
पञ्च गावः प्रदातव्याः सालङ्काराः सवत्सकाः ॥
हेमशृङ्गोरौप्यखुराः कांस्यदोहनसंयुताः ।
साधुशीला युवत्यश्च विप्रेभ्यश्च पृथक् पृथक् ॥
पर्णकृच्छ्रस्य विप्रर्षे प्रत्याम्नायो मह्त्तरः ।

इति हेमाद्रौ पर्णकृच्छ्रप्रत्याम्नायः ।

---

## अथ फलकृच्छ्रलक्षणमाह ।

देवलः,—

फलकृच्छ्रस्य देवर्षे लक्षणं कथ्यते मया ।
शृणु ब्रह्ममुने चित्रं सर्व्वपापप्रणाशनम् ॥
ये मातृघातिनो लोके ये चाऽपि पितृघातकाः ।
ये च स्वभर्त्तृहन्तारस्तेषामेतद्धि निष्कृतिः ॥
ये वा गर्भविभेत्तारो ये वा स्वगरदायिनः ।
ये वा ग्रामादिभेत्तारो ये वा कुटजभेदिनः ॥
येऽपीह पिशुना लोके ये वा स्वसेयिनः सदा ।
ये वाऽऽचारविभेत्तार स्तेषामेतद्धि निष्कृतिः ।

याश्च नार्य्यः पतिं त्यक्त्वा रमन्तेऽन्यान् जनान् [1]सदा ॥
तासामपीदं शुद्धयर्थं पुरा सृष्टं स्वयम्भुवा।
ब्रह्मस्वहारिणो नित्यं नित्यकर्म्मविभेदिनः ॥
पितृश्राद्धविभेत्तारस्तेषामेतद्विनिष्कृतिः।
उच्छिष्टभोजिनो ये च ये च मिथ्याभिवादिनः ॥
ये वै कुणपहन्तारस्तेषामेतद् विनिष्कृतिः।
मद्यपानरता नित्यं [2]नैमित्तिकविभेदिनः ॥
सर्व्वश्राद्धविभेत्तार स्तेषामेतद्विनिष्कृतिः।
महापातकयुक्तो वा युक्तो वा सर्व्वपातकैः ॥
कृच्छ्रेणैतेन महता सर्व्वपापैः प्रमुच्यते।
महान्तः पापकर्म्माणः महापापरताः सदा ॥
एतेन कृच्छ्रराजेन पुनन्ति सततं द्विजाः !
फलकृच्छ्रं महापापहारि सम्पत् प्रवर्द्धनम् ॥
दिने दिने मुनीन्द्राश्च कृत्वैतत् शुद्धिमाप्नुयुः।
कायशुद्धिप्रदं कृच्छ्रं सर्व्वकृच्छ्रफलप्रदम् ॥
सर्व्वपापहरं पुण्यं फलकृच्छ्रं महत्तरम्।

फलकृच्छ्रलक्षणमाह—

देवलः—

प्रातः स्नात्वा शुचिर्भूयात् पूर्व्ववत् शुद्धिहेतवे।
तावज्जपन् सदा तिष्ठेद् यावदस्तं गतोरवि-

(१) यदि इति लेखितपुस्तकपाठः।

(२) नित्यधर्म्म इति श्रौतलेखितपुस्तकपाठः।

तावद्व्रती स्थिरमनाः नित्यकर्म्म समापयेत् ।
कदलीफलमेकञ्च विष्णवे तन्निवेदयेत् ॥
तदेव भक्षयेत् पूर्व्वं तद्व्रती मौनपूर्व्वकम् ।
एकैकं बीजसम्पूर्णं भक्षयेच्च फलत्रयम् ॥

चूतफलैर्विना—

एवं द्वादशरात्राणि क्षपेन्नारायणाग्रतः ।
गौर्देया विप्रवर्य्याय ब्रह्मकूर्च्चं पिबेत्ततः ॥
फलकृच्छ्रमिदं सर्व्वं कथितं ब्रह्मणोदितम् ।
कृच्छ्रस्यैतस्य माहात्म्यात् नश्यत्येव महद्भयम् ॥

इति हेमाद्रौ फलकृच्छ्रलक्षणम् ।

---

## अथ फलकृच्छ्रप्रत्याम्नायमाह ।

देवल—

कृच्छ्रस्य तस्य मुनयः प्रत्याम्नायं महोन्नतम् ।
शृण्वन्तु सर्व्वपापघ्नं सर्व्वश्रेयःप्रदं नृणाम् ॥
पुरा हि गालवो नाम ब्रह्महत्याभयातुरः ।
विष्णुं शरणमापेदे सर्व्वलोकहितैषिणम् ॥

अनुग्राह्योऽस्मि भगवन् त्वया लोकहितैषिणा ।
रक्ष मां देवदेवेश त्वदङ्घ्रिशरणागतम् ॥
ब्रह्महत्यादिपापानां शरणं नाशहेतुकम् ।
अतस्त्वत्पादयुगलं दृष्टास्मि पुरुषोत्तम ॥
विप्रहत्या महत्यस्मिन् मयि दुर्निदया प्रभो ।
नास्ति निन्दासमं पापं नास्ति क्रोधसमो रिपुः ॥
नास्ति मोहसमः पाशो न दैवं केशवात्परम् ।

विष्णुः--

नास्ति क्रोधसमो मृत्यु र्नास्त्यकीर्त्तिसमं भयम् ।
नास्ति कीर्त्तिसमं सौख्यं तपो नाऽनशनात्परम् ॥
प्रत्यहं त्रिषवणस्नानं कृत्वा मां मनसि स्मरन् ।
फलकृच्छ्रं तदा कर्त्तुं अशक्तो यदि गालव ॥
प्रत्याम्नायमिदं कृत्वा मुक्तो भवति पातकात् ।
गास्त्रिस्त्रः साधुसंयुक्ता धूपदीपनिवेदनैः ॥
परिक्रम्य नमस्कृत्य सवत्साः पयसाऽऽवृताः ।
यो दद्याद् विप्रवर्य्याय प्रत्याम्नायफलप्रदम् ॥
सम्पूर्णफलकृच्छ्रस्य अखण्डं लभते फलम् ।

नरः--

एवं कुरु त्वं विप्रर्षे पूतो भवसि तत्क्षणात् ।
इत्याज्ञप्तस्तदा तेन प्रत्याम्नायं तदा चरेत् ॥

शुद्धिमाप्नोति महतीं योगिनामपि दुर्लभाम् ।

इति हेमाद्रौ फलकृच्छ्रप्रत्याम्नायः ।

---

## अथ माहेश्वरकृच्छ्रलक्षणमाह ।

देवलः--

कृच्छ्रं माहेश्वरं नाम सर्व्वपापप्रणाशनम् ।
पुरा कन्दर्पदहने महान् दोषो भवत्यथ ॥
तद्दोषपरिहारार्थं ब्रह्माणं पर्य्यपृच्छत ।
पञ्चवाणस्य दहनात् महान् दोषो मयि स्थितः ॥
तद्दोषपरिहारार्थं निष्कृतिर्देव कथ्यताम् ।

ब्रह्मा,—

सर्व्वदोषप्रशमनं सर्व्वोपद्रवनाशनम् ।
सर्व्वपुण्यप्रदं नृणां सर्व्वस्नानफलं महत् ॥
प्रातःस्नात्वा यथाचारं दन्तधावनपूर्व्वकम् ।
शुक्लवस्त्रमलं धृत्वा कृत्वा पुण्ड्रादिकं मुदा ॥
नित्यकर्म्म समाप्याऽऽदौ सङ्कल्पं पूर्व्ववच्चरेत् ।
तावन्नारायणं कृत्वा पूर्व्ववत्पापमोचनम् ॥

यदा मन्दायते भानुस्तदा कापालमुद्दहन्।
श्रोत्रियाणाञ्च विप्राणां गृहेषु त्रिषु संख्यया॥
शाकं भिक्षेत् फलं वाऽपि यथासम्भवमादरात्।
आनयित्वाऽथ देवाय समर्प्य विधिपूर्व्वकम्॥
भक्षयेत्तानि सर्व्वाणि वाग्यतोऽक्षमकुत्सयन्।
हस्तौ पादौ तु प्रक्षाल्य द्विराचम्य शुचिस्ततः॥
सायकाले स्वपेद्देवसमीपे नियतोवसन्।
ततः प्रातः समुत्थाय पूर्व्ववत् सर्व्वमाचरेत्॥
गौरेका द्विजवर्य्याय देया कर्म्मफलाप्तये।
पञ्चगव्यं पिबेत् पश्चात् कृच्छ्रं माहेश्वरन्त्विदम्॥
कुरु त्वमेवं भगवन् सर्व्वदोषोपशान्तये।
एवं श्रुत्वा तदा देवो महेशानस्तदाकरोत्॥
एतस्याऽऽचरणेनैव द्विजः पापात् प्रमुच्यते।

इति हेमाद्रौ माहेश्वरकृच्छ्रलक्षणम्।

---

अथ माहेश्वरकृच्छ्रप्रत्याम्नायमाह ।

देवलः,—

माहेश्वरस्य कृच्छ्रस्य प्रत्याम्नायं शृणुष्व मे ।
सर्व्वपापोपशमनं सर्व्वकृच्छ्रफलप्रदम् ॥
ब्रह्महत्यादिदमनं सर्व्वग्रहनिवारणम् ।
तुलाप्रतिग्रहीतॄणां पापनाशनमेव च[1] ॥
सन्ध्यादिनित्यकर्म्माणि परित्यक्तानि सूरिभिः ।
तेषां विशोधने दक्षं सर्व्वपापहरं नृणाम् ॥
गावो देया द्विजातिभ्यः स्वर्च्चिता वस्त्रभूषणैः ।
हेमघण्टादिभिः शुभ्रैरलङ्कारैरलङ्कृताः ॥
स्वर्णशृङ्गो रौप्यखुराः कांस्यदोहनसंयुताः ।
रुद्रसंख्याः सवत्साश्च पयस्विन्यः पृथक् पृथक् ॥
प्रत्याम्नाये च धेनूनां रुद्रसंख्याः महत्तराः ।
रुद्रकृच्छ्रफलप्राप्तेः सर्व्वपापापनुत्तये ॥
एवं [2]कुर्य्याद् द्विजोयस्तु प्रत्याम्नायं यथार्हतः ।
तस्य सम्पूर्णकृच्छ्रस्य फलं मुनिभिरीरितम् ॥

इति हेमाद्रौ माहेश्वरकृच्छ्रप्रत्याम्नायः ।

---

(१) नाशनमेव च इति लेखितपुस्तकपाठः ।
(२) कृत्वा इति क्रीतलेखितपुस्तकपाठः ।

## अथ ब्रह्मकूर्च्छलक्षणमाह ।

देवलः,—

शृणुध्वमृषयः सर्व्वे ब्रह्मकूर्च्चस्य लक्षणम् ।
दुरन्नेनैव यत्पापं यत्पापं दुष्प्रतिग्रहे ॥
अपेयपाने यत्पापं यत्पापं दुष्टभोजने ।
वान्तपानेषु च यत्पापं यत्पापं शूद्रभोजने ॥
सन्यासिनो मठपतेर्भोजने यद्भवेन् नृणाम् ।
यत्पापं रजकस्याऽन्ने यत्पापं वृषलभोजने ॥
यत्पापं पुष्पवत्यन्ने यत्पापं विधवाकृते ।
अमन्त्रके पैतृकान्ने तथा नारायणे बलौ ॥
चौले च पैतृके चैव दीक्षितस्यैव भोजने ।
दम्पत्योर्यदनूच्छिष्टं तथा सन्यासिनो द्विजाः ॥
प्रेतसंस्थितवीथ्यायां यदान्नभोजने नृप ॥
सूतकद्वितये चैव तथा दुर्व्वृत्तिभोजने ।
तथैव दुष्टसन्धाने तथा क्रीतान्नभोजने ॥
यत् पापं पर्य्युषे चैव तथान्नस्य च भोजने ।
यत् पापं पूतिगन्धे च यत् पापं क्रूरभोजने ॥
यत् पापमनृते प्रोक्तमौपासनविसर्ज्जने ।
एवमादीनि पापानि लघूनि च महान्ति च ॥
शुष्काण्यार्द्राणि पापानि मनोवाक्कायकर्मभिः
सर्व्वेषां परिनाशाय ब्रह्मकूर्च्चं प्रकल्पितम् ॥

तत्स्वरूपमाह-

मार्कण्डेयः—

गोमूत्रं गोमयं क्षीरं दधिसर्पिःकुशोदकम्।
सम्पाद्य पूर्व्वमानेन प्रत्यहं शुचिपूर्व्वकम्॥
द्वादशाहं चरेत् कृच्छ्रं पूर्व्ववत् स्नानमादितः।
प्रातःस्नात्वा यथाकालं नित्यकर्म्म समाप्य च॥
देवागारे तथा गोष्ठे पञ्चगव्यं पिबेद् व्रती।
गोमूत्रं माषकाण्यष्टौ गोमयस्य तु षोड़श॥
क्षीरं माषाष्टकं ज्ञेयं दधि माषत्रयं यथा।
घृतं माषत्रयं प्रोक्तं तथा कुशजलं मुने॥
तत्तन्मन्त्रेण संयोज्य तत्तन्मन्त्रेण ह्रावयेत्।
होमशेषं पिबेत् पश्चाद् रवौ मध्याह्नगे सति॥
आसायं मनसा विष्णुं स्मरन् सर्व्वेश्वरं विभुम्।
स्वपेद्देवसमीपे तु गन्धताम्बूलवर्ज्जितः॥
ततः प्रातः समुत्थाय पूर्व्ववद्व्रतमाचरेत्।
एवं द्वादशरात्राणि चरेद्व्रतमनुत्तमम्॥
महापापञ्चोपपापं यच्चान्यत् पापमनुत्तमम्।
तत्सर्व्वं विलयं याति हिमबिन्दुरिवातपे॥

इति हेमाद्रौ ब्रह्मकूर्च्चव्रतम्।

---

## अथ ब्रह्मकृच्छ्रप्रत्याम्नायमाह ।

देवलः—

शृणु ब्रह्ममुने चित्रं प्रत्याम्नायं प्रजापतेः ।
यत् कृत्वा मुच्यते पापैः महद्भिरुपपातकैः ॥
आचरेद्ब्रह्मकृच्छ्राख्यं महापातकशोधनम् ।
असमर्थः प्रकुर्व्वीत प्रत्याम्नायं फलाप्तये ॥
प्रत्याम्नायात् महाकृच्छ्रफलमाप्नोति मानवः ।
अष्टौ गावः प्रदातव्याः स्वर्णशृङ्गाः पयोन्विताः[1] ॥
विप्रेभ्यो वेदविद्भ्यश्च पूर्व्ववत् स्वर्णभूषिताः ।
विप्रेभ्यो वेदविद्भ्यश्च प्रदेयास्ताः पृथक् पृथक् ॥
पयस्विन्यः शीलवत्यः सर्व्वदोषविमुक्तये ।

मार्कण्डेयः—

प्रत्याम्नायं तदा कुर्य्याद् यथाप्तः प्रजापतेः ।
अष्टगावः प्रदातव्याः स्वर्णशृङ्गाः पयोन्विताः ॥
विप्रेभ्यो वेदविद्भ्यश्च सर्व्वकृच्छ्रफलाप्तये ।
एवं कृत्वा द्विजः सम्यक् फलमाप्नोति शाश्वतः ॥

इति हेमाद्रौ ब्रह्मकृच्छ्रप्रत्याम्नायः ।

---

(१) पयस्विनीरिति शीतवेष्टितपुस्तकपाठः ।

## अथ धान्यकृच्छ्रलक्षणमाह ।

देवल—

धान्यकृच्छ्रस्वरूपस्य लक्षणं प्रवदामि वः ।
सर्व्वेषामेव कृच्छ्राणामशक्तो धान्यमाचरेत् ॥

मार्कण्डेय:—

तस्मादिसर्व्वं कृच्छ्राणां कर्त्तुं यदि न वै[1] प्रभुः ।
धान्यकृच्छ्रं तदा कुर्य्यात् यथाकृच्छ्रं यथोदितम् ॥
खारीधान्यस्य महतः पञ्चधा भागमाचरेत् ।
कृच्छ्रस्यैकस्य यो भागः तत् कृच्छ्रं धान्यमीरितम् ॥
तदर्धं भागशो दद्यात् तत्कृच्छ्रं मुनिभिः स्मृतम् ।
तत्कृच्छ्रमाचरेद्विप्रः सम्पूर्णं फलमश्नुते ॥
धान्यराशौ[2] महाराज कृच्छ्रं पापविमुक्तये ।

मरीचि:—

खारीधानस्य पञ्चांशं धान्यकृच्छ्रमुदाहृतम् ।
अतो न्यूनं न कर्त्तव्यं अन्यथा दानमीरितम् ॥

लौगाक्षि:—

पञ्चमांशोदानकृच्छ्रं खारीधान्यस्य भूयसः ।
अन्यथा धान्यदानं स्यात् कृच्छ्रमन्दो न पुण्यभाक् ॥

---

(१) महान् इति केचित्पुस्तकपाठः ।
(२) धान्ये कृते इति केचित्पुस्तकपाठः ।

मरीचिः—

सम्पूर्णं धान्यकृच्छ्रस्य पञ्चमांशो निगद्यते ।
तेन हीनं धान्यकृच्छ्रं न कृच्छ्रफलमश्नुते ॥
कृच्छ्रस्यैतस्य विप्रर्षे प्रत्याम्नायो न विद्यते ।
स्वर्णकृच्छ्रस्य धान्यस्य समर्थस्य महात्मनः ॥
प्रत्याम्नायो न गदितो मुनिभिर्धर्म्मवत्सलैः ।

धान्यशब्दोव्रीहिपरएव सर्व्वकृच्छ्राणां केचित् श्यामाका इति वदन्ति, केचिन्नीवारा इति ।

मनुः—

नीवारा व्रीहयो धान्यं श्यामाका कृच्छ्रसाधनम् ।
न धान्यान्तरमस्तीह प्रभूतं कृच्छ्रसाधनम् ॥

इति हेमाद्रौ धान्यकृच्छ्रलक्षणम् ।

---

## अथ सुवर्णकृच्छ्रलक्षणमाह ।

देवलः—

ब्रह्महत्यादिपापानामितरेषां मुनीश्वराः ।
तुलादिष्विह दानेषु ग्रहीतॄणां विशोधनम् ॥

स्वर्णकृच्छ्रं ब्रह्ममयं ब्रह्मणा परिकीर्त्तितम् ।
पुरा हि जाह्नवीतीरे ऋषिभ्यः पापनाशनम् ॥
महाप्रभोर्वराहः स्यात् तदर्द्धं मध्यमस्य च ।
तदर्द्धमितरेषाञ्च ततोन्यूनं न कारयेत् ॥

ततो न्यूनं सुवर्णदानमात्रम् । तत्र न कृच्छ्रशब्दः ।

मरीचिः—

वराहश्च तदर्द्धञ्च तदर्द्धं कृच्छ्रमीरितम् ।
ततो न्यूनं दानमात्रं कृच्छ्रशब्दो न गद्यते ॥

वराहादिप्रमाणम्—

मार्कण्डेयपुराणे—

गवाक्षान्तर्गतो यस्तु रश्मिना सम्प्रदृश्यते ।
परब्रह्मस्वरूपं तत् त्रसरेणुस्तदाहृतः ॥
त्रसरेण्वष्टकं लिक्षा तत्त्रयं यव उच्यते ।
तत्त्रयं गुञ्जमात्रं स्याद् रक्तं वा श्वेतमेव वा ॥
पञ्चगुञ्जलकोमाषः रूपकं तदुदाहृतम् ।
रूपकाणां नवानान्तु वराह इति संज्ञितम् ॥
स्वर्णकृच्छ्रं वराहः स्यात् तत् समर्थस्य पावनम् ।
प्रभुमात्रे तदर्द्धं स्याद् इतरेषां तदर्द्धतः ॥
ततो न्यूनं न कृच्छ्रं स्यात् सर्व्वदानेषु सर्व्वदा ।
सुवर्णकृच्छ्राचरणे महापातकनाशनम् ॥

तुलादिसंग्रहीतॄणां त्यागादिरहितानां चतुर्भागः प्रायःश्चित्ते

कालपुरुषादिप्रतिग्रहीतॄणां तत्तदुक्तसुवर्णकृच्छ्राचरणेन तत्तत्-पापक्षयो भवति ।

तदेवाह,—

मार्कण्डेयः,—

प्रमादाद् ब्रह्महन्तॄणामितरेषां प्रभूयसाम् ।
प्रायश्चित्तैरशुद्धानां स्वर्णकृच्छ्रमितीरितम् ॥
तुलादिसंग्रहीतॄणां रहितानां विशुद्धिभिः ।
प्रायश्चित्तमिदं कृच्छ्रं ब्रह्मणा परिकल्पितम् ।
स्वर्णं ब्रह्ममयं प्रोक्तं ब्रह्मणा निर्मितं पुरा ।
सुवर्णकृच्छ्राचरणे किमसाध्यं शरीरिणाम् ॥

गौतमः—

रहस्य कृत-विप्रादि-हत्यायां शृणु पार्थिव ।
अयुतं स्वर्णकृच्छ्राणां दाने शुद्धिरवाप्यते ॥
रहस्यकृतमात्रादिगमने मुनिभिः स्मृतम् ।
चत्वार्य्ययुतकृच्छ्राणां सुवर्णानां मुनीश्वराः ॥
आचारात् शुद्धिमाप्नोति अन्यथा मरणान्तिकम् ।
रहस्यकृतमद्यादिपायिनः परमर्षिभिः ॥
अयुतं पूर्व्ववद्दिष्टमन्यथा मरणान्तिकम् ।
रहस्यकृतब्रह्मस्वस्तेयिनः पापकर्म्मणः ॥
अयुतं पूर्व्ववत् ज्ञेयं अन्यथा मरणान्तिकम् ।

विघ्नचक्रस्य संग्राही विपिने ब्रह्मराक्षसः।
पञ्चायुतैः [1]स्वर्णकृच्छ्रैः शुद्धिमान् भवति क्षितौ ॥
कल्पलताप्रतिग्राही कल्पतरुप्रतिग्रहप्रायश्चित्तवत् कुर्य्यात्।
सप्तसागरसंग्राही घोरो भवति राक्षसः।
तां निष्कृतिं पराकृत्य महान्तं नरकं व्रजेत् ॥
षष्टिकृच्छ्रैरयुतपूर्व्वैः शुद्धिर्भवति संग्रहात्।
महाभूतघटे चर्म्मधेनौ विप्र प्रतिग्रहे ॥
अयुतं पर्णकृच्छ्रं स्याद् ग्रहीतुर्देहशुद्धये।
पूर्व्ववद्विपिने राजन् घोरो भवति राक्षसः ॥
तस्य पापविशुद्ध्यर्थमयुतं कृच्छ्रमाचरेत्।
कालपुरुषे कालचक्रे तिलगर्भे तिलाचले ॥
राशिचक्रे द्विजः शुद्धे[2] ह्ययुतं कृच्छ्रमाचरेत्।
कोटिहोमे लक्षहोमे पापपूरुषसंग्रहे ॥
अयुतं स्वर्णकृच्छ्रं स्याद् अन्यथा वै न निष्कृतिः।
श्वेताब्जे मृतशय्यायां गजदानप्रतिग्रहे ॥
अयुतं स्वर्णकृच्छ्रं स्याद् ग्रहीतुर्देहशुद्धये।
आर्द्रकृष्णाजिने चैव सप्तशैलप्रतिग्रहे ॥
कृच्छ्रं सहस्रं तत्कुर्य्यात् तस्माद्दोषात् प्रमुच्यते।
कपिलाद्विमुखीदाने दासीगृहपरिग्रहे ॥

---

(१) पर्णकृच्छ्रैरिति काशीपुस्तकपाठः।
(२) कुर्य्याद् इति क्रीतलेखितपुस्तकपाठः।

सहस्रं पूर्व्ववत् कृत्वा शुद्धिमाप्नोत्यसंशयः ।
आलिङ्गने तैलघटे महापुरुषभोजने ॥
पञ्चकृच्छ्रशतं कृत्वा पापात् तस्माद् विमुच्यते ।
तुलादिसप्तदानेषु ऋत्विजो होटका अपि ॥
तेषां विशुद्धिर्भूपाल दाःस्थैः सह मुनीश्वरैः ।
सहस्रं स्वर्णकृच्छ्रस्य प्रोक्तं लोकानुसम्भया ॥
प्राण्यालङ्कारधेनूनामनडुहादिसंग्रहे ।
महिषीच्छागवस्तानां शतं कृच्छ्रं विशोधनम् ॥
अन्येषु दुष्टदानेषु दुष्टशान्तिषु सर्व्वदा ।
उत्क्रान्तिवैतरण्योश्च-शतकृच्छ्रमुदीरितम् ॥
एकाहादिषु भोक्तॄणां शूद्रसत्रानुवर्त्तिनाम् ।
दशकृच्छ्रं 'तु स्वर्णाख्यं मुनिभिः शुद्धिरीरिता' ॥

चाण्डालाङ्गनादिगमने यत् यत् प्रतिपदोक्तं प्रायश्चित्तं उक्तं सर्व्वेषां तत्तत्पापिनां तदाचरणसमर्थानां पुनः संस्कारपूर्व्वकं ज्ञेयम् । यस्य यस्य [3]पापस्य यावन्ति कृच्छ्राणि निर्विशेषणानि उक्तानि तावन्ति स्वर्णकृच्छ्राणि कृत्वा शुद्धिमाप्नुयुः वा । सर्व्वेषां पूर्व्वोक्तानां कृच्छ्राणां प्रत्याम्नायोऽस्ति पर्णकृच्छ्र धान्यकृच्छ्रयोः प्रत्याम्नायोनाऽस्ति उत्तम-मधमाधमाधिकारितया स्वर्णकृच्छ्रं प्रकल्पनीयं अत्र न प्रत्याम्नायः न रूपकादिद्वयं परिपूर्णे योजनीयम् । तदाऽऽह—

(१) सुवर्णाख्यमिति केचित्पुस्तकपाठः ।
(२) ईरितमिति केचित्पुस्तकपाठः ।
(३) कृच्छ्र इति केचित्पुस्तकपाठः ।

मनुः—

उभयोः कृच्छ्रयोस्तात प्रत्याम्नायो न विद्यते ।
सम्पूर्णकृच्छ्रमेवाऽत्र कर्त्तव्यं तारतम्यत इति ॥

इति हेमाद्रौ चान्द्रायणप्राजापत्यकृच्छ्रादिलक्षणम् ।

---

## अथ कदलीविवाहप्रकारः ।

मार्कण्डेयः—

पतितं क्लीवमुन्मत्तं कुब्जं काणं जडाऽर्द्दितम् ।
अपस्मारं परित्यज्य विवहेत[1] न दोषभाक् ॥

कात्यायनः—

काणं जडार्द्दितं कुब्जं पतितं क्लीवमेव च ।
अपस्मारं विवाह्याऽऽद्य कदल्या शुभलक्षये ।
तदनुज्ञामवाप्याऽथ विवहेत[2] न दोषभाक् ॥

जातूकर्णः—

काणं जडान्वितं कुब्जं पतितं क्लीवमेव च ।

---

(१) विवाहे न च दोषभाक् इति केचित्पुस्तकपाठः ।

(२) विवाहे न च दोषभाक् इति केचित्पुस्तके पाठः ।

अपस्मारं पूर्व्वजातं कदल्या तु विवाहयेत् ।
पश्चादनुज्ञया राजन् विवाहे न स दोषभाक् ॥

विवाहयज्ञान्दोलिकारोहणे एवं वेदितव्यम् ।

कदल्या-विवाहप्रकारस्तु—

मार्कण्डेयः—

कार्त्तिके मार्गशीर्षे वा माघे वा फाल्गुनेऽपि वा ।
वैशाखे ज्येष्ठमासे वा विवाहं रम्भया समम् ॥
प्रशंसन्ति मुनिश्रेष्ठाः पुत्रपौत्रफलप्रदम् ।
विवाहः शुभनक्षत्रे चन्द्रताराबलान्विते ॥
[1]रात्रावपि दिवा [2]वाऽपि प्रशस्तः शुभकर्मणि ।
ज्येष्ठं क्लीवादिषु वरं प्रातरभ्यर्च्य स्नापयेत् ॥
गन्धपुष्पादिभिः सम्यग् अलङ्कृत्य प्रयत्नतः ।
सुवासिनीभिर्गीतानि शृखन्नारामसन्निधौ ॥
गत्वा च कदलीमूलं पुण्याहं वाचयेत्ततः ।
नान्द्यात् कालं तथा कुर्य्यात् यथावर्णं यथाविधि ॥
उभ्मत्तकोणपापिष्ठान् कदल्या परिणयेन्मुदा
इति सङ्कल्प्य मनसा "वृहस्पामे"ति मन्त्रतः ॥
कदल्यां कङ्कणं बद्धा "विष्णेत्वा" इति मन्त्रतः ।

"विष्णेत्वा" इति पुमान् पठेत्, वृहस्पामीति कदलीकङ्कणधारणे "परित्वागो"रिति मन्त्रेण कदल्या वस्त्रबन्धनम् ।

---

(१) दिवसेऽपि इति केचितपुस्तकपाठः ।
(२) रात्रम् इति केचितपुस्तकपाठः ।

आशामानतिमन्त्रेण ? यीक्तं दर्भमपां दरम्।
बद्धा स्वर्णमयं माल्यं "तनुते"ति च मन्त्रत:॥
बद्धा कांस्यमयं पात्रं तण्डुलैरक्षतै: शुभै:।
स्वहस्ताभ्यां वरो धृत्वा वृक्षस्योपरि विन्यसेत्॥
एवं विवाहं कृत्वा च वृक्षमूल उपाविशेत्।
लौकिकाग्निं प्रतिष्ठाप्य आज्यभागान्समाचरेत्॥

वनस्पतिभ्य इत्यनुवाकोक्तान् मन्त्रान् पठित्वा स्वाहाकारान्तान् आज्याहुतीर्हुत्वा जयादिब्रह्मविसर्जनान्ते।

वरमग्निं परिक्रम्य उपासनमथाऽऽचरेत्।
लौकिकाचारसम्पन्न: कदलीं तां परित्यजेत्॥
ताम्बूलादिकमासाद्य पूर्ववद् गृहमाविशेत्।
स गृहस्थो न सन्देह: शुभकर्मपरायण:॥
परिवेत्रादिदोषोऽत्र न भवेद्वै कदाचन।
यज्ञं वाऽथ विवाहं वा राज्यं वा पालयेत्सदा॥
उभयोर्वृद्धिरेवं स्यात् परिवेत्रादि क्षीयते।
अन्यथा दोषमाप्नोति नरकं चाऽधिगच्छति॥
तत्कुलं नरकं भूयात् सा नारी नरकाय वै।
युगान्ते तु न मुक्ति: स्याद् अपुत्रस्य यथागती॥

इति हेमाद्रौ पतितादीनां कदलीविवाह:।

---

## अथ दुर्मृतानां नृणां वर्णत्रयाणां परलोकक्रमकाले कर्त्तव्यं नारायणबलिप्रकारमाह ।

देवलः,—

विषाग्निजलपाषाणैर्दुर्मृतस्य प्रमादतः ।

कर्म्मादौ देहशुद्ध्यर्थं नारायणबलिं चरेत् ॥

मार्कण्डेयः—

शृङ्गिभिर्नखिभिर्वाऽपि शस्त्रभिर्यदि दैवतः ।

हुतैर्जलैश्च पाषाणैर्दैवतैर्यः प्रमीयते ॥

तस्यैव देहशुद्ध्यर्थं कर्म्मादौ लोककाङ्क्षया ।

नारायणबलिं कुर्य्यात् सर्व्वपापापनुत्तये ॥

पराशरः—

दुर्मृतस्य विषाद्यैर्वा चौरैः खड्गैर्मृगादिभिः ।

कर्म्मादौ लोकसाध्यर्थं नारायणबलिं चरेत् ॥

नारायणो जगत्कर्त्ता सर्व्वपापापहा नृणां ।

दुर्मृतानां विशेषेण महापापप्रणाशनः ॥

मरीचिः—

दुर्मृतस्य खरोष्ट्रैश्च पशुभिर्वृक्षपातनैः ।

जलैः पाषाणलगुडैर्वनमध्ये प्रमादतः ॥

कर्म्मादौ लोकमन्विच्छन् नारायणबलिं चरेत् ।

तत्प्रकारमाह—

देवलः--

कर्म्मादौ पूर्व्वदिवसे मृतस्येह द्विजन्मनः।
प्रायश्चित्तं तदा कृत्वा धर्म्मशास्त्रोक्तमानतः॥
आहूय विप्रानेकान्ते चतुर्व्विंशतिमादरात्।
तदर्द्धं वा तदर्द्धं वा सम्याद्य श्रुतिपारगान्॥
अभ्यर्च्य गन्धवस्त्राद्यैरामं वा स्वर्णमेव वा।
करिष्येऽहं मृतस्याऽस्य बलिं नारायणात्मकम्॥
इत्युक्त्वा तान् नमस्कृत्य उपवेश्य सुखासने।
लौकिकाग्निं प्रतिष्ठाप्य परिस्तीर्य्य विधानतः॥
स्रुवेणाज्यं समादाय व्याहृतीरुच्चरंस्ततः।
पृथक् पृथक् तदा हुत्वा संख्यामेकां समुद्दहन्॥
व्याहृतीनां त्रयं हुत्वा पृथगग्नौ विधानतः।
संख्यामेकां 'तथा कृत्वा अष्टोत्तरशतं क्रमात्।
हुत्वेवं[2] विधिवद्विप्रो होमशेषं समापयेत्॥
ब्राह्मणान् समलङ्कृत्य पूर्व्वोक्तेन विधानतः।
चतुर्व्विंशतिनामानि केशवादीनि वै जपेत्[3]॥

चतुर्व्विंशति विप्रपक्षे प्रत्येकं नियोजयेत् द्वादशब्राह्मणपक्षे प्रत्येकं नामद्वयं नियोजयेत्। जपेत् जापयेदिति।

---

(१) यथा इति लेखितपुस्तकपाठः।
(२) एवमिति क्रोतलेखितपुस्तकपाठः।
(३) क्रमादिति लेखितपुस्तकपाठः।

तण्डुलाश्चैवमुद्गाश्च माषाः शाकघृतं दधि ।
ताम्बूलं दक्षिणां चैव विप्रेभ्यः परिकल्पयेत् ॥
नाऽन्नेन तोषयेद्विप्रान् अधिकारी न दृश्यते ।
[1]यावत् सपिण्डकं न स्याद् दुर्मृतस्य द्विजन्मनः ॥
न तावदन्नं कर्त्तव्यं विप्रैरध्यात्मवेदिभिः ।
[2]तावद् विप्रैर्न भोक्तव्यं यदि भुङ्क्ते स पातकी ॥
जातकर्म्मणि विप्रस्य दुर्मृतस्य द्विजन्मनः ।
नारायणबलौ चैव नाऽन्नश्राद्धं समाचरेत् ॥
हिरण्येनैव [3]धान्यैर्वा कुर्य्यात् श्राद्धं विधानतः ।
अन्नेन कारयेद्यस्तु स चाण्डालसमोभवेत् ॥

दुर्मृतानां द्विजन्मनां परलोकहितार्थं कर्म्मादौ आमेन हिरण्येन वा नारायणबलिं करिष्यामीति सङ्कल्प्य लौकिकाग्नौ घृतेन व्याहृतिभिः प्रत्येकं हुत्वा एकैकां संख्यामुद्वहन् अष्टोत्तरशतं हुत्वा ब्राह्मणानभ्यर्च्य यथासम्भवं यथासंख्यं तोषयित्वा नारायणबलिं कृत्वा पारलौकिकक्रियां कुर्य्यात् ।

इति दुर्मृतानां कर्म्मादौ नारायणबलिविधिः समाप्तः ।

---

(१) यथा इति केचित्पुस्तकपाठः ।
(२) तथा इति केचित्पुस्तकपाठः ।
(३) आमैर्वा इति केचित्पुस्तकपाठः ।

## अथ वैष्णवश्राद्धमाह ।

देवलः,—

यागादौ च तुलादाने प्रायश्चित्तेषु कर्म्मसु ।
श्राद्धं कुर्य्याद्वैष्णवाख्यं सर्व्वदोषोपशान्तिदम् ॥

गौतमः—

प्रायश्चित्तेषु सर्व्वेषु जीवत्स्वपि तुलासु च ।
तत्कर्त्ता वैष्णवश्राद्धं कृत्वा कर्म्म समाचरेत् ॥

पराशरः—

प्रायश्चित्तेषु दानेषु तुलादिषु महत्स्वपि ।
यः कुर्य्याद्वैष्णवश्राद्धं स तत्कर्म्मफलं लभेत ॥
सर्व्वत्र व्यापको विष्णुः प्रायश्चित्तेषु कर्म्मसु
विष्णुर्पितेषु पुण्येषु तदानन्त्याय कल्पते ॥

हरिवंशे—

वेदे रामायणे चैव पुराणे भारते तथा ।
आदौ मध्ये तथाचाऽन्ते हरिः सर्व्वत्र गीयते ॥

विष्णुधर्म्मोत्तरे—

एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः ।
त्रीन् लोकान् व्याप्य भूतात्मा [1]राजते विष्णुरव्ययः ॥

अतः सर्व्वत्र विष्णुरहितानि कर्म्माणि न फलन्ति ।

---

(१) राजते इत्यादार्द्धं केचितपुस्तके न दृश्यते ।

मङ्गल्यानन्तरं वाऽपि जपनान्तरं च यः ।
कुर्य्याद्धि वैष्णवश्राद्धं तदानन्त्याय कल्पते ॥

जीवत्सु पित्रादिषु प्रायश्चित्ते तु प्रायश्चित्तानन्तरं पूर्व्वशाला होमानन्तरं आमेन हिरण्येन वा विष्णुभक्तमेकं पञ्चोपचारैरभ्यर्च्य विष्णुप्रीतये आमं हिरण्यं वा दद्यात् ।

मनुरपि,—

भोजनं तृप्तिपर्य्यन्तं आमं द्विगुणमाचरेत् ।
हिरण्यं द्विगुणं प्रोक्तं सर्व्वकर्म्मस्वयं विधिः ॥
विप्रे विष्णुर्पिते तुष्टे सर्व्वास्तुष्यन्ति देवताः ।
तासु तुष्टासु राजेन्द्र तत्तत् कर्म्म शुभं भवेत् ॥

अतः प्रायश्चित्तेषु वैष्णवश्राद्धं अवश्यं प्रायश्चित्तिभिः कर्त्तव्यं नाऽन्यथा फलमाप्नोति ।

इति हेमाद्रौ वैष्णवश्राद्धविधानम् ।

---

## अथ नान्दीश्राद्धप्रकारमाह ।

देवलः,—

प्रायश्चित्तेषु दानेषु प्रतिष्ठासु व्रतेषु च ।
विवाहादिषु सर्व्वत्र नान्दीश्राद्धं समाचरेत् ॥

विवाहादिषु संस्कारकर्म्मसु।

नान्दीश्राद्धं तदा कुर्य्यात् सर्व्वकर्म्माभिवृद्धये।

मरीचिः—

प्रायश्चित्ते विवाहादौ तुलादानादिकर्म्मसु।

पूर्व्वेद्युर्वा तदानीं वा नान्दीश्राद्धं समाचरेत्॥

अङ्गिराः—

प्रायश्चित्तेषु सर्व्वेषु तुलादानादिकर्म्मसु।

महोत्सवेषु सर्व्वेषु प्रतिष्ठासु व्रतेषु च॥

विवाहादिषु सर्व्वत्र नान्दीश्राद्धं समाचरेत्।

पूर्व्वेद्युर्वा तदानीं वा शुभकर्म्मफलाप्तये॥

अन्नेनाऽऽमेन वा राजन् हिरण्येन यथाविधि।

द्वादश ब्राह्मणान् भोज्य अष्टौ वा ये तु सात्त्विकाः।

पितॄनुद्दिश्य यत्नेन सूपापूपाज्यपायसैः॥

तत्र पितरः—

गारुड़पुराणे—

पिता पितामहश्चैव तथैव प्रपितामहः।

माता पितामही चैव तथैव प्रपितामही॥

मातामहाः सपत्नीकाः पृथग् पृथगनुव्रताः।

विश्वेदेवाः सत्यवसू मूर्त्तास्तु पितरस्त्रयः।

ततः परममूर्त्ताः स्युर्नाऽऽगच्छन्तीह कर्म्मणि॥

द्वादश एव मूर्त्ताः ततः परममूर्त्ताः ये ये पितरः श्राद्धेषु भोक्तारस्तेषु मूर्त्तसंज्ञाः ये ये पितरः श्राद्धेषु न भजन्ते ते अमूर्त्ताः।

तदाऽऽह—

गालवः—

पित्रादिपितरो मूर्त्ताः त्रयस्त्वेतेषु पुण्यदाः।

अतः परममूर्त्ताः स्युः स्मरणात् पापहारिणः॥

अतः सर्व्वत्र वृद्धिकर्म्मसु नान्दीश्राद्धं कर्त्तव्यम्। प्रायश्चित्तान्यपि वृद्धिकर्म्माणि।

तदाऽऽह—

गौतमः—

प्रायश्चित्तं विवाहादि व्रतदानं तुलादिकम्।

दूरयात्रासु सर्व्वत्र नान्दीश्राद्धं प्रशस्यते॥

अतस्तदवश्यकरणीयत्वादत्रापि कर्त्तव्यम्।

इति हेमाद्रौ नान्दीश्राद्धविधिः।

---

## वराहपुराणे रामलक्ष्मणप्रतिमादानमाह—

वराहपुराणे—

इदमन्यत् प्रवक्ष्यामि सर्व्वपापहरं शुभम्।

सर्व्वसम्पत्प्रदं नृणां पुत्रदं पुत्रकामिनाम्॥

आषाढ़े मासि शुक्ले तु द्वादश्यां पूर्णिमादिने।
व्यतीपाते च संक्रान्तौ दद्याद्दानमनुत्तमम्॥
ब्राह्मणक्षत्रियविशां शूद्राणां पुण्यवर्द्धनम्।
[1]राकायां प्रातरुत्थाय स्नात्वाऽऽचम्य यथाविधि॥
नित्यकर्म्मादि निर्वर्त्य स्वगृहे देवतागृहे।
गोमयेन विलिप्याऽथ रङ्गवस्त्राद्यलङ्कृतम्॥
तन्मध्येऽष्टदलं पद्मं रचयित्वा सुशोभनम्।
तत्र निक्षिप्य धान्यञ्च तण्डुलान् पूर्व्वसंख्यया॥
घमन्तं स्थापयेत्तत्र दशाष्टदलसंयुतम्।
तण्डुलैः पूरयित्वा तु तत्र पद्मं लिखेत् पुनः॥
वस्त्रेण वेष्टयेत्तांश्चं तत्र देवौ प्रपूजयेत्।
पलद्वयेन स्वर्णेन तदर्द्धेन विचक्षणः॥
रामं श्यामं विशालाक्षं सर्व्वाभरणभूषितम्।
सिंहासने समाविश्य ध्यायन्तं मुद्रया सह॥
तेनैव स्वर्णमानेन लक्ष्मणं कारयेत्तथा।
तिष्ठन्तमञ्जलिं बद्धा कक्षे चापद्वयं मुदा॥
वसन्तं वामपार्श्वे तु निर्म्मलं नियतेन्द्रियम्।
एवं कृत्वोभयौ देवौ क्षीरस्नानं समाचरेत्॥
निक्षिपेत् पत्रमध्ये तु पूजयेदुपचारकैः।
राम राम महाबाहो कौशल्यागर्भसम्भव॥

---

(१) पौर्णम्यां इति कोलब्रेकितपुस्तकपाठः।

पूजामिमां प्रगृह्याऽऽशु[1] मेऽभीष्टफलदो भव: ।

इति रामपूजामन्त्र:—

सौमित्रे लोकसौमित्रे सर्व्वपापहराव्यय ।
पापं मे सकलं छिन्धि पुत्रं देहि सुवर्च्चसम् ॥

इति लक्ष्मणपूजामन्त्र: ।

गन्धपुष्पाक्षतैर्धूपैर्दीपैर्नैवेद्यचन्दनै: ।
महार्हैरुपचारैश्च पूजयित्वा यथाक्रमम् ॥
प्रदक्षिणमनुव्रज्य नमस्कारं समाचरेत् ।
ब्राह्मणाय सुशान्ताय पत्नीपुत्रवते मुदा ॥
अभ्यर्च्य गन्धपुष्पाद्यैर्दद्याद्रामं सलक्ष्मणम् ।
उदङ्मुखाय विप्राय स्वयमिन्द्राननः शुचि: ॥
वामेन कांस्यं संगृह्णन् दक्षिणेनाऽक्षतान् बहून् ।
अमत्वं सर्व्वपापघ्नं पुत्रप्रदमपुत्रिणाम् ॥
सर्व्वपापहरं यस्माद् अत: शान्तिं प्रयच्छति ।

रामलक्ष्मणदानमन्त्रौ—

अयोध्याधिपते वीर श्रीराम करुणानिधे ।
पूर्व्वजन्मसमुद्भूतमिह जन्मनि सञ्चयम् ॥
तत्सर्व्वं नाशमायातु त्वत्प्रसादाद् जगद्गुरो ।
रामं त्वामहमभ्यर्च्य सर्व्वपापापनुत्तये ॥

---

(१) प्रगृह्याशु इति कोषितपुस्तके न दृश्यते ।

दास्यामि विप्रवर्य्याय सर्व्वपापोपशान्तये।
अनया पूजया स्वामिन् प्रसन्नोभव मे सदा॥
पुत्रं देहि यशो देहि राज्यं देहि जनार्द्दन।
अनेन दानमन्त्रेण पापं संहर्त्तुमर्हसि॥
सर्व्वपापहरोयस्माद् अतः शान्तिं प्रयच्छ मे।
ततस्तु दक्षिणा देया वित्तशाठ्यविवर्ज्जितम्॥
देयद्रव्यतृतीयांशं मुनिभिः परिकल्पितम्।
ब्राह्मणान् भोजयेत् पश्चाद् यथा विभवपूर्व्वकम्॥
एवं [1]कुर्य्यान् नरो यस्तु दानमेतत् सुदुर्लभम्।
सर्व्वपापविनिर्म्मुक्तः पुत्रमाप्नोति [2]सोऽचिरात्॥
रामलक्ष्मणयोर्दानं कृत्वा विष्णुक्तमार्गतः।
स सर्व्वफलमासाद्य पुत्रमाप्नोति सर्व्वदा॥
दरिद्रो लभते वित्तं ब्रह्मचारी तु कन्यकाम्।
सुवासिनी पुत्रकामा पुत्रमाप्नोति सर्व्वथा॥
मोक्षकामी लभेन्मोक्षं रोगी-रोगात् प्रमुच्यते।
आषाढ़स्य पौर्णमास्यां[3] व्रतमेतन्मनीषिभिः॥

---

(१) कृत्वा इति क्रीतलेखितपुस्तकपाठः।

(२) तरत्याचादिति क्रीतलेखितपुस्तकपाठः।

(३) आषाढ़युक्तपौर्णमास्यामिति क्रीतलेखितपुस्तकपाठः।

द्वादश्यामथवा राजन् [1]कर्त्तव्यं स्वेष्ट सिद्धये।

इति वराहपुराणे रामलक्ष्मणप्रतिमादानविधिः।

---

वन्देविघ्नेशवाणीशौ लक्ष्मीपतिमुमापतिम्।
सर्व्व[2]पातकसंघानां प्रायश्चित्तविधेः क्कते॥
आलोच्य सर्व्वशास्त्राणि यथाशक्ति यथामति।
[3]क्रतः पातकशुद्ध्यर्थं प्रायश्चित्तविनिर्णयः॥

---

## अथ स्मृतिप्रामाण्यमाह।

मनुः—

श्रुतिं पश्यन्ति मुनयः स्मरन्ति च तथा स्मृतिम्।
तस्मात् प्रमाणमुभयं प्रमाणैः प्रमितिर्भुवि॥
योऽवमन्येत तौ हेतू हेतुशास्त्राश्रयो नरः।
स साधुभिर्वहिष्कार्य्यो नास्तिको वेदनिन्दकः॥

---

(१) कुर्य्याद्देतद् व्रतं सदा इति श्रीतवेष्टितपुस्तकपाठः।
(२) पापापनुत्तानामिति वेष्टितपुस्तकपाठः।
(३) क्रियते पापमोक्षार्थमिति वेष्टितपुस्तकपाठः।

विष्णुः—

पुराणं मानवोधर्म्मः साङ्गोवेदश्चिकित्सितम्।
आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः॥
यस्तानि हेतुभिर्हन्यात् सोऽन्धे तमसि मज्जति।

इति प्रायश्चित्तस्याऽप्रामाणीयस्य विधाने दोषोऽभिहितो व्यासेन

ज्योतिषं व्यवहारश्च प्रायश्चित्तं चिकित्सितम्।
विना शास्त्रेण यो ब्रूयात् तमाहुर्ब्रह्मघातकम्॥

तत्राधिकारी,—मनुः—

अकुर्व्वन् विहितं कर्म्म निन्दितञ्च समाचरन्।
प्रसजंश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नरः॥

याज्ञवल्क्यः—

विहितस्याऽननुष्ठानात् निन्दितस्य च सेवनात्।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति॥

नरग्रहणं प्रतिलोमजातीनामपि प्रायश्चित्तप्रात्यर्थमपि।

प्रायश्चित्तमकुर्व्वाणाः पापेषु निरता नराः।
अपश्चात्तापिनः कष्टान्नरकान् यान्ति दारुणान्॥

पापतारतम्यात् फलतारतम्यं दर्शितम।

विष्णुधर्म्मोत्तरे—

अष्टाविंशतिकोटीनि घोराणि नरकाणि वै।
महापातकिनश्चापि सर्व्वेषु नरकेष्विह॥
आचन्द्रतारकं यावत् पीड्यन्ते विविधैर्वधैः।
उपपातकिनश्चापि तदर्द्धं यान्ति मानवाः॥

शेषैः पापैस्तदर्द्धश्च कालः कल्प[1]स्तथाविधः।
सम्यकाग्रपापकृतां त्वेतत् सर्व्वं रहस्यपापफलम्तु।

पराशरः—

पातकेतु सहस्रं स्यात् महति द्विगुणं तथा।
उपपातके तदर्द्धं स्यात् नरकं वर्षसंख्यया॥

तत्र च तत् पञ्चविधेषु पातकेषु इतरतारतम्यं बोध्यम्। महापातकेषु वर्षसहस्रद्वयं नरकपातः अतिपातके [2]वर्षसहस्रचतुष्ट उपपातके सहस्रार्द्धं सङ्करीकरणादिषु अप्यर्द्धाधिकशतद्वयमि पञ्चविधपापानि।

कात्यायनः—

महापापश्चातिपापं तथा पातकमेव च।
प्रासङ्गिकञ्चोपपापमित्येवं पञ्चकोगणः॥

तत्र पातकिपापशब्दनिर्व्वचनम्।

भविष्योत्तरे,—

अधोऽधः पतनात् पुंसां पातकं परिकीर्त्तितम्।
नरकादिषु घोरेषु पतनात् पापमुच्यते॥ इति

याज्ञवल्क्यः—

तस्मात्तेनेह कर्त्तव्यं प्रायश्चित्तं विशुद्धये।

प्रायश्चित्तशब्दार्थमाह।

---

(१) कालं कृत्स्नं तथाविधैरिति क्वीतकेचितपुस्तकपाठः।
(२) अर्द्धसहस्रं इति क्वीतकेचितपुस्तकपाठः।

अङ्गिराः—

प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते ।
तपो निश्चयसंयुक्तं प्रायश्चित्तं तदुच्यते ॥

भाष्यकारस्तु,—

प्रायो विनाशः चित्तं सन्धानं विनष्टस्य सन्धानं इति विभाग-[1]योगेन प्रायश्चित्तशब्दः पापक्षयार्थे नैमित्तिके कर्म्मविशेषे वर्त्तते । इह तावत् कलियुगे पापबाहुल्यात् अवर्ज्जनीयतया पापसम्भवात् प्रतिनिमित्तं प्रायश्चित्तं कर्त्तुमशक्यत्वात् शरीरस्यास्थिरत्वात् पापफलानुभवे चिरकालिकघोरतीव्रनरकवेदनायाः सोढुमशक्यत्वात् पापभीरुणा पश्चात्तापिना पुरुषेणैव वेलया सर्व्वपापापनोदकं प्रायश्चित्तं सर्व्वथा आचरणीयमेव ।

तत्र कालादर्शे—

मलमासगुरुशुक्रास्तदोषेण दुष्टकाले प्रतिषिद्धत्वात् शुद्धकाले एकादश्याममायां वा तिथौ कार्य्यम् । अन्याधानादिश्रौतोपासनादिस्मार्त्ततुलापुरुषादिकर्म्म कुर्व्वता च आदौ उपासनार्थमधिकारसिद्ध्यर्थञ्च कार्य्यमेव च । तदुक्तं मनुना ऋषिणा कर्म्म [2]कर्त्तव्यमिति ।

---

(१) विभाग योगिना इति श्रौतलिखितपुस्तकपाठः ।

(२) कुर्व्वीत इति लिखितपुस्तकपाठः ।

(३) लिखितपुस्तके तु अत्र

दाने विशिष्टमार्त्तस्य व्याधिना पीडितोच्यते ।
अनिच्छताऽपि बहु वस्तु दातुं हेमादि वाञ्छति ॥

इत्येवं अधिकः श्लोक उपलभ्यते ।

अङ्गिरसा च—

शौतं स्मार्त्तञ्च कर्त्तव्यं ज्ञात्वा पावनमात्मनः ।

जपञ्च पञ्चहोमञ्च दानञ्चार्च्चनमेव च ॥

जपो वेदपारायणादिः होमः कुष्माण्डादिः दानं गवादेः पर्चनं विष्ण्वादीनाम् । स्मृतिसंग्रहकारैरप्युक्तं "विप्रोक्तं कार्यं विविधैश्च ग्रहैरिति" । प्रातरस्य तु ग्रहकालपरीक्षा नैव कार्य्या । अग्नौ पाकादिदोषे रात्रावपि सद्य एव कार्य्यम् ।

चन्द्रिकायाम्—

दानं विशिष्टमार्त्तस्य व्याधिना ग्रहमुच्यते ।

[1]अकालेऽपि हि यद्दत्तु दातुं हेमादि वाञ्छति ॥ इति

वराहपुराणे—

व्यतीपातोऽथसंक्रान्तिस्तथैव ग्रहणं रवेः ।

पुण्यकालास्तु ते सर्व्वे यदा मृत्युरुपस्थितः ॥

तदा गोभूहिरण्यादिदत्तमक्षयतामियात् ।

भविष्योत्तरे—

तत्र ये पापनिचयाः स्थूला नरकहेतवः ।

ते समासेन कथ्यन्ते मनोवाक्कार्यघातकाः ॥

मनुः—

ब्रह्महत्या सुरापानं स्तेयं गुर्व्वङ्गनागमः ।

महान्ति पातकान्याहुः संयोगं चैव तैः सह ॥

---

(१) अनित्यतापि इति केषित्पुस्तकपाठः ।

याज्ञवल्क्यः[1]—

ब्रह्महा मद्यपः स्तेनस्तथैव गुरुतल्पगः।

एते महापातकिनो यश्च तैः सह संवसेत्॥

मनुः—

ब्रह्महा द्वादशसमाः कुटीं कृत्वा वने वसेत्।

भैक्षाश्यात्मविशुद्ध्यर्थं कृत्वा शवशिरोध्वजम्॥

हारीतः—

द्वादशभिर्वर्षैर्महापातकिनः दोषिण इति।

इदमज्ञानतः ज्ञानतः करणेतु—

अङ्गिराः—

यः कामतो महापापं नरः कुर्य्यात् कथञ्चन।

न तस्य शुद्धिर्निर्दिष्टा[1] भृग्वग्निपतनादृते॥ इति

तथाऽपि पातकानि पतितसंसर्गादीनि

व्यासेन—

यो येन संवसेद्वर्षं सोऽपि तत्समतामियात्।

अत्र चतुर्थचरणे एवकाराच्च कलियुगे महापातकिसंसर्गिणस्तु न महापातकित्वम्। तस्याऽपि तस्याऽपि अनया रीत्या साक्षात् महापातकिसंसर्गित्वात् पातित्यप्रसक्तेः। ततः परमप्येवं अनवस्था स्यात्, तस्मात् कलियुगे साक्षात् महापातकिसंसर्गिणोऽपि न महापातकित्वं तथाचोक्तम्।

---

(1) विहिता इति काशीपुस्तकपाठः।

पराशरेण,—

कृते तु मानवो धर्मस्त्रेतायां गौतमस्य च ।

द्वापरे शङ्खलिखितौ कलौ पाराशरी[1]स्मृतिः ॥

त्यजेद्‌ देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत्‌ ।

द्वापरे कुलमेकन्तु कर्त्तारन्तु कलौयुगे ॥

व्यासः—

कृते सम्भाष्य पतति त्रेतायां स्पर्शनेन तु ।

द्वापरे त्वन्न[2]मादाय कलौ पतति कर्मणा ॥

स्मृतिकामधेनौ,—

संसर्गदोषो नैव स्यात्‌ महापातकिनः कलौ ।

संसर्गदोषस्तेनाद्येर्महापातकनिष्कृतिः ॥ इति

स्मृत्यर्थसारे कलियुगे संसर्गदोषोनास्तीत्युक्तं एवं बहुस्मृति-वचनात्‌ पर्यालोचनया पतितसंसर्गिणो दोषाभावकथनं पाति-त्याभावपरं, संसर्गप्रायश्चित्तन्तु पादोनद्वादशवार्षिकं कार्य्य-मेवेति तस्मात्‌ संसर्गिणः कलियुगे पातकित्वमेवेति सुष्ठूक्तम्‌ । तदुक्तं

मनुना—

संवत्सरेण पतति पतितेन सहाचरन्‌ ।

याजनाध्यापनाभ्यां तु न तु यानाशनासनात्‌ ॥

---

(१) पाराशरस्मृतिरिति केचित्पुस्तकपाठः ।

(२) अन्नदानाद इति ज्ञातमेकपुस्तकपाठः ।

याजनाध्यापनयो[1]र्गुरुसम्बन्धत्वात् सद्यः पततीत्यर्थः।

योयेन पतितेनैषां संसर्गं याति मानवः।

[2]स तस्यैव व्रतं कुर्य्यात् तत्संसर्गविशुद्धये॥ इति

एतद् युगान्तरविषयम्।

मनुः—

बहूनामेककार्य्याणां सर्व्वेषां शस्त्रधारिणाम्।

यद्येको घातयेत्तत्र सर्व्वे ते घातकाः स्मृताः॥

उपरुन्धन् परं हन्तुं समर्थयति यः पुमान्।

यत्रानुग्रहकृत्सोऽपि ब्रह्मघातक इष्यते॥

विष्णुः—

आक्रुष्टस्ताडितो वाऽपि धनैर्वा विप्रयोजितः।

यमुद्दिश्य त्यजेत् प्राणान् तमाहुर्ब्रह्मघातकम्॥

स्मृत्यन्तरे—

अनुमन्तोपदेष्टा च तथा संप्रतिरोधकः[3]।

प्रोत्साहकः सहायश्च तथा मार्गानुदेशकः॥

आश्रयः शस्त्रदाता च [4]वक्ता दाता च कर्म्मणाम्।

उपेक्षकः शक्तिमांश्च दोषवक्तानुमोदकः॥

अकार्य्यकारिणां तेषां प्रायश्चित्तं प्रकल्पयेत्। इति

---

(१) नित्यसम्बन्धात् इति चिह्नितपुस्तकपाठः।

(२) एतस्यैव इति क्रोतचिह्नितपुस्तकपाठः।

(३) संप्रीति पातक इति चिह्नितपुस्तकपाठः।

(४) भक्ता इति चिह्नितपुस्तकपाठः।

एवं सुरापानसुवर्णस्तेय गुर्व्वङ्गनागमनेषु यथायोग्यमनुग्रहकारिणो बोद्धव्याः ।

मनुः—

हत्वा गर्भमविज्ञातमेतदेव व्रतं चरेत् ।

राजन्य-वैश्य-यीजानां आत्रेयीमेव च स्त्रियम् ॥

यीजानामिति यागदीक्षावर्त्तिनौ । आत्रेयी अत्रिगोत्रजा अङ्गिरसा ऋतमती, उशनसा च कदाप्यपुष्पवती मरीचिना तु पतिव्रता अभिहिता ।

तथा—

उक्त्वा चैवाऽनृतं साक्ष्ये प्रतिपद्य गुरुं तथा ।

अपहृत्यैव निक्षेपं कृत्वा च स्त्रीवधाद्यम् ॥

अनृतं साक्षिवाक्यां[1], वधप्राप्तिकरं प्रति अन्तः क्रोधावेशः । निक्षेपं ब्राह्मणसम्बन्धि स्त्री-वाऽऽहिताग्निपत्नी पतिव्रता, आदिपदेन तत्परिगणनायुक्तं स्यात् ।

तथाच

याज्ञवल्क्यः—

चरेद्व्रतमहत्वापि घातार्थं चेत्समागतः । इति

आपस्तम्बः—

धर्म्मार्थं सन्निपातेऽर्थप्राप्तिषामेतदेवेति ।

---

(१) साक्षिवाक्यो इति केषितपुस्तकपाठः ।

विष्णुः—

नृपतिवधे महाव्रतमिति ।

भविष्योत्तरपुराणे—

अर्च्चितं सुस्थितं वाऽपि शिवलिङ्गं न चालयेत् ।
अन्यत्र [1]चालिते लिङ्गे अतिपातकमाप्नुयात् ॥
उत्तमानां चाऽमराणामन्यथाकरणे सति ।
विप्रस्यैव व्रतं [2]दिश्याद् विप्रदेवौ समौ स्मृतौ ॥

अग्निहोत्रार्थकपिलां हत्वा ब्रह्महणोव्रतम् ।

याज्ञवल्क्यः—

अर्च्चितं सुस्थितं वापि शिवलिङ्गं न चालयेत् ।
पितुः स्वसारं मातुश्च मातुलानीं सुतामपि ॥
मातुः सपत्नीं भगिनीमाचार्य्यतनयां तथा ।
आचार्य्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः ॥
लिङ्गं भित्वा ध्वजस्तस्य सकामायाः स्त्रिया अपि ।
माता मातृस्वसा श्वश्रूर्मातुलानी पितृस्वसा ॥
पितृव्यसखिशिष्यस्त्री भगिनी च सखी स्नुषा ।
दुहिताऽऽचार्य्यभार्य्या च सगोत्रा शरणागता ॥
धात्रीपराजिता साध्वी-तथा वर्णोत्तमाङ्गना ।
आसा मन्यतमां गच्छन् गुरुतल्पग उच्यते ॥

---

(१) कुरुते इति केचित्पुस्तकपाठः ।

(२) कुर्य्यादिति केचित्पुस्तकपाठः ।

शिष्यस्योत्कर्त्तनादश्च मान्योदण्डोविधीयते ।

अत्र माता मातृसपत्नी तस्या अपि मातृव्यपदेशात् ।

व्यासः—

गर्भिण्युदक्याविज्ञातजातिं गच्छन्ननिच्छतीम् ।

गुरुतल्पं चरेद्विद्वान् गां—— ॥

व्याघ्रः—

आश्रितस्याऽपि दुष्टात्मा आहिताग्नेश्च योगिनः ।

एषां पत्नीं सुतां गत्वा गुरुतल्पव्रतं चरेत् ॥ इति

उशनाः—

चाण्डाल्यां गर्भमाधाय गुरुतल्पव्रतं चरेत् । इति

तथा

अतिदिष्टञ्च यत् पापं अतिशब्देन उच्यते ।

उपपातकमात्रत्तं महापातकताभियात् ॥

अनिर्द्दिष्टस्योपदेशात् तस्यैव स व्रतं नरः ।

अतिदिष्टेषु सर्व्वत्र पादोनव्रतमाचरेत् ॥

इति पतितसंसर्गिणामनुग्राहकव्रतादिष्टानां प्रयोजकानुमन्त्रा-

दीनां तदनुनिश्चयक्रमेण यथायोग्यं नववार्षिकषड्-

वार्षिकसार्द्धचतुर्व्वार्षिक त्रैवार्षिकादिव्रतम् ।

---

## स्त्रीणां विशेषतः पतनीयमाह ।

याज्ञवल्क्यः—

नीचाभिगमनं भर्तृघातनं गर्भनाशनम् ।
विशेषपतनीयानि स्त्रीणामेतान्यपि ध्रुवम् ॥
चतस्रस्तु परित्याज्याः शिष्यगा गुरुगाश्च याः ।
पतिघ्नी च विशेषेण जुङ्गितोपगता च या ॥

जुङ्गितः प्रतिलोमगतो हीनवर्णो वा एतानि ब्रह्महत्यासमानि ।

मनुः—

अनृतञ्च समुत्कर्षे राजगामि च पैशुनम् ।
गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया ॥

विष्णुः—

यागस्थक्षत्रियवैश्यवधो रजस्वलायाश्च अन्तर्वत्न्याश्चात्रेयगोत्रायाश्च अविज्ञातस्य गर्भस्य शरणागतस्य च घातनं ब्रह्महत्यासमानि ।

शिवधर्म्मोत्तरे—

यस्तु विद्याभिमानेन नीचोऽस्मि इति [1]भाषते ।
उदासीनं सभामध्ये ब्रह्महा स प्रकीर्त्तितः ॥
परदोषमविज्ञाय नृपकर्णे जपेत यः ।
पापीयान् पिशुनः क्षुद्रः स [2]चाऽपि ब्रह्महा स्मृतः ॥

---

(१) यं द्विज इति केंचितपुस्तकपाठः ।

(२) नैव इति क्कीतकेंचितपुस्तकपाठः ।

देवद्विजगवां भूमिं पूर्व्वदत्तां हरेत यः ।

प्रनष्टामपि कालेन तमाहुर्ब्रह्मघातकम् ॥

तथा देवतान्यथाकरणं अपि ब्रह्महत्यासमम् ।

सुवर्णस्तेयसमानि—

निक्षेपस्याऽपहरणं नराश्वरजतस्य च ।

भूमिवज्रमणीनाञ्च स्वर्णस्तेयसमं स्मृतम् ॥

तत्र

स्त्री धेनुहरणं ब्राह्मणक्षेत्रहरणं स्तेयसमम् ।

याज्ञवल्क्यः—

देवब्राह्मणराज्ञान्तु विज्ञेयं द्रव्यमुत्तमम् ॥

इत्युक्तवान् इमानि देवब्राह्मणराजसम्बन्धीनि ।

गुरुतल्पसमानि ।

रेतः सेकः स्वयोनीषु कुमारीष्वन्त्यजासु च ।

सख्युः पुत्रस्य च स्त्रीषु गुरुतल्पसमं विदुः ॥

अन्त्यजातिस्त्री तु

रजकश्चर्म्मकारश्च नटो वरुड़ एव च ।

कैवर्त्तमेदभिलाश्च स्वर्णकारस्तु सौचिकः ॥

तक्षकस्तिलयन्त्री च सूतसत्री तथा ध्वजी ।

नापितो लोहकारश्च त एते षोड़शान्त्यजाः ॥

विष्णुः—

पितृस्वसा मातामही मातुलस्य पत्नी, एतासां गमनं गुरुदार-समानं पितृस्वसुर्मातृस्वसुर्गमनं श्रोत्रियर्त्विगुपाध्यायमित्रपत्न्यभि-

गमन स्वसुः सख्या स्वगोत्रायाः उत्तमवर्णायाः पतिव्रतायाः निक्षिप्तायाः गमननिमित्तान्येतानि उपपातकानि, स्वयोनिभगिनी स्वगोत्रास्वजातिस्त्रीषु गमनेऽप्येतदेव—

अपि स्वमातरं गच्छेत् न गच्छेद्देवदारिकाम्।

यदि गच्छेत् गुरुदारव्रतं चरेत्। एवमादीनि महापातकसमपातकानि परिगणितानि केषां तत्र प्रतिवचनं प्रायश्चित्तविकल्पार्थं सन्धेयमिति एषां तु वार्षिकव्रतम्' उपपातकानि।

मनुः—

गोवधोऽयाज्यसंयाज्यं पारदार्य्यात्मविक्रयः।
गुरु-मातृ-पितृत्यागः स्वाध्यायाग्न्योः सुतस्य च॥
परिवित्तितानुजेन परिवेदनमेव च।
तयोर्दानञ्च कन्यायास्तयोरेव च याजनम्॥
कन्याया दूषणञ्चैव वार्द्धुष्यं च व्रतच्युतिः।
तड़ागारामदाराणां अपत्यस्य च विक्रयः॥
व्रात्यता चाऽनाश्रमिता भृताध्यापनमेव च।
भृतकाध्ययनं तद्वद् भारण्डानाञ्च विक्रयः॥
हिंस्त्रोपजीवी स्त्रीजीवी मूलकर्म्माभिचारकः।
इन्धनार्थमशुष्काणां द्रुमाणामवपातनम्॥
आत्मार्थञ्च क्रियारम्भो निन्दिताध्ययनं तथा।
अनाहिताग्निता स्तेयमृणानाञ्चानपक्रिया॥
असच्छास्त्राभिगमनं कौटिल्यं व्यसनक्रिया।
धान्यकुप्यपशुस्तेयमद्यपस्त्रीनिषेवणम्॥

स्त्रीशूद्रक्षत्रियवधो नास्तिक्यञ्चोपपातकम् ।

"लवणक्रियौषधिजीवनहिंसायन्त्रविधानशूद्रप्रेष्यहीनसख्यहीनयोनिनिषेवनं अनाश्रमे चैव वासः परान्नपरिपुष्टता सर्व्वाकरेष्वधिकारः असत्प्रतिग्रहादीनि" इति विष्णुवचनात् अनृतवचनसमुत्कर्षराजगामिपैशुन्यं गुरोश्चालीकनिर्बन्धोऽभक्ष्याणाञ्च भक्षणमित्यादीनि सङ्करीकृतौ तु कृतघ्नकूटव्यवहारब्राह्मणप्रतिघ्नमिथ्याभिशंसि पित्रादिपरित्यागीति वराहपुराणे दर्शितम्। अपूणत्वा पंक्तिभेदक इति पंक्तिभेदाचरणस्य यद् दोषाधिक्यं प्रतिपादितम्, तद् विद्वद्ब्राह्मणपंक्तिभेदाचरणविषयम् । अन्यपंक्तिभेददोषस्य प्रकीर्णकत्वात् ।

स्मृत्यन्तरे—

विधवादेवदासीवेश्यावर्णकीदासीगमनमित्यादीनि उपपातकानि ।

मनुः—

खरोष्ट्रमृगमार्जारमीनविक्रयिकस्तथा ।
सङ्करीकरणं ज्ञेयं मीनाहिमहिषस्य च ॥

मलिनीकरणानि—

मनुः—

कृमिकीटवधोमेध्यमद्यानुगतभोजनम् ।
फलैधःकुसुमस्तेयमधैर्य्यञ्च मलापहम् ॥

गो-वधादि अपात्रीकरणम् ।

मनुः—

निन्दितेभ्यो धनादानं वाणिज्यं शूद्रसेवनम्।
अपात्रीकरणं ज्ञेयमसत्यस्य च भाषणम्॥

जातिभ्रंशकराणि।

मनुः—

ब्राह्मणस्य रुजः कृत्वा घ्रातिरघ्रेयमद्ययोः।
जैह्म्यं पुंसि च मैथुन्यं जातिभ्रंशकरं स्मृतम्॥

पशुगमनं पशुयोनिनिषेवणम्।

इति मूलवचनानि।

---

## अथाघमर्षणविधिमाह।

देवलः—

आत्मदेहविशुद्ध्यर्थं कर्त्तव्यमघमर्षणम्।
प्रायश्चित्ते च कृत्यादौ तुलादानादिषु द्विजैः॥
प्रतिष्ठापनविधौ कर्त्तव्यमघमर्षणम्।
पञ्चगङ्गासु राजेन्द्र न कुर्य्यादघमर्षणम्॥
समुद्रगासु सर्व्वत्र न कुर्य्यादघमर्षणम्।
वापीकूपतटाकेषु कर्त्तव्यमघमर्षणम्॥

पराशरः—

कन्यादौ तु तुलादाने प्रायश्चित्तेषु कर्म्मसु ।
चाण्डालादिषु संसर्गे स्वदारेषु दिवागमे ॥
दुःखप्ने दुष्प्रतिग्रहे दुष्टसंसर्गसङ्गमे ।
अपेयपाने सर्व्वत्र अघमर्षणमीरितम् ॥
स्तेये स्वल्पेऽप्यनुप्राप्ते तुलाचार्य्यादिसंग्रहे ।
दुर्ज्जनैः सह सम्भाषे अघमर्षणमीरितम् ॥
सन्ध्यादिनित्यकर्म्माणि परित्यज्य यदा वसेत् ।
आग्नेयादिषु मन्त्रेषु जपे चैवाघमर्षणम् ॥
अकार्य्यकर्म्मकर्त्ता च महापुरुषभोजने[1] ।
सर्व्वपापविशुद्ध्यर्थमघमर्षणमीरितम् ॥
एकोद्दिष्टेषु श्राद्धेषु सपिण्डीकरणादिषु ।
यो भोक्ता स द्विजः कुर्य्याद् अघमर्षणमादरात् ॥
पिता पितामहश्चैव तथैव प्रपितामहः ।
यदाचरति पुत्रश्चेद् अन्यथाप्यघमर्षणः ॥
सूतकद्वितये भोक्ता भोक्ता वै प्रेतकर्म्मणि ।
यज्ञकर्म्मणि भोक्ता चेद् अघमर्षणमीरितम् ॥
यानि यानीह नित्यानि कर्म्माणि शुभानि च ।
तानि तान्याचरेद्[2] विप्रस्तस्य स्यादघमर्षणम् ॥

(१) महापुरुषादि भोजने इति केषुचित्पुस्तकपाठः ।
(२) तान्याचरन् यदा विप्र इति क्वचित्केषुचित्पुस्तकपाठः

अघमर्षणप्रकारमाह—

मार्कण्डेयः—

मनसा पापनिचयं पूर्व्वजोऽहितमाचरन्।
तटाकं दीर्घिकां वाऽपि गत्वा शुचिरतन्द्रितः॥
पुरीषमूत्रे सन्त्यज्य शौचं कुर्य्यादतन्द्रितः।
द्विराचम्य शुचिर्भूत्वा नारायणमनुस्मरन्॥
मलापकर्षणं कृत्वा नित्यकर्म्म समाप्य च।
प्रायश्चित्ती तथाऽन्यो वा सङ्कल्प्य विधिपूर्व्वकम्॥
नाभिदघ्नजलं गत्वा सूर्य्यस्याऽभिमुखः शुचिः।
पवित्रोदर्भपाणिर्वा मार्ज्जयेन्मन्त्रमुच्चरन्॥
मन्त्रास्ते मार्ज्जयेद्दर्भैर्विप्रोदेहविशुद्धये।

पवमानः सुवर्च्चसः हिरण्यशृङ्गमिति च अनुवाकः। सर्व्वेषु वा एषु पापेष्वेकोनुवाकः प्रजापते रन्तस्य यदिति। देवस्यत्वेति मार्ज्जनं समानम्। ततोदेवर्षिपितॄंस्तर्पयित्वा द्विराचम्य धौतवस्त्रं परिधाय मौनं भजन् स्नानवस्त्रं निष्पीड्य वामप्रकोष्ठे निक्षिप्य द्विराचम्य शुचिर्भवेदिति।

मनुः—

वस्त्रं चतुर्गुणीकृत्य कूले निष्पीड़नं तथा।
वामप्रकोष्ठे निक्षिप्य द्विराचम्य शुचिर्भवेत्॥

इत्यघमर्षणं कृत्वा प्रायश्चित्तार्थमागतां परिषदं दृष्ट्वा नारायणं मनसि संस्मरन् कृतपापं मनसि निधाय पुष्पादिकं धृत्वा पञ्चोपच

परिवेष्टितः तदनुमतः परिषदं गच्छेत् प्रायश्चित्तीति। इतरस्तु नित्यकर्म्मादिकं कृत्वा दोषबुद्धिं नाऽचरेत्।

इति हेमाद्रौ अघमर्षणस्नानविधिः।

---

## अथैवं निर्णीतस्याचरणक्रमः कथ्यते।

प्रायश्चित्ताचरणयोग्यनिर्णीतात् दिनात् पूर्व्वद्युरुपवासः प्रातर्मलापकर्षणस्नानं नित्यकर्म्मानुष्ठानं ततः परिषदुपवेशनं प्रायश्चित्तं कर्त्तुकामस्य[1] परिषत्सन्निधौ मृत्तिकास्नानं परिषदभ्यर्च्चनं च। परिषन्निर्णीतप्रायश्चित्तं कर्त्तुकामः मदीयपापजातं निवेदयिष्ये इति सङ्कल्प्य पापनिवेदनं ततः प्रायश्चित्तनिर्णयः। ततो विधायकवरणं, दक्षिणादानं, विधायकान् प्रति परिषद्वाक्यं, अनुवादकवरणं, ततो यजमानं प्रति अनुवादकवाक्यं, ततो वपन सङ्कल्पः, वपनं, स्नानं, दन्तधावनं, ततः परं दशविधस्नानसङ्कल्पः दशविध स्नानाचरणं ततो महासङ्कल्पः। परिषन्निर्णीतसाङ्गोपाङ्गसर्व्व प्रायश्चित्तमहं करिष्य इति सङ्कल्पः। नान्दीश्राद्धं वैष्णवश्राद्धं प्राच्याङ्गगोदानं शालाहोमः पञ्चगव्यहोमः पञ्चगव्यप्राशनं व्रतग्रहणम्। तदपरेद्युः पुनः शालाहोमः उदीच्याङ्गगोदानं यथाशक्ति दशदानानि आज्यावेक्षणं भूमिदानं ब्राह्मणभोजनं आशीर्व्वाद-

---

(१) कर्त्तुकाम इति केचित्पुस्तकपाठः।

ग्रहणं सर्व्वेश्वरार्पणम्। दिनत्रयसाध्ये प्रायश्चित्तेऽयं क्रमः। आतुराद्यशक्तविषये एकदिनसाध्ये तु सङ्कल्पादि भूमिदानान्तं प्रायश्चित्तं कृत्वा स्वयमुपोष्य परेद्युः ब्राह्मणभोजनम्। स्वयं च प्रातः पारणं कुर्य्यात्।

---

## अथ प्रायश्चित्तप्रयोगः।

कर्त्ता पूर्व्वेद्युः प्रातःसन्ध्यामुपास्य देवालये नदीतीरे स्वगृहे वा सभामुपवेश्य सचेलमलापकर्षणं स्नात्वा अर्द्रवासाः सभां गत्वा परिषदुपदिष्टसर्व्वप्रायश्चित्तं कर्त्तुकामो मदीयपापजातं निवेदयितुं शरीरशुद्ध्यर्थं मृत्तिकास्नानमहं करिष्य इति सङ्कल्प्य कल्पोक्तविधानेन मृत्तिकास्नानं कृत्वा शिराचम्य पूर्व्वोक्तलक्षणोपेत-परिषत्सन्निधिं गत्वा गन्धकुसुमाक्षतादिभिः परिषदमभ्यर्च्य प्रायश्चित्तद्रव्यदशांशदक्षिणां कुसुमाक्षतांश्च गृहीत्वा समस्त सम्पदादिमन्त्रेस्त्रिवारं प्रदक्षिणीकृत्य दक्षिणां पुरतोनिधाय प्रणम्योत्थाय च प्राञ्जलिर्विज्ञापयेत्।

नमः सकलकल्याण[1]दायिनि ब्रह्मरूपिणि।
अदर्षे सर्व्वपूज्याय दुष्कृतारण्यवह्नये॥

---

(१) पविने इति केचित्पुस्तकपाठः।

[1]भोभो हे परिषत् काश्यपगोत्रेण नक्षत्रे राशौ च जातेन देवदत्त-नामधेयेन मया समर्पितामिमां परिषद्दक्षिणां स्वीकृत्य मदीयां विज्ञापनां अवधार्य्य मामनुग्रहाण इति पुनः प्रणमेत्, ततः उत्थाय काश्यपगोत्रः नक्षत्रे राशौ जातः देवदत्तनामधेयोऽहं परिषदुपदिष्टसर्व्वप्रायश्चित्तं कर्त्तुकामो मदीयपापजातं परिषत् सन्निधौ निवेदयिष्ये इति सङ्कल्प्य एवं निवेदयेत्—गोत्रादियुक्तेन मया जन्मप्रभृत्येतत्क्षणपर्य्यन्तं मध्यवर्त्तिनि काले बाल्यकौमार-(वयो)वार्द्धकेषु जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनोवाक्कायकर्म्मभिः कामक्रोधलोभमोहमात्सर्य्यैस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणवाक्पाणिपा-दपायूपस्थैः कृतानां प्रकाशकृतमहापातकचतुष्टयतदभ्यतिरिक्त-तत्संसर्गादिपातकानां रहस्यकृतब्रह्महत्यासुरापानसुवर्णस्तेय-गुरुतल्पगाख्यानां महापातकानां तत्संसर्गित्वानुग्राहकत्वप्रयो-जकत्वमित्रभावोपदेष्टृत्वमन्त्रित्वप्रोत्साहकत्वादि महापातक-प्रति-दिष्टादिपातकानां गुर्व्वधिक्षेपवेदनिन्दासुहृद्वधाधीतनाशनादि-ब्रह्महत्यासम-पातकानां धनहर-मनुष्यहरणनिक्षेपहरण-देव-ब्राह्मणभूधेनुहरणादिसुवर्णस्तेयसमरूपपातकानां पितृष्वसृमातृ-ष्वसृमातुलभार्य्याज्येष्ठभ्रातृपत्नी-हीनवर्णमातृसपत्नी-सखिभार्य्या-कुमार्य्यन्त्यजासगोत्रासुतस्त्रीसा माध्यनृपतिपत्नीरमणादिगुरु-तल्पसमपातकानां गोवधव्रात्यत्वसामान्यस्तेयापात्रीकरणाना-हिताग्नित्वापण्यविक्रयपरपाकातिरक्षादिपातकानां सोमयागक्ष

(१) भोभो इति शेषितपुस्तकपाठः ।

क्षत्रियवैश्यवधाविज्ञातगर्भरजस्वलात्रिगोत्रदीक्षितस्त्रीगुर्विणीवधा-
दिमहापातकसमपातकानां उत्कर्षानृतभाषणकलञ्जभक्षणादिनिषिद्ध
भक्षणरजस्वलादिमुखास्वादकूटसाक्ष्यसुहृद्बन्धनादिपरिवेदनभृतका-
ध्यापनपारदार्य्यपारिवित्त्य वार्द्धुष्य लवणविक्रय स्त्रीशूद्रविट्क्षत्रिय-
वधनिन्दितार्थोपजीवन नास्तिक्यव्रतलोपकरणसुतविक्रयधान्यकुप्य-
पशुस्तेयायाज्ययाजनपितृमातृसुतादित्यागतटाकारामविक्रयकन्या-
विक्रयकन्यादूषणपरिविन्दकन्यादानकौटिल्यव्रतलोपात्मार्थक्रिया
रम्भमद्यपस्त्रीनिषेवणोपाध्यायाग्निपरित्यागेन्धनार्थद्रुमच्छेदनस्त्री-
हिंसनयन्त्रविधानव्यसनात्मविक्रयशूद्रद्रव्यहीनसख्यहीनयोनिनिषे-
वणानाश्रमवासपरान्नपरिपुष्टत्वासच्छास्त्राभिगमनाकराधिकारिता
भार्य्याविक्रयाद्युपपातकानां अजाविखरोष्ट्रमृगेभमीनाहिमहिषा-
श्ववधादिसङ्करीकरणानां कृमिकीटवयोवधमद्यानुगतद्रव्यभोजन-
फलैधःकुसुमस्तेयादिमलिनीकरणानां निन्दितधनधान्यकरीष-
जीवनासत्यभाषणशूद्रसेवाद्यपात्रीकरणानां मद्यगन्धघ्राणब्राह्मण-
पीडनसामान्यस्त्रीमैथुनादिजातिभ्रंशकराणां विहितकर्मत्याग-
निषिद्धाचरणेन्द्रियनिग्रहपरमर्मोद्घाटनसूचकत्वशौचस्नानसन्ध्याव-
न्दनजपहोमपञ्चमहायज्ञरहितभोजनाकालभोजनदिवाद्विवारभो-
जनतरुच्छेदनतृणगुल्मलतादिछेदनक्लैब्यस्त्रीवध्यपतितजीवनाश-
परिविन्दपरिवित्तशूद्रसेवकवार्द्धुषिकनिजकर्मविहीनान्नभोजनयत्य-
न्नभोजनयतितत्प्रेरितान्नयतिपक्वान्नयतिपात्रस्थान्नयतिस्पृष्टयतिदा-
पितान्नभोजनशूद्रस्पृष्टशूद्रदृष्टशूद्रानुमतशूद्राधिकृतशूद्रयाचितान्न-
भोजनग्रहणकालभोजनग्रहणजातपक्वान्नभोजनपर्व्वकालरात्रिभो-

जनैकादश्याहोरात्रभोजनानिवेदितान्नभोजनहस्तदत्तान्नभोजन-
प्रेतपिशाचोद्देशभोजनवटाश्वत्थादिनिषिद्धपात्रभोजनबलिदत्तान्न-
भोजनजननीराजितान्नभोजनग्रामयाजकब्रह्मपल्लीपतिमाहिषिकाग्नि-
वहिजगात्रकाषायपाशुपतचिह्निताङ्घ्रिचिकित्सकसौचिकज्यौति-
षिकान्नभोजनभिन्नकांस्यपात्रभोजनताम्रालाबुदारुपात्रमृत्पात्रभो-
जनरजस्वलान्नचाण्डालादिवाक्यश्रवणभोजनदग्धपर्युषितपूतिगन्ध-
भुक्तोच्छिष्टान्नभोजनगणान्नदीक्षितान्नशूद्रपुरोहितान्नपर्य्यायान्नभो-
जनशूद्रपात्रस्थान्नभोजनमहापुरुषार्च्चितान्नभोजनशूद्रभुक्तशेषान्न-
भोजनग्रामाग्न्यजदत्तशेषान्नभोजनभिक्षान्नभोजनदम्पतिभुक्तशेषा-
न्नभोजनबौद्धसखन्नाम्लघान्नभोजनकारागृहवासभोजनखरोष्ट्राजा-
विकमहिषीक्षीरादिपानविवत्सत्रिगतगर्भनिर्दशगोपयः पानस्तन्य-
पानपिण्याककृशरसंयावपायसापूपमांसपुरोडाशादिवृथाभक्षणवा-
महस्तैकहस्तवर्षधाराकूपजलपानरेतोविण्मूत्रकीटास्थिमिश्रितज-
लपानतन्मिश्रितान्नभोजनवार्त्ताककालिङ्गगृञ्जनरक्तमूलकवर्त्तुला-
लाबुश्वेतवृन्ताकादिनिषिद्धद्रव्यभक्षणनिषिद्धयवनिर्यासादिभक्ष-
णोपपातकिपक्वतण्डुलान्नभोजनयोनिप्रेक्षणयोन्यास्वादनदिवास्वा-
पनदिवाब्रह्मदासीवेश्याकुलटावितन्तुपरावरवप्रसवोन्मुखस्त्रीगम-
नसाधारणीभूतस्त्रीपरस्त्रीगमनतिर्य्यग्योनिगमनमुखमैथुनवल्मीक-
राजमार्गच्छायावाहवदेवालयगृहाङ्गनगोष्ठवृन्दावनजलाशयादिस्थल
रेतोविण्मूत्रचरणक्षालनष्ठीवनदूषणपितृमात्राचार्य्यादिमृत्यूपारा-
हित्यदर्शमहालयसंक्रान्तिव्यतीपाताष्टकालभ्ययोगत्यागव्याघविक्त-
रणग्रहणादिपुण्यकालस्नानदानरात्रिहित्वसन्ध्यात्रयवक्षपरिवर्त्तनोपा-

स्नानादिराहित्यसन्ध्याकालसंलापताम्बूलचर्व्वणभोजनमैथुननिद्रादि-
पारवश्यपुण्यकालोष्णोदकस्नाननग्नस्नानपैतृकादिनिषिद्धदिनाभ्यङ्ग-
स्नानसन्निहिततीर्थोल्लङ्घनतीर्थस्नानकच्छराहित्यकौपीनधारणकच्छ-
पुच्छकतिर्य्यक्कटिसूत्रकच्छादिधारणस्वग्रामदेवोत्सवादर्शनतदुत्स-
वजनपदग्रामकुलाचारोल्लङ्घनगुर्व्वाचार्य्यविप्रश्रोत्रियाहिताग्निनृप-
कार्य्योल्लङ्घनविप्रत्वङ्कारहुङ्कारतिरस्कारवादपराजयप्रापणासहायार-
ण्यमार्गगमनब्राह्मणदण्डनशोणितस्रावणमलिनामेध्याविलकषाय-
नीलादिवस्त्रधारणहरिहरगुर्व्वाचार्य्यनिन्दाश्रवणब्राह्मणदूषणक्षोभ-
करणसंहतिपरित्यागस्त्रियादिहस्तद्रव्यासगोविप्ररोधनस्वयंधृतह-
लकर्षणकृषिजीवनकौसुजीवनपीतावशिष्टोदकपानचाण्डालकारि-
त-कृषिधान्यशालादुग्धपुष्पफलभोगचाण्डालकारितवापीकूपतटा-
कोदकपानान्यकारितप्रपाजलपानकरमथिततक्रपानदीपोच्छिष्टा-
भ्यङ्गावशिष्टतैलपानसाभिलाषपरदारनिरीक्षणविवस्त्रस्त्रीनिरीक्षण-
मिथुनीभूतस्त्रीनिरीक्षणगुर्व्वाचार्य्यनृपादिमैथुनादिदर्शनशब्दश्रवण-
मैथुनविघ्नाचरणहीनवर्णाभिवादनराजासनाक्रमणराजत्वङ्कारहुङ्का-
ररन्ध्रान्वेषणमर्म्मोद्घाटनासाधूपदेशान्यायायप्रवर्त्तकरणचार्व्वाकपा-
षण्डादिपूजितदेवताभिवादनपरोपतापकरणपरोपकारनाशनतृण-
गुल्मलतादिनाशनगोमांसगन्धघ्राणचाण्डालस्पर्शनदर्शनभाषणपाक-
भेदपंक्तिभेदकरणतुरुष्कादिम्लेच्छमध्यनिवासम्लेच्छद्रव्योपभोगयाच-
मानदीनान्धकृपणाक्षेपणमुष्टिमात्रतिलसहितैरकादिनानाप्रकार-
तुष्पूतिपद्दनियमरहितवेदपुराणशास्त्राध्ययनाध्यापनव्यवहारपक्षपा-
तसाधारणब्राह्मणसीमाकुल्यातटाककूपारामाद्यपहरणपशुपक्षिबन्ध-

नक्षोत्तव। तातपवचचौराद्यापद्गतदुःखानिवारणानर्हांसनश्रयनप्रदानविषमभाषणवाक्पारुष्यदण्डपारुष्याविहितकालविहिताचरणमित्रस्वामिसुहृदाचार्य्येष्टभार्य्यादेवतावञ्चनपरमात्मस्मरणराहित्यादीनां प्रकीर्णकानां अज्ञानतः सकृत्कृतानां ज्ञानतोऽभ्यस्तानां ज्ञानतः सकृत्कृतानां अत्यन्तचिरकालनिरन्तराभ्यस्ताना प्रकाशकृतमहापातकव्यतिरिक्तानां रहस्यकृतमहापातकादीनां प्रकीर्णकान्तानां नवविधानां बहुविधानां च सर्व्वेषां पापानां अपनोदकं प्रायश्चित्तं प्रतिनिमित्तं कर्त्तुं अचमस्य काश्यपगोत्रस्य नक्षत्रे राशौ जातस्य देवदत्तनामधेयस्य मम सकलपापापनोदकमेकविधं सर्व्वप्रायश्चित्तं धर्म्मशास्त्रपर्य्यालोचनया निश्चित्यादिश्य काश्यपगोत्रजं नक्षत्रजं राशिजं देवदत्तनामधेयं मां सर्व्वस्मादेनसः समुद्धर इति त्रिवारं प्रणमेत् ।

ततः परिषदपि यजमानविज्ञापनामाकर्ण्य तत्समर्पितां परिषद्दक्षिणां स्वीकृत्य धर्म्मशास्त्राणि पर्य्यालोच्य एकविधं सर्व्वप्रायश्चित्तं निश्चित्य अस्मिन् सर्व्वप्रायश्चित्ते परिषदनुज्ञया भवद्भिर्विधायकैर्भवितव्यमिति दक्षिणादानपूर्व्वकं यजमानेन विधायकान् वरयित्वा विधायकान् प्रति एवं वदेत् ।

परिषद्वाक्यप्रकारः—

भो भो विधायकाः अमुकगोत्रेण नक्षत्रराशिजेन देवदत्तनामधेयेन अस्मत्सन्निधौ विज्ञापितानां नवविधानां पापानां धर्म्मशास्त्रपर्य्यालोचनया षडब्दप्राजापत्यकृच्छ्रात्मकं सर्व्वपापप्रायश्चित्तमपनोदकं भवति। एतदेवपापानां मत्याकरणे द्विगुणं

अत्यन्ताभ्यासे त्रिगुणं निरन्तराभ्यासे षड्गुणं तदेव षड्गुणितषडब्दं अशीत्यधिकसहस्रसंख्याकप्राजापत्यकृच्छ्रात्मकं सर्व्वप्रायश्चित्तमस्माभिर्णीतं सर्व्वपापापनोदकं भवतीति भवन्तोविधायका अनुवादकमुखेन यजमानायोपदिशन्तु ।

ततो विधायका यजमानसमर्पितां दक्षिणां स्वीकृत्य विविध प्रायश्चित्तपापानुवादकुशलमेकं विपश्चितं अनुवादकं दक्षिणादानपूर्व्वकं अस्मिन् प्रायश्चित्ते भवताऽनुवादकेन भवितव्यमिति यजमानेन वरयित्वाऽनुवादकमेवं ब्रूयुः—

विधायकवाक्यम्,—

अहो विद्वन् विदुषामग्रेसर प्रायश्चित्तापनोद्यस्य बहुविधस्य पापस्याप्यनुवादकुशल हे अनुवादक काश्यपगोत्रेण नक्षत्रराशिजेन देवदत्तनामधेयेन यजमानेन परिषत्सन्निधौ विज्ञापितानां प्रकाशकृतमहापातकानां व्यतिरिक्तानां च तत्संसर्गाद्यतिपातकानां रहस्यकृतमहापातकादिप्रकीर्णकान्तानां नवविधानामज्ञानतः कृतानां ज्ञानतः सकृत्कृतानां अत्यन्तनिरन्तरचिरकालाभ्यासवशात् षड्गुणितं षडब्दं प्रायश्चित्तमशीत्यधिकसहस्रसंख्याकप्राजापत्यकृच्छ्रात्मकसर्व्वप्रायश्चित्तं सर्व्वेषां पापानां अपनोदकं भवतीति अशेषविद्वत्सभया निर्णीतं अस्यां निर्णीतं सर्व्वप्रायश्चित्तमनुवादमुखेन यजमानाय उपदिशन्तु इति परिषद् अस्मान् आज्ञापयति । वयमपि काश्यपगोत्रेण नक्षत्रे राशौ जातेन देवदत्तनामधेयेन

यजमानेन परिषत्सन्निधौ विज्ञापितानां प्रकाशकृतमहापातक-व्यतिरिक्तानां तत्संसर्गातिपातकानां रहस्यकृतब्रह्महत्यादिपात-कानां तद्रूपोपदिष्टव्रतातिदिष्टातिपातकानां सङ्करीकरणानां मलिनीकरणानां प्रकीर्णकादिनवविधानां अज्ञानतः सकृत्कृतानां एकगुणं ज्ञानतः सकृत्कृतानां द्विगुणं ज्ञानतोऽभ्यस्तानां त्रिगुणितं अत्यन्ताभ्यस्तानां चतुर्गुणं निरन्तराभ्यस्तानां पञ्चगुणं चिरकालाभ्यस्तानां षड्गुणं अशीत्यधिकसहस्रसंख्याकप्राजा-पत्यकृच्छ्रात्मकं षड्गुणितं षडब्दं सर्व्वप्रायश्चित्तं सर्व्वेषां पातकानां अपनोदकं भवतीति विज्ञाय काश्यपगोत्राय नक्षत्रे राशौ जाताय देवदत्तनामधेयाय अस्मै यजमानाय भवन्मुखेन विज्ञापयामः। तदेतदस्मद्विहितं सर्व्वप्रायश्चित्तं पापानुवादपुरःसरमुपदिश्य अस्मै यजमानाय इति त्वां नियोजयामः त्वमपि उच्चैरूर्द्ध्वबाहुः सुविस्पष्टं गीर्व्वाणभाषया यजमानाय त्रिवारं अनुवद। अनु-वादकोऽपि यजमानसमर्पितदक्षिणां स्वीकृत्य द्विराचम्य प्राणा-नायम्य उत्थाय यजमानाभिमुखं स्पष्टमूर्द्ध्वबाहुर्देवभाषया परि-षन्निर्णीतविधायकविहितं सर्व्वप्रायश्चित्तोपदेशपूर्व्वकमुच्चैस्त्रिवार-मनुवदेत्। ब्राह्मणानां ब्राह्मणस्त्रीणां प्रायश्चित्ते तु यजमानस्य पुरस्तात् कञ्चन ब्राह्मणं स्थापयित्वा तं प्रत्यनुवदेत्।

---

## अथानुवादकवचनवचनाप्रकारः ।

भो यजमान काश्यपगोत्र मघने राशौ जात देवदत्तनामधेय अशेषा विदुषी परिषत् त्वया विज्ञापितानां प्रकाशीकृतमहा-पातकव्यतिरिक्तानां तत्संसर्गाद्यतिपातकानां रहस्यकृतमहा-पातकानां अतिपातकानां उपपातकाना सङ्करीकरणानां मलिनीकरणानां अपात्रीकरणानां जातिभ्रंशकरणानां प्रकीर्ण-कानां बहूनां नवविधानां अपनोदकानि प्रायश्चित्तानि प्रति-निमित्तं कर्त्तुं अक्षमस्य तव सर्व्वपापापनोदकमेकविधं प्राय श्चित्तं षड्गुणितषडब्दप्राजापत्यकृच्छ्रात्मकं धर्म्मशास्त्रपर्य्यालोच-नया निश्चित्य यजमानाय पापानुवादपुरःसरं त्रिवारं उपदिश इति विधायकमुखेन मामादिष्टवती अहमपि तदेतत् परि-षन्निर्णीतविधायकविहितं सर्व्वप्रायश्चित्तं तवोपदिशामि सावधानः समाकर्णय ।

भो यजमान काश्यपगोत्र मघनेराशौ जात देवदत्तनामधेय तव जन्मप्रभृत्येतत्क्षणपर्य्यन्तं मध्यवर्त्तिनि काले बाल्यकौमार-यौवनवार्द्धकेषु जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनोवाक्कायकर्म्मभिः काम-क्रोध-लोभ-मोह-मद-मात्सर्य्यैस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणवाक् पाणिपादपायूपस्थैः ज्ञानतोऽज्ञानतश्च सम्भावितानां प्रकाशकृत-महापातकव्यतिरिक्तानां तत्संसर्गतद्रूपातिदिष्टरूपातिपातकानां रहस्यकृतब्रह्महत्यादिमहापातकानां महापातकरूपातिदेशिक-महाव्रतातिदेशिकातिपातकसमरूपपातकानां उपपातकानां

मलिनीकरणानां अपात्रीकरणानां जातिभ्रंशकराणां प्रकीर्ण-कानामज्ञानतः सकृत्कृतानां अज्ञानतः ज्ञानतश्चाभ्यस्ताना-मत्यन्ताभ्यस्तानां निरन्तराभ्यस्तानां चिरकालाभ्यस्तानां बहूनां बहुविधानां सर्व्वेषां पापानां साशीतिसहस्रसंख्याकप्राजापत्य-कृच्छ्रात्मकषड्गुणितषड्ब्दरूपं प्रायश्चित्तमपनोदकं भवति तदे-तदशेषपरिषन्निर्णीतं साङ्गोपाङ्गं त्वयाऽनुष्ठेयम् । त्वं साक्षात् चर्य्यायां असमर्थश्चेत् विहिततत्संख्याकधेनुदान तन्मूल्यदानायुत-गायत्रीजप प्राणायामशतद्वय तिलहोमसहस्रसंहितामात्रवेदपारा-यणद्वादशब्राह्मणभोजनविधिवदनुष्ठितसमुद्रगनदीस्नानादिप्राजाप-त्यकृच्छ्रप्रत्याम्नायरूपेणाचर शुद्धः पूतो भविष्यसि ।

काश्यपगोत्रेण नक्षत्रे राशौ जातेन देवदत्तनामधेयेन त्वया परिषन्निर्णीते साङ्गोपाङ्गे सर्व्वप्रायश्चित्ते शक्यप्रत्याम्नायरूपेण सम्यगनुष्ठिते सति त्वया परिषत्सन्निधौ विज्ञापितेभ्यः प्रारब्धत्वत्कृतपातकव्यतिरिक्तेभ्यः तत्संसर्गतद्रूपातिदिष्टव्रतादिष्टा-दिपातकेभ्यः तत्समरूपपातकेभ्यः रहस्यकृतब्रह्महत्यासुरापान सुवर्णस्तेयगुरुतल्पगमनाख्य महापातकेभ्यः तत्संसर्गित्वानुग्राहक-त्वप्रयोजकत्वमित्रीभावोपदेष्टृत्वानुमन्तृत्वप्रोत्साहकत्वादि महा-पातकरूपातिदेशकातिपातकेभ्यः सोमयागस्थक्षत्रियवैश्यवधा-विज्ञातगर्भ-ऋतुमत्यति-गोत्रादिदीक्षितस्त्रीवधादि महापातक-व्रतातिदेशिकपातकेभ्यः गुर्व्वधिक्षेपवेदनिन्दासुहृद्वधाधीतनाश-नादि ब्रह्महत्यासमपातकेभ्यः उत्कर्षानृतभाषणाऽभक्ष्यभक्षण दुष्ट-वतीमुखास्वादादि सुरापानसमपातकेभ्योऽश्वरत्न स्त्रीधेनुनिक्षेप-

ब्राह्मणभूमिहिरण्यादिसुवर्णस्तेयसमपातकेभ्यः सखिभार्य्याकुमारी
ज्ञातिस्त्र्यन्त्यजस्त्रीस्नुषापितृव्यपत्नीमातुलपत्नीनृपपत्नीपितृष्वसृमातृ-
ष्वसृमातृसपत्नीभगिनीश्रोत्रियर्त्विगुपाध्यायाचार्य्यमित्रपत्नीदुहितृ-
रजस्वलाशरणागताप्रव्रजितानिक्षिप्तस्त्रीगमनादिगुरुतल्पसमपात-
केभ्यः गो-वधव्रात्यत्वसामान्यद्रव्यस्तेयऋणानपाकरणानाहिताग्नि-
त्वापण्यविक्रयपरिवेदनभृतकाध्ययनभृतकाध्यापनपारदार्य्यपारि-
वित्त्यवार्द्धुष्यलवणविक्रयस्त्रीशूद्रविट्-क्षत्रियवधनिन्दितार्थोपजीवन--
नास्तिक्यव्रतत्यागसुतविक्रयधान्यकुप्यपशुस्तेयायाज्ययाजन पितृ-
मातृसुतत्यागतडागारामादिविक्रयकन्यादूषणपरिविन्दककन्याप्रदान-
कौटिल्यव्रतलोपनान्यार्थक्रियारम्भमद्यपस्त्रीनिषेवणस्वाध्यायाग्नि-
परित्यागबान्धवत्यागेन्धनार्थद्रुमच्छेदनस्त्रीहिंसौषधजीवनहिंसाय-
न्त्रविधानव्यसनात्मविक्रयशूद्रप्रेष्यत्वहीनसख्यहीनयोनिनिषेवणाना-
श्रमवासपरान्नपरिपुष्टत्वासच्छास्त्राधिगमनाकराधिकारित्वभार्य्या-
विक्रयाद्युपपातकेभ्यः खरोष्ट्रमृगेभाजाविकाश्वमीनाहिमहिषवधा-
दिसङ्करीकरणेभ्यः कृमिकीटवयोवधमद्यानुगतद्रव्यभोजनफलैध-
कुसुमस्तेयादिमलिनीकरणेभ्यः निन्दितधनादानवाणिज्यकुसीद-
जीवनासत्यभाषणशूद्रसेवाद्यपात्रीकरणेभ्यः ब्राह्मणपीडाकरणम-
द्याघ्राणजैह्म्यपुंमैथुनादिजातिभ्रंशकरेभ्यः विहितकर्म्मत्यागनिषि-
द्धाचरणेन्द्रियानिग्रहपरमर्म्मभेदनसूचकत्वशौचसन्ध्यावन्दनजपहोम-
पञ्चमहायज्ञराहित्यकाम्याभोजनाकालभोजनदिवाद्विवारभोजनस-
च्छेदनतरुगुल्मलताच्छेदन स्तेय जीवघ्नत्व पतितक्लीवव्रात्य-
परिविन्दकपरिवित्तिशूद्रसेवकवार्द्धुषिकानिजकर्म्महीनान्नभोजनय-

त्यक्तयतिप्रेरितान्नयतिपात्रस्थान्नयतिपक्वान्नयतिस्पृष्टान्नयतिदापिता
न्नभोजनशूद्रस्पृष्टशूद्रवीक्षितशूद्रानुमतशूद्राधिज्ञातशूद्रयाचितान्नभो-
जनग्रहणकालपक्वान्नभोजनपर्व्वकालरात्रिभोजनैकादश्यहोरात्र--
भोजनानिवेदितान्नभोजनहस्तदत्तान्नभोजनप्रेतपिण्डार्थोद्दिष्टभोजन-
वटाश्वत्थादिनिषिद्धपत्रभोजनबलिदत्तान्नभोजननीराजितान्नभोज-
नग्रामयाजकगणकवृषलीपतिमाहिषिकशिवद्विजशाक्तपाषण्डपाशु-
पतचित्रिताङ्गचिकित्सकसौचिकज्योतिषिकान्नभोजनभिन्नकांस्य-
पात्रभोजनताम्रालाबुदारुपात्रभोजनरजस्वलाचाण्डालादिवाक्यश्र-
वणदग्धान्नभोजनपर्य्युषितपूतिगन्धभुक्तोच्छिष्टान्नभोजनगणान्नदी-
क्षितान्नशूद्रपुरोहितान्नपर्य्यायान्नभोजनशूद्रपात्रस्थान्नभोजनमद्य-
पुरुषार्चितान्नभोजनशूद्रभुक्तशेषान्नभोजनग्रामान्त्यजदत्तशेषान्नभो-
जनभिन्नान्नभोजनदम्पतिभुक्तान्नशेषभोजनक्षौमवस्त्राच्छन्नान्नभोज-
न कारागृहवासभोजनखरोष्ट्राजाविकमहिषीक्षीरादिपानविवत्स-
विगतगर्भनिर्द्दशगोपयःपानस्तन्यपानपिण्याकक्षतरससंयावपायसा-
पूपमांसपुरोडाशादिवृथाभक्षणवामहस्तैकहस्तवर्षधारापरदत्तधा-
राकूपजलपानरेतोविण्मूत्रकीटास्थिमिश्रितजलपानतादृङ्मिश्रि--
तान्नभोजनवार्त्ताककतककालिङ्गगृञ्जनरक्तमूलकवर्त्तुलालाबुश्वेत-
वृन्ताकादिनिषिद्धद्रव्यभक्षणनिषिद्ध शिवनिर्म्माल्यभक्षणोपपातकि-
पक्वतण्डुलान्नभोजनयोनिनिरीक्षणयोन्यास्वादनदिवास्वापदिवासङ्गम-
दासीवेश्याकुलटावितन्तुपरावरुद्धप्रसवोन्मुखस्त्रीगमनसाधारणीभु-
तपरस्त्रीगमनतिर्य्यग्योनिगमनमुखमैथुनरथ्याराजमार्गच्छायावृ --
क्षदेवालयगृहाङ्गणगोष्ठवृन्दावनजलाशयादिरेतोविण्मूत्रकरणजल-

मध्यनिष्ठीवनदूषणपितृमाताचार्य्यादिशुश्रूषाराहित्य दर्शमहालय-
संक्रान्तिव्यतीपाताष्टकालब्धयोगश्राद्धविस्मरण ग्रहणादिपुण्यकाल-
स्नानदानराहित्य सन्ध्यात्रयवस्त्रपरिवर्त्तनोपासनादिराहित्य सन्ध्या-
कालसंलापताम्बूलचर्व्वणभोजनमैथुननिद्रादिपारवश्य पुण्यकालो-
ष्णोदकस्नान नग्नस्नान पैत्रकादिनिषिद्धदिनाभ्यङ्ग स्नानसविहित-
तीर्थोल्लङ्घन तीर्थस्नानकच्छराहित्य कौपीनधारण विकच्छत्व पुच्छ-
कच्छतिर्य्यक्कटिसूत्रकच्छादिधारण स्वग्रामदेवोत्सवादर्शनतदुत्स-
ववर्जनपरग्रामकुलाचारोल्लङ्घन गुर्व्वाचार्य्यविप्रश्रोत्रियाहिताग्नि--
नृपच्छायोल्लङ्घन विप्रत्वङ्कारहुङ्कारतिरस्कारवादपराजयप्रापणा-
सहायारण्यमार्गगमन ब्राह्मणेतरदण्डनभर्त्सनताड़नघोषितश्रावण
मलिनामेध्याविलकषायविदग्धादिवस्त्रधारण हरिहरगुर्व्वाचार्य्यादि-
निन्दाश्रवण ब्राह्मणदूषणक्षोभकरण स्ववृत्तिपरित्याग क्षत्रियादि-
वृत्तिद्रव्यार्ज्जनगोतिरोधान स्वयंधृतहलकर्षण कृषिजीवन कोष-
जीवन पीतावशिष्टोदकपान चाण्डालकारितकृषिधान्यग्रासालुब्ध-
पुष्पफलोपभोग चाण्डालकारितवापीकूपतटाकोदकपानान्यकारित-
प्रपाजलपान करमथिततक्रपान दीपोच्छिष्टाभ्यङ्गावशिष्टपीततैल-
जलपान साभिलाषपरदारनिरीक्षण नग्नस्त्रीनिरीक्षण मिथुनीभूत-
स्त्रीनिरीक्षण गुर्व्वाचार्य्यनृपादिमैथुनदर्शनशब्दश्रवण पैशुनविघ्नाच-
रण हीनवर्णाभिवादन राजासनाक्रमण राजत्वङ्कारहुङ्काररन्ध्रान्वेषण
दूषण मर्म्मोद्घाटनासाधूपदेशान्यायप्रवर्त्तनकरणचार्व्वाकपाषण्डादि-
पूजितदेवताभिवादन परोपतापकरण परोपकारनाशन वृक्षगुल्म-
लतादिनाशन गोमांसगन्धाघ्राण चाण्डालस्पर्शनदर्शनसम्भाषण

पाकभेदपंक्तिभेदकरण तुरुष्कादिम्लेच्छालयनिवास म्लेच्छद्रव्योपभोग याचमानदीनान्धकृपणोपेक्षण मुष्टिमात्रतिलभक्षितैरकादिनानाप्रकारदुष्प्रतिग्रह नियमरहितवेदशास्त्राध्ययनाध्यापन व्यवहारपक्षपात साधारणग्रामक्षेत्रसीमाकूल्यातटाककूपारामाद्यपहरण पशुपक्षिबन्धन शीतवातातपवर्षचोरव्याध्याद्यापन्नगवादिदुःखानिवारणानर्हासनशयनप्रदान विषमभाषण वाक्पारुष्याकालविहिताचरणमित्रस्वामिसुहृदाचार्येष्टभार्यादेवतावञ्चन परमात्मस्मरणराहित्यादिप्रकीर्णकेभ्यः अज्ञानतः सकृत्कृतेभ्यः ज्ञानतः सकृत्कृतेभ्यः ज्ञानतोऽज्ञानतश्चाभ्यस्तेभ्यः निरन्तराभ्यस्तेभ्यः चिरकालाभ्यस्तेभ्यः नवविधेभ्यः बहुभ्यः पापेभ्यः काश्यपगोत्र नक्षत्रे राशौ जात देवदत्तनामधेयस्त्वं मुक्तः पूतोभूयादिति त्रिवारमनुवदेत्। तत् श्रुत्वा परिषदपि सर्व्वेभ्यः पापेभ्यो मुक्तो भूयादिति त्रिवारमुच्चैः ब्रूयात्। ततोयजमानः भवतां प्रसाद इत्युक्त्वा प्राणानायम्य सङ्कल्प्य परिषदुपदिष्टसर्व्वप्रायश्चित्तं साङ्गोपाङ्गं कर्त्तुकामः शरीरशुद्ध्यर्थं प्रायश्चित्ताङ्गभूतं वपनं करिष्ये इति सङ्कल्प्य विप्राज्ञयाऽऽज्ञां लब्ध्वा

"यानि कानि च पापानि ब्रह्महत्यासमानि च।

केशानाश्रित्य तिष्ठन्ति तस्मात् केशान् वपाम्यहम्॥"

इति मन्त्रेण नखरोमवर्ज्जं यथानुक्तरीत्या वापयित्वा स्नानं कुर्य्यात्। ततःपरं—

"आयुर्ब्बलं यशोवर्च्चः प्रजाः पशुवसूनि च।

ब्रह्म प्रज्ञाञ्च मेधाञ्च त्वं नो देहि वनस्पते॥"

इति मन्त्रेण क्षीरकण्टकवृक्षस्य दन्तकाष्ठं गृहीत्वा दन्तधावनं कृत्वा द्वादशवारगण्डूषेण मुखशुद्धिं विधाय पाणिपादं प्रक्षाल्य पुनराचम्य व्रतग्रहणयोग्यतासिद्ध्यर्थं दशविधस्नानान्याचरिष्य इति सङ्कल्प्य शक्तश्चेत् स्वयमेव स्नानादि कुर्य्यात्, अशक्ता व्याधिताः सुवासिन्यो मूर्द्धाभिषिक्ताः शूद्राश्च ब्राह्मणेनैव कारयेयुः।

तत्र द्रव्याणि मन्त्राश्च क्रमेण लिख्यन्ते।

अग्निरिति भस्म वायुरिति भस्म जलमिति भस्म स्थलमिति भस्म व्योमेति भस्म सर्व्वं ह्वा इदमेतद्भस्म भवति भस्मैवेतत् प्रयुञ्जीतेति तस्मादवुध्यति इति अग्निरित्यादिभिर्मन्त्रैः भस्मना स्नानं कुर्य्यात्।

गन्धद्वारेति मन्त्रेण जामयेन ? द्वितीयकम्।

स्योना पृथिवीति मन्त्रेण मृत्तिकया तृतीयकम्॥

आपोहिष्ठेति मन्त्रेण उदकेन चतुर्थकम्।

गायत्र्या गोमूत्रेण पञ्चमं, गन्धद्वारेतिमन्त्रेण गोमयेन षष्ठम्।

आप्यायस्वेति क्षीरेण सप्तमं, दधिक्राव्ण इति दध्ना अष्टमं, शुक्रमसीत्याज्येन नवमं, देवस्य त्वेति कुशोदकेन दशमं, ततो जलमवगाह्य सम्यक् स्नात्वा शुद्धवस्त्रे परिधाय पवित्रपाणिर्द्विराचम्य प्राङ्मुखः प्राणायामत्रयं कृत्वा व्रतग्रहणार्थं महासंकल्पं कुर्य्यात्।

श्रीरस्तु। अस्य श्रीमहाभगवतः सच्चिदानन्दरूपस्य श्रीमदादिनारायणस्याऽचिन्त्यापरिमितशक्त्या भ्रियमाणानां महाजलौघमध्ये परिभ्रममाणानामनेककोटिब्रह्माण्डानाम् एकतमे·

ऽस्मिन् अव्यक्तमहदहङ्कारपृथिव्यप्तेजोवाय्वाकाशाख्यावरणैरावृते महति महाण्डकटाहान्तरसकलजगदाधारशक्तिकूर्म्मवराहानन्तै-रावत-पुण्डरीक वामन-कुमुदाञ्जन पुष्पदन्त सार्व्वभौमसुप्रतीकाष्ट-दिग्गजोपरिप्रतिष्ठितस्यातलवितलसुतलातलरसातलमहातलपाता--लाख्यसप्तलोकोपरिभागे भूर्लोकभुवर्लोकस्वर्लोकजनोलोकतपो-लोकसत्यलोकाख्यलोकषट्कस्याऽधोभागे महाकालायमानफणि-राजशेषसहस्रफणामण्डलविधृते दिग्दन्तिशुण्डादण्डादन्तर्वहिरन्ध-तमसावृतेनान्तःसूर्य्यप्रकाशितेन लोकालोकाचलेन वलयिते लव-णेक्षुसुरासर्पिर्दधिक्षीरस्वादूदकाख्यसप्तसागरावरणपरिवेष्टिते जम्बू-प्लक्षकुशक्रौञ्चशाल्मलिशाकपुष्कराख्यसप्तद्वीपविराजिते स्वर्णप्रस्थ-चन्द्रशुक्लावर्त्तरमणसिंहलमहारमणपारसीकपाञ्चजन्याद्युपद्वीप--सहिते एवंविधसरोरुहाकारपञ्चाशत्कोटियोजनविस्तीर्णभूमण्डले हिमाचलहेमकूटनीलश्वेतशृङ्गिगन्धमादनपारिजाताद्यष्टसीमाचलै-र्विभक्ते तन्मध्यवर्त्तिभारतकिम्पुरुषहरिवर्षेलावृतरम्यकहिरण्मय-कुरुभद्राश्वकेतुमालाख्यनववर्षशोभिते जम्बूद्वीपे नानावर्णकेसरा-चलशिखररत्नवीजाञ्चितभूसरोरुहकर्णिकायमानस्य मेरोर्दक्षिण-दिग्भागे दक्षिणोदधिहिमाचलयोर्मध्यप्रदेशे नवसहस्रयोजन-विभक्तेन्द्रद्वीपकशेरुताम्रपर्णीगभस्तिनागसौम्यगान्धर्वारुणभारता--ख्यनवखण्डान्तर्गतेऽस्मिन् भारतवर्षे दक्षिणोदधिप्रभृतिसहस्र-योजनायामवति भरतखण्डे सम्भवति कुरुक्षेत्रादिसमभूमध्य-रेखायाः अमुकदिग्भागे अयोध्यामथुरामायाकाशीकाञ्च्यवन्तिका-द्वारवत्यादिमुक्तिक्षेत्रवत्यामस्यां कर्म्मभूमौ भागीरथीविन्ध्याचल-

गोदावरीणां दक्षिणदिग्भागे कावेरीमलयाचलरामसेतूनाम् उत्तर-
दिग्भागे श्रीशैलहेमकूटकिष्किन्ध्यागरुड़ाचलवेङ्कटाचलारुणगिरि-
हस्तिगिरिप्रभृतिपुण्यशैलवति दण्डकारण्ये नानापुण्यतीर्थवत्यस्मिन्
देशविशेषे स्वगृहे देवालये तीर्थनदीतीरे स्वेष्टदेवतासन्निधौ
अनेककोटिब्रह्माण्डघटनायासव्योमविचरस्य विराड्रूपिणो भग-
वतो महापुरुषस्य शेषपर्य्यङ्कशायिनः श्रीमहाविष्णोराज्ञया प्रवर्त्त-
मानस्य तन्नाभिस्थानीयसरोरुहादुत्पन्नस्य सकलवेदनिधेः सकल-
जगत्स्रष्टुः परार्द्धद्वयजीविनो ब्रह्मणः प्रथमपरार्द्धे श्वेतवाराहकल्पे
प्रथमवर्षे प्रथममासे प्रथमपक्षे प्रथमदिवसे अह्नि उदयादिनयो-
दशघटिकास्वतीतासु स्वायम्भुवस्वारोचिषोत्तमतामसरैवतचाक्षुषा-
ख्येषु षट्सु मनुषु व्यतीतेषु उपरितनघटिकायां सप्तमे वैवस्वतमन्व-
न्तरे सप्तविंशतिमहायुगेषु गतेषु अष्टाविंशतितमे महायुगे पुरुहुत-
नामेन्द्रसमये कृतत्रेताद्वापरेषु गतेषु वर्त्तमाने कलियुगे प्रथमपादे
बौद्धावतारे शालिवाहनशके सौरचान्द्रमानप्रभवादिषष्टिसंवत्सरा-
न्तर्गतप्रथमविंशत्यां वर्त्तमाने व्यावहारिके अमुकसंवत्सरे अमुकायने
अमुकऋतौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवारे
अमुकनक्षत्रे अमुकयोगे अमुककरणे एवं गुणविशिष्टपुण्यकाले
काश्यपगोत्रस्यामुकनक्षत्रे अमुकराशौ जातस्य देवदत्तनामधेयस्य
मम जन्माभ्यासाज्जन्मप्रभृत्येतत्क्षणपर्य्यन्तं मध्यवर्त्तिनि काले
सम्भावितानां प्रकाशकृतमहापातकानां रहस्यकृतमहापातका-
दीनां प्रकीर्णकान्तानां सर्वेषां पापानामपनोदकं साशीतिसहस्र-
संख्यकप्राजापात्यकृच्छ्रात्मकं षड्गुणितप्रत्यब्दसर्व्वप्रायश्चित्तं परि-

यदुपदिष्टं पूर्व्वोत्तराङ्गकलापसहितं विहितशक्यप्रत्याम्नायरूपेणा-
हमाचरिष्य इति सङ्कल्प्य ततो नान्दीश्राद्धवैष्णवश्राद्धे कुर्य्यात् ।

तत्र प्रयोगः—

एवं गुणविशेषणविशिष्टपुण्यतिथौ अस्मिन् प्रायश्चित्तकर्म्मणि नान्दीदेवतासन्निधानार्थं पितृप्रीत्यर्थं श्रीमहाविष्णुप्रीत्यर्थं च नान्दीश्राद्धं वैष्णवश्राद्धञ्च करिष्य इति नान्दीप्रपितामहीपितामही-मातरः काश्यपगोत्राः नान्दीमुखाः उभाभ्यां नान्दीप्रपितामह पितामहपितरः काश्यपगोत्राः नान्दीमुखाः उभाभ्यां नान्दी-सपत्नीकमातामहमातृ पितामहमातृप्रपितामहाः गोत्रशर्म्माणः नान्दीमुखाः उभाभ्यां सत्यवसुसंज्ञका विश्वेदेवाः नान्दीमुखाः एता देवताः हिरण्येन तोषयिष्ये—

हिरण्यगर्भगर्भस्थं हेमबीजं विभावसो ।
अनन्तपुण्यफलदं अतः शान्तिं प्रयच्छ मे ॥

एतेभ्यो ब्राह्मणेभ्यो गोत्रेभ्यो नामधेयेभ्यो नान्दीदेवताप्रीतिं कामयमानः आग्नेयीं हिरण्यं दक्षिणां तेभ्यः सम्प्रददे न मम इति यज्ञेश्वरं विष्णुं हिरण्येन तोषयिष्य इति संकल्प्य हिरण्य-गर्भमिति अस्मै ब्राह्मणाय श्रीमहाविष्णुप्रीतिं कामयमानः आग्नेयीं दक्षिणां तुभ्यमहं सम्प्रददे न ममेति च चिकीर्षितसर्व्व-प्रायश्चित्तसादृगुण्यार्थं प्रायश्चाङ्गगोदानं करिष्य इति च संकल्प्य

यज्ञसाधनभूता या विश्वस्याऽघप्रणाशिनी ।
विश्वरूपधरो देवः प्रीयतामनया गवा ॥

अस्मै ब्राह्मणायेत्यादि इमां गां सवत्सां श्रीमहाविष्णुप्रीतिं

कामयमानस्तुभ्यमहं सम्प्रददे न ममेति। ततः चिकीर्षितसर्व्वप्रायश्चित्तसाङ्गुण्यार्थं ग्रालाग्निहोमं करिष्ये इति संकल्प्य स्थण्डिलोल्लेखनादि अग्निप्रतिष्ठापनान्तं कृत्वा अस्मिनन्वाहिताग्नौ अग्निं जातवेदसम् इध्मेन प्रजापतिञ्चाघारदेवते आज्येनाऽग्निषोमौ चक्षुषी आज्येन अग्निर्वायुः सूर्य्यः प्रजापतिश्च प्रधानदेवता आज्येन आज्यशेषेण स्विष्टकृतमित्यादि यक्ष्ये इति संकल्प्य चतसृभिर्व्याहृतिभिः आज्यहोमं कृत्वा प्रायश्चित्तादिशेषं समापयेत्।

ततः मया आचरितसर्व्वप्रायश्चित्तपूर्व्वाङ्गभूत पञ्चगव्यप्राशनं करिष्यमाणस्तदङ्गहोमं करिष्ये इति सङ्कल्प्य स्थण्डिलोल्लेखनाद्यग्निप्रतिष्ठापनान्तं कृत्वा अस्मिनन्वाहितेनाग्निं जातवेदसं इध्मेन प्रजापतिं चाघारदेवते आज्येनाग्निषोमौ चक्षुषी आज्येनाग्निं सोमं विष्णुं रुद्रं परात्मानं सवितारं वायुं सूर्य्यं प्रजापतिं प्रधानदेवताः पञ्चगव्यद्रव्येण शेषेण स्विष्टकृतमित्यादियक्ष्ये इत्यन्तं सङ्कल्प्य अन्वाधेयपरिसमूहनपरिस्तरणपात्रासादनाज्यसंस्कारान्तं कृत्वा पञ्चसु पात्रेषु गव्यपञ्चकमादाय पात्रान्तरे कुशोदकञ्च स्थापयित्वाऽन्यस्मिन् पात्रे वक्ष्यमाणभागसंख्यया तत्तन्मन्त्रैर्योजयेत्। गायत्र्या एकभागं गोमूत्रं. गन्धद्वारेति अङ्गुष्ठाग्रपरिमाणं गोमयं, आप्यायस्वेति सप्तभागं क्षीरं, दधिक्राव्ण इति भागत्रयं दधि, शुक्रमसीत्येकभागमाज्यं, देवस्यत्वेत्येकभागं सर्व्वं प्रणवेनालोड्याग्निमलङ्कृत्येध्ममाधाय आज्येन चक्षुषी हुत्वा वक्ष्यमाणमन्त्रैः पञ्चगव्यहोमं कुर्य्यात्।

अग्निदूतं मेधातिथिरग्निर्गायत्री आप्यायस्व गौतमः सोमो

गायत्री सोमायेदं, इरावतीवसिष्ठोविष्णुस्त्रिष्टुप् विष्णवेइदं, इदं विष्णुर्मेधातिथिर्विष्णुर्गायत्री विष्णवे इदं, मा नोमहान्तमिति मा नस्तोक इतिद्वयं कुत्सोरुद्रो जगती रुद्रायेदं, प्रणवस्यान्तर्यामी परमात्मा गायत्री परमात्मन इदं, तत्सवितुर्विश्वामित्रः सविता गायत्री, सवित्र इदं, व्याहृतीनां विश्वामित्रगौतमभारद्वाजऋषयः अग्निर्वायुः सूर्य्यः प्रजापतिर्देवताः गायत्रीच्छन्दं, अग्नये इदं वायवे इदं सूर्य्याय इदं प्रजापतये इदम्।

---

## अथ स्विष्टकृदादिहोमशेषं समापयेत्।

ततो हुतशेषं कुशपवित्रेण प्रणवेनाऽऽमन्त्र्य प्रणवेनाऽभिमन्त्र्य प्रणवेनोद्धृत्य मध्यमेनाऽग्निमनवा पलाशपर्णेन ब्रह्मतीर्थेन वा

यत् त्वगस्थिगतं पापं देहे तिष्ठति मामके।

प्राशनं पञ्चगव्यस्य दहत्वग्निरिवेन्धनम्॥

इति मन्त्रं पठित्वा प्रणवेन पिबेत्।

क्षत्रियादयः शिरोरोगिणश्च आश्रवेन होमं कारयित्वा प्राशनं कुर्य्युः, स्त्रीशूद्राणां अमन्त्रकमेव च।

ततो यजमानः परमात्मअरणादिना आसायं स्थित्वा सायं सन्ध्यादिकर्म्म निवर्त्य प्राणायामत्रयं कृत्वा काश्यपगोत्रेण देवदत्तनामधेयेन मया परिषत्सन्निधौ विज्ञापितानां सर्व्वेषां पापानां सद्यः सङ्क्षयार्थं परिषन्निर्णीतसर्व्वपापापनोदकं षडृगुणितषडब्द प्रायश्चित्तं प्राजापत्यकृच्छ्रप्रत्याम्नायरूपेण चरिष्ये इति सङ्कल्प्य

धेनुमूल्यादिकच्छ्रद्रव्यं कुशकुसुमाक्षतसहितं गृहीत्वा यज्ञसाधन-भूता या इतिमन्त्रेण हिरण्यगर्भ इति मन्त्रेण च श्रीमहाविष्णु श्रीयुतामिति मन्त्रेण चैतेभ्यो ब्राह्मणेभ्यो नानागोत्रेभ्य इमां परि-षन्निर्णीतषड्गुणितषडब्दाशीत्युत्तरसहस्रसंख्याकप्राजापत्यकृच्छ्र-- प्रत्याम्नायधेनुदानादिप्रत्याम्नायभूतामाग्नेयहिरण्यदक्षिणां श्रीमहा-विष्णुप्रीतिद्वारा मम समस्तपापक्षयं कामयमानोऽहं सम्प्रददे न मम इति भूमौ सजलं दद्यात् ।

ततस्तस्यां रात्रौ वेदपारायणपुराणश्रवणादिना जागरणं कृत्वा प्रातःस्नानादि कर्म्म निर्वर्त्य मया आचरितपरिषन्निर्णीतप्राय-श्चित्तोत्तराङ्गभूतं शालाग्निहोमं उदीच्याङ्गगोदानं च करिष्ये इति सङ्कल्प्य पूर्व्वोक्तरीत्या व्याहृतिभिराज्येन हुत्वा प्रायश्चित्तादि-होमशेषं समाप्य "यज्ञसाधनभूता या" इति मन्त्रं पठित्वा इमां गां प्रायश्चित्तोदीच्याङ्गभूतां श्रीमहाविष्णुप्रीतिद्वारा सर्व्वप्रायश्चित्त-साङ्गुण्यं कामयमानस्तुभ्यमहं सम्प्रददे न मम इति दद्यात् । प्राच्योदीच्याङ्गगोदाने धेनोरभावे तन्मूल्यं दक्षिणां च दद्यात् ।

ततः परं मया आचरितसर्व्वप्रायश्चित्तसाङ्गुण्यार्थं न्यूनाति-रिक्तदोषपरिहारार्थं च दश दानानि करिष्ये इति सङ्कल्प्य तत्त द्रव्याणि दक्षिणया सह दशब्राह्मणेभ्यो दद्यात् ।

दशदानानि—

गो भूतिलहिरण्याज्यवासोधान्यगुड़ानि च ।
रौप्यं लवणमित्येवं दशदानं प्रकीर्त्तितम् ॥

गोदानमन्त्रस्तु प्रागुक्त एव । भूमिदानमन्त्रः—

सर्व्वंसस्याश्रया भूमिर्वराहेण समुद्धृता ।
अनन्तपुण्यफलदा ततः शान्तिं प्रयच्छ मे ॥

तिलदानमन्त्रः—

तिलाः पापहरा नित्यं विष्णोर्देहसमुद्भवाः ।
तिलदानादसत्यं मे पापं नाशय केशव ॥

स्वर्णदानमन्त्रः—

स्वर्णं पवित्रममलं स्वर्णं पापप्रणाशनम् ।
स्वर्णं हि शङ्करोयस्माद् अतः शान्तिं प्रयच्छ मे ॥

आज्यदानस्य—

कामधेनुसमुद्भूतं सर्व्वक्रतुषु संस्थितम् ।
देवानामाज्यमाहारस्ततः शान्तिं प्रयच्छ मे ॥

वस्त्रस्य—

शीतवातोष्णसन्त्राणं लज्जानिर्हरणं परम् ।
देहालङ्करणं वस्त्रं अतः शान्तिं प्रयच्छ मे ॥

धान्यस्य—

धन्यं करोषि दातारं इह लोके परत्र च ।
तस्मात् समुच्यसे धान्यं अतः शान्तिं प्रयच्छ मे ॥

गुड़स्य—

यस्माद् रसानां प्रवरं इक्षुदण्डसमुद्भवम् ।
तस्मान्मम परां लक्ष्मीं प्रयच्छ गुड़ सर्व्वदा ॥

रौप्यस्य—

रुद्रनेत्रसमुद्भूतं रजतं पितृवल्लभम्।

तस्मादस्य प्रदानेन प्रीयतां मम शङ्करः॥

लवणदानस्य—

लवणे वै रसाः सर्व्वे लवणे सर्व्वदेवताः।

सर्व्वपाकाद्यधिष्ठानं लवणं मेऽस्तु सौख्यदम्॥

इति मन्त्रान् पठित्वा एतेभ्योब्राह्मणेभ्यो इमानि द्रव्याणि श्रीमहाविष्णुप्रीतिं कामयमानोऽहं सम्प्रददे न ममेति दद्यात्।

अतः परमाचरितसर्व्वप्रायश्चित्तसाद्गुण्यार्थं भूरिदानं करिष्य-इति सङ्कल्प्य हिरण्यगर्भमितिमन्त्रं पठित्वा इमां भूरिदक्षिणां श्रीविष्णुप्रीतिं कामयमानः दीनान्धकृपणेभ्यः सम्प्रददे न ममेति दद्यात्।

अथाऽलक्ष्मीपरिहारार्थं आयुष्याभिवृद्धार्थं निरीक्षिताज्यदानं करिष्य इति सङ्कल्प्य रूपं रूपमिति पठेत्।

याऽलक्ष्मीर्यच्च मेदो मे सर्व्वाङ्गेषु व्यवस्थितम्।

तत्सर्व्वं नाशयाऽऽज्य त्वं श्रियं पुष्टिञ्च वर्द्धय॥ इति पठित्वा अस्मै ब्राह्मणायेत्यादि इदं कांस्यपात्रपूरितं निरीक्षिताज्यं सदक्षिणाकं ममाऽलक्ष्मीपरिहारार्थमायुष्याभिवृद्ध्यर्थञ्च काम-मानस्तुभ्यमहं सम्प्रददे न मम इति मन्त्रेण दद्यात्।

अनन्तरं मया चीर्ण सर्व्वप्रायश्चित्तसाद्गुण्यार्थं ब्राह्मणान् भोज-यिष्य इति सङ्कल्प्य सहस्रं पञ्चशतानि शतं पञ्चाशद्वा ब्राह्मणान्

स्वशक्त्यनुसारेण भोजयित्वा आशीर्व्वादं गृहीत्वा पश्चादिष्टैर्बन्धुभिः सह स्वयं पारणां कुर्य्यात्।

तत परं "यस्य स्मृत्या च नामोक्त्या" इति "प्रायश्चित्तान्यशेषाणी"ति च मन्त्रद्वयं यथाशक्ति नामत्रयस्य जप्त्वा गोत्रादियुक्तेन मया आचरितपूर्व्वोत्तराङ्गसहितसर्व्वप्रायश्चित्तकर्म्मणि अशेषयज्ञस्वरूपी भगवान् श्रीमहाविष्णुः प्रीयतामिति वदेदिदं च दिनत्रयप्रायश्चित्ताचरणशक्तविषयम्। अशक्तानां बालानां रोगिणां च मलापकर्षणस्नानादि भूमिदानान्तं साङ्गोपाङ्गं प्रायश्चित्तं एकस्मिन्नेव दिने, उपवासञ्च कारयित्वा परेद्युर्ब्राह्मणभोजनं व्रतपारणं च कारयेत्।

अथ सुवासिनीनां प्रायश्चित्ताचरणे मृत्तिकास्नानशालाग्निहोमपञ्चगव्यहोमाद्याचरणं ब्राह्मणेन कारयेत्। वपननान्दीश्राद्धवैष्णवश्राद्धानि न सन्त्येव। पापनिवेदने प्रकीर्णकेषु परमात्मस्मरणराहित्यान्तं मुक्त्वा स्वार्थपरार्थ-धर्म्म क्रियानुकूलक्रियानिरोधनक्रियानिन्दनभर्त्तृक्रियानिन्दनभर्त्तृवचोलङ्घन-श्वश्रू-श्वशुरदेवरादिवचनोल्लङ्घन सावित्रीव्रतराहित्यसाभिलाषपरपुरुषनिरीक्षणसम्भाषणपरिहसनसहयानासनशयनावस्थानाज्ञात-परपुरुषसंसर्गपैतृकव्रतोपवासादिनिषिद्धदिनसङ्गमरहोऽवस्थानभर्त्तृदेवतासूर्य्यादिग्रहादर्शनभर्त्तृसम्भाषणराहित्यगृहोपकरणादिद्रव्यादर्शनोदक्याशूद्रग्रामान्त्यजस्पर्शन-चाण्डालनिरीक्षणवाक्यश्रवणप्रतिकूलवचनभर्त्तृश्वशुरश्वश्रूदेवाग्निराहित्य शिशुताडनक्षुत्परीतशिशुस्तन्याप्रदान भर्त्तृश्वशुरादिमैत्रीभेदनपंक्तिभेदव्यञ्जनादिप्रदान भर्त्तृवशी-

कारणदोषचिन्तनदेवब्राह्मणगुरुदूषणभर्तृप्रवासकालविहारभोजन-परगृहयानदेहलीवासपरगृहवासकुड्यजालवातायनादिविवरणार-थ्योपसर्पण-समाजोत्सवदर्शन जननीगृहयानदिवास्वाप-भर्तृश्वशुर-श्वश्रूदेवरादिसमानासन-शय्याद्यवस्थानतदभिवादनराहित्यधान्य-गृहोपकरणादि-विक्रयभर्त्रननुज्ञातव्रतोपवासनियमाचरणदेहली-गृहाद्यलङ्करणराहित्यसदानिष्ठुरभाषणतथाक्रोधनबोधनोरःशिरो-मुखताडनक्षुधितदासीदासपशुपोषणभक्तप्रदानताम्बूलाञ्जनहरिद्रा-लेपनतिलकमङ्गलसूत्रादिराहित्य-केशप्रसाधनराहित्यसदामलिन-वस्त्रधारणस्वेच्छाकामुकत्वभर्तृत्वंकारहुंकारतिरस्कारस्वयं प्रथम-भोजनशयनप्रबोधनभर्तृचित्तारञ्जनादिप्रकीर्णकानां ज्ञानतोऽज्ञा-नतश्चेति समानम्। अनुवादकवचनेऽपि स्वार्थपरार्थविप्रकीर्ण-कादिभर्तृचित्तारञ्जनान्तप्रकीर्णकाणां इति ज्ञानतोऽज्ञानतो-वेत्यादि यथायथं अनुवादः कार्य्यः।

अथ विधवानां पापनिवेदने पापविशेषः कथ्यते। सुवासिनी-त्वप्रयुक्तस्वार्थपरत्वभर्तृचित्तारञ्जनान्तं मुक्ताऽस्नानभोजनद्विवार-भोजन-पर्य्युषितान्नभोजनकांस्यपात्रभोजनरात्रिभोजनपुत्राद्युच्छि-ष्टान्नभोजनमदकरद्रव्यभक्षणताम्बूलचर्व्वणवलीवर्द्दारोहणकुसुम्भरक्त-चित्रवस्त्रादिधारणतिलकाञ्जनगन्धकस्तूरीकर्पूरघुसृणसुरभिपुष्पादि-धारणभर्तृस्मरणतर्पणादिराहित्यभर्तृनिन्दाश्रवणस्वशरीरपोषणादि-प्रकीर्णकानां यथायथं निवेशः दासीकुलटावेश्यामैत्रीकरणसत्कथा-श्रवणराहित्यभ्रातृभार्य्यादिमैत्रीभेदन-स्वाधीनपरमैथुनशब्दश्रवण-वीक्षणखट्टाशयनयानारोहणोष्णोदकस्नानतीर्थाचरणराहित्यभर्तृ-

निन्दाश्रवण-स्वशरीरपोषणादि-प्रकीर्णकानां च यथायथं निवेशः ज्ञानतोऽज्ञानतश्चेति समानम्। अनुवादकवचने अज्ञानभोजनादिस्वशरीरपोषणादिप्रकीर्णकेभ्य इति ज्ञानतोऽज्ञानतश्चेत्यनुवादः विधवानां प्रायश्चित्ताचरणे शिरोमात्रवपनं, पाणिपादनखकृन्तनं, मृत्तिकास्नानं, दशविधस्नानानि च सा स्वयमेव कुर्य्यात्। नान्दीश्राद्धं वैष्णवश्राद्धम् च अस्त्वेवं, पञ्चगव्यहोम ब्राह्मणेन कारयेत् शेषमन्यत् समानम्। इति हेमाद्रौ सर्वप्रायश्चित्तम्।

पित्रोस्तु दिवसे दर्शे श्राद्धात् पूर्व्वं न तर्पयेत्।
ब्राह्मणान् भोजयेत् पश्चात् पिण्डात् पूर्व्वं तु तर्पयेत्॥

इति हेमाद्रौ प्रायश्चित्ताध्याये सर्व्वप्रायश्चित्तं समाप्तम्।

श्रीविश्वेश्वरो जयति।

कूर्म्मपुराणे—

अश्वो धेनुर्म्महिष्यश्च रासभः कुञ्जरस्तथा ।
क्रीणन् नरकमाप्नोति विप्रो यद्यत्रविक्रयी ॥
कन्यानारी अजावस्त्री पुत्रकं ब्रह्मसूत्रकम् ।
लवणं लशुनं चर्म्म पलाण्डुं गृञ्जनं तथा ॥
शुण्ठीपिप्पलिमारीचलवङ्गैलाहरिद्रकाः ।
औषधानीह यावन्ति मत्स्यकुक्कुटसूकराः ॥
हिङ्गुजीरकवस्तूनि ताम्रं कांस्यादिकं तथा ।
एतान् मूल्यैः द्विजः क्रीत्वा सुलभैर्म्मूल्यसंख्यया ॥
तेभ्यश्च द्विगुणैर्म्मूल्यैरल्पमूल्यैरथापि वा ।
विक्रीयलाभगणनं कुर्य्याद्यदि स पापभाक् ॥
मृत्वा नरकमासाद्य कृमिकूपे पतत्यधः ।
तस्मादिहविशुद्ध्यर्थं प्रायश्चित्तमिहोच्यते ॥
स ज्ञात्वा तद् द्विवारञ्च चतुर्व्वारमनेकशः ।
तप्तं पराकं च चान्द्रञ्च यावकं वर्षमाचरेत् ॥
तस्योपनयनं भूयः पञ्चगव्येन शुध्यति ॥

इति हेमाद्रौ निन्दितार्थोपजीवनप्रायश्चित्तम् ।

---